MAHABHASYA PRADIPADDYATA

of

Nagesa Bhatta

edited by

Bahuvallabha Shastri

Calcutta

The Asiatic Society

1858

BI 142, v. 2

# महाभाष्यप्रदीपोद्द्योतः ॥

पाणिनिकात्यायनपतञ्जलिभ्यो
गुरुभ्यो नमः ॥

## गाङ्कुटादिभ्योऽञ्णिन्ङित् । १ । २ । १ ॥

अथ [1]तद्वदतिदेशत्वेन वार्त्तिकानुत्थानमाशङ्क्याह

[2]चत्वारोऽत्रेति ॥ (कै)

उपक्षिप्ताः । (कै)

दूषणद्वारा व्याख्योक्ता इत्यर्थः ॥

तत्राद्येति । (कै)

तत्र हि गाङ्कुटादिभ्यः परोऽञ्णित्प्रत्यय इत्यंशकङकारयुक्

१ तद्वदतिदेशोऽकिद्विधिप्रसङ्गः । वा ॥

२ चत्वारोऽत्र पक्षा उपक्षिप्ता भाष्ये । ङित्त्वकित्त्वसम्बन्धप्रतिपादनं भावनासंज्ञाकरणमतिदेशश्चेति ॥

इत्यर्थः ॥ १"तयोरिति" तच्छब्देन गुणभूतयोरपि ङकारककार योर्बुद्धिस्थतया परामर्श इत्याह भाष्ये

ङकारककारयोरिति । (भा)

यथा चैतत्तथा पस्पशायामुक्तम् ॥ "ङित्वकित्वयोरप्रसिद्धि रिति" तद्व्यवहाराप्रसिद्धिरित्यर्थस्तदाह

येन तस्येति ॥ (कै)

सत्वे वेति । (कै)

यङादेरिति शेषः॥ अङिणद्ग्रहणवैयर्थ्यापत्त्या च २"मो राजी"ति वलोपाभावार्थमनुवाद इति न शङ्क्यम् । ननु शशविषाणादिशब्दै रसतापि विषाणेन शशस्य सम्बन्धः प्रतिपद्यते इति चेन्न । तदद स्याप्रामाण्यप्रसङ्गात् ॥

अङिणद् ग्रहणेति । (कै)

न च "३वृद्धेद्" इति विहितञ्यङः ४कर्मणिङस्य व्यावृत्त्य तदिति वाच्यम् । "गाङ्कुटादिभ्यो"नेन तयोर्विधानेऽपि प्रत्यया धिकारेऽस्य पाठाभावेन प्रत्ययत्वाभावाद् ञकारणकारयोरित्वा प्रवृत्तौ ञित्णितोस्तयोरसम्भवात् ॥ भाष्ये

---

१ ङित् किद्वचने तयोरभावादप्रसिद्धिः । वा । ङित् किद्वचने त रभावाङ्ङकारककारयोरभावाङ्ङित्वकित्वयोरप्रसिद्धिः ॥

२ मो राजि समः क्वौ । ८ । ३ । २५ ॥

३ वृद्धेत्कोसलाजादाञ्यङ् । ४ । १ । १७१ ॥

४ अ ३ । पा १ । सू ३० ॥

¹भाष्येते तद्यनेनेति। (भा)

प्रकरणेनेत्यर्थः॥ ननु "भाष्येत" इत्ययुक्तं पञ्चमी निर्देशेनादेश-विषयसम्भवादत आह



गाङिति॥ (कै)

गाङादिभ्यः परस्य प्रत्ययस्य तव्यादेः ङित्त्वादिविशेषण एव विधितात्पर्यमित्याह

ङकार इति॥ (कै)

नन्वेवं लोपस्यावश्यकत्वेन विधानं व्यर्थमत आह

इतां चेति। (कै)

एवं च कार्य्यार्थविधानमिति भावः॥ ननु भाष्यमाणः सर्वो-ऽप्यादेश एवेत्यत्र मानाभावादादेश प्रतिषेध इत्ययुक्तमत आह

टित्त्वेति। (कै)

अनेनागमत्वं निराकृतम्॥ उत्तरपरवदन्तरोऽस्त्विति चेदत्राह

ङ इदन्तर इति॥ (कै)

नन्वेवमपि बहुव्रीहिणा ङिच्छब्देन प्रत्ययाभिधानात्तस्य चाने-काल्त्वात् कथमादेः स्यादत आह

तत्पुरुष इति॥ (कै)

न च तस्यादित्वे इत्त्वं व्यर्थं ²"लशक्वतद्धित" इत्येव सिद्धिरिति

---

भाष्येते तद्यनेन। गाङ्कुटादिभ्यो ऽञ्णिन्ङिद्भवतीति। असंयोगाल्लिट्-किद् (१। २। ५) भवतीति॥ २ अ १। पा ३। सू ८॥

(गाङ्कुटादिभ्यो ऽञ्णिन्ङित् । १। २। १।)    (अ. १। पा. २। आ. १)

वाच्यम् । अतद्धित इति पर्युदासेन प्रत्ययसंज्ञाकाभिकादेरेव तेनेत्त्वविधानात् ॥ अनुपपादोऽनुपपत्तिः । तामेव दर्शयति

[1]कुटितेत्यादाविति ॥ (कै)

[2]अथ अस्मादेवेति ॥ (कै)

अन्तरतमपरिभाषासंस्कृतादित्यर्थः ॥

अन्त्यस्य स्युरिति । (कै)

न च ङित्त्वस्य गुणप्रतिषेधाद्यर्थत्वेना[3]चारितार्थ्यात्तातङ्न्यायेन सर्वादेशो भविष्यतीति वाच्यम् । गुणप्रतिषेधाद्यर्थत्वे सर्वादेशत्वं सर्वादेशत्वे च तादर्थ्यमित्यन्योन्याश्रयेण सर्वादेशत्वालाभेऽन्त्यादेशत्वापत्तेरिति भावः । तातङ्स्तु यथा सर्वादेशत्वं तथोक्तम् ॥ भाष्ये

[4]तस्मादित्युत्तरस्य इति । (भा)

एवं च "[5]आदेः परस्य" इत्यस्य प्राप्त्यादेशपक्षे इष्टासिद्धिः स

---

१ कुटितेत्यादौ प्रसिद्धङित्त्वाच्च ङादयो यद्यादेशाः क्रियन्ते तदा नैते तदर्थाभिधाने समर्थास्तुङादयस्तु नेह शास्त्रे प्रसिद्धाः ॥

२ अथास्मादेव वचनादपूर्वाः क्रियेरन् तदा ङिच्चेत्यन्त्यस्य स्युः ॥

३ गुणप्रतिषेधार्थत्वे सर्वादेशत्वं सर्वादेशत्वे च तादर्थ्यमित्याद्यर्थत्वेन ।

इ पुस्तके अत्र एवम्विधपाठोऽस्ति तत्तु न सम्यक् ॥

४ एवं तर्हि षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते । न चात्र षष्ठीं पश्यामः । "गाङ्कुटादिभ्य" इत्येषा पञ्चम्यञ्णिदिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य (१।१।६७) इति ॥

५ अ १। पा १। सू ५४ ॥

न युक्त इति भावः । सम्प्रसारणं व्यचे, "ग्रहिज्या" इत्यनेन ॥ [1]"गाङ्कुटादिभ्य" इति व्यचिमेवानुवदेदिति भावः ॥ भाष्ये

किङन्द्ग्रहणा इति ॥ (भा)

"क्ङिति चे"त्यादावित्यर्थः ॥

व्यचिमेति। (कै)

उभयगतिमजानत इदं दूषणं बोध्यम् ॥ भाष्ये

[2]एष ब्रह्मदत्त इति (भा)

भेदप्रदर्शनम् ॥ "अब्रह्मदत्तम्" इत्यास्थायं चेत्यादिः ॥ तदाह

[3]निर्ज्ञाते भेदे इति । (कै)

निर्णीते भेदे इत्यर्थः ॥

अतिदेशगतिरिति । (कै)

तत् फललाभ इत्यर्थः । आहार्य्यारोपस्य तत् कार्य्यबोधनफलकत्वादिति भावः ॥ व्यपदेशातिदेशे किद्व्यपदेशविरुद्धा किं व्यपदेशस्य स्वाश्रयस्य निवर्त्तनादाह

१ व्यचिमेवानुवदेदित्यारभ्य उभयगतिम् इत्यन्तं नास्ति गोल्डस्टुकारसङ्गृहीत इंगलैण्डीयभाष्यपुस्तके । तत्तु लेखकप्रमाद एव ॥

२ तद्वदतिदेशस्तर्ह्ययम् । गाङ्कुटादिभ्योऽञ्णिन्ङिद्वद्भवतीति । असंयोगाल्लिट्किद्वद्भवतीति । स तर्हि वतिनिर्देशः कर्त्तव्यो न ह्यन्तरेण वतिमतिदेशो गम्यते । तद्यथा । एष ब्रह्मदत्तः । अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति । एवमिहाप्यङितं ङिदित्याह ङिद्वदिति गम्यते । अकितं किदित्याह किद्वदितिगम्यते ॥

३ निर्ज्ञाते भेदे तत्कार्य्यप्राप्तये तद्रूपारोपणं क्रियते इत्यतिदेशगतिः ॥

कार्य्येति ॥ (कै)

व्यपदेशम् । (कै)

ङित्वादिरूपं निमित्तम् । करणे घञ् । यदि तु अतिदिश्यमानविरुद्धस्वाश्रयकार्य्याभाव अतिदेशस्वभावसिद्धः । यथा तत्रैव[1] मद्यपानादिनिवृत्तिरिति न दोषस्तथापि परिहारान्तरस्याभिधास्यमानत्वान्नैतत् सुष्ठुनिरूपितं भगवता ॥

विशिष्टमचेति । (कै)

ततः परस्य यत्तन्नातिदिश्यत इत्यर्थः ॥ सप्तम्यर्थे वतेरविधानादाह

सप्तम्यर्थे इति ॥ (कै)

यद्यपि सप्तम्यर्थवत्यन्तैकदेशस्तदर्थे प्रयुक्तः "सत्या [illegible]त्यभामे"तिवदित्यपि भाष्याशयो वक्तुं शक्यस्तथापि "[2]सार्वधातुकमि"ति सूत्रविषये पचेतामित्यादौ "[3]आतोङित" इति स्वकार्य्यस्यातिदेशानापत्तिरत आह

अयं भाव इति ॥ (कै)

तद्रूपासङ्गः । (कै)

तद्रूपारोप इत्यर्थः ॥ निर्लिङ्गव्याख्यानमयुक्तमत आह

उपदेशेति ॥ (कै)

पूर्वस्येति । (कै)

---

१ वृत्तान्ते । ह ॥ २ अ १ । पा २ । सू ४ ॥

३ अ ७ । पा २ । सू ८१ ॥

परभिन्नस्येत्यर्थः ॥ भाष्ये

## सप्तम्यर्थेऽपि । (भा)

इत्यपिना षष्ठ्यर्थसंग्रहस्तेनोभयसिद्धिः । "[1]तेन तुल्यम्" इति वत्यन्तैकदेशलाभावे तात्पर्य्यात् तेन ततः परस्य यत्कार्य्यं तदेति बोध्यम् ॥

## अनुबन्धभेद (कै)

इत्यस्य प्रत्ययादावित्यादिः ॥

## अतिदेशोऽपि भेदेनेति । (कै)

अत्र प्रकरणे इत्यादिः । अपिना तत्तत्प्रदेशेषु यो भयग्रहणं न कर्त्तव्यं भवतीति सूचितम् । श्वेः "[2]विभाषाधेट् श्व्योः" इति चङ् । "[3]जृस्तम्भु" इत्यङ् च । वचेः [4]"अस्यति वक्ति" इत्यङ् । "[5]वच उम्" इत्युम् । सर्वत्र ङित्त्वे कित्त्वे वा दोषाः ॥ भाष्ये

## [6]यथेह भवतीति । (कै)

---

१ अ ५ । पा १ । सू ११५ ॥ २ अ ३ । पा १ । सू ४९ ॥
३ अ ३ । पा १ । सू ५८ । ४ अ ३ । पा १ । सू ५२ ॥
५ अ ७ । पा ४ । सू २० ।

६ यथेह भवति सुप्तः सुप्तवान् इत्येवं स्वपितः स्वपिथः अत्रापि प्राप्नोति । चङादिषु प्रयोजनम् । के पुनश्चङादयः । चङङ्नजिङ् ङ्वनिबथङ्नङः । चङ । यथेह भवति शूनः शूनवानित्येवमशिश्वियत् अत्रापि प्राप्नोति । अङ् यथेह भवति शूनः उक्त इत्येवमश्वत् अवोचत् अत्रापि प्राप्नोति । नजिङ् । यथेह भवति सुप्त इत्येवं स्वप्नक् अत्रापि प्राप्नोति । ङ्वनिप् । यथेह भवतीष्ट इत्येवं यज्वा अत्रापि प्राप्नोति । अथङ् । यथेह भवत्युषित इत्येवमावसथः अत्रापि प्राप्नोति । नङ् । यथेह भवतीष्टमित्येवं यज्ञः अत्रापि प्राप्नोति ॥

भाष्यस्य यथेह यून इत्यादौ संप्रसारणं भवति । तथा यङ-दावपि स्यादित्यर्थः ॥

अयङ् इति (भा)

एवमानुपूर्वीक एव प्रत्यय इति भावः । अन्यथा फलाभावात् "उपसर्गे वचेः" इत्यत ङिदित्यनुवृत्तौ भाष्यासङ्गतिः स्पष्टैवेति केचित् ॥ भाष्ये

[1]अपर आहेति । (भा)

यद्यपि सर्वत्र ङित्वे कित्वे वा सूत्रे तत्पदमेवोपादातव्यमेवं च सर्वथा "जागरित" इत्यादौ गुणभवनमसिद्धम् इति भाष्यदृष्टान्ता-सङ्गतिस्तथापि "जागरित" इत्येतत्सिद्ध्यर्थमन्यतरदपि यदि तत् सूत्रेण क्रियते तदाऽयं ग्रन्थ इत्याहुः ॥ [2]"नू धू" कुटादौ ॥

सप्तमीनिर्देशादिति । (कै)

वस्तुतः "पूर्वस्य कार्य्येऽतिदेश" इत्यस्य परभिन्न कार्य्ये इत्यर्थः । स्वकार्य्येस्त्विष्यत एव "[3]आतो ङित" इत्यादीति बोध्यम् ॥ ननु "[4]नक्वा" इति निषेध औपदेशिकस्यैवेति न दोषोऽत आह

न क्वेति ॥ (कै)

---

१ अपर आह जागो गुणविधिः । जागर्तेर्गुणविधिः प्रयोजनम् । यथेह भवति जागरितः जागरितवानित्येवं जागृतः जागृथ इत्यत्रापि प्राप्नोति ॥ २ णू स्तवने । धू विधूनने ॥
३ अ ७ । पा २ । सू ८१ ॥ ४ अ १ । पा २ । सू १८ ॥

ननु औपदेशिकस्य प्रथमोपस्थितत्वेन तन्निषेधेन चरितार्थमातिदेशिकं न निषेधेदित्यरुचेराह

[१]अथवेति ॥ (कै)

न स्यादिति । (कै)

कुटादिभ्यः परस्य कित्त्वविधानं त्वन्यत्र चरितार्थं कुटिता इत्यादौ कित्त्वप्रतिषेध एव स्यात् । न तु कित्त्वमिति भाष्याचरार्थः । एवं च कुटिला इत्यादौ गुणः स्यात् ॥ ननु पृथगनुबन्धकरणेऽपि नुविल्वेत्यादौ कथं "[२]श्रुक" इति निषेधो न ॥ औपदेशिककित्त्वसत्त्वादित्यत आह

[३]ङित्त्वेनेति ॥ (कै)

भाष्ये

[४]तस्मादिति । (भा)

एवं चादेशे पक्ष इति स्थितम् ॥

---

१ अथवा यदप्राप्तं कार्यं तदतिदिश्यते इति क्त्वाप्रत्यये कित्त्वातिदेश एव न स्यात् ॥

२ अ ७ । पा २ । सू ११ ॥

३ ङित्त्वेनाप्य कित्त्वं येन नाप्राप्तिन्यायेन बाध्यत इति भावः ॥

४ तस्मात् नूत्वा धूत्वेत्येव भवितव्यम् ॥

# सार्वधातुकमपित् ।१।२।४॥

लिङ्गादिति । (कै)

यङादीनां ङित्त्वादित्यर्थः । तुल्यजातीयस्य ज्ञापने ह्रस्वादौ ङित्त्वमतिव्याप्तम् । धातुप्रत्ययसामान्यविषये तु ज्ञापकेऽव्याप्तमिति भावः ॥ आर्धधातुकशब्दस्य चरत्याद्यर्थटगन्तत्वेनान्तोदात्तत्वाद् "[१]बह्वचोऽन्तोदात्तादि" ति ठञ् प्राप्नोतीत्यत आह

[२]अर्द्धेति । (कै)

अर्द्धधातुशब्दः तत्पुरुषेऽन्तोदात्तः ततश्च भवाद्यर्थे "बह्वच" इति ठञ् ञित्वादाद्युदात्तत्वमिति भावः ॥

[३]भवेति । (कै)

तेषु भवा संज्ञार्धधातुकमित्यर्थः ॥

ठञन्तत्वादिति । (कै)

आर्द्धधातुकशब्दस्येति शेषः । आर्द्धधातुकसंज्ञायां संज्ञित्वेन भवानार्द्धधातुकीयानित्यर्थः । आर्द्धधातुक इति वदार्द्धधातुका-

---

१ अ ४ । पा ३ । सू ६७ ॥

२ उपलब्धविवरणपुस्तके "अर्धेति" इति पाठोऽस्ति । भाष्ये कैयटे च "आर्ध" इति दृश्यते ॥

३ आर्धधातुकेषु भवा इति ठञन्तत्वादन्तोदात्तत्वाभावाद् "बह्वचोऽन्तोदात्ताट्ठञ्" इति ठञभावे वृद्धाच्छो भवति ॥

नितिवत्काव्ये [1]आर्द्धधातुकीयानित्युक्तिः, "प्रियतद्धिता दाक्षि-णात्याः" इति न्यायेनेति बोध्यम् ॥ ननु ङेङित्वेनैव सिद्धे तदा-देशतातङो ङित्वं सार्वधातुकाङित्वस्य ज्ञापकं स्यादत आह

[2]तातङ्स्त्विति ॥ (कै)

पित्वान् ङित्वाप्राप्तिरिति । (कै)

तद्धि सुलेत्यत्र तुगर्थमनुदात्तार्थं चावश्यकमिति भावः । एवं च पूर्वसूत्रे सहनिर्देशादिहापि तदुच्चारणमिति तात्पर्य्यम् । यथा [3]क्वनिप् प्रक्षिप्तः । [4]"ङ्वनिप् भूतकालानामिति" च प्रक्षिप्तः पाठ इति तात्पर्यम् ॥

[5]लुङ्विकरणानामिति । (कै)

ते च च्लिप्रणादयः ॥

१ सार्वधातुकग्रहणं किमर्थम् । अपिदितीयत्युच्यमान आर्धधातुक-स्याप्यनेनापितो ङित्वं प्रसज्येत । कर्त्ता हर्त्ता । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति नानेनार्धधातुकस्यापितो ङित्वं भवतीति यदयमार्धधातुकीयान् कांश्चिन्ङितः करोति चङङ्नजिङ् ङ्वनिवथ-ङ्नङः । सार्वधातुकेऽप्येतज्ज्ञापकं स्यात् । नेत्याह । तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः । यथा जातीयकाश्चङङ्नजिङ् ङ्वनिबथङ् नङः । कथं जातीयकाश्चैते । *आर्धधातुकाः ॥

२ तातङस्तु ङित्वं तिपः पित्वादप्राप्तमित्यज्ञापकं सार्वधातुकाङित्वस्य क्वनिपो ङित्वमज्ञापकमस्य हि पित्वान् ङित्वाप्राप्तिः ॥

३ क्वनिप् प्रक्षिप्तः ॥ ४-५ यद्येतदस्ति तुल्यजातीयस्य ज्ञापकमिति चङङौ लुङ्विकरणानां ज्ञापकौ स्यातां नजिङ्वरसमान-कालानां ङ्वनिप्भूतकालानामथङ्ग्रहः औणादिकानां नङ्ग्रहो घञर्थानाम् । तस्मात् सार्वधातुकग्रहणं कर्त्तव्यम् ॥

* "आर्धधातुकीयाः" इति पाठोऽपि भाष्ये दृश्यते ॥

प्रत्यादिवद्भावादिति । (कै)

शाब्दफललाभादादिवत्त्वमेव प्राप्नोति नलं तद्भावः तेन हि ङित्त्वाभाव आर्थः फलति न तु शाब्द इति भावः ॥

[1]साधारणेति । (कै)

व्याश्रयेऽस्य प्रवृत्तिमङ्गीकृत्येदम् । वस्तुतस्तु विभिन्ननिमित्ते प्रवृत्तावपि विभिन्नस्थानिकेन तत्परिभाषाप्रवृत्तिरिति भाष्याशयः ॥

[2]यद्यपीति । (कै)

अकारयोरेकादेशस्योऽन्यायेनापित्त्वेऽपि उभयत आश्रयणेऽन्तादिवत्त्वनिषेधात् सार्वधातुकत्वाभावेन न ङित्त्वम् । परादिवद्भावेन तु न सार्वधातुकत्वालाभः । परस्य सार्वधातुकावयवत्वेऽपि तत्त्वाभावादिति भावः ॥

परं प्रतीति । (कै)

परं समुदायं प्रतीत्यर्थः । एकादेशस्थानिनावचौ पूर्वपरौ ययोः समुदाययोरन्तादी एकादेशोऽपि तयोरेवान्तादिवदिति सूत्रार्थ इति भावः ॥ अभ्युपेत्यापि अचावेव प्रत्यन्तवत्त्वे दोषान्तरमाह

---

१ साधारणपरिहाराभिधाय वर्णादाङ्गमिति नाश्रितं प्रसज्यप्रतिषेधे तु ङित्त्वनिषेधः ॥

२ यद्यपि सार्वधातुकावयवस्याकारस्यैकदेशः तथापि परं प्रत्यादित्वस्यादन्तशब्दः. सार्वधातुकमपिद् भवतीति स्यादेव ङित्त्वं च्यवे इति चोत्तमैकवचने सर्वस्यैव सार्वधातुकस्यैकादेश इति ङित्त्वप्रसङ्गः ॥

च्यवे इति । (कै)

[1]"हलः श्नः" सूत्रभाष्ये तु "ङिच्च पिन्न पिच्च ङिन्न" इत्यर्थसिद्ध्यर्थं प्रसज्यप्रतिषेध एवाश्रितः ॥

[2]यद्यप्युत्तमस्येति । (कै)

[3]"आडुत्तमस्य" इत्यस्योत्तमस्याडागमो भवति यस्मात् स पिदित्यर्थ इति भावः ॥ ननु आटायमेकादेशो न च स पिदवयवो भिन्नेव हि पित् इत्यत उक्तं

तद्भक्तत्वादिति । (कै)

शास्त्रेण तद्भक्तत्वबोधनादित्यर्थः ॥ ङित्त्वविधिप्रतिषेधौ न पूर्वस्य कार्य्यौ इत्यत आह

[4]यथेति ॥ (कै)

अव्यवधानबुध्येति । (कै)

अपृक्तयोरव्यवधानबुध्येत्यर्थः ॥ भाष्ये

[5]व्यवधानमिति । (भा)

ङित्त्वप्रयुक्ते निषेधकर्त्तव्ये अपा व्यवधानमित्यर्थः ॥

---

१ अ ३ । पा १ । सू ८३ ॥

२ यद्यप्युत्तमस्य पित्त्वं तथापि तद्भक्तत्वादाटः पिदवयवस्यैकादेशः पित उत्तमस्यादिवदिति स्यान् ङित्त्वनिषेधः ॥

३ अ ३ । पा ४ । सू ९२ ॥

४ यथा स्थानिकाले यथायोगं गुणप्रवृत्तिनिवृत्ती तथाऽऽदेशेपि कृते व्यवधानबुद्ध्या भवतः ॥

५ एकादेशः पूर्वविधौ स्थानिवदिति स्थानिवद्भावाद्व्यवधानम् ॥

# असंयोगाल्लिट् कित् । १। २। ५॥

[1]"ऋदुपधेभ्य" इति विशिष्योक्तिः किमर्थेत्यत आह

[2]बिभिदतुरिति । (कै)

यद्यपि गुणे कृते कित् कार्य्याभावात् तदप्राप्तौ कित्त्वमनित्यमिति शक्यं वक्तुं तथापि कृताकृतप्रसङ्गमात्रेण नित्यत्वमिति भावः । न तु कृषस्यानवकाशत्वादित्ययुक्तम् । गुणे कृतेऽपि भूतपूर्वगत्या कृषप्राप्तेरत आह

[3]यथेति । (कै)

अन्यथा जातस्य निषेधायोगेन विशिष्टविधानं व्यर्थं स्यादिति अवस्थायां प्राप्तगुणं बाधित्वा कृष एवेति भावः ॥

तथेति । (कै)

ऋदुपधविषयैतल्लक्षणोपलवप्रापितनिषेधसामर्थ्यादित्यर्थः ॥ ननु विध्युन्मूलकत्वेन निषेधस्य बलवत्त्वप्रपञ्च कार्य्यातिदेशोऽत आह

१ ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन । वा । अ १ । पा २ । ५ ॥

२ बिभिदतुः बिभिदुरित्यादौ कित्त्वं नित्यं गुणस्त्वनित्यः वहृत इत्यादौ तु द्वयोरप्यनित्यत्वं तत्र परत्वाद् गुणप्रसङ्गः पूर्वविप्रतिषेधाश्रयेण निवार्य्यते ॥

३ यथा कृषस्य कित्वारम्भसामर्थ्याद् गुणो बाध्यते तथैवेत्त्वातिदेशसामर्थ्यादित्यर्थः ॥

[1]दुर्बलेनेति । (कै)

अतिदेशदुर्बलत्वे हेतुः "[2]कृतार्थत्वाद्" इत्यन्तः ॥

[3]तातङ्न्यायेनेति । (कै)

तातङि गुणादिनिषेधार्थत्वेन ङित्त्वस्य चरितार्थत्वाद् "[4]अनेकाल् शित्" इत्यनेन यथाऽपवाद "ङिच्च" इत्यस्य बाधस्तथेत्यर्थः । केचित्तु इदं न युक्तं विचति गृहातीत्यादौ संप्रसारणेन चरितार्थतया ङित्त्वस्य गुणनिषेधातिदेशानापत्तेः । अतिदेशोपप्लुततद्विषयनिषेधसामर्थ्याद् गुणबाध इत्येवं वार्त्तिकस्य कैयटेन व्याख्यानादेतदाशयानभिज्ञैकदेशिनस्य [5]विषम इत्यादिग्रन्थ इत्याहुः ॥

---

१-२-३ कृतस्य कित् करणे प्रयोजनान्तराभावः । इह तु सम्प्रसारणविधौ कृतार्थत्वाद् दुर्बलेन अतिदेशेन प्राप्यमाणो गुणनिषेधो दुर्बलत्वान्न तद्विधिना सह स्पर्धते तातङ्न्यायेन ॥

४ अ १। पा १। सू ५५ ॥

५ उक्तं वा । वा । किमुक्तम् । न वा कृतस्यानवकाशत्वादपवादो गुणस्येति । विषम उपन्यासः । युक्तं तत्र यदनवकाशं कित्करणं गुणं बाधत इह पुनरुभयं सावकाशम् । कित्करणस्यावकाशः । ईजतुः । ईजुः । गुणस्यावकाशः । वर्त्तित्वा । वर्द्धित्वा । इहोभयं प्राप्नोति । ववृते । ववृधे । परत्वाद् गुणः प्राप्नोति । इदं तर्हि उक्तमिष्टवाचीपरशब्दो विप्रतिषेधे परं यदिष्टं तद् भवति ॥

# [1]इन्धिभवतिभ्यां च । १ । २ । ६ ॥

इष्टासिद्धिमेव दर्शयति

[1]बभूवेत्यजिति ॥ (कै)

ननु कित्त्वविधानसामर्थ्यादनिग् लक्षणाया अपि वृद्धेः प्रतिषेधो भविष्यतीत्यत आह

गुणमात्रेति । (कै)

एवं च तन्निषेधेनास्य चारितार्थ्येनानिग् लक्षणवृद्धिनिषेधकत्वे मानाभाव इति भावः ॥ ननु छन्दस्येव "समीधे" इत्यादौ न-लोपाद्यर्थं कित्त्वमावश्यकमत आह

---

१ किमर्थमिदमुच्यते । इन्धेः संयोगार्थं* वचनं भवतेः पिदर्थम् ॥ अयं योगः शक्योऽवक्तुम् । कथम् । इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां किद्वचनानर्थक्यम् । वा । इन्धेश्छन्दोविषयो लिट् । नह्यन्तरेण छन्द इन्धेरनन्तरो लिड् लभ्यः । आमा भाषायां भवितव्यम् । भुवो वुको नित्यत्वात् ।† भवतेरपि नित्यो वुक् । कृतेऽपि प्राप्नोत्यकृतेऽपि । ताभ्यां किद्वचनानर्थक्यम् । ताभ्यामिन्धिभवतिभ्यां किद्वचनमनर्थकम् ॥

२ विनापि सूत्रेणेष्टं सिध्यति सत्यपि चेष्टं न सिध्यति । बभूवेत्यत्र अलक्षणत्वात् वृद्धेरिग् लक्षणत्वाभावात् प्रतिषेधाप्रसङ्गात् । गुणमात्र-निषेध एव तु बभूविथ अहं बभूव इति च णित्त्वाभावपक्षे स्यादिति प्रश्नो भाष्ये किमर्थमिति ॥

---

* "संयोगार्थं ग्रहणम्" इत्यपि भाष्ये ॥ † "ताभ्यां लिटः" इत्यपि भाष्ये दृश्यते ॥

[1]तथेति ॥ (कै)

नन्वेवं विकरणः स्यादत आह

[2]आर्धेति ॥ (कै)

नन्वेवं शब्दान्तरप्राप्तिः क्वापि न स्यादत आह

[3]सत्यामपीति । (कै)

औतद्रूपमादायेति भावः ॥

---

१ तत्र "छन्दस्युभयथेति" (६ । ४ । ५) लिटः सार्वधातुकत्वात् समीध इति ङित्त्वान्नलोपः ॥

२ आर्द्धधातुकत्वाच्च श्नमोऽभावः । "व्यत्ययो बहुलम्" इति वचनाद्वा ॥

३ "ओः सुपि" (६ । ४ । ८३) इत्यत "ओः" इति नानुवर्त्तत इति भावः । एकदेशविकृतस्यानन्यत्वाच्च शब्दान्तरप्राप्त्यभावः । सत्यामपि वा शब्दान्तरप्राप्तौ कृताकृतप्रसङ्गित्वाद् वुको नित्यत्वं वुकि कृते गुणस्य प्राप्तिरेव नास्तीति नैतयोस्तुल्यबलत्वम् इति नित्यो वुगिति भाष्यमुपादायैतदुक्तं कैयटेन ॥

# मृडमृदगुधकुषक्लिशवदवसः क्त्वा। १। २। ७॥

[१]विपरीतेति। (कै)

विशेषणीभूतमृडादिसंकोचस्य न्याय्यत्वादयं न्याय्य इति भावः॥ न च लोके प्रधानसंकोच एव न्याय्यत्वेन व्यवह्रियते "राज्ञः संकोचः कार्य्यः" इति राजनिमित्तं स्वव्यवहारसंकोचस्तदविस्तररूपः कर्त्तव्य इतितदर्थात्। समाधत्ते

---

१ किमर्थं मृडादिभ्यः परस्य क्त्वः कित्त्वमुच्यते किदेव हि क्त्वा। नक्त्वा सेट् (१।२।१८) इति प्रतिषेधः प्राप्नोति तद्बाधनार्थम्। यदि तर्हि मृडादिभ्यः परस्य क्त्वः कित्त्वमुच्यतेनार्थो "नक्त्वा सेट्" इत्यनेन कित्त्व-प्रतिषेधेन। इदं नियमार्थं भविष्यति। मृडादिभ्य एव परस्य क्त्वः कित्त्वं भवति नान्येभ्य इति। यदि नियमः क्रियते इहापि तर्हि नियमान्न प्राप्नोति। लूत्वा पूत्वा। अत्राप्यकित्त्वं प्राप्नोति। तुल्यजातीयस्य नियमः। कश्च तुल्यजातीयः। यथा जातीयको मृडादिभ्यः परः क्त्वा। कथं जातीयकश्च मृडादिभ्यः परः क्त्वा। सेट्। एवमप्यस्यत्र कश्चिद्विभाषितेट् सोऽनिटां नियामकः स्यात्। अस्तु तावद् ये सेटस्तेषां ग्रहणं नियमार्थं च इदानीं विभाषितेट् तस्य ग्रहणं विध्यर्थं भविष्यति॥

२ विपरीतनियमस्तु व्याख्यानान्न भविष्यति मृडादिभ्यः क्त्वैव किद्भवतीति। नह्युनिष्टार्थो शास्त्रप्रवृत्तिर्लक्ष्यमूलकत्वाद्वाधारणस्मृतेः॥

व्याख्यानादिति ॥ (कै)

[1]विशेषणार्थं स्यादिति । (कै)

मुलेत्यादि च व्यावर्त्यं स्यादित्याहुः। अस्यानर्थकत्वेनैव वारणा-द्विशेषणव्यावर्त्यं चिन्त्यम् । वस्तुतस्तु क्त्वः कित्त्वसामर्थ्यादेव तुल्यजातीयापेक्षो नियम इति बोध्यम् ॥ भाष्ये विभाषितेड् ग्रहणमुपलक्षणमित्याशयेनाह

[2]गुधेति ॥ (कै)

---

## [3]रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।१। २। ८ ॥

ननु "रुदविदे"ति सूत्रे स्वपिप्रच्छिग्रहणमनिटां नियामकं स्यादतो भाष्ये

---

१ क्त्वा प्रत्ययमात्रस्य नियमः स्यात् । कित्त्वं तु "क्त्वातोऽसुन् कसुनः" ( १।१।४० ) इत्यादौ विशेषणार्थं स्यात् ॥

२ मृडमृदगुधकुषक्लिशवदवसां क्त्वः कित्त्वविधानं नियमार्थं गुधकुषक्लिशीनां तु रलो व्युपधाद् ( १।२।२६ ) इति विकल्पे प्राप्ते नित्यार्थम् । तत्र विधिसम्भवे क्लिशेरनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥

३ स्वपि प्रच्छ्योः सन्नर्थं ग्रहणं किदेव हि क्त्वा ॥

रुदविदस्वपीति । (भा)

तत्र सूत्रे स्वपि प्रच्छ्योर्ग्रहणमित्यर्थः ॥ तद्भनयन् व्याचष्टे

[1]तत्रेति । (कै)

व्याख्यानात् क्त्वया न सम्बन्ध इति भावः । स्वपिप्रच्छ्योः क्तः कित्त्वविधानमनिटः क्तो नियमार्थं न भवतीत्यन्वयः ॥

---

# [2]इको झल् । १ । २ । ९ ॥



"इको झल्" सूत्रं किमर्थमिति वक्तव्ये किमितीकः परस्ये-त्युक्तमत आह

इक इति ॥ (कै)

उत्तरार्थं सूत्रमावश्यकमिति भावः । अत एवेक् धातोर्न ग्रहणम् । उत्तरार्थाधिकारानुरोधात् ॥ ननु गुणस्य परत्वात् कथं दीर्घो बाधकोऽत आह

[3]अज्झनेति । (कै)

एवं चानवकाशत्वाद्दीर्घो गुणस्य बाधक इति भावः ॥ भाष्ये

---

१ तत्र चरितार्थत्वादनिटः क्तः कित्त्वविधानं नियमार्थं न भवति ॥

२ किमर्थमिकः परस्य सनः कित्त्वमुच्यते । भा । "इको झल्" "हल-न्ताच्च" इत्येक एव योगः कर्तव्यः किमर्थो योगविभाग इति प्रश्नार्थः ॥

३ "अज् झन् गमां सनि" (६ । ४ । १६ ) इति दीर्घत्वं गामाप्ते गुण आरभ्यमाणं तस्य बाधकमिति भावः ॥

हृते भवेदिति । (भा)

अनवकाशत्वेन बाधकस्य प्रवृत्त्युत्तरमुत्सर्गप्रवृत्तेरङ्गीकारादिति भावः ॥

[1]शास्त्रं प्रवर्त्तमानमिति । (कै)

एवं चादृष्टार्थं प्रवृत्त्या शास्त्रस्यानर्थक्याभावान्न बाध इति भावः ॥ "शास्त्रमावर्त्तमानम्" इति क्वचित्पाठः । तत्राप्ययमेवार्थः ॥ ननु शास्त्रस्य साधारणत्वेन ह्रस्वविषये एव बाधो नान्यत्रेत्यत्र किं विनिगमकमत आह

[2]ह्रस्वानामेवेति ॥ (कै)

ह्रस्वार्थं दीर्घविधानं चेत् किं तत्राह भाष्ये

भवेदित्यादि ॥ (भा)

गुणायेति । (कै)

एवं च तन्निवृत्त्या रूपविशेषसम्पत्तिः फलमस्त्वेवेत्यर्थः ॥ न होति हि शब्द सूचितं हेतु माह

स्तौतीति । (कै)

भाष्यमित्यस्य कर्त्तव्यमिति व्याख्याशेषपूरणमन्यत् ॥

---

१ शास्त्रपूर्वकात् प्रयोगाद्धर्मो न तु शास्त्रप्रवृत्तिमात्रादिति भावः ॥

२ ह्रस्वानामेव दीर्घविधानसामर्थ्याद् गुणो न स्यात् । दीर्घाणां तु प्रागेव ताद्रूप्याद्रूपविशेषसम्पत्तिफलत्वाच्छास्त्रस्य दीर्घशास्त्राप्रवर्त्तनाद् गुणप्रसङ्गः ॥

**तृप्तिविशेषेति । (कै)**

विजातीयाविजातीयात्तृप्तिस्तत्तद्भोजनफलमिति भावः ॥ भाष्ये

**[1]भोजनविशेषादिति । (भा)**

भोजनेति कर्मणि ल्युट् । [2]"शिल्प विशेषादिति" पाठः ॥

**नह्यीति । (कै)**

तत्र तृप्तिविशेषवत् नात्र दीर्घविशेषः फलमिति भावः ॥

**ह्रस्वेष्विति । (कै)**

लक्ष्यभेदादेकस्यापि विधिनियमरूपेण प्रवृत्तिरिति भावः ॥

**येन नाप्राप्तिन्यायेन । (कै)**

अनवकाशत्वेन ॥

**[3]ऋदित्वम् । (भा)**

"ऋत इद्धातोः" इतीत्वम् ॥ णिलोपस्य किञ्चिन्निमित्तत्वाभावात् कथं णिलोपस्तत्र प्रयोजनमत आह

---

१ सामर्थ्यात्तत्र पुनः प्रवृत्तिर्भवति भोजनविशेषाच्छिल्पिविशेषाद्वा ॥

२ इङ्गलण्डीयभाष्यपुस्तके "डाक्टरवुलार" भाष्यपुस्तके च "शिल्पिविशेषादिति" पाठोऽस्ति ॥

३ इकः कित्त्वं गुणो माभूद्दीर्घारम्भात्कृते भवेत् ।
अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ॥
सामर्थ्याद्धि पुनर्भाव्यम् ऋदित्त्वं दीर्घसंश्रयम् ।
दीर्घाणां ना कृते दीर्घे णिलोपस्तु प्रयोजनम् ॥

[1]असतीति ॥ (कै)

णिलोपस्यापीति । (कै)

बाध्यसामान्यचिन्तायामिति भावः ॥

शीप्सतीति । (भा)

शपेथुरादिणिचि मितां ह्रस्वे "[2]सनीवन्त" तीडभावे[3] "आप् ज्ञपी"ति ईलेऽभ्यासलोपे रूपम् ॥ विशेषचिन्तायामपि दोष इत्याह

अथवेति ॥ (कै)

ननु येननाप्राप्तिन्यायेन यत्रोभयापवादतासम्भावना तत्रैषां व्यवस्थापकत्वं न च तथा प्रकृते । यथैत्येधतीत्यादौ पररूपत्वावच्छिन्ने बाध्ये किं शास्त्रविहितस्येत्याकाङ्क्षायां मध्येऽपवादाः पुरस्तादिति न्यायविषयः । येनेत्यस्य यद्धर्मावच्छिन्न कार्येणेत्यर्थः । येन लक्षणेनेत्यर्थे तु नास्य विषयः । नापि कार्यभेदे यच्छब्दपरामर्शानुगमकरूपाभावादिचेन्न । व्यक्तिपक्षे किमिदं गुणबाधकतया सर्वविषयम् उत णिलोपबाधकतया णिविषयमिति सन्देहे व्यवस्थायाया अवश्यापेक्षितत्वेन शास्त्रप्रवृत्तिः सूपपादेत्यभिमानात् । वस्तुतस्त्वेवं सति णिगमेत्येवं वदेदिति बाध्यसामान्यचिन्तापक्षमाश्रित्यैव भाष्यव्या-

---

१ अ ७। पा १। सू १००॥

२ असति कित्त्वे गुणवन्णिलोपस्यापि विशेषाभावाद्दीर्घत्वं बाधकं स्यादित्यर्थः॥

३ अ ७। पा २। सू ४९॥ ४ अ ७। पा ४। सू ५५॥

ख्योचितेति दिक्॥ •नन्वसत्यपीति येनेत्यस्य येन कार्य्येणेत्यर्थ इति भावः॥

नैतदिति। (कै)

येनेत्यस्य स्वेतरेणेत्यर्थकतया पदावाच्यसामान्यचिन्तापरत्वमस्य न्यायस्य तदाऽयं ग्रन्थ इति भावः॥ भाष्ये किलारम्भेन दोष इत्याह

तत्र णिलोपस्येत्यादिना॥ (भा)

प्रतिपदविहितेनेति। (कै)

मीविषयेणाचरितार्थेनेत्यर्थः। एवं च तत्र सूत्रे मीग्रहणेन मिनातेरपि ग्रहणं दीर्घस्य प्रयोजनमिति भावः॥

[1]सावकाशमिति (भा)

भाष्यस्य सार्थकमित्यर्थः॥

परत्वादिति। (भा)

यद्यपि प्रमित्सतीत्यत्र अपवादत्वाद् दीर्घेण गुणस्येव प्रमीप्सतीत्यत्र बाध्यसामान्यचिन्तायां णिलोपस्यापि बाधेन भाव्यम्। तथापि दीर्घसमानकालिकस्य णिलोपस्य गुणस्येव बाधेऽपि दीर्घे कृते स्थानिवत्त्वेन प्राप्तणिलोपः स्यादेव। न च दीर्घविधानसामर्थ्यम्। इस्भावे सामान्यग्रहणसम्पादनेन कृतार्थत्वात्। एवं च परत्वादित्यस्य दीर्घोत्तरकालं प्राप्यत्वादित्यर्थः। भ्रष्टावसरन्यायस्तु शास्त्रेणाख्येवेति भावः॥

---

१ यथैव तर्ह्यसति कित्त्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते एवं गुणोऽपि बाधेत॥

[1]यत्र लक्षणेति। (कै)

यथा "[2]विभाषा दिक्समासे" [3]तृतीयासमास इत्यादौ। तत्र हि समासशब्दस्य संज्ञात्वेन तज्ज्ञानाथ लक्षणपर्य्यालोचनमित्यर्थः॥

प्रयोगरूपेति। (कै)

तत्र मीयत इत्यादौ प्रयोगनिष्ठम् एवं हि "गामादाग्रहणेष्व-विशेषः" इत्यादेरसङ्गतिः स्यादिति मा माङ्चर्य्यात् मीशब्दांशेऽपि मा नप्रवर्त्तत इत्येव समाधातुं युक्तम्॥ तद्ध्वनयन्नाह

नन्वेवमसत्यपीति। (कै)

कित्त्वाभावेऽभिविषयत्वेनास्य सुलभत्वादिति भावः। एवं च मीग्रहणमपि व्यर्थमिति तात्पर्य्यम्॥ भाष्ये

[4]मीनातिमिनोत्योर्दीर्घत्वेकृते (भा)

इत्यत्र पर्जन्यवल्लक्षणप्रवृत्तिमाश्रित्यमीनातिनिर्देशः॥ "परत्वा-दि" त्यस्योत्तरकालप्राप्तत्वादित्येवार्थः। यथादीर्घोत्तरं स्थानिवत्त्वेन णिल्लोपो भवति। एवं तत्प्रवृत्त्युत्तरमेव गुणोऽपि स्यात् दीर्घत्वं तु सामान्यग्रहणविघातार्थं स्याद् इति भावः॥

नास्त्यनवकाशत्वमिति। (कै)

नास्त्यनर्थकत्वमित्यर्थः॥

---

१ यत्र लक्षणाभिनिर्वृत्तत्वेन शब्दरूपमपेक्ष्यते तत्र लक्षणप्रतिपदोक्तयो-रिति परिभाषोपस्थानं न तु यत्र प्रयोगरूपाश्रयणं तत्र॥

२ अ १। पा १। सू २८॥ ३ अ १। पा १। सू ३०॥

४ मीनाति मिनोत्योर्दीर्घत्वे कृते मीग्रहणेन ग्रहणं यथास्यात्॥

दीर्घत्वं वाध्यते इति । (कै)

प्रवर्त्तमपि निवर्त्त्यते इत्यर्थः ॥

धातुरवकाश इति । (कै)

तस्य च कुटादित्वप्रयुक्तङित्त्वेन गुणनिषेधाद्दीर्घश्चरितार्थ इति भावः । एवं चेट् भावे एवावकाशोक्तिर्भाष्योक्ताऽसङ्गतेति तात्पर्य्यम् ॥

उह नेति ।

न चाजादेश्चगमेरित्यर्थलाभार्थम् अज्ग्रहणम् । इनिषाहचर्य्येण लुग्विकरणस्थानिकादेशगमेरेव ग्रहणेनादोषात् । एवं कुङः सत्त्वेऽपि न क्षतिरिति बोध्यम् । कुगुधुभ्यः कुटादिभ्यः सनोऽनभिधानमित्यन्ये ॥

---

# हलन्ताच्च । १ । २ । १० ॥



अन्तशब्दस्य समीपवचनत्वान्नार्थानुपपत्तिर्हल्समीपादिकः पर इत्यर्थः । ततः परत्वं च सामर्थ्यादेकवर्णव्यवहितं ग्राह्यमत आह

अवयवेति ॥ (कै)

भेद एवावयवावयविभावादाह

अत्यन्तभेदेति । (कै)

भेदाभेद एवावयवावयविभाव इत्यर्थः ॥' भाष्ये इष्टार्थबोधासमर्थत्वेन निर्देशस्यायुक्तत्वम् ।

'इको नामेति । (भा)

इगन्तस्य धातोरित्यर्थः ॥

हलन्तः स्यादिति । (भा)

हलन्तावयवः स्यादित्यर्थः ॥

अन्यस्य । (भा)

इगन्तस्य । अन्यं हल् कथमन्तो भविष्यतीति शेषः । इक् पदेन वर्णमात्रग्रहेऽपि द्वयोर्वर्णयोः परस्परमवयवावयविभावो विरुद्ध इति

---

१ अयुक्तोऽयं निर्देशः । कथं हि इको नाम हलन्तः स्यादन्यस्यान्त्यः । कथं तर्हि निर्देशः कर्त्तव्यः । इग्वतो हल इति । यद्येवं यियक्षति अत्रापि प्राप्नोति । एवं तर्हीगुपधाद्धलन्तादिति वक्ष्यामि । एवमपि दम्भेर्न प्राप्नोति । सूत्रं च भिद्यते । यथान्यासमेवास्तु । ननु चोक्तमयुक्तोऽयं निर्देश इति । नायुक्तः । अन्तशब्दोऽयमस्त्येवावयववाची । तद्यथा । वस्त्रान्तः वसनान्तः । वस्त्रावयवो वसनावयव इति गम्यते । अस्ति सामीप्ये वर्त्तते । तद्यथा । उदकान्तं गत इति । उदकसमीपं गत इति गम्यते । तद्यः सामीप्ये वर्त्तते तस्येदं ग्रहणम् । एवमपि दम्भेर्न सिध्यति । योऽत्रेक्समीपे हल् न तस्मादुत्तरः सन् । यस्मादुत्तरः सन्नासाविक्समीपे हल् । एवं तर्हि

दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम् ॥ वा ॥

हल् जातिर्निर्दिश्यते । इक उत्तरा या हल् जातिरिति ॥

भावः ॥ मन्वाननर्थ्यादिषु बहुव्रीहेरिव मत्वर्थीयस्याप्यभावादर्णयोरवयवावयविभावाभावाच्चेग्वतो हल इत्ययुक्तमत आह

हलन्तादिति । (कै)

यनाचिन्नस्य धातोः शब्दस्य रूपस्य वा हला विशेषणात्तदन्तविधिरित्यर्थः । वस्तुत इग्वतो हलन्तादिति न्यासकरणे तात्पर्यम् । अत एवेगुपधाद्धलन्तादिति वक्ष्यति ॥

[1]कर्मधारय इति । (कै)

स्वपदार्थप्रधानत्वेनान्तरङ्गत्वादयमेवोचित इति भावः ॥ पूर्वनिपातदोषं परिहरति

[2]निपातनादिति । (कै)

बहुव्रीहि पक्षेऽप्येतदावश्यकमिति भावः । [3]"दम्भश्चे"ति इत्त्वे लघूपधत्वाद्गुणाप्रसक्तेः ॥ किं कित्त्वेनेत्याशङ्क्याह

[4]असतीति ॥ (कै)

नलोप इति । (कै)

[5]"अनिदितामि"त्यनेन । एकत्वं हलन्तादित्येकवचनोपात्तम् ॥

---

१ एवं च हल् चासावन्तश्चेति कर्मधारयः ॥

२ निपातनाच्च विशेषणस्य परनिपातः ॥

३ अ ७ । पा ४ । सू ५६ ॥

४ असति च कित्त्वे नलोपो न स्यात् ॥

५ अ ६ । पा ४ । सू २४ ॥

जातेः स्वगतमिति । (कै)

तस्याप्राधान्येन विवक्षितत्वादेको व्रीहिः सम्पन्न इतिवदिति भावः ॥ ननु जातिनिर्देशे पौर्वापर्य्यं कथमत आह

यदा तावदिति । (कै)

यद्यप्येकैकव्यक्तिव्यङ्ग्या जातिस्तथापि ज्ञापकेन विजातीयव्यक्त्यव्यवधाने यत्किंचिद्व्यक्तिद्वारकं सामीप्यं यत्किञ्चित् व्यक्तिद्वारकं च ततः परत्वमाश्रीयत इति भावः ॥

व्यक्तिद्वारका इति । (कै)

विशेषणीभूतव्यक्तिद्वारका इत्यर्थः । तदपेक्षं व्यक्तिद्वारकं जात्यपेक्षम् ॥

अभिन्नप्रत्ययः । (कै)

हलित्येकाकारः प्रत्ययः । अनेन हल्त्वजातौ प्रमाणं संज्ञाशब्दाश्च जातिशब्दा एवेति दर्शितम् ॥

यदापीति । (कै)

तदा तु साक्षादेव परत्वादिति भावः ॥ परस्परभेदकधर्मपरित्यागेन व्यक्तिमात्रविवक्षायां सा एकैवेति तात्पर्य्यम् । तदाह

भेदव्युदासादभेदाश्रयणादिति । (कै)

अयं पक्षो मञ्जूषायामुपपादितो विस्तरेणास्माभिः शक्तिवादान्ते। परे तु हल्जातिरित्यस्य तज्जात्याश्रय हल्समुदाय इत्यर्थस्तस्य च साक्षादेव सामीप्यं ततः परत्वं चोपपद्यते । तदुक्तं भाष्ये

इक उत्तरा या हल् जातिरिति । (भा)

अत एव [1]"आर्द्धधातुक" इति सूत्रे वक्ष्यति जातेः पौर्वापर्यासम्भवात्

विषयसप्तमी विज्ञास्यत इति (भा)

इत्याहुः ॥

---

# लिङ्सिचावात्मनेपदेषु।१।२।११॥

सकृत् श्रुतस्यार्थद्वयमिति । (कै)

कालभेदेनार्थद्वयबोधजनकत्वमित्यर्थः ॥ नन्वात्मनेपदं यौ लिङ्सिचाविति व्याख्याने सप्तम्यनुपपन्नेत्यत आह

निर्द्धारणे इति । (कै)

निर्द्धारणं च सजातीययोरिति तद्भेदलाभः ॥ भाष्ये

सिजविशेषित इति । (भा)

---

१ आर्धधातुके (२ । ४ । ३५ ) इति सूत्रव्याख्यानावसरे "अर्थसिद्धिरेवैषा यत्सामान्येन पौर्वापर्यं नास्ति । असति पौर्वापर्ये विषयसप्तमी विज्ञास्यते" एतदेव उक्तं भवता ॥

सम्भवव्यभिचारयोरभावादिति भावः ॥ ननु लिङ आत्मने- पदत्वाभावोऽत आह

लिङ् शब्देनेति ॥ (कै)

ननु सम्भावितात्मनेपदपरत्वौ सुट्सीयुटावेव लिङ्ग्रहणेन गृहीष्येते इत्यत आह

सीयुडादीति ॥

ननु अस्तु उभयोरेकशेषनिर्देशोऽत आह

नवेति । (कै)

अनेन शास्त्रीयैकशेषो वारितः ॥

अप्रयोग इति । (कै)

कृतैकशेषस्य सूत्रे प्रयोग इत्यर्थः ॥ निर्द्धारणविभक्त्यन्तत्वे लिङ्- विशेषणत्वासम्भवादाह

[१]आत्मनेपदेति ॥ (कै)

ननु सकृच्छ्रुतस्य कथमर्थद्वयबोधकत्वमत आह

सारूप्यमात्रेति । (कै)

अर्थभेदेऽपीत्यर्थः । अचा इति वदिति भावः । सौत्र एकशेष इति बोध्यम् ॥

---

१ आत्मनेपदपरत्वादुपचारात् लिङेवात्मनेपदमुच्यते गौणमुख्यार्थयो- रात्मनेपदशब्दयोः सारूप्यमात्रप्रतिबद्ध एकशेषः करिष्यते इति भावः ॥

[1]समुदाये इति । (कै)

व्यपदेशिवद्भावेनेत्यर्थः ॥

अथवेति । (कै)

तन्त्रत्वसहविवक्षायामपि विद्यमानवराजन्यवेतिवदिति भावः ॥

---

## [2]स्थाघ्वोरिच्च । १ । २ । १७ ॥



न प्रयुक्त इति । (कै)

एवं च षष्ठीहेतुप्रयोगद्वयस्याप्राप्तिरिति भावः ॥

अपत्यरूपस्येति । (कै)

---

१ अवयवगतं पौर्वापर्यं समुदाय आश्रयिष्यत इति भावः । अथवा तन्त्रेण शब्दद्वयोच्चारणादर्थद्वयं लभ्यते ॥

२ इच्च कस्य तकारेत्त्वम् । कस्य हेतोरिकारस्तपरः क्रियते ॥ दीर्घो मा-भूत् । दीर्घो माभूदिति ॥ ऋतेऽपि सः । अन्तरेणाप्यारम्भं सिद्धोऽत्र दीर्घो "धुमास्थागापाजहाति" ( ६ । ४ । ६६ ) इति ॥ अनन्तरे प्लुतो माभूत् । इदं तर्हि प्रयोजनमन्तरे प्लुतो माभूदिति । कुतो नु खल्वेतदनन्तरार्थं आरम्भे ह्रस्वो भविष्यति न पुनः प्लुत इति ॥ प्लुतश्च विषये स्मृतः । विषये प्लुत उच्यते यदा च स विषयो भवितव्यमेव तदा प्लुतेन ॥

इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृतेऽपि सः ।
अनन्तरे प्लुतो मा भूत्प्लुतश्च विषये स्मृतः ॥

तत्त्वेन विवक्षायां तु छोनस्यात् फिञ् च स्यादिति भावः। वस्तुत उक्तादन्य एवेदन्त्वेनेदं पदार्थः शेषाधिकारात्। एवं चेदन्त्वेनाप्यपत्यबोधे शैषिको न साधुरिति [1]"तस्येदम्" इति सूत्रे "[2]तस्यापत्यम्" इति सूत्रे च निरूपयिष्याम इति चिन्त्यमिदम्। स च सम्बन्धो हेतुहेतुमद्भावे पर्य्यवस्यतीति। भाष्ये हेतोरिति प्रयुक्तं हेतुशब्देन चात्रफलम्। इत्संज्ञकतकारः किं मुखसुखार्थं उततपरसूत्रप्रवृत्त्यर्थं इति विचारतात्पर्य्यम्॥

## तकार इदिति। (कै)

[3]"यस्येति" शेषः। बहुव्रीहेरयं लः। इत्येत्येतत्संज्ञकतकारवत्त्वं किमर्थमिति भाष्यार्थः। मुखसुखार्थोऽपि तदर्थत्वेन वर्णोच्चारणस्य सार्थक्यादित्संज्ञां लभत इति भाष्यमतम्। ननु श्रुतत्वाद् ह्रस्व एव भविष्यतीत्यत आह

## [4]आन्तरतम्यादिति। (कै)

सूत्रारम्भं विनेत्यर्थः॥ किं न स्यादत आह

## किन्त्वं त्विति। (कै)

तदर्थं सूत्रमावश्यकमिति भावः॥ "ईत्वस्य" इति छेदः॥

## [5]असदृश इति। (कै)

सामर्थ्यादसदृशे इत्यर्थः। अव्यवहितपरोऽनन्तरशब्दो नेति भावः॥

---

१ अ ४। पा ३। सू १२०॥ २ अ ४। पा १। सू ९२॥
३ अ ६। पा ४। सू १४८॥ ४ आन्तरतम्यात् प्राप्नोतीति भावः॥
५ असदृश आदेशे क्रियमाणे इत्यर्थः॥

[1]यद्यनेनेति । (कै)

टिग्रहणं वाक्येनैव सम्बध्यते न त्वनन्येन पदेनेति भावः ॥ भाष्ये "विषये" प्रश्नाख्यानादिविषये प्लुत उच्यते । यदा सविषयो भवति तदाप्यनेनैव सूत्रेण प्लुतेन भाव्यमित्यनुवाददोषभिया नानेन प्लुत-विधानमित्ययमत्र पक्षे भाष्याक्षरार्थः कार्य्यः ॥

[2]अन्येत्विति । (कै)

अनन्तरेऽपीति सूत्रेऽसद्भूत्रे आदेशे श्रूयमाणेऽपीत्यर्थः । क्रिय-माण इति पाठेऽपि श्रूयमाण इत्येवार्थः ॥

दीर्घ एवेति । (कै)

आन्तर्य्यादिति भावः ॥ वार्त्तिके "ऽनन्तरे" इत्यस्यानन्तरे श्रूय-माणेऽपि दीर्घः स्यादिति शेषो बोध्यः ॥ "प्लुतो माभूदिति" शङ्कोत्तरत्वेनावतारयति

नन्विति ॥ (कै)

स्यादिति । (कै)

तथाच तत्र प्लुतदृष्टः स चाषति तपरत्वे पुनर्विहितेन दीर्घेण बाधितः सन्नस्यादित्यर्थः ॥ ननु किमिति प्लुतस्तत्रेष्यत इति शङ्कते

---

१ अनेन तपरत्वं प्रत्याख्यायते यद्यनेन प्लुतो विधीयेत तदा यत्रापि विषयेऽनन्त्यस्यापि प्रश्नाख्यानयोरित्यादिना प्लुतो विहितस्तत्राप्यनेन विधीयेत अस्मिन् कर्त्तव्ये "पूर्वत्रासिद्धम्" इत्याष्टमिकस्य प्लुतस्या-सिद्धत्वात्ततस्य पक्षेऽनुवाददोष प्राप्नोतीति क्रस एव भविष्यति ॥

२ अन्ये तु तपरत्वमनेन समर्थितमिति व्याचक्षते । अनन्तरेऽप्यादेशे श्रूयमाणे दीर्घ एव स्यात् ॥

माभूदिति ॥ (कै)

स्मृत इति । (भा)

एवं च प्रश्नाख्यानादिविषये तस्येष्टत्वात्र तन्निवृत्यर्थं विधानमित्यर्थः ॥

[1]स चासतीति । (कै)

सिद्धे दीर्घे दीर्घविधानसामर्थ्येन बाधादित्यर्थः । सति तु तपरत्वे दीर्घाप्राप्त्या प्लुतो निर्विघ्न इति भावः । पश्चात्प्राप्तस्तु तपरत्वेन न बाध्यतेऽसिद्धत्वादित्याशयः ॥ प्रकारद्वयमपि दूषयति

[2]प्लुतेति । (कै)

अनन्तस्य पदस्य टेः अपिना वाक्यस्य च टेः प्लुतः प्रश्नाख्यानयोरित्यर्थस्तस्येति भावः । टिग्रहणं वाक्येनैव सम्बध्यते न त्वनन्त्येन पदेनेति तु भाष्यतात्पर्य्यम् । यत्त्वदिदमित्यादौ "[3]गुरोरनृत" इत्येतद्विषयं भाष्यमिति तन्न । तेन श्रूयमाणार्थवाचिन एव टेः प्लुतविधानादित्याहुः ॥

---

१ स चासति तपरत्वे न प्राप्नोतीति दीर्घनिवृत्त्यर्थं तपरत्वं स्थितम् ॥

२ प्लुतविधौ तु "वाक्यस्य टेः" ( ८ । २ । ८२ ) इत्यधिकारात् कथमिकारस्य प्लुतः स्यादिति चिन्त्यमेतत् ॥

३ अ ८ । पा २ । सू ८६ ॥

# न क्त्वा सेट् । १ । २ । १८ ॥

नसेडित्यनेन कथं कित्त्वं क्रियेतेत्यत आह

[१]अकारेति ॥ (कै)

[२]विपरीतस्त्विति । (कै)

तथा हि सति ग्रथित्वेत्यादावपि कित्त्वं स्यादित्यर्थः ॥

न तु निवृत्तस्येति । (कै)

न चैवं क्त्वोऽपि विद्यमानस्य कित्त्वस्य कथं निषेध इति वाच्यम् । कार्य्यस्यैव निषेधो न तु विद्यमानकित्त्वस्येति न दोषः । आतिदेशिकस्य निवृत्तस्य निषेधे तु तेन कृतकित्कार्य्यस्यानेन प्रतिषेधे विरोधः स्पष्ट एवेति दिक् ॥ ननु यत्नग्रहणाभावेऽपि सिचस्त्रिव-दिटि इत्वे वृद्धावायादेशे च सिद्धमित्यत आह

[३]स्यासिति । (कै)

तत्र चिण्वद्भावे परत्वात् कृते इत्यन्वयः ॥

---

१ अकारप्रश्लेषः ॥

२ श्रीङादिभ्य एव परा निष्ठा न किदिति नियमः । विपरीतस्तु निष्ठैवेति व्याख्यानान्न भवति ॥

३ स्यास् आताम् इति स्थिते इत्वं च प्राप्नोति चिण्वद्भावस्य तत्र परत्वाच्चिण्वद्भावे युक् च प्राप्नोति वृद्धिश्च तत्र वृद्ध्यपवादो युगागमः तत्र कृते यकारस्य इत्वप्रसङ्गः । न च पुनर्वृद्धिर्लभ्यते । पूर्वमेव युका बाधितत्वादिति भावः ॥

[1]वृद्ध्यपवादत्वादिति । (कै)

येन नाप्राप्तिन्यायेन न त्वनवकाशत्वेनेति भावः ॥ तदेवाह

न च पुनरिति ॥ (कै)

भाष्ये

[2]इत्वं कित्सन्नियोगेनेति । (भा)

उत्तरार्थत्वं खण्डयति । तदाह

आतिदेशिकस्यापीति । (कै)

तथा च कित्त्वनिषेधे तत्सन्नियुक्ते त्वस्याप्यभाव इति भावः ॥ ज्ञापितेत्वातिदेशिकानिषेधे उत्तरत्राप्युपयोग इत्यन्यत् ॥ ननु "[3]अनो बहुव्रीहेः" इत्यस्य स्त्रियां विहितं नेत्यर्थाद् रेफस्यापि निवृत्तिर्वाचनिकीति विषमो दृष्टान्तोऽत आह

अन इति । (कै)

प्रत्ययाधिकारात् प्रत्ययस्यैव निषेध इति भावः ॥

[4]क्त्वाग्रहणेनेति । (कै)

---

१ उपलब्धकैयटपुस्तके "वृद्ध्यपवाद" इति पाठोऽस्ति ॥

२ न सेडिति क्त्वतेऽकित्त्वे निष्ठायामवधारणात् ।
ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ॥ १ ॥
इत्वं कित्सन्नियोगेन रेफा तुल्यं सुधीवनि ।
वस्वर्थं किदतीदेशान्निगृह्णीतिः क्त्वाच विग्रहात् ॥ २ ॥

३ अ ४ । पा १ । सू १२ ॥

४ विल्वकादिभ्यश्छस्य लुक् (६ । ४ । १५३) इत्यत्र क्त्वाग्रहणेन ज्ञापितः ॥

तद्धि विल्वकादेरुत्तरस्य प्रत्ययस्य भनिमित्ते तद्धिते विधीयमानो लुक् प्रत्ययान्तराभावाय छस्यैव सिद्ध इति छमात्रस्य लुप् यथा स्यात् न तु तत्सन्नियोगशिष्टकुको निवृत्तिरित्यर्थमिति भावः ॥ ननु युक्ता वृद्धेर्बाधितत्वात् कथमिकारस्य वृद्धिरत आह

युगागमेनेति । (कै)

तत्प्राप्तिवेलायामिकाराभावेन तच्च वृद्धेरप्राप्तेरिति भावः । भ्रष्टावसरन्यायस्तु शास्त्रे नास्त्येवेति तात्पर्य्यम् । वस्तुतो "ऽथवाऽस्त्वेवेत्त्वम्" इति भाष्यमेकदेश्युक्तिर्विन्मतोर्लुका टिलोपमात्रबाधवद्बाध्यापत्तेरिति बोध्यम् । तस्माद् हल्ग्रहणस्य ज्ञापकत्वं स्थितम् औपदेशिकस्यैव निषेध इति ॥ भाष्ये

[1]आतिदेशिकमिति । (भा)

[2]"असंयोगाल्लिट्" इत्यनेन ॥

आजिवान् इति । (भा)

द्वित्वात् परत्वात् पूर्वमिटि न सेडितिनिषेधेन कित्त्वाभावान्नलोपाभावेऽसंयोगादित्यस्याप्राप्तेर्नलोपसिद्धये क्त्वाग्रहणं संज्ञापेक्षत्वं बहिरङ्गत्वं त्वच शास्त्रे नाश्रीयते इति भावः ॥

[3]एकादेशे [4]वस्वेकाजिति । (कै)

कृतद्विर्वचनानामेकत्वमिति स्थितत्वादिति भावः ॥

---

१ आतिदेशिकमत्र कित्त्वं भविष्यति ॥ २ अ १ । पा २ । सू ५ ॥

३ उपलब्धकैयटे "एकादेशे च" इति पाठोऽस्ति ॥

४ अ ७ । पा २ । सू ६७ ॥

नलोपनिवृत्ताविति। (कै)

निमित्तापायन्यायेनेति भावः॥

द्विहल्त्वादिति। (कै)

[1]"तस्मान्नुड्" इत्यनेन नुडिति भावः॥

इखिवृत्ताविति। (कै)

तन्निवृत्तौ सत्यां क्त्वानलोपेऽद्विहल्त्वान्नुखिवृत्तावेकादेशे-नैकाच्त्वादिटि सेट्त्वात् कित्त्वप्रतिषेध इत्येवं न लोपादीनां च क्रमप्राप्तिरित्यर्थः॥

इष्टत इति। (कै)

सा चौपदेशिककित्त्वेन नलोपे इटः प्रवृत्ताविष्टसिद्धिरूपा इत्यर्थः। उक्तन्यायस्य भाष्यकृतानङ्गीकारेण चक्रकप्राप्तिरेव नेत्यन्ये॥ [2]"तितुत्र" इत्यादिना इडागमप्रतिषेधः किं न स्यादत आह

अग्रहादीनामिति। (कै)

अतोदेशादित्यत्र [3]"उपसर्गस्य घञी"ति दीर्घः॥

---

१ अ ७। पा ४। सू ७१॥
२ अ ७। पा २। सू ९॥
३ अ ६। पा ३। सू १२२॥

# [1]उदुपधाद्भावादिकर्मणोरन्यतरस्याम् । १ । २ । २१ ॥

शप इत्यस्य पञ्चम्यन्तत्वे शबन्तोदुपधात् परनिष्ठाऽसम्भव इत्यत आह

[2]शपः सम्बन्धीति ॥ (कै)

# पूङः क्त्वा च । १ । २ । २२ ॥

नन्विटि वा प्रसङ्ग इत्यत्र सेट्प्रकरणादिति हेतुर्न्यूनोऽत आह

[3]अन्यतरस्यामिति चेति ॥ (कै)

ननु [4]"असकः किति" इति निषेधात् कित्त्वनिषेधं विनेऽव दुर्लभ इति सेडनुवृत्तिरयुक्तेत्यत आह

---

१ इह कस्मान्न भवति । गुधितः । गुधितवानिति । उदुपधाच्छपः । १ । शबविकरणेभ्य इष्यते ॥

२ शपः सम्बन्धी शबविकरणो यस्तस्मादित्यर्थः ॥

३ सेडिति अन्यतरस्यामिति चानुवर्त्तनात् सेटोरेव क्त्वानिष्ठयोः कित्त्वविकल्पः स्यात् ततश्च पुविता पुवित इति पक्षे स्यात् । अस्ति चेडागमः पूङश्चेति विकल्पेनेड्विधानात् ॥ ४ अ ७ । पा २ । सू ११ ॥

**अस्ति चेति ॥ (कै)**

ननु सति "[१]पूङश्च" इत्यस्मिन् कथमकिदाश्रयं सेट्त्वमत आह

**[२]इड्विधाविति ॥ (कै)**

ननु गौरवाद्भारद्वाजीयमतमयुक्तमत आह

**[३]लाघवमिति ॥ (कै)**

**[४]विभाषामध्ये इति । (भा)**

---

१ अ ७ । पा २ । सू ५१ ॥

२ इड्विधौ "पूङश्च" (७ । २ । ५१ ) इति सूत्रं वार्त्तिककारः प्रत्याचष्टे तत्रानिटोरेव क्त्वानिष्ठयोरनेन कित्त्वं विकल्प्यते । तत्र यदा कित्त्वं तदा "श्र्युकः किति" (७ । २ । ११) इति इट् प्रतिषेधात् पूत्वा पूत इति भवति यदा त्वकित्त्वं तदेड्गुणयोः पवित्वा पवित इति भवति ॥

३ लाघवमनादृत्य सूत्रकारेण "पूङश्च" (७ । २ । ५१ ) इतीड्विधौ पठितम् । इह तु विकल्पो नानुवर्त्तते उत्तरत्र वाग्रहणादिति सिध्यतीष्टमिति भावः ॥

४ इड्विधौ ह्यग्रहणम् । वा १ इड्विधौ हि पूङो ग्रहणं न कर्त्तव्यम् भवति ॥ भारद्वाजीयाः पठन्ति । नित्यमकित्त्वमिडाद्योः क्त्वाग्रहणमुत्तरार्थम् ॥ नित्यमकित्त्वमिडाद्योः सिद्धम् । कथम् । विभाषामध्येऽयं योगः क्रियते विभाषामध्ये च ये विधयस्ते नित्या भवन्ति । किमर्थं तर्हि क्त्वाग्रहणम् । क्त्वाग्रहणमुत्तरार्थम् । उत्तरार्थं क्त्वाग्रहणं क्रियते "नोपधात्थफान्ताद्वा" (१ । २ । २३ ) "वञ्चिलुञ्च्यृतश्च" (१ । २ । २४ ) इति ॥

विभाषयोर्मध्ये इत्यर्थः। किमर्थं तर्हि काश्यपग्रहणमिति प्रश्नो भारद्वाजीयमते बोध्यः ॥ नन्विहार्थत्वे सम्भवति कथमुक्तरार्थत्वमत आह नञ्वेति ॥ (कै)

---

# [1]तृषिमृषिकृशेः काश्यपस्य। १। २। २५॥

[2]पारम्पर्य्यप्रतिपादनेनेति। (कै)

[3]"चातुर्वर्ण्यादि"त्वात् स्वार्थे ष्यञ् परम्पराप्रतिपादनेनेत्यर्थः ॥

---

१ काश्यपग्रहणं किमर्थम्। काश्यपग्रहणं पूजार्थम्। वेत्येव हि वर्त्तते ॥

२ शास्त्रस्य पूजापारम्पर्य्यप्रतिपादनेनाप्तादित्वात् प्रामाण्यप्रतिपादनात् ॥ तृषपिपासायाम्। तृषित्वा। तर्षित्वा॥ मृष तितिक्षायाम्। मृषित्वा। मर्षित्वा॥ कृश तनूकरणे। कृशित्वा। कर्शित्वा॥ न्यासग्रन्थे तु कृषविलेखने इति क्वाचित्कः प्रमादपाठः। अनिट्त्वात् ॥

३ ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानम्। वा। अ ५। पा १। सू. १२४ ॥

# [१]रलो व्युपधाद्धलादेः संश्च ।१।२।२६॥

वेत्यनुवृत्तेरुभयथापि विकल्पसिद्धेर्विचारोऽनुपपन्न इत्यत-स्तात्पर्यमाह

[१]किमिति ॥ (कै)

ननु क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन व्यापारादुभयत्र विभाषास्तु प्रतिलक्ष्यं लक्षणभेदादत आह

[२]एकरूपत्वेति । (कै)

व्यापारैक्ये सम्भवति तद्भेदाङ्गीकारो निष्फल इति भावः ॥

---

१ किमिदं रलः क्त्वासनोः कित्त्वं विधीयत आहोस्वित्प्रतिषिध्यते । किं चातः । यदि विधीयते क्त्वाग्रहणमनर्थकम् । किदेव हि क्त्वा । अथ प्रतिषिध्यते सन्ग्रहणमनर्थकम् । अकिदेव हि सन् । अत उत्तरं पठति । *रलः क्त्वासनोः कित्त्वम् । वा । रलः क्त्वासनोः कित्त्वं विधीयते । ननु चोक्तं क्त्वाग्रहणमनर्थकं किदेवहि क्त्वेति । नानर्थकम् । नक्त्वा सेट् (१ । २ । १८) इति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् ॥

२ किमियमप्राप्ते विभाषा आहोस्वित्प्राप्त इति प्रश्नः । तत्राप्राप्तविभाषायां सन एवाप्राप्तं कित्त्वं पक्षे विधीयत इति क्त्वानुवृत्तिरनर्थिका । न हि तस्य कित्त्वं विधेयं स्वत एव भावात् । अथ प्राप्तविभाषा तदा क्त्वः कित्त्वमस्तीति तस्यैव पक्षे निषेधः कर्त्तव्य इति सन्ग्रहणं न कार्य्यं तस्य कित्त्वमस्ति यत्पक्षे निषिध्यते ॥

३ अप्राप्तविभाषेयमेकेनैव रूपेण व्यवस्थितेत्यर्थः । एकरूपत्वप्रदर्शनाय च विचारः कृतः । न ह्युभयत्र विभाषा न सन्ति प्रतिलक्ष्यं व्यापाराश्रयणे तासां सिद्धत्वात् ॥

---

* रलः क्त्वासनोः कित्त्वारम्भ ( वा ) इति पाठो बहुषु भाष्यपुस्तकेषु दृश्यते ॥

# ऊकालोऽज्झ्रस्वदीर्घप्लुतः । १ । २ । २७ ॥

भाष्ये

प्रतिनिर्दिश्यत इति । (भा)

विशेष्यत इत्यर्थः ॥

---

१ ऊ इति त्रयाणां प्रश्लेषेण निर्देशः । तत्र न तावदन्ते मात्रिकः । विभाषा पृष्ट प्रतिवचने हेः (८ । २ । ९३) इति हेः प्लुतविधानात् । नापि मध्ये । सुपि च (७ । ३ । १०२) इति दीर्घविधानात् ॥ द्विमात्रिकस्तु नान्ते । ओमभ्यादाने (८ । २ । ८७) इति प्लुतविधानात् । परिशेषादेकमात्र-द्विमात्र-त्रिमात्राणां क्रमः सिद्धः ॥ यत्तु "धित्त्वात्पूर्वं भवेद्ध्रस्वः प्लुतोऽन्ते सन्धितो मतः" इति मैत्रेयः । तद्भाष्यादर्शनान्न प्रयुक्तम् । यतः व्यत्यासे एकमात्रस्य ह्रस्वत्वं त्रिमात्रस्य प्लुतत्वमित्येव दुर्लभमिति भगवतैव दूषितम् ॥

२ अयुक्तोऽयं निर्देशः । ऊ इत्यनेन कालः प्रतिनिर्दिश्यत ऊ इत्ययं च वर्णः । तत्रायुक्तं वर्णस्य कालेन सह सामानाधिकरण्यम् । कथं तर्हि निर्देशः कर्तव्यः । ऊकालकाल इति । किमिदमूकालकाल इति । ऊ इत्येतस्य काल ऊकालः । *ऊकालः कालोऽस्य ऊकालकाल इति । स तर्हि तथा निर्देशः कर्तव्यः । न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा । उष्ट्रमुखमिव मुखमस्योष्ट्रमुखः । खरमुखः । एवमूकालकाल इति । अथवा साहचर्यात्ताच्छब्द्यं भविष्यति । कालसहचरितो वर्णः । वर्णोऽपि काल एव ॥

---

* ऊकालः कालो यस्य स ऊकालकाल इति । बहुषु भाष्यपुस्तकेषु एवंविधपाठोऽपि दृश्यते ॥

ऊकालः कालो यस्येति । (भा)

ऊकाल इव कालो यस्येत्यर्थः ॥ ननूकालानां वर्णानां बहुत्वात् एकः संज्ञीत्यनुपपन्नमत आह

[1]ऊ इत्येकस्येति । (कै)

उपात्तद्विमात्रत्वाकारेणैक इति भावः ॥

संज्ञिविशेषणस्येति । (कै)

ऊ इत्यस्येत्यर्थः ॥

संज्ञानां चेति । (कै)

प्रदेशेषु त्रिविधव्यवहारदर्शनादिति भावः ॥

सङ्ख्यातानुदेश इति । (कै)

सङ्ख्यातं सम्यग्ज्ञानमनतिक्रम्यानुदेशः सम्बन्ध इत्यर्थः । [2]"सुप्-सुपे"ति समासः । ज्ञानक्रमेणान्वय इति यावत् ॥ नन्वेवमर्थतः समसङ्ख्यत्वेऽपि शब्दतस्तदभावात् कथं "[3]यथासङ्ख्य"सूत्रप्राप्तिरत आह

[4]अर्थतश्चेति । (कै)

---

१ ऊ इत्येकस्यैव शब्दस्योच्चारणाद्भेदानवगमात् संज्ञिविशेषणस्यैकत्वे सति संज्ञिनोऽप्येकत्वात् । संज्ञानां च त्रित्वात् संख्यातानुदेशाप्रसंगः ॥

२ अ २ । पा १ । सू ४ ॥ ३ अ १ । पा ३ । सू १० ॥

४ अर्थतश्च साम्यं यथासंख्य (१ । ३ । १०) सूत्रे आश्रीयते न शब्दत एव ॥

अत एव [1]"परस्मैपदानां णल्" इत्यादौ यथासङ्ख्यमिति भावः। ऊशब्दस्य त्रयोऽर्था इति तात्पर्य्यम्॥

[2]त्रयः शब्दा इति। (कै)

वैयाकरणैस्तथा सुज्ञेयत्वादिति भावः॥ भाष्ये [3]"विकारः" दीर्घरूपः। तेन "निर्देशः" इति तृतीयातत्पुरुषः। तदाह

---

१ अ ३। पा ४। सू ८२॥

२ अथवा शब्दतत्त्वास्याश्रयणेऽपि संहितावकाशादैक्यमिव प्राप्तास्त्रयः शब्दा उच्चारिता इत्यदोषः॥

३ ऊकालादिषु समसंख्याप्रसिद्धिर्निर्देशवैषम्यात्। वा। ऊकालादिषु समसंख्यत्वस्याप्रसिद्धिः। किं कारणम्। निर्देशवैषम्यात्। तिस्रः संज्ञा एकः संज्ञी। वैषम्यात् संख्यातानुदेशो (१। ३। १०) न प्राप्नोति॥ सिद्धं तु समसंख्यत्वात्। वा। सिद्धमेतत्। कथम्। समसंख्यत्वात्। कथं समसंख्यत्वम्। त्रयाणां हि विकारनिर्देशः। वा। त्रयाणामयं प्रश्लिष्टनिर्देशः। कथं पुनर्ज्ञायते त्रयाणामयं प्रश्लिष्टनिर्देश इति। तिसृणां संज्ञानां करणसामर्थ्यात्। यद्यपि तावत्तिसृणां संज्ञानां करणसामर्थ्याज्ज्ञायते त्रयाणामयं प्रश्लिष्टनिर्देश इति कुतस्त्वेतदेतेनानुपूर्व्येण संनिविष्टानां संज्ञा भविष्यन्तीति। आदौ मात्रिकस्ततो द्विमात्रस्ततस्त्रिमात्र इति। न पुनर्मात्रिको मध्ये वाऽन्ते वा स्यात्तथा द्विमात्र आदौ वाऽन्ते वा स्यात्तथा त्रिमात्र आदौ वा मध्ये वा स्यात्॥ अयं तावत्त्रिमात्रोऽशक्य आदौ वा मध्ये वा कर्त्तुम्। कुतः। प्लुताश्रयो हि प्रकृतिभावः प्रसज्येत (६। १। १२५)। मात्रिकद्विमात्रिकयोरपि घ्यन्तं पूर्वं निपततीति (२। २। ३२) मात्रिकस्य पूर्वनिपातो भविष्यति॥ यत्तावदुच्यते। अयं तावत्त्रिमात्रोऽशक्य आदौ वा मध्ये वा कर्त्तुं प्लुताश्रयो हि प्रकृतिभावः प्रसज्येतेति। प्लुताश्रय-

प्रश्लिष्टेति ॥ (भा)

अनुमानादिति । (कै)

अनेकसंज्ञाकरणात् संज्ञिनां शब्दतो भेदावसाय इत्यर्थः। प्रयोगस्तु विमताः संज्ञाः भिन्नसंज्ञिविषयाः नानासंज्ञात्वादिति ॥ भाष्ये

प्लुताश्रय इति । (भा)

न च मध्ये करणे कथं प्लुताश्रयप्रकृतिभाव इति वाच्यम् मध्ये त्रिमात्रसत्त्वे पूर्वेण दीर्घे त्रिमात्रस्यैवापत्तौ लोकाश्रयप्लुतत्वमादा-

---

प्रकृतिभावः प्लुतसंज्ञा चानेनैव। यदि च त्रिमात्र आदौ वा मध्ये वा स्यात् प्लुसंज्ञैवास्य न स्यात् कुतः प्रकृतिभावः॥ यदप्युच्यते मात्रिक द्विमात्रिकयोरपि घ्यन्तं पूर्वं निपततीति मात्रिकस्य पूर्वनिपातो भविष्यतीति। ह्रस्वाश्रया हि घि संज्ञा (१ । ४ । ७) ह्रस्व संज्ञा चानेनैव। यदि च मात्रिको मध्ये वाऽन्ते वा स्याद्ध्रस्वसंज्ञैवास्य न स्यात् कुतो घि संज्ञा कुतः पूर्वनिपातः॥ एवमेषा व्यवस्था न प्रकल्पते॥ एवं तह्र्याचार्य्यप्रवृत्तिर्ज्ञापयति न मात्रिकोऽन्ते वा भविष्यतीति यदयं विभाषा पृष्ट प्रतिवचने हेः (८। २। ९३) इति मात्रिकस्य प्लुतं शास्ति। कथं कृत्वा ज्ञापकम्। योऽन्ते स प्लुतसंज्ञकः। यदि च मात्रिकोऽन्ते स्यात् प्लुतसंज्ञास्य स्यात्। तत्र मात्राकालस्य मात्राकालवचनमनर्थकं स्यात्। मध्ये तर्हि स्यादिति। अत्राऽप्याचार्य्यप्रवृत्तिर्ज्ञापयति न मात्रिको मध्ये भवतीति यदयम् "अतो दीर्घो यञि" "सुपि च" (७ । ३ । १०१-२) इति दीर्घत्वं शास्ति। कथं कृत्वा ज्ञापकम्। यो मध्ये स दीर्घसंज्ञकः। यदि च मात्रिको मध्ये स्याद्दीर्घसंज्ञास्य स्यात्। तत्र मात्राकालस्य मात्रा-

याग्निमेण सन्धौ कर्त्तव्ये प्रकृतिभावापत्तिः संख्या व्यवहार इव दीर्घादिव्यवहारोऽपि लौकिकशास्त्रीयोभयविषय इत्यभिमानः । तदाह

[1]लौकिकेति ॥ (कै)

[2]शास्त्रादिति । (कै)

लौकिकव्यवहारोऽप्यनादिशास्त्रसंस्कारपूर्वकः । अन्यथा संज्ञाकरणानर्थक्यमिति भावः ॥

[3]अनन्तरतमः । (कै)

उकारादिः ॥

न ह्येति । (कै)

---

कालवचनमनर्थकं स्यात् ॥ द्विमात्रस्त्वन्ते स्यादिति । अत्राऽप्याचार्यप्रवृत्तिर्ज्ञापयति न द्विमात्रोऽन्ते भवतीति यदयम् ओमभ्यादाने (८ । २ । ८७) इति द्विमात्रिकस्य प्लुतं शास्ति । कथं कृत्वा ज्ञापकम् । योऽन्ते स प्लुतसंज्ञार्थस्य स्यात् । तत्र द्विमात्राकालस्य द्विमात्राकालवचनमनर्थकं स्यात् ॥ मात्रिकेण चास्य पूर्वनिपातो बाधित इति कृत्वा शक्यन्नोत्सहते भवितुमन्यदतो मध्यात् ॥ एवमेषा व्यवस्था प्रक्लृप्ता ॥ दीर्घप्लुतयोस्तु पूर्वसंज्ञाप्रसङ्गः । वा । दीर्घप्लुतयोरपि पूर्वसंज्ञा प्राप्नोति । का । ह्रस्वसंज्ञा । किं कारणम् । अण् सवर्णान् गृह्णातीति (१ । १ । ६९ ) ॥

१ लौकिकव्यवहाराश्रयणेन प्लुतत्वं ह्रस्वत्वं च सिद्धमाश्रित्यैतदुच्यते "अयं तावदिति" ॥

२ शास्त्रात् स्थितायां ह्रस्वादिव्यवस्थायां लोके ह्रस्वादिव्यवहारो नान्यथेति भावः ॥ ३ उपलब्धकैयटपुस्तके "अनन्तर" इति पाठोऽस्ति ॥

अवाधेनोपपत्तौ बाधा न युक्तेति भावः ॥ घ्यन्तत्वात् पूर्वनिपातबाध इति न युक्तं प्रागुक्तयुक्तेरत आह

लिङ्गद्वयेनेति ॥ (कै)

अण्त्वादिति । (कै)

इदं जाति पक्षस्याप्युपलक्षणम् ॥ ननु ह्रस्वसंज्ञावद्दीर्घप्लुतसंज्ञे अपि त्रयाणां स्यातामिति संज्ञात्रयकरणं व्यर्थमत आह

द्विमात्रेत्यादि ॥ (कै)

अनण्त्वादिति । (कै)

यत्नाधिक्येन व्यापकजात्यविवक्षणाच्चेत्यपि बोध्यम् ॥ नन्वेवं पञ्चानां संज्ञित्वाद्यथासंख्यभङ्ग इति चेन्न । शब्दसाम्येनादोषात् ॥

भाष्ये

[1]सिद्धं त्ववस्थिता इति । (भा)

---

१ सिद्धन्तु तपरनिर्देशात् । वा । सिद्धमेतत् । कथम् । तपरनिर्देशः कर्त्तव्यः । उदूकाल इति । यद्येवं द्रुतायां तपरकरणे मध्यविलम्बितयोरुपसङ्ख्यानं कालभेदात् ॥ द्रुतादिषु चोक्तम् । वा । किमुक्तम् । सिद्धन्त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद्वृत्तयो विशेष्यन्त इति । (तपरस्तत्कालस्य (१ । १ । ७०) इति सूत्रव्याख्यानावसरेऽप्येतदेवोक्तं भगवता) ॥ स तर्हि तपरनिर्देशः कर्त्तव्यः । न कर्त्तव्यः । इह कालग्रहणं क्रियते यावच्च तपरकरणं तावत् कालग्रहणम् । प्रत्येकं च कालशब्दः परिसमाप्यते । उकाल ऊकाल ऊ३काल इति ॥ अथवा एकसंज्ञाधिकारेऽयं योगः कर्त्तव्यः ( आकडारादेका संज्ञा । १ । ४ । १ ) ॥ तत्रैका संज्ञा भवति या परानवकाशा चेत्येवं हि

द्रुतत्वात् [1]"अपो भि" इत्यादिगता एवेति भावः ॥ ननु [2]"तपरस्तत्कालस्य" इतिवत्कालपरः "तत्कालस्य" इति सूत्राभावात् कथं समत्वमत आह

एकेति ॥ (कै)

तदेवोपपादयति

[3]ऊ अजिति । (कै)

किं चैवमुकाराणामेव संज्ञित्वेन संज्ञाविधानवैयर्थ्यापत्तिः ॥

अपि तु तैरजिति । (कै)

अत्र च मुख्यसामानाधिकरण्ये उक्तदोषाल्लक्षणया सामानाधिकरण्यं दर्शयति ।

तत्रेति । (कै)

---

दीर्घप्लुतयोः पूर्वसंज्ञा न भविष्यति ॥ अथवा "स्वं रूपं शब्दस्याशब्दसंज्ञा" (१ । १ । ६८) इत्ययं योगः प्रत्याख्यायते । तत्र यदेतदशब्दसंज्ञेत्येतदयया विभक्त्या निर्दिश्यमानमर्थवद्भवति तया निर्दिष्टमुत्तरत्रानुवर्त्तिष्यते । "अणुदित्सवर्णस्य चाप्रत्ययः" (१ । १ । ६९) अशब्दसंज्ञायामिति ॥

१ अपोभि । ७ । ४ । ४८ । अपोभि मासश्छन्दसि । वा । अपोभीत्यत्र मासश्छन्दस्युपसङ्ख्यानं कर्त्तव्यम् । माद्भिरिष्ट्वा इन्द्रो वृत्रहा ॥ अत्यल्पमिदमुच्यते । स्ववस्स्वतवसोर्मास उषसश्च त इष्यते । स्ववद्भिः । स्वतवद्भिः । समुषद्भिरजायथाः । माद्भिरिष्ट्वा इन्द्रो वृत्रहा ॥

२ अ १ । पा १ । सू ७० ॥

३ ऊ अज् इत्येव कालार्थो लभ्यते । ऊकारादयो ह्यच्त्वं न व्यभिचरन्तीति नाच्त्वेन ते विशेष्यन्ते अपि तु तैरच् ॥

तत्र सावृत्त्यान्तरासम्भवाद्व्याख्यानाच्च कालकृतस्यैव तस्य ग्रहणमिति भावः ॥

[1]हलां त्विति । (कै)

शिक्षादावचामेव स्वरकथनादिति भावः । प्रत्याहारेषु जातिपक्षाश्रयणाच्च दोष इति तात्पर्य्यम् ॥ ननु ह्रस्वसंज्ञाह्रस्वविधायकेषु एकमात्रादीनां त्रयाणामपि ग्रहणार्था स्यादित्यत आह

त्रयाणां चेदिति ॥ (कै)

अन्तरतमेति । (कै)

प्रमाणत इति शेषः ॥

ह्रस्वप्रदेशेष्वज्ग्रहणमिति । (कै)

न च विधौ ह्रस्वग्रहणे त्रयाणां विधानम् । अज्ग्रहणे तु एकस्यैव विधीयमानत्वेन सवर्णाग्राहकत्वादिति विशेष इति वाच्यम् । विधीयमानेनापि क्वचित् सवर्णग्रहणादित्यभिमानः ॥ अनुवादे तु उभाभ्यामपि त्रयाणां ग्रहणेनाज्ग्रहणमेव कार्य्यमिति भावः ॥ भाष्ये

[2]ननु चेदमिति । (भा)

---

१ हलां त्वयोग्यत्वात्तदभावः ॥

२ अथवा ह्रस्वसंज्ञावचनसामर्थ्याद्दीर्घप्लुतयोः पूर्वसंज्ञा न भविष्यति । ननु चेदं प्रयोजनं स्यात् संज्ञयाविधाने नियमं वक्ष्यामीति (संज्ञया विधाने नियमः । वा । १ । २ । १८) ह्रस्वसंज्ञया यदुच्यते तदचः स्थाने यथास्यादिति । स्यादेतत्प्रयोजनं यदि किञ्चित्कार्याणि ह्रस्वशासनानि स्युः । यतस्तु खलु यावदज्ग्रहणं तावद्ध्रस्वग्रहणमतोऽकिञ्चित्कार्याणि ह्रस्वशासनानि ॥ इदं तर्हि प्रयोजनम् "एच इग्घ्र-

ह्रस्वप्रदेशेष्वज्ग्रहणे [१]"अचश्च" इति नियमाभावाद् हलामप्यादेशः प्राप्नोति इति भावः॥ परिहरति

· **स्यादेतदिति॥** (भा)

**किञ्चित्कराणि।** (भा)

किञ्चिद्विशेषकराणि। न वाऽस्ति कश्चिद्ध्रस्वविधाने विशेषः। अन्तरतमपरिभाषया मात्रिकस्थाने मात्रिकस्य द्विमात्रिकस्थाने द्विमात्रिकस्यैव विधानादिति भावः॥ न च अनन्तरतमादेशविधानार्थं तद्बाधकल्पनापेक्षयेष्टानुरोधेन तयोर्ह्रस्वसंज्ञाभावज्ञापनस्यैवौचित्यमिति भावः॥

**यावदज्ग्रहणमिति।** (भा)

प्रयोगे यत्परिमाणकाजुच्चारणमित्यर्थः॥

**तावद्ध्रस्वग्रहणमिति।** (भा)

तत्परिमाणकस्यैव ह्रस्वशब्देन ग्रहणं विधानमतस्तानि व्यर्थान्येव इत्यर्थः॥ ये तु ह्रस्वविधायकेष्वज्ग्रहणमेव कार्य्यमित्येतद्भाष्याशयं वर्णयन्ति तेषां संज्ञया विधाने नियममित्यादेः समाधिरयं कथमिति चिन्त्यम्॥

---

स्थादेशे" ( १ । १ । ४८ ) इति वक्ष्यामीति। अनुच्यमाने ह्येतस्मिंस्त्रिषु ह्रस्वप्रदेशेष्वेच इग्भवतीति वक्तव्यं स्यात्। "ह्रस्वो नपुंसके प्रातिपदिकस्य" ( १ । २ । ४७ ) एच इग्भवतीति। "णौ चङ्युपधाया ह्रस्वः" ( ७ । ४ । १ ) एच इग्भवतीति। "ह्रस्वः" "हलादिः शेषः" ( ७ । ४ । ५९ – ६० ) एच इग्भवतीति॥

[१] अ १। पा २। सू २८॥

[१]षड्ग्रहणानीति। (भा)

भाष्यस्य चोपपत्तिः चिन्त्येति दिक्। अनुवादे तु ह्रस्वग्रहणाज्ग्रहणयोः समतैवेति एतदर्थद्वयबोधनार्थमेवेद्ग्रश्लिष्टशब्दोपादानं भाष्ये इति बोध्यम्॥

लाघवोपलक्षणपरमिति। (कै)

केचित्तु एतत्सूत्रस्यैतद्भाष्यप्रामाण्यात् "[२]कमेर्णिङ्" इति सूत्रे "[३]चिण्णमुलोः" इति सूत्रस्थदीर्घग्रहणस्यैतदिदानीं प्रयोजनं यद्दीर्घविधौ स्थानिवत्त्वनिषेध इति वदतो भाष्यकारस्य प्रामाण्याच्च "चिण्णमुलोः" इति सूत्रस्थभाष्याच्च हेड् वेष्टने इति धातोर्घटादावसाम्प्रदायिकः पाठः॥ परमनुमन्य इत्यादिस्यैतद्भाष्यप्रामाण्यादनभिधानमिति यथाश्रुतं भाष्यमेव सम्यगित्याहुः॥ पुंलिङ्गैकवचनदर्शनाद् द्वन्द्वानुपपत्तिमाशङ्क्याह

सौत्रत्वादिति॥ (कै)

लिङ्गस्य लौकिकत्वात्तद्व्यत्यय उचितो न तु शास्त्रीयैकवचनस्येति भावः॥

---

१ संज्ञा च नाम यतो न लघीयः। कुत एतत्। लघ्वर्थं हि संज्ञाकरणम्। लघीयश्च त्रिरुक्तप्रदेशेष्वेच इग्भवतीति न पुनः संज्ञाकरणम्। त्रिरुक्तप्रदेशेष्वेच इग्भवतीति षड्ग्रहणानि। संज्ञाकरणे पुनरष्टौ। ह्रस्वसंज्ञा वक्तव्या। त्रिरुक्तप्रदेशेषु ह्रस्वग्रहणं कर्तव्यं ह्रस्वो ह्रस्वो ह्रस्व इति। एच इग् ह्रस्वादेश इति। सोऽयमेव लघीयसा न्यासेन सिद्धे यद्गरीयांसं यत्नमारभते तस्यैतत्प्रयोजनं दीर्घप्लुतयोस्तु पूर्वसंज्ञामाभूदिति॥

२ अ ३। पा १। सू ३०॥ ३ अ ६। पा ४। सू ९३॥

# अचश्च । १ । २ । २८ ॥

भाष्ये

[1]अलोऽन्त्यस्य विषयो भवन्ति । (भा)

इत्यनेन तस्य व्यापकत्वं बोधितं तेनैतत् प्रवृत्त्यभावेऽपि स्थान-षष्ठीरूपालिङ्गाद् [2]"दिव उद्" इत्यादौ [3]"अलोऽन्त्यस्य" इत्यस्य प्रवृत्तिः सूचिता ॥ एकवाक्यतां दर्शयति

अच इति ॥ (भा)

आदिप्रभृतिशब्दयोः पौनरुक्त्यं परिहरति

[4]प्रभृतीति । (भा)

---

१ किमयमलोऽन्त्यशेष आहोस्विदलोऽन्त्यापवादः (१ । १ । ५२)। कथं चायं तच्छेषः स्यात् कथं वा तदपवादः । यद्येकं वाक्यं तच्चेदं च अलोऽन्त्यस्य विधयो । भवन्ति अचो ह्रस्वदीर्घप्लुता अन्त्यस्येति ततोऽयं तच्छेषः । अथ नानावाक्यम् अलोऽन्त्यस्य विधयो भवन्ति अचो ह्रस्वदीर्घप्लुता अन्त्यस्यानन्त्यस्य चेति ततोऽयं तदपवादः ॥

२ अ ६ । पा १ । सू १३१ ॥ ३ अ १ । पा १ । सू ५२ ॥

४ कस्माच्च विशेषः । ह्रस्वादिविधिरलोऽन्त्यस्येति चेदचिप्रच्छिश्र्यादि-प्रभृतिषु निगमिदीर्घत्वग्रहणम् । वा । ह्रस्वादिविधिरलोऽन्त्यस्येति चेदचिप्रच्छिश्र्यादिप्रभृतिषु निगमिदीर्घत्वग्रहणं कर्त्तव्यम् । वचि-प्रच्छ्योर्दीर्घोऽ(वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च । ( ३ । २ । १७८ ) वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घत्वं च वक्तव्यं क्विप् च ।

[1]"आदि" पदं तु [2]"शमामष्टानाम्" इति सूत्रस्थवक्तव्यवचनानुवादकमिति भावः ॥

## [3]यदा त्विति । (कै)

इदं चिन्त्यम् । प्रत्ययस्याङ्गांश एवोत्थिताकाङ्क्षत्वात् ॥

## नाचमिति । (कै)

ह्रस्वादिसंज्ञका अचोऽचः स्थाने इति नार्थ इति भावः ॥

## स्वयमिति । (कै)

अच् पदेनैवेत्यर्थ आश्रितः स्वरूपस्य शब्दस्य व्यापारो यैरित्यर्थस्तदाह

## ह्रस्व इत्येवमिति ॥ (कै)

ननुमात्रिकाणां ह्रस्वानुप्रदेशाभावादसत्त्वेन संज्ञाभावमाशङ्क्याह

---

वचि । वाक् । वचि ॥ प्रच्छि । शब्दप्राट् । प्रच्छि ॥ आयतस्तु । आयतस्तूः । आयतस्तु ॥ कटप्रु । कटप्रूः । कटप्रु ॥ जु । जूः ॥ श्रि । श्रीः ॥ ) च इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति ॥ इग्गिमन्यो-दीर्घोऽ(नधिकार उक्तम् । वा । किमुक्तम् । इगिगमिदीर्घेष्वण्-ग्रहणमिति । नैष दोषः । उक्तमेतद्ध्रस्वो दीर्घः प्लुत इति ) च इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति ॥

१ ह्रस्वादिविधिरलोऽन्त्यस्येति चेद्वचिप्रच्छिशमादिप्रभृतिष्विगिमदीर्घे-ष्वणग्रहणम् इति वार्त्तिके ॥

२ अ ७ । पा ३ । सू ७४ ॥

३ "यकारादौ यदङ्गं तस्य योऽवयवोऽजित्येवमत्र प्रसङ्गः । यदा त्वजेव यकारादिना विशेष्यते तदात्र व्यवधानान्नास्ति प्रसङ्गः । एवमन्यत्रापि ज्ञेयम्" इति कैयटेनोक्तम् ॥

यथेति ॥ (कै)

[1]वा तुकीति । (कै)

वैकल्पिके तुकीति यावत् ॥

[2]विरोधादिति । (कै)

तथा च विकल्पविधिप्रवृत्तेर्वैयर्थ्यापत्त्या नित्यस्य बाध एवेत्यर्थः ॥ क्व तर्हि पुनः प्रसङ्गविज्ञानं तत्राह

यत्र हीति । (कै)

यथा "भिन्धकी" त्यत्र परत्वात् धौक्ते पुनः प्रसङ्गविज्ञानादकच् । न हि तत्राकच् धिप्रवृत्त्योर्विरोधः ॥

समुदाये वेति । (कै)

इदं चिन्त्यं बहुशो दृष्टत्वात् ॥ व्यक्तिदारकपरिमाणासम्भवं प्रक्ते आह

---

१ परत्वाद् दीर्घलक्षणे वा तुकि सति सकृद्गतौ विप्रतिषेध इति न्यायाद् ह्रस्वलक्षणः पुनर्न प्रवर्त्तते ॥

२ न चैवं विधेर्विषये पुनः प्रसङ्गविज्ञानमस्ति । नित्यविकल्पयोर्विरोधात् । पूर्वेण परस्य बाधप्रसङ्गात् । यत्र हि पूर्वो विधिः परं न बाधते तत्र पुनः प्रसङ्गविज्ञानं क्वचिद् आश्रीयते । समुदाये वा कार्यं प्रति व्याप्रियमाणे अवयवानां पारतन्त्र्यादव्यापारान्नैव ह्रस्वलक्षणतुक् प्रसङ्गः । ननु क्रियमाणेऽप्यज्ग्रहणे वर्णग्रहणे जातिग्रहणादच् समुदायस्यापि दीर्घसंज्ञाप्रसङ्गः । नैष दोषः । ऊकाल इति विशेषणादिह व्यक्तिराश्रीयते ॥

[1]एकैकेति । (कै)

द्विमात्राकालिकव्यक्तिगतात्वजातिर्दीर्घ इति हि अर्थः स्यात् । तत्र या व्यक्तिः प्रत्येकरूपा न सा द्विमात्रकाला या च तादृशी न सा व्यक्तिरिति भावः । [2]"हलन्ताच्च" इत्यादौ तु इक्समीपव्यक्तिवृत्तिहल्त्वजातेः पर इत्यर्थान्न धिप्सतीत्यादौ दोषः । जातेर्हि जात्यन्तरव्यवधायकमिति न सजातीयद्वितीयव्यक्तिर्व्यवधायिकेति बोध्यम् । परे तु वर्णाद्वर्णान्तरोच्चारणेऽर्धमात्राकालस्य सत्त्वेन वर्णसमुदाये मात्राकालिकत्वाद्यसम्भव इति प्रश्नो भाष्ये

अथ पूर्वेति । (भा)

उत्तरन्तु तावत्सूक्ष्मकालग्रहणासमर्थस्य तत्र संज्ञाप्रवृत्तिशङ्कावारणार्थमित्याशयेन । एवं च जातिग्रहणमित्यस्य जात्याश्रयानेकव्यक्तिग्रहणमित्यर्थेऽपि न दोषः । मात्राकालोऽवग्रहोऽर्धमात्राकालोऽवग्रह इति प्रातिशाख्ययोरविरोधाय [3]"परः सन्निकर्षः" इति सूत्रस्थं भाष्येण च वर्णाद्वर्णान्तरोच्चारणेऽर्धमात्राकालव्यवायस्यावश्यकत्वाद् इत्याहुः ॥

---

१ न हि जातेः परिमाणमस्ति । व्यक्तिद्वारकं वा जातेः परिमाणमाश्रीयते । एकैकव्यक्तिव्यङ्ग्या हि जातिर्न समुदायव्यङ्ग्या ॥

२ अ १ । पा २ । सू १०॥

३ अ १ । पा ४ । सू १०९ ॥

# ¹उच्चैरुदात्तः । १ । २ । २९ ॥
# नीचैरनुदात्तः । १ । २ । ३० ॥



नन्वच इत्यनुवृत्तावपि कथं परिभाषाऽप्रवृत्तिः । अनुवृत्तस्य प्रकृतसूत्रेष्वपेक्षितसंज्ञिसमर्पकत्वेऽपि स्वरोऽच एव स्थाने इत्यर्थकत्वे मानाभावादत आह

---

१ किं षष्ठीनिर्दिष्टमज्ग्रहणमनुवर्त्तत उताहो न (१।२।२७)। किं चातः। यद्यनुवर्त्तते, हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्येषा* परिभाषा न प्रकल्पते। कथं हलो नाम स्वरप्राप्तिः स्यात्। एवं तर्हि निवृत्तम्। बह्व्न्येतस्याः परिभाषायाः प्रयोजनानि। अथ प्रथमानिर्दिष्टमज्ग्रहणमनुवर्त्तते उताहो न। †किं चार्थोऽनुवृत्त्या। बाढमर्थो यद्येते व्यञ्जनस्यापि गुणा लभ्यन्ते। ननु च प्रत्यक्षमुपलभ्यन्ते। ‡"इषेत्वोर्जेत्वा" (यजुः-वा-संहि-माध्य-शा-१-१-१)। नैते व्यञ्जनस्य गुणाः। §अच एते गुणास्तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते। तद्यथा। द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते। बदरपिटके रिक्तको लोहकंसस्तद्गुणमुपलभ्यते ॥ कुतो नु

---

* "भवतीत्येषा" इति पाठोऽपि भाष्ये दृश्यते ॥

† "कश्चार्थोऽनुवृत्त्या" इत्यपि भाष्ये ॥

‡ अग्निमीळे पुरोहितम् (ऋक् संहि १अ-१अ-१व-१ऋ) अग्न आ याहि वीतये (सामसंहि १प्र १अ-१ख-१ऋ) इति। इत्यधिकपाठोऽपि दृश्यते ॥

§ "किं तर्ह्यच एव" इति पाठो बहुषु भाष्यपुस्तकेषु नास्ति ॥

उच्चैरिति । (कै)

संज्ञिसमर्पणाय प्रथमान्तानुवृत्त्यापि सिद्धेरितिः भावः ॥

स्थाने । (कै)

ताल्वादौ ॥ "उच्चैः" उच्चदेशे उपलभ्यमान इत्यन्वयः ॥

उपलभ्यमानः । (कै)

व्यज्यमानः ॥

स च ाच इति । (कै)

वाक्यभेदेन षष्ठ्यन्ताच् पदेन सम्बन्ध इति भावः ॥ नन्वच् ग्रहणानुवृत्त्यैव सिद्धे मास्तु परिभाषाप्रवृत्तिरत आह

---

खल्वेतदच एते गुणा*स्तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यत †इति न पुनर्व्यञ्जनस्यैते गुणाः स्युस्तत्सामीप्यात्त्वजपि तद्गुण उपलभ्यत इति । अन्तरेणापि व्यञ्जनमच एवैते गुणा लक्ष्यन्ते न पुनरन्तरे-णाचं व्यञ्जनस्योच्चारणमपि भवति । अन्वर्थं खल्वपि निर्वचनम् ।

**स्वयं राजन्ते स्वरा अन्वग् भवति व्यञ्जनमिति ॥**

उच्चनीचस्यानवस्थितत्वात् संज्ञाऽप्रसिद्धिः । वा । इदमुच्चनीचमन-वस्थितपदार्थकम् । तदेव हि किञ्चित्प्रत्युच्चैर्भवति किञ्चित्प्रतिनीचैः । ‡एवं कश्चित् कश्चिदधीयानमाह किमुच्चै रोरूयसेऽथ नीचैर्वर्त्तता-मिति । तमेव तथाधीयानमपर आह किमन्तार्न्तिकेनाधीष उच्चैर्वर्त्ततामिति । एवमुच्चनीचमनवस्थितपदार्थकं तस्यानवस्थानात्

---

* "गुणाः स्युः" इति पाठोऽपि दृश्यते ॥

† "इति" इति नास्ति बहुषु पुस्तकेषु ॥

‡ "एवं हि कश्चित् कं चिद्" इति पाठोऽपि दृश्यते ॥

[१]सत्यामिति । (कै)

"समासस्य" (६ । १ । २२३) इत्यत्राच इत्यस्योपस्थित्या तेन समासे विधीयमाने [२]"राजदृषद्" इत्यादौ न स्यादित्यर्थः ॥

षकाराकारस्येति । (कै)

तथा च तत्सिद्ध्यर्थं परिभाषैव कर्त्तव्या नाच इत्यनुवृत्तिरिति भावः । तदाह भाष्ये

बहुन्येतस्या इति ॥ (भा)

---

संज्ञाया अप्रसिद्धिः ॥ एवं तर्हि लक्षणं करिष्यते । आयामो दारुण्यमणुता खस्येत्युच्चैः कराणि शब्दस्य । आयामो गात्राणां निग्रहः । दारुण्यं स्वरस्य दारुणता रूक्षता । अणुता खस्य कण्ठस्य संवृतता । उच्चैः कराणि शब्दस्य । *अथ नीचैः कराणि शब्दस्य । अन्ववसर्गो मार्दवमुरुता खस्येति नीचैः कराणि शब्दस्य । अन्ववसर्गो गात्राणां शिथिलता । मार्दवं स्वरस्य मृदुता स्निग्धता । उरुता खस्य महत्ता कण्ठस्य । इति नीचैः कराणि शब्दस्य ॥ एतदप्यनैकान्तिकम् । यदल्पप्राणस्य सर्वोच्चैस्तन्महाप्राणस्य सर्वनीचैः ॥

सिद्धं तु समानप्रक्रमवचनात् । वा । सिद्धमेतत् समाने प्रक्रम इति वक्तव्यम् । कः पुनः प्रक्रमः । उरः कण्ठः शिर इति ॥

१ सत्यामच इत्यस्यानुवृत्तौ समासस्य ( ६ । १ । २२३ ) इत्यन्तोदात्तत्वं राजपुरुष इत्यादावेव स्यात् न तु राजदृषद् इत्यादौ षकाराकारस्य ॥

२ समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानम् ( वा । ६ । १ । २२३ ) इति वार्त्तिकव्याख्यानावसरे "राजदृषद् ब्राह्मणसमित्" इत्युक्तं भगवता ॥

---

* "अथ नीचैः कराणि शब्दस्य" इति पाठो नास्ति बहुषु पुस्तकेषु ॥

[1]यतोऽनाव इति । (पा)

यदन्तस्य द्व्यच्कस्यादिरुदात्त इति तदर्थः ॥

[2]यावतेति । (कै)

न वाऽचः स्थाने हलप्युदात्तादिशब्देन प्रत्यायितः स्यादिति वाच्यम् । अन्तरतमपरिभाषयाऽप्राप्तेः ॥ ननु स्वरशेषाया अविद्यमानवत्परिभाषाया अन्यथाऽप्राप्तेस्तत्र दोषोऽत आह

[3]अनुदात्तादेरिति ॥ (कै)

[4]स्वत एव (कै)

इत्यस्यार्थः वैस्वर्यवत्तेषामनुदात्तत्वमेवेति विशेषस्वराप्राप्त्या स्वस्वर एवावतिष्ठते इत्यर्थः ॥ ननु स्वतस्तथात्वकल्पने मानाभावः । किं

---

१ एषा च परिभाषा "यतोऽनाव" (६ । १ । २१३ ) इत्यत्र "अनाव" इति प्रतिषेधेन ज्ञापिता । अन्यथा नाव्यमित्यत्र नकारस्यायोग्यत्वादाकारस्य चानादित्वादुदात्तत्वं न भविष्यतीति किमनाव इति प्रतिषेधेन । एतदेवोक्तं भगवता । "सा तर्ह्येषा परिभाषा कर्त्तव्या । न कर्त्तव्या । आचार्य्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं "यतोऽनावः" (६ । १ । २१३ ) इति नावः प्रतिषेधं शास्ति" ॥

२ यावता यत्र स्वरो विधीयते तत्र व्यञ्जनस्याविद्यमानत्वादच एव भविष्यत्यनुदात्तादेरञ् इत्यादावनुवादेऽपि न दोषः ॥

३ अ ४ । पा २ । सू ४४ ।

४ स्वत एव हलोऽनुदात्तत्वं भवतु अनुपरागवशाद्वा तदनुवादेन कार्य्यविधाने न कश्चिद्विशेषः । एवं तर्हि न्यायव्युत्पादनार्थं एवायं विचारः ॥

चोदात्तसमवधानेऽप्यनुदात्तत्वप्रतीत्यापत्तिरेवं च हलादिप्राति-पदिके आद्युदात्तेऽप्यनापत्तिरत आह

अजुपेति ॥ (कै)

न्यायेति । (कै)

उदात्तत्वादीनामज्धर्मविषयकन्यायेत्यर्थः ॥ भाष्येऽनुवृत्तेः प्रयो-जनाभावात् सन्देहानुपपत्तिरिति पृच्छति

किं चेति । (भा)

अनुवृत्तेः फलमित्यर्थः ॥ भाष्ये यदि लभ्यन्ते तदार्थः । यतो न लभ्यन्ते अतो नार्थ इत्यन्वयः ॥ ननु इयं प्रतीतीरक्तस्फटिक-प्रतीतिवत् भ्रान्तेत्यत आह

[1]बाधकेति ॥ (कै)

प्रतीतिर्भ्रान्तिवेत्याह

नैते इति (भा)

भाष्ये ॥ तद्व्याचष्टे

[2]अन्यथाऽपीति ॥ (कै)

रिक्तको लोहकंसः । (भा)

आदर्शः रिक्तकः । घर्षणेन उज्ज्वलीकृतः ॥ "वदरपिटकं" वदरफलयुक्तपेटिकेति सम्प्रदायः प्रतीतेर्भ्रान्तत्वे बीजं पृच्छति

कुतो न्विति ॥ (भा)

अजन्वयव्यतिरेकौ बीजमित्याह

---

१ बाधकाभावाच्च भ्रान्त्यसिद्धिः ॥ २ अन्यथाऽप्युपालम्भोपपत्तेरिति भावः ॥

**अन्तरेणापीति ॥ (भा)**

**[1]अच इति। (कै)**

[2]"निपाता आद्युदात्ताः" [3]"तिङतिङः" इत्याभ्यामिति भावः ॥

**न पुनरन्तरेणेति। (भा)**

अन्वयप्रदर्शनम् इदं प्रक्रियाप्राप्तातिरिक्तविषयं लौकप्रयोगातिरिक्तविषयकं च बोध्यम् ॥

**स्वयं राजन्त इति (भा)**

भाष्यस्योदात्तादिगुणैरित्यर्थः ॥

**अनुगच्छतीति। (कै)**

अनुगुणमिति शेषः ॥

**न त्वत्र वर्णसादृश्यमिति। (कै)**

निर्वचनं हि तत्र धात्वर्थयोगेनार्थाभावेऽपि वर्णसादृश्येन वा इत्याशयः ॥ अर्थयोग एवास्तीत्याह

**अथवेति ॥ (कै)**

---

१ अत्र ह्याकार उदात्तस्तिङन्तस्य निघातः। ततश्चान्वयव्यतिरेकाभ्यामच एवैते गुणाः। यदि तु हलामप्येते गुणा अभविष्यन् तदा हलामचां च भिन्नस्वरताप्युपालप्स्यत यस्मात्त्वचामेव स्वरमनुविदधति न हलः। तस्मान्न हलां स्वयं स्वरोऽस्तीति निश्चयः ॥

२ निपाता आद्युदात्ताः (फिट् सूत्रम् ८०)। स्वाहा ॥

३ तिङतिङः। ८। १। २८। अतिङ इति किमर्थम्। पचति। करोति ॥ अतिङ् वचनमनर्थकं समानवाक्याधिकारात्। वा। अतिङ्वचनमनर्थकम्। किं कारणम्। समानवाक्याधिकारात्। समानवाक्य (वा। ८। १। १८) इति वर्तते न च समानवाक्ये द्वे तिङन्ते स्तः ॥

( उच्चैरुदात्तः । १ । २ । २९ । ) ( अ. १ । पा. २ । आ. १ )

( नीचैरनुदात्तः । १ । २ । ३० । )

विविधमिति । (कै)

उदात्तत्वादिरूपनानाप्रकारगमनमणधीनमितिशब्दादेव लभ्यत इति भावः ॥

पर्य्यायेति । (कै)

यो हि यमनुगच्छति स तद्वद्विविधं गच्छतीत्यर्थः ॥ ननु विरुद्धस्वरद्वयमध्यगतस्य व्यञ्जनस्य स्वरद्वयानुरागापत्तिरत आह

उपरागश्चेति ॥ (कै)

स्वभाव एवात्र वीजम् अधिकरणशक्तिप्रधानत्वात् कथमयं पर्य्यनुयोगोऽत आह

अतीति । (कै)

उच्चैः श्रूयमाण उदात्तादिरर्थ इत्यभिमानः ॥ नन्वस्त्वनवस्थितत्वं को दोषोऽत आह

न चेति ॥ (कै)

भाष्ये

एवं तर्हि लक्षणमिति । (भा)

न श्रुतिगतप्रकर्षाश्रयमुच्चत्वं नीचत्वं किन्तु ईदृशज्ञापकज्ञापितमिति भावः ॥

[१]श्रोता ह्यीति । (कै)

---

१ श्रोता हि वक्तृगतानायामादीन् धर्मान् कार्य्यादवस्यति कार्य्यं च संकीर्णम् । तथा हि महाप्राणो नीचैरप्युच्चारयन् स्वरेण महान्तं देशं व्याप्नोति । अल्पप्राणस्तूच्चैरपि वदन्नल्पं देशं व्याप्नोति ॥

आयामादीनां श्रुतिप्रकर्षानुमेयत्वात् तस्य चाव्यवस्थितत्वा-द्व्यवस्थितत्वमिति भावः ॥

[1]प्रक्रम्यन्ते इति । (कै)

अधिकरणे घञि [2]"नोदात्तोपदेशस्य" इति वृद्धि प्रतिषेधः ॥

[3]ऊर्ध्वभागेनेति । (कै)

ऊर्ध्वभागावच्छिन्नवायुसंयोगेनेत्यर्थः ॥ न चेदमपूर्वं कर्त्तव्य-मित्याह

[4]एवं चेति । (कै)

करणस्य चाधिकरणविवक्षा बोध्या । कस्योर्ध्वभागे इत्याका-ङ्क्षायां योग्यतया स्थानस्येति लभ्यते इति भावः । मन्दं प्रति तुकं-वचनमेवावश्यकमिति बोध्यम् ॥ भाष्ये

उरः कण्ठः शिर इति । (भा)

शिरः पदं ताल्वादीनामुपलक्षणम् ॥

---

१ प्रक्रम्यन्तेऽस्मिन् वर्णा इति प्रक्रमः स्थानमुच्यते ॥

२ नोदात्तोपदेशस्य मान्तस्यानाचमेः । ७ । ३ । ३४ । अत्यल्पमिदमुच्यते-ऽनाचमेरिति । अवमिकमिचमीनामिति वक्तव्यम् । वामः कामः आचामः ॥

३ एकस्मिंस्ताल्वादिके स्थाने ऊर्ध्वाधरभागयुक्ते ऊर्ध्वभागेनोच्चार्यमाण उदात्तः । अधरभागनिष्पन्नोऽनुदात्तः ॥

४ एवं चोच्चैरित्यनेनोर्ध्वभागो गृह्यते नीचैरित्यधरभागः । अभ्याससम-धिगम्यश्चायं स्वरविशेषः षड्जादिवद्विज्ञेयः ॥

# [1]समाहारः स्वरितः । १ । २ । ३१ ॥

समाहारशब्दे कर्मसाधने कस्येति षष्ठ्यन्तेन पृच्छानुपपन्नेत्यत आह

१ समाहारः स्वरित इत्युच्यते । कस्य समाहारः स्वरितसंज्ञो भवति । अचोरित्याह । समाहारोऽचोस्तेन्नाभावात् । वा । समाहारोऽचोस्तेन्न । किं कारणम् । अभावात् । न ह्यचोः समाहारोऽस्ति । नन्वयमस्ति गाङ्गेऽनूप इति । नैषोऽचोः समाहारः । अन्योऽयमुदात्तानुदात्तयोः स्थान एक आदिश्यते । एवं तर्हि गुणयोः । गुणयोस्तेन्नाच् प्रकरणात् । वा । गुणयोः समाहार इति चेत्तन्न । किं कारणम् । अच् प्रकरणात् । अजिति वर्तते । सिद्धं त्वच्समुदायस्याभावात् तद्गुणे सम्प्रत्ययः । वा । सिद्धमेतत् । कथम् । अच्समुदायो नास्तीति कृत्वा तद्गुणस्याचः समाहारगुणस्य सम्प्रत्ययो भविष्यति । कथं पुनः समाहार इत्यनेनाच्शक्यः प्रतिनिर्देष्टुम् । मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा । पुष्पका एषां ते पुष्पकाः । कालका एषां ते कालका इति । एवं समाहारवान् समाहारः । अथवाकारो मत्वर्थीयः । तद्यथा । तुन्दः घाट इति । यद्येवं नैश्वर्यं न प्रकल्पते । तत्र को दोषः । ऐश्वर्यंणाधीमह इत्येतन्नोपपद्यते नैतद्गुणापेक्षम् । किं तर्हि । अजपेक्षम् । ऐश्वर्य्यंणाधीमहे त्रिप्रकारैरज्भिरधीमहे कैश्चिदुदात्तगुणैः कैश्चिदनुदात्तगुणैः कैश्चिदुभयगुणैः । तद्यथा । शुक्लगुणः शुक्लः । कृष्णगुणः कृष्णः । यः इदानीमुभयगुणः स तृतीयामाख्यां लभते कल्माष इति वा सारङ्ग इति वा । एवमिहाप्युदात्तगुण उदात्तः । अनुदात्तगुणोऽनुदात्तः । य इदानीमुभयवान् स तृतीयामाख्यां लभते स्वरित इति ॥

[1]भावेति । (कै)

जातौ च "कस्ये"त्येकवचनम् ॥

[2]उपश्लेषः । (कै)

अव्यवहितोत्तरत्वरूपः ॥

[3]अन्यच । (कै)

फलादौ ॥

औत्तराधर्य्यम् । (कै)

आधाराधेयभावः । न च वर्णानां सः अमूर्त्तत्वादस्थिरत्वाच्चेति भावः । स्वरितभाज एकादेशस्यैकत्वात् कथमत्र द्वयोरचोः समाहारोऽत आह

स्थानिनोरिति । (कै)

"कार्य्यं क"शब्दयोर्यदुदात्तयोरस्तित्वात् स्वरितत्वम् । "कन्या" इत्यत्र कन्या राजन्यमनुष्याणामन्त इति तत् । एवं गौणोऽपि सर्व्वत्र नास्तीत्यर्थः ॥

गौण इति । (कै)

स्थानिनोनुपश्लेषस्याशास्त्रीयत्वेन स्थानिवत्सूत्रात् प्रवृत्तेः । लोकन्यायसिद्धस्तु गौण इत्यर्थः ॥ नन्वचोः समाहाराभावे कथं तद् गुणयोः समाहारोऽत आह

---

१ समाहरणं समाहार इति भावसाधनं मत्वा "कस्येति" प्रश्नो भाष्ये ॥
२ तयोः समाहार उपश्लेषरूपः ॥
३ अन्यत्र त्वौत्तराधर्य्यरूपोऽपि संभवति ॥

गुणयोरिति । (कै)

एकाज्निष्ठयोरेव तयोः समाहार इत्यर्थः ॥

नैरन्तर्य्येणेति । (कै)

[1]"तस्यादित उदात्तम्" इत्युक्तेः ॥ पूर्व्वं प्रत्याख्यानेनाच्प्रकरणादिति विरुद्धमत आह

[2]प्रस्ताव इति । (कै)

सामर्थ्यादवगतिरित्यर्थः । तदुपपादयति

तदर्थमिति ॥ (कै)

अजितिवर्त्तते इति । (भा)

भाष्येऽच्शब्देन तद्विशेषबोधकावुदात्तानुदात्तशब्दौ लक्ष्येते इत्यर्थः ॥ भाष्ये तत्तद्गुणस्येत्यस्य व्याख्या

समाहारगुणस्येति । (भा)

उदात्तानुदात्तसमाहाररूपगुणवत इत्यर्थः ॥ अचः संश्लिष्टेन अनुपादानादयं प्रश्नोऽयुक्तोऽत आह

[3]स्वरित इति ॥ (कै)

---

१ अ १ । पा २ । सू ३२ ॥

२ प्रकरणं प्रस्तावो न तु स्वरितत्वादनुवृत्तिः । तस्याः पूर्वं प्रत्याख्यानात् तदयमर्थः । पूर्वसूत्रयोः सामर्थ्याच्छिष्टोऽजेव संज्ञी उदात्तानुदात्तशब्दयोरिति ताविहानुवृत्तावचं प्रत्याययतो न तु गुणम् ॥

३ स्वरित इत्यनया संज्ञया योग्यत्वादच्संश्लिष्टेनाच्छिन्नः ॥

## न चाच् समाहार इति। (कै)

भावसाधनत्वात् समाहारशब्दस्येति भावः॥

## [1]अर्श आदेरिति। (कै)

अधिकरणे घञिति तु नोक्तं ल्युटाबाधात्। बाहुलकस्या-गतिकगतित्वात्॥

## उदात्तेत्यादि। (कै)

स्वरशब्दस्य गुणपरत्वाभिप्रायं चोद्यमित्यर्थः॥

## त्रैस्वर्य्यमिति। (भा)

भावे ष्यञिति भावः। ननु स्वरशब्दस्य गुणे प्रसिद्धे कथं त्रैस्वर्यमित्यस्याजपेक्षत्वमत आह

## [2]स्वरशब्देनेति॥ (कै)

एवमपि ष्यञनुपपत्तिरत आह

## त्रय एवेति। (कै)

[3]चातुर्वर्ण्यादित्वादिति भावः॥

---

१ अर्श आदेः आकृतिगणत्वात्॥

२ स्वरशब्देनाच उच्यन्ते। त्रय एव स्वरास्त्रैस्वर्य्यमिति स्वार्थे ष्यञ्॥

३ ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानम्। वा (५। १। १२४)। ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानं कर्त्तव्यम्॥ चातुर्वर्ण्यम्। चातुर्वैद्यम्। चातुराश्रमम्॥

# तस्यादित उदात्तमर्द्धह्रस्वम्। १। २। ३२॥

## अक्तपरिमाणस्येति। (कै)

अनवयवस्येत्यर्थः॥ "अव्यपवृक्तः" अवयवः॥

१ *अर्धह्रस्वमित्युच्यते तत्र दीर्घप्लुतयोर्न प्राप्नोति। कन्या। प्रश्निके ३ प्रश्निके [स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु। ८। २। १०३। असूयादिषु वा वचनम्। वा। असूयादिषु वेति वक्तव्यम्। कन्ये ३ कन्ये। कन्ये कन्ये। प्रश्निके ३ प्रश्निके। प्रश्निके प्रश्निके। (वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ८। १। ८)॥] नैष दोषः। मात्रचोऽत्र लोपो द्रष्टव्यः। अर्धह्रस्वमात्रमर्धह्रस्वमिति। किमर्थमिदमुच्यते। आमिश्रीभूतमिवेदं भवति। तद्यथा। क्षीरोदके संपृक्ते। आमिश्रीभूतत्वान्न ज्ञायते कियत् क्षीरं कियदुदकं कस्मिन्नवकाशे क्षीरं कस्मिन्नवकाशे उदकमिति। एवमिहाप्यामिश्रीभूतत्वान्न ज्ञायते कियदुदात्तं कियदनुदात्तं कस्मिन्नव-

---

* अक्तपरिमाणस्य ह्रस्वसंज्ञाऽक्ता नाव्यपवृक्तस्येति न्यायाद्दीर्घप्लुतावयवो ह्रस्वग्रहणेन न गृह्यत इत्याक्षेपात् "अर्धह्रस्वमिति" (भा)। "कन्येति" (भा)। कन्या राजन्यमनुष्याणामन्त इति स्वरितः। प्रश्निके ३ प्रश्निके इति (भा)। स्वरितमाम्रेडितेऽसूयेति (८। २। १०३) स्वरितः प्लुतः। मात्र च इति (भा)। अर्धह्रस्वशब्दः प्रमाणवाची रूढिशब्दः। व्युत्पत्त्यर्थं तु ह्रस्वस्योपादानम्। अर्धमात्रात्वेनाभिधीयते ततः प्रमेये मात्रत्वं विधाय तस्य "प्रमाणे ल" इति लोपः क्रियते। तत्र यथा ह्रस्वबुद्ध्यार्धमात्रा

इति न्यायादिति। (कै)

इति हेतोर्न्यायाद् वाच्यवृत्त्यैवेत्यर्थः॥ "शक्तिके" इत्यत्र शाक्यादेः चितस्येति द्विलम्॥ नन्वर्द्धह्रस्वशब्दस्यावयववचनत्वेन प्रमाणवचनत्वाभावात् कथं मात्रजत आह

अर्द्धह्रस्वेति। (कै)

रूढ्या अर्धमात्रारूपप्रमाणविशेषोऽनेनोच्यते न ह्रस्वस्य अर्द्धमित्यर्थ इति भावः॥

---

काश्च उदात्तं कस्मिन्नवकाशेऽनुदात्तमिति। तदाचार्य्यः सुहृद्भूत्वान्वाचष्टे इयदुदात्तमियदनुदात्तमस्मिन्नवकाश उदात्तमस्मिन्नवकाशेऽनुदात्तमिति॥ यद्ययमेवं सुहृत्, किमन्यान्यप्येवं जातीयकानि नोपदिशति। कानि पुनस्तानि। स्थानकरणानुप्रदानानि। व्याकरणं नामेयमुत्तरा विद्या। सोऽसौ छन्दःशास्त्रेष्वभिविनीत उपलब्ध्यावगन्तुमुत्सहते। यद्येवं नार्थोऽनेन। इदमप्युपलब्ध्या गमिष्यति॥ संज्ञाकरणं तर्हीदम्। तस्य स्वरितस्यादितोऽर्धह्रस्वमुदात्तसंज्ञमिति। किं कृतं भवति। उदात्तप्रदेशेषु स्वरितग्रहणं न कर्त्तव्यं भवति। उदात्तस्वरितपरस्य सन्नतरः (१। २। ४०)

---

विभज्यते एवं दीर्घप्लुतयोरपीति। किमर्थमिति (भा)। नैवं भूतमिहान्वाख्यानं दृश्यते सन्ध्यक्षरादिविषयस्यापि विभागस्यान्वाख्यानप्रसङ्गादिति प्रश्नः। क्षामिश्रीभूतमिवेति (भा)। तत्त्वतोऽस्त्येव विभाग इति इव शब्दोपादानः। क्षीरोदके इति (भा)। नियतव्यक्तिविवक्षायां जातिपरत्वाभावादेकवद्भावो न कृतः। उत्तरा विद्येति (भा)। पुराकल्पे पूर्वा पश्चात्त्वे तूत्तरेति पस्पशायामाख्यातम्। संज्ञाकरणमिति (भा)। प्रदेशेषु चैकदेशप्रत्यायनात् समुदाय वाचिष्यते इति भावः। उभयमिति (भा)। सत्यप्यक्षरगौरवे

**व्युत्पत्त्यर्थमिति । (कै)**

अनुलोमादिवदिति भावः ॥ एवमपि दीर्घादौ अर्द्धमात्र-कालावयवविभागाभावाद्दोष एवेत्यत आह

**तच्च यथेति । (कै)**

उभयोरपि समागतिरिति भावः ॥ ननु गुणयोः प्रमाण-देशविशेषप्रतिपादनरूपान्वाख्यानार्थत्वात् प्रश्नोऽनुपपन्नोऽत आह

---

उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (८ । २ । ४) नोदात्त-स्वरितोदयम् (८ । ४ । ६७) इति ॥ संज्ञाकरणं हि नाम यतो न लघीयः । कुत एतत् । लघ्वर्थं हि संज्ञाकरणम् । लघीयश्च त्रिरुदात्तप्रदेशेषु स्वरितग्रहणं न पुनः संज्ञाकरणम् । त्रिरुदात्त-प्रदेशेषु स्वरितग्रहणे नवाक्षराणि संज्ञाकरणे पुनरेकादश । एवं तर्ह्युभयमनेन क्रियतेऽन्वाख्यानं च संज्ञा च । कथं पुनरेकेन यत्ने-नोभयं लभ्यम् । लभ्यमित्याह । कथम् । अन्वर्थग्रहणं विज्ञास्यते तस्य स्वरितस्यादितोऽर्धह्रस्वमुदात्तसंज्ञं भवतीति । ऊर्ध्वमात्तमिति चात उदात्तम् ॥ यदि तर्हि संज्ञाकरणमुदात्तादेर्यदुच्यते तत्-स्वरितादेरपि प्राप्नोति । अन्वाख्यानमेव तर्हीदं मन्दबुद्धेः ॥

---

महतोऽर्थस्य व्याप्तिर्भवति सुखेन विभागस्यापि परिज्ञानात् । उदात्तादे-रिति (भा) । उदात्तादेः प्रतिपादकं यच्छास्त्रम् चास्युदात्तश्चेति तत्-स्वरितादेरपि प्रतिपादकं प्राप्नोति ततश्च प्रत्ययः कदाचित् स्वरितादिरपि स्यादित्यर्थः । अन्वाख्यानमेवेति (भा) । न केवलमिदं सूत्रम् । यावद् "उच्चैरुदात्तः" (१ । २ । २९) इत्यादिसंज्ञाकरणमपि मन्दबुद्धिप्रति-पादनार्थम् । सिद्धो हि वेदाध्यायिनां शिक्षायामेवोदात्तादिव्यवहारः । स्वरितस्येति (भा) । वा अर्धह्रस्वोदात्तादित्याकारप्रश्लेषः । इयं नव सूत्री "उदात्तादनुदात्तस्य स्वरितः" (८ । ४ । ६६) इत्येतस्मात् परा कर्तव्या ।

नैवं भूतमिति ॥ (कै)

सन्ध्यक्षरादीति । (कै)

अवर्णभागः पूर्व इकारादिभाग उत्तर इत्येवं रूपस्येत्यर्थः ॥

तत्वत इति । (कै)

अन्यथाऽन्वाख्यानाऽसङ्गतिरिति भावः ॥ भाष्ये

स्थानित्यादिः । (कै)

स्थानानि कण्ठादीन्यष्टौ ॥ "करणम्" आभ्यन्तरप्रयत्नः ॥ उत्तरयति

---

स्वरितस्यार्धह्रस्वोदात्तादोदात्तस्वरितपरस्य सन्नतरादूर्ध्वमुदात्तादनुदात्तस्य स्वरितात् कार्य्यं स्वरितादिति सिद्ध्यर्थम् ॥ वा ॥

स्वरितस्यार्धह्रस्वोदात्तादौ उदात्तस्वरितपरस्य सन्नतरः ( १ । २ । ४ ) इत्येतस्मात् सूत्रादिदं सूत्रकाण्डमुदात्तादनुदात्तस्य स्वरितः ( ८ । ४ । ६६ ) इत्यतः कर्त्तव्यम् । किं प्रयोजनम् । स्वरितादिति सिद्ध्यर्थम् । स्वरितादिति सिद्धिर्यथा स्यात् । स्वरितात् संहितायामनुदात्तानाम् ( १ । २ । ३९ ) इति । "इमं मे गङ्गे यमुने शुतुद्रि" । क्व तर्हि स्यात् । यः सिद्धः स्वरितः । कार्य्यं ( ६ । १ । ८५ ) देवदत्तयज्ञदत्तौ ॥ स्वरितोदात्तार्थं च । वा । स्वरितोदात्तार्थं च तत्रैव

---

तेन "स्वरितात् संहितायामनुदात्तानाम्" (१ । २ । ३९) इत्येकश्रुतौ विधीयमानायाम् "उदात्तात्" इति स्वरितस्य सिद्धत्वं भवति । तेन म यस्मात् स्वरितात् परेषां गङ्गे प्रभृतीनाम् आमन्त्रितत्वादनुदात्तानामेकश्रुतिर्भवति । क्व तर्हीति (भा) । आश्रयात् सिद्धत्वं स्वरितस्य भविष्यतीत्यभिप्रायः । कार्य्यमिति (भा) । अत्र "तित्स्वरितम्" (६ । १ । ८५) इति स्वरितत्वं तत्र सिद्धमित्यर्थैव स्यात् । स्वरितोदात्तार्थमिति (भा) । स्वरितस्य च उदात्तो विधीयते स आष्टमिकत्वादसिद्धत्वान्न प्राप्नोति ।

**व्याकरणं नामेति ॥** (भा)

**छन्दःशास्त्रेषु ।** (भा)

प्रातिशाख्यशिक्षादिषु ॥

**अभिविनीतः ।** (भा)

शिक्षितः ॥

**उपलब्ध्या ।** (भा)

व्युत्पत्त्या ॥ एवं तर्हि इदमपि व्यर्थमित्याह

---

कर्त्तव्यम् । "न सुब्रह्मण्यायां स्वरितस्य तूदात्तः" (१ । २ । ३७) इन्द्र आगच्छ । क्व तर्हि स्यात् । यः सिद्धः स्वरितः । सुब्रह्मण्योमिन्द्र आगच्छ ॥ स्वरितोदात्तार्थश्चास्वरितार्थम् । वा । स्वरितोदात्तार्थश्चास्वरितार्थम् । तत्रैव कर्त्तव्यम् । इन्द्र आगच्छ हरिव आगच्छ ॥ स्वरितपरसन्नतरार्थं च । वा । स्वरितपरसन्नतरार्थं च तत्रैव कर्त्तव्यम् । उदात्तस्वरितपरस्य सन्नतरः (१ । २ । ४० ) । माणवकजटिलकाध्यापक न्यङ् ( ६ । २ । ५२ ॥ ८ । २ । ४ ) । क्व तर्हि स्यात् । यः सिद्धः स्वरितः । माणवक जटिलकाभिरूपक क्व ( ५ ।

---

सुब्रह्मण्योमिति (भा) । सुब्रह्मणि साधुरिति यत्प्रत्ययः तित्त्वात् स्वरितः । ततस्तावेकादेशः स्वरितानुदात्तयोरान्तरतम्यात् स्वरितः । ततः "ओमाङोश्च" (६ । १ । ९५) इत्युदात्तस्वरितयोरेकादेशः स्वरित एव तस्य सिद्धत्वादुदात्तत्वम् । "सुब्रह्मण्यायाम्" (१ । २ । ३७) इति च स्वरूपमेव दृश्यते न तु निगदो लक्ष्यते । स्वरितोदात्तार्थ इति (भा) । "आगच्छ" इत्यत्र गशब्दाकारस्य स्वरितस्योदात्तत्वे कृते "उदात्तादनुदात्तस्य स्वरित" (८ । ४ । ६६ ) इति च्छशब्दाकारस्य स्वरितत्वं प्राप्नोति । न्यङिति

यद्येवमिति ॥ (भा)

ननु प्रदेशेषु स्वरितग्रहणाकरणे उदात्तग्रहणेनावयवस्य बोधने- ऽपि तत्स्थाने यणोऽभावात् "उदात्तस्वरितयोर्यण" (८ । २ । ४) इत्यत्रानुपपत्तिरेवेत्यत आह

आक्षिप्यत इति । (कै)

तत्र सूत्रे एतदुपस्थितिसामर्थ्यादिति भावः ॥

सत्यपीति । (कै)

---

३ । १२ ॥ ६ । १ । १८५ ) । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । देव- ब्रह्मणोरनुदात्तवचनं ज्ञापकं स्वरितादिति सिद्धत्वस्य । वा । देव- ब्रह्मणोरनुदात्तवचनं ( देवब्रह्मणोरनुदात्तः । १ । २ । ३८ । देव- ब्रह्मणोरनुदात्तत्वमेके । वा । देवब्रह्मणोरनुदात्तत्वमेक इच्छन्ति । देवा ब्रह्माणः । देवा ब्रह्माणः ॥ ) ज्ञापकं सिद्ध इह स्वरित इति । यद्येतज्ज्ञाप्यते स्वरितोदात्तात् परस्यानुदात्तस्य स्वरितत्वं प्राप्नोति । न ब्रूमो देवब्रह्मणोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति । किं तर्हि परमेतत् कार्यमिति ॥

---

(भा) । "न्यधी च" (६ । २ । ५३) इति पूर्वपदप्रकृतिस्वरत्वात "उदात्तस्वरितयोर्यणः" (८ । २ । ४) इत्यकारः स्वरितस्यासिद्धत्वात् पूर्वस्य सन्नतरो न स्यात् । देवब्रह्मणोरिति (भा) । लिङ्गात् पाठक्रमबाधने क्रमान्तरमाश्रीयतेऽन्यथा । स्वरितस्यासिद्धत्वादनुदात्तस्यानुदात्तविधानमनर्थकं स्यात् । यद्येतदिति (भा) । स्वरितस्यैव सिद्धत्वमनेन लिङ्गेन ज्ञाप्यत इत्यर्थः । न ब्रूम इति (भा) । सन्निवेशान्तरज्ञापनार्थं लिङ्गं व्याख्यायत इत्यर्थः ॥

प्रयोजनविशेषस्याभावात् गौरवं न दोषायेति भावः॥ भाष्ये

ऊर्द्ध्वमात्रमिति। (भा)

ताल्वादिषूर्द्ध्वदेशे उच्चारणेन गृहीतमित्यर्थः॥ उदात्तादे-ह्रस्यमानं कार्य्यमिह शास्त्रे न किञ्चिदत आह

[1]उदात्त इत्यादेरिति। (कै)

इदमुपलक्षणम् अन्तोदात्तस्यापि॥ एवं भूतः अन्याख्यानं न दृश्यते इति यदुक्तं तत्परिहरति

न केवलमिति। (कै)

"उच्चैरुदात्त" इत्यादिकमपि तादृशमिति भावः॥ भाष्ये "इदम्" इत्य"स्योच्चैरुदात्त" इत्यादिकमित्यर्थो बोध्यः॥

आकारप्रश्लेष इति। (कै)

तदभावे अर्द्धह्रस्वोदात्तादिति पञ्चम्यनन्विता स्यादिति भावः॥ आङ्‌द्वयमारम्भाभिविध्योरिति तत्फलितमाह

इयं नवेति॥ (कै)

तेन मे शब्दादिति। (कै)

फिट् स्वरेणेदमोऽन्तोदात्तत्वाद् इमम् इत्येकादेशस्वरेणान्तो-दात्तम्। ततो मे शब्दस्य [2]"अनुदात्तं सर्वमपादादौ" इत्यनुदा-

---

१ "उदात्तादेः" इति पाठ उपलब्धकैरटपुस्तकेऽस्ति॥
२ अ ८। पा १। सू १८।

त्वे १"इमम्मि"त्युदात्तात्परत्वेन "२उदात्तादनुदात्तस्य" इति स्वरितत्वं ततो "गङ्गे" प्रभृतीनाम् ३"आमन्त्रितस्य" इत्याष्टमिकत्वेन निहतानामेकश्रुतिः॥

अच तिदिति। (कै)

तदेकादेशोऽपि आन्तरतम्यात् स्वरितः। करोतेर्लतिकार्य्यम्। तदुत्तरं देवदत्तयज्ञदत्तौ इति ४"आमन्त्रितस्य च" इति निहतम्॥ भाष्ये

इन्द्र आगच्छेति। (भा)

आङुदात्तः। गच्छेति निहतम्। तत ५"उदात्तादनुदात्तस्य"

---

१ इमं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया। ८। ३। ६। १०। ६। ७५। ५॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि स्तोममासेवध्वमसिक्न्या च सह मरुद्वृधे वितस्तया चार्जीकीय आशृणु हि सुषोमया चेति समस्तार्थः। अथैकपदनिरुक्तम्। गङ्गा गमनाद् यमुना प्रयुवती गच्छतीति वा। सरस्वती सर इत्युदकनाम सर्त्तेस्तद्वती। शुतुद्री शुद्राविणी क्षिप्रद्राविणी आशु तुन्नेव द्रवतीति वेरावतीं परुष्णीत्याहुः पर्ववती कुटिलगामिनी असिक्न्यशुक्लासिता सितमिति वर्णनाम तत्प्रतिषेधोऽसितं मरुद्वृधाः सर्वा नद्यो मरुत एना वर्द्धयन्ति वितस्ता विदग्धा विवृद्धा महाकूलार्जीकीयां विपाडित्याहुः ऋजीकप्रभवा वर्ज्जुगामिनी वा विपाड् विपाटनाद्वा विपाशनाद्वा विप्रापणाद्वा पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतस्तस्माद् विपाडुच्यते॥

२-५ अ ८। पा ४। सू ६६॥ ३-४ अ ६। पा १। सू १९८॥

इति गकाराकारः स्वरितः तस्यानेनोदात्तः । इन्द्रेति "आमन्त्रितम्" आद्युदात्तं द्वितीयोवर्णं "उदात्ताद्" इति स्वरितः तस्याप्यनेनोदात्तः ॥

## स्वरित एवेति । (कै)

[1]"एकादेश उदात्तेन" इत्यत्र "अनुदात्तस्य" इत्यनुवृत्तेः स नेति भावः । न च इको गुणेति सूत्रे [2]"एङिपररूपम्" इत्यत्ररूपग्रहणस्य परस्य यादृशं रूपं तादृश एव यथास्यादिति फलमुक्तमिति अत्र ओम उदात्तत्वादुदात्त एकादेशो युक्त इति वाच्यम् । [3]"हृस्वत्क्रोष्टुः" इति सूत्रभाष्यप्रामाण्येन स्वरस्य रूपत्वाभावात् ॥ ननु [4]"सुब्रह्मण्यायाम्" इति निगदाभिधानादयमेव विषयो न युक्त इत्यत आह

## सुब्रह्मण्यायामिति । (कै)

स्वरितस्य तूदात्त इति वाक्ये सुब्रह्मण्याशब्दस्वरूपमेव गृह्यतेत्यर्थः ॥

## उदात्तत्वे कृते इति । (कै)

[5]"न सुब्रह्मण्यायाम्" इत्यनेन । उत्कर्षे तस्यासिद्धत्वात् कृशब्दाकारोऽनुदात्त एवेत्यर्थः ॥

---

१ अ ८ । पा २ । सू ५ ॥ २ अ ६ । पा १ । सू ९४ ॥
३ अ ७ । पा १ । सू ९५ ॥ ४ अ १ । पा २ । सू ३७ ॥
५ अ १ । पा २ । सू ३७ ॥

न्यधी चेति । (वा)

अञ्चतौ वप्रत्ययान्त उत्तरपदे नि अधि इत्येतत् पूर्वपदं प्रकृतिस्वरमिति सूत्रार्थः ॥ [1]"न्यङ्स्वरौ स्वरितौ" इति फिट् सूत्रमेतदर्थस्यैवानुवादकमिति भावः ॥ "क" इत्यत् प्रत्ययान्तत्वात् स्वरितम् ॥

देवब्रह्मणोरिति । (भा)

अनयोः "सुब्रह्मण्या" निगदान्तर्गतयोः स्वरितस्योदात्तत्वे प्राप्तेऽनेनाऽनुदात्तत्वं क्रियते । देवा ब्रह्माण इति चामन्त्रिताद्युदात्तः । शेषनिघाते "उदात्तादनुदात्तस्य" इति स्वरितः । स्वरितस्यैव सिद्धत्वमात्रज्ञापने तु अस्य प्रकरणस्यासिद्धत्वे मानाभावात् । "[2]न सुब्रह्मण्ये"ति विहित स्वरितोदात्तगकारात् परत्वेन इन्द्र आगच्छ इत्यादौ इकाराकारस्याष्टमिकः स्वरितः स्यादिति उत्कर्ष एव ज्ञाप्यत इति बोध्यम् ॥ असिद्धकाण्डे पठनमेव [3]"संनिवेशान्तरम्" ॥ न च देव ब्राह्मणोरित्यचाऽऽश्रयाऽसिद्धत्वमिति वाच्यम् । इष्टानुरोधेनैतत्प्रकरणोत्कर्षद्वारैव तत् सिद्धत्वज्ञापनादिति दिक् ॥

---

१ फिट् सू-७४ ॥
२ अ १ । पा २ । सू ३७ ॥
३ कै ॥

# [1]एकश्रुति दूरात्सम्बुद्धौ । १ । २ । ३३ ॥

[2]एकवचनं सम्बुद्धिः (पा)

इत्युक्तेर्विचारानुपपत्तिरत आह

---

१ किमिदं पारिभाषिक्याः संबुद्धेर्ग्रहणम् "एकवचनं सम्बुद्धिः" (२ । ३ । ४९) आहोस्विदन्वर्थग्रहणं संबोधनं सम्बुद्धिरिति । किं चातः । यदि पारिभाषिक्या देवा ब्रह्माणः । अत्र न प्राप्नोति । अथान्वर्थग्रहणं न दोषः । यथा न दोषस्तथास्तु । किं पुनरियमेकश्रुतिरुदात्ताहोस्विदनुदात्ता । नोदात्ता । कथं ज्ञायते । यदयम् "उच्चैस्तरां वा वषट्कारः" (१ । २ । ३५) इत्याह । कथं कृत्वा ज्ञापकम् । अतन्त्रं तरनिर्देशः । यावदुच्चैस्तावदुच्चैस्तरामिति ॥ यदि तर्हि नोदात्तानुदात्ता । अनुदात्ता च न । कथं ज्ञायते । यदयम् "उदात्तस्वरितपरस्य सन्नतरः" (१ । २ । ४०) इत्याह । कथं कृत्वा ज्ञापकम् । अतन्त्रं तरनिर्देशः । यावत् सन्नस्तावत् सन्नतरः इति । सैषा ज्ञापकाभ्यामुदात्तानुदात्तयोर्मध्यमेकश्रुतिरन्तरालं क्रियते ॥ अपर आह । किमियमेकश्रुतिरुदात्तोतानुदात्ता । उदात्ता । कथं ज्ञायते । यदयम् "उच्चैस्तरां वा वषटकार" इत्याह । कथं कृत्वा ज्ञापकम् । तन्त्रं तरनिर्देशः । उच्चैर्वृद्धोच्चैस्तरामित्येतद्भवति । यदि तर्हि उदात्तानुदात्ता । अनुदात्ता च । कथं ज्ञायते । यदयम् "उदात्तस्वरितपरस्य सन्नतर" इत्याह । कथं कृत्वा ज्ञापकम् । तन्त्रं तरनिर्देशः । सन्नं वृद्धा सन्नतर इत्येतद्भवति । त एते तन्त्रे तरनिर्देशे सप्तस्वरा भवन्ति । उदात्तः । उदात्ततरः ॥ अनुदात्तः । अनुदात्ततरः ॥ स्वरितः । स्वरिते य उदात्तः सोऽन्येन विशिष्टः । एकश्रुतिः सप्तमः ॥

२ अ २ । पा ३ । सू ४९ ॥

**छन्दसिमेति ॥** (कै)

अच्छन्दसिमग्रहणं समर्थाद्भवतीत्यतः सामर्थ्यं दर्शयति

**न हीति ॥** (भा)

ननु छन्दसिमग्रहणेऽपि महासंज्ञावशात् दूरात् सम्बोधनार्थकैक-वचनान्तस्येत्यर्थलाभोऽत आह

**व्याप्तिश्चेति ॥** (कै)

अस्याः स्वरान्तरत्वप्रसिद्धेः प्रश्नानुपपत्तिरत आह

**उदात्तेति ॥** (कै)

**उच्चैस्तरामिति ।** (कै)

तेनोदात्तमात्रस्य विधानात् पक्षे एकश्रुतिश्च विधानादिति भावः ॥ भाष्ये

**सैषा ज्ञापकाभ्यामिति ।** (भा)

ज्ञापकाभ्यां कर्तृभ्याम् एकश्रुतिरुदात्तानुदात्तयोर्मध्यस्थानं प्राप्यत इत्यर्थः ॥

**मध्यम्** (भा)

इत्यस्य "अन्तरालम्" इति व्याख्या ॥

**ह्रतेरिति ।** (कै)

व्यापारद्वयार्थत्वात्

"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" ।

इति वचनाच्च ॥ स्वरितादिशेषं दर्शयितुमाह

क्षीरेति ॥ (कै)

सति चेति । (कै)

वौषट् व्यतिरिक्तमन्त्रभागस्योदात्तत्वे सत्येव तदपेक्षप्रकर्षप्रत्ययोपपत्तिरिति भावः ॥ एकश्रुतिगतोदात्तापेक्षया प्रकर्षानुपपत्तिमाशंक्य दृष्टान्तेन साधयति

यथेति । (कै)

अत्रापि पक्षे भेदतिरोधानमेव स्वरितादिश्लेषः। तेनैवोभयरूपतेति बोध्यम् ॥ एवं च "सन्नतर" एकश्रुतिविषये एवेति बोध्यम् ॥ सप्तस्वरमध्ये उदात्ततरानुदात्ततरौ एकश्रुतिगतोदात्ताद्यपेक्षयैवातिशयविशिष्टौ न तु स्वतन्त्रोदात्तापेक्षया

अनुदात्तेनेति । (कै)

उदात्तस्वरितपरत्वे इत्यर्थः ॥

कस्य चिदिति । (कै)

तदपरस्येत्यर्थः ॥

सुतस्त्विति । (कै)

तस्य वैकल्पिकत्वाद्यदा स जायते तदेत्यर्थः ॥

---

# [1]न सुब्रह्मण्यायां स्वरितस्य तूदात्तः। १। २। ३७॥



नवाचोदात्तोऽन्यथाविद्ध इत्याह

ओमिति। (कै)

अभ्यादानपदेनाथर्वकर्मोच्यत इति भावः। अत एव जपेऽपि तं प्लुतमेव जपन्ति। अभ्यादानं प्रारम्भ इति तु वृत्तिः। तद्रीत्या लब्ध प्राप्तिरेवनेति बोध्यम् ॥ "स्वरितस्य तूदात्त" इत्यंशस्योदाहरणान्तरं प्रसङ्गादाह

---

१ सुब्रह्मण्यायामोकार उदात्तः। वा। सुब्रह्मण्यायामोकार उदात्तो भवति। सुब्रह्मण्योम् ॥ आकार आख्याते परादिश्च। वा। आकार आख्याते परादिश्चोदात्तो भवति। इन्द्र आगच्छ। हरि आगच्छ॥ वाक्यादौ च द्वे द्वे। वा। वाक्यादौ च द्वे द्वे उदात्ते भवतः। इन्द्र आगच्छ। हरिव आगच्छ॥ मघवन् वर्जम्। वा। आगच्छ मघवन्। सुत्यापराणामन्तः। वा। सुत्यापराणामन्त उदात्तो भवति। द्व्यहे सुत्याम्। त्र्यहे सुत्याम्॥ असावित्यन्तः। वा। असावित्यन्त उदात्तो भवति। गार्ग्यो यजते। वात्स्यो यजते॥ अमुष्येत्यन्तः। वा। अमुष्येत्यन्त उदात्तो भवति। दाक्षेः पिता यजते॥ स्यान्तस्योपोत्तमं च। वा। स्यान्तस्योपोत्तममुदात्तं भवत्यन्तश्च। गार्ग्यस्य पिता यजते। वात्स्यस्य पिता यजते॥ वा नामधेयस्य। वा। वा नामधेयस्य स्यान्तस्योपोत्तममुदात्तं भवति। देवदत्तस्य पिता यजते। देवदत्तस्य पिता यजते॥

इन्द्र आगच्छेति ॥ (भा)

इन्द्रशब्द इति । (कै)

हरिवच्छब्दस्योपलक्षणम् ॥

हरिव इति । (भा)

[1]"मतुवसोः" इति रुः ॥

अनन्तरेति । (कै)

इन्द्र आगच्छेतीन्द्रशब्द इत्याद्यनुपदोक्तयेति भावः ॥ एतन्निमित्तःशेषनिघातस्तु न । अस्या असिद्धत्वात् ॥ भाष्ये

द्वे द्वे इति । (भा)

वर्णरूपेत्यर्थः । "श्वः सुत्याम् आगच्छ मघवन्नि"ति वाक्यं तत्र श्वःशब्दोनिपातत्वादुदात्तः । सुत्याशब्दः "[2]संज्ञायां समजे"ति क्यबन्तोऽन्तोदात्तः । तत्रोदात्त इत्यनुवर्त्तते ॥

निघातविधानादिति । (कै)

पूर्वंछकारस्याप्यनुदात्तत्वेन स्वरिताऽप्राप्त्या "[3]स्वरितस्य तूदात्त" इत्यस्याप्राप्तेरिति भावः । तत्र "[4]एकश्रुति दूरात्" इत्येकश्रुतिः तत्रेति तत्त्वम् ॥

सुत्याशब्द इति । (कै)

---

१ मतुवसो रु सम्बुद्धौ छन्दसि । ८ । २ । १ ॥
२ अ ३ । पा ३ । सू ९९ ॥ ३ अ १ । पा २ । सू ३७ ॥
४ अ १ । पा २ । सू ३३ ॥

सर्वनामकार्याभावाद्बहुव्रीहिलिङ्गमस्य स्वः शब्दस्थाने ब्रूहे इत्याहुः ॥

इदमिति । (कै)

अयिमाण्येवम् ॥

स्यान्तस्य (भा)

इत्यनेन उपोत्तमान्त्योदात्तयोः समुच्चयः ॥

---

# [१]देवब्रह्मणोरनुदात्तः । १। २। ३८ ॥

भाष्योक्तम् "एके" इति व्याचष्टे

[२]ये इति । (कै)

---

१ देवब्रह्मणोरनुदात्तत्वमेके । वा । देवब्रह्मणोरनुदात्तत्वमेक इच्छन्ति । देवा ब्रह्माणः । देवा ब्रह्माणः ॥

२ ये देवा ब्रह्माण इति पदयोर्वैयधिकरण्यमाश्रित्य तदा हि पूर्वस्यामन्त्रितस्याविद्यमानत्वाद् द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेषनिघाते च स्वरितत्वे च कृतेऽनेनानुदात्तः क्रियते, यदा तु देवाः ब्रह्माण इत्यनयोः सामानाधिकरण्यं तदा विभाषितं विशेषवचने बहुवचनम् ( सामान्यवचनं विभाषितं विशेषवचने । ८ । १ । ७४ । इह कस्मान्नभवति ब्राह्मणा वैयाकरणा । बहुवचनमिति वक्ष्यामि ॥ ) इति पक्षे विद्यमानत्वाद् "आमन्त्रितस्य" ( ८ । १ । १९ ) इति निघातस्य सिद्धत्वान्नानेनार्थ इत्यन्येषां मतमिति मतभेदप्रदर्शनार्थम् "एक" इत्युक्तम् ॥

ये आस्ते इत्यर्थः "एके" इत्युक्तिर्न विभाषाग्रहणानुवृत्तिज्ञता किन्तु ब्रह्मनंशे सूत्रारम्भवैयर्थ्यबोधिकेति भावः ॥

तदा हि । (कै)

वैयधिकरण्ये हि ॥

अविद्यमानत्वादिति । (कै)

[1]"आमन्त्रितं पूर्वम्" इत्यनेन ध्वनितम् ॥ मतान्तरं दर्शयितुमाह

यदात्विति ॥ (कै)

नानेनार्थ इति । (कै)

"ब्रह्माण" इत्यत्र अनुदात्तार्थेनेत्यर्थः । देवार्थं तु कार्य्यमेव । भाष्येत्वेवं योजना देवब्रह्मणोर्मध्ये ब्रह्मन् शब्दस्यानेनानुदात्तत्वमेके वैयधिकरण्यवादिन इच्छन्ति । सामानाधिकरण्यपक्षे "दे" इत्येक एवोदात्तः । वैयधिकरण्यवादिनान्तु "दे" "ब्र" इति च द्वयमुदात्तम् इदमेव ध्वनयितुं द्विः पाठ उदाहरणस्येति बोध्यम् ॥ केचित्तु वेदार्थस्याव्यवस्थितत्वे मानाभावाद् इदं चिन्त्यम् ॥ किं च पक्षे विद्यमानस्यापि सत्त्वेन ब्रत्यस्योदात्तस्याग्रिमस्यानुदात्तस्य च श्रवणाय सूत्रमावश्यकमेव भाष्यं तु विभाषानुवृत्तिफलकमेव । तथा च पक्षे आमन्त्रितस्वरेणाद्युदात्तस्य देवशब्दस्य ब्रह्मशब्दस्य चान्तोऽनेनानुदात्तस्वरितस्य तु उदात्तः इत्यस्यायमपवादः । "सु त्यु" तत्रानुदात्त एव । पक्षान्तरे तु पूर्वसूत्रेणान्तेऽप्युदात्ते "[2]एकश्रुति-

१ आमन्त्रितं पूर्वमविद्यमानवत् । ८ । १ । ७२ ॥
२ अ १ । पा २ । सू ३३ ॥

दूरात्" इत्येकश्रुतिः अत 'एकश्रुतीति सूत्रे संबुद्धिपदार्थनिरू-पणावसरे देवा ब्रह्माण इत्यत्रैकश्रुतिरुक्ता भाष्ये ॥ इदं च सूत्रं वृत्तावेवं व्याख्यातम् । "[1]सुब्रह्मण्यायां" देवा ब्रह्माण इति पठ्यते । तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेन तस्यानुदात्तो विधीयते इति । एकश्रुतिसूत्रोदाहृतं देवा ब्रह्माण इति सुब्रह्मण्यानिगदस्यातिरिक्त-मेवेत्यत्र न मानमित्याहुः ॥

---

## [2]स्वरितात्संहितायामनुदात्ता-नाम् । १ । २ । ३९ ॥



### सङ्ख्याया इति । (कै)

"अनुदात्तानाम्" इति पदोपात्तव्यक्तिगताया इति शेषः । उपात्तस्याविवक्षा कारणाभावादिति भावः ॥ संख्येयप्रधानत्वे द्व्येकेषा-मिति स्यादत आह

---

१ अ १ । पा २ । सू ३७ ॥

२ स्वरितात्संहितायामनुदात्तानामिति चेद्द्व्येकयोरैकश्रुत्यवचनम् । वा । स्वरितात्संहितायामनुदात्तानामिति चेद्द्व्येकयोरैकश्रुत्यं वक्तव्यम् । आग्निवेश्यः । पचति । किं पुनः कारणं न सिध्यति । बहुवचनेन निर्देशः क्रियते तेन बहूनामैकश्रुत्यं स्याद्द्व्येकयोर्न स्यात् ॥ नैष दोषः । नात्र निर्देशस्तन्त्रम् । कथं पुनस्तेनैव नामनिर्देशः क्रियते तच्चातन्त्रं

द्वित्वमिति ॥ (कै)

नन्वेवं संख्याया ऐकश्रुत्यविधानायोगात् षष्ठ्यनुपपन्नेत्यत आह

तेनेति। (कै)

अनुदात्तद्वित्वादौ सति तदधिकरणभूतानां ऐकश्रुत्यं वक्तव्यमिति भाष्यार्थः ॥

---

स्यात्। तत्कारी च भवांस्तद्द्वेषी च। नान्तरीयकत्वादत्र बहुवचनेन निर्देशः क्रियते। अवश्यं कयाचिद्विभक्त्या केनचिद्वचनेन निर्देशः कर्त्तव्य इति। तद्यथा। कश्चिदन्नार्थी शालिकलापं स पलालं स तुषमाहरति नान्तरीयकत्वात्। स यावदादेयं तावदादाय तुषपलालान्युत्सृजति। तथा कश्चिन्मांसार्थी मत्स्यान् सकण्टकान् स शकलान् आहरति नान्तरीयकत्वात्॥ स यावदादेयं तावदादाय शकलकण्टकानुत्सृजति। एवमिहापि नान्तरीयकत्वाद् बहुवचनेन निर्देशः क्रियतेऽविशेषेणैकश्रुत्यम् ॥

अविशेषेणैकश्रुत्यमिति चेद्व्यवहितानामप्रसिद्धिः। वा। अविशेषेणैकश्रुत्यमिति चेद्व्यवहितानामैकश्रुत्यं न प्राप्नोति। "इमं मे गङ्गे यमुने सरस्वति शुतुद्रि" (ऋ-सं ८ अ-१० म ७५-५)॥ अनेकमपीति तु वचनात् सिद्धम्। वा। अनेनाप्येकमपि स्वरितात् परं संहितायामेकश्रुति भवतीति वक्तव्यम्। सिध्यति। सूत्रं तर्हि भिद्यते। यथा न्यासमेवास्तु। ननु चोक्तं स्वरितात् संहितायामनुदात्तानामिति चेद्द्व्येकयोरैकश्रुत्यवचनमविशेषेण व्यवहितानामप्रसिद्धिरिति। नैष दोषः। कथम्। एकशेषनिर्देशोऽयम्। अनुदात्तस्य चानुदात्तयोश्चानुदात्तानां चानुदात्तानामिति। एवमपि षट्प्रभृतीनामेव प्राप्नोति। षट्प्रभृतिष्वेकशेषः परिसमाप्यते। प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति द्व्येकयोरपि भविष्यति।

[१]तन्त्रशब्दविति। (कै)

विवक्षितत्वलक्षणं प्राधान्यम्॥ भाष्ये

नार्थेति। (भा)

अनुवादस्थले इत्यर्थः। व्याप्तिन्यायस्याविवक्षा हेतुरिति बोध्यम्॥ विनार्थकान्तराशब्दात् भवार्थे छो [२]गहादित्वात्। स्वार्थे कः। नञ्समासः। नलोपाऽभावश्च [३]पृषोदरादित्वात्। नान्तरीयकशब्दे॥ ननु बहुत्वसंख्याविवक्षापूर्वकत्वाद्बहुवचनस्य नान्तरीयकत्वमयुक्तमत आह

[४]शब्देति। (कै)

शब्दकृतः संस्कारः तदुच्चारणकृतमदृष्टं तदर्थमित्यर्थः। सौवं बहुवचनं इति तात्पर्य्यम्॥

[५]न कार्य्येति। (कै)

शब्दानां कार्य्यमर्थोपस्थितिः सा प्रकृते नविवक्षितेत्यर्थः॥ स शस्कानिति पाठः॥

व्यवधानादित्यर्थः, इति। (कै)

बहुत्वविवक्षायां तु सामर्थ्यात् परिभाषाबाधः इति भावः॥

---

१ तन्त्रशब्दोऽत्र प्रधानवाची यथा ग्रहं संमार्ष्टीति सङ्ख्या न विवक्ष्यते तथेहापीत्यर्थः॥

२ गहादिभ्यश्च। ४। २। १३८॥ ३ अ ६। पा ३। सू १०९॥

४ शब्दसंस्कारार्थमेवात्र बहुत्वं विवक्ष्यते न तु कार्य्यसिद्ध्यर्थमित्यर्थः॥

५ उपलब्धकैयटपुस्तके "न तु कार्य्य" इति 'तु' शब्दघटितः पाठोऽस्ति।

[1]योगारम्भ इति । (कै)

एकशेषसूत्रारम्भे इत्यर्थः ॥ एकशेषेऽपि त्रिप्रभृतिष्वेव स्यात् । अत आह

वर्गत्रयेति । (कै)

तात्पर्य्यवशात् भिन्नसंख्याकलितेत्यर्थः ॥

जातेः (कै)

अनुदात्तत्वजातेः । व्यक्तिद्वारापरत्वं कार्य्यसम्बन्धश्चेति बोध्यम् । तत्राव्यवहितव्यक्तिद्वारैव सर्वगतजातेः परत्वं बोध्यम् । इदं चिन्त्यम् । एकैकव्यक्तिव्यङ्ग्यत्वाज्जातेस्तद्व्यक्तिद्वारकं परत्वं तद्व्यक्तिव्यङ्ग्यायाः । किं च [2]"आर्धधातुके" इति सूत्रस्थभाष्याद्व्यक्तिद्वारकं परत्वादिजातेरयुक्तमिति निरूपितं "[3]हलन्ताच्च" इति सूत्रे तस्मादेकशेषप्रत्याख्यानेऽपि भिन्नसंख्याकलितप्रातिपदिकार्थानां तन्नभिन्नसंख्याकलितार्थकप्रातिपदिकानां वा "[4]जात्याख्यायाम्" इत्यस्यापि भाष्ये प्रत्याख्यातत्वेनेदमेव युक्तमिति परे ॥ ननु वर्गत्रयोपादानेनैकशेषकरणादेवमपीत्याद्यनुपपन्नमत आह

[5]सहविवक्षायामिति । (कै)

एकया क्रियया गुणेन चानेकस्य युगपत्सम्बन्धप्रतिपादनेच्छा सहविवक्षेत्यर्थः ॥ यथामित्येव वक्तव्ये प्रभृतिग्रहणमधिकमत आह

१ योगारम्भपक्षे वर्गत्रयोपादानेनैकशेषः क्रियते ॥

२ अ २ । पा ४ । सू ३५ ॥ ३ अ १ । पा २ । सू १० ॥

४ जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् । १ । २ । ५८ ॥

५ सहविवक्षायामेकशेषविधानात् समुदितानां कार्य्यप्रसङ्गः ॥

[1]प्रभृतीति॥ (कै)

एकशेषवाक्ये। (कै)

एकशेषविग्रहवाक्ये॥

[2]निर्देश एवेति। (कै)

बोध एवेत्यर्थः॥

यथेति। (कै)

तत्रैव मातापित्रोः श्राद्धं कुर्य्यात् इत्यत्रैवात्रापि निर्देश एव सह विवक्षा इत्यदोषः॥

---

## [3]अपृक्त एकाल्प्रत्ययः।१।२।४१॥

---

अपृक्तग्रहणेऽस्वराधिक्यादाह

[4]पदद्वयेति। (कै)

अपृक्तमित्यखण्डमिति भावः॥ युवापत्यसंप्रत्ययार्थत्वात् णस्य कथं सामर्थ्यमत आह

---

१ प्रभृतिग्रहणेन चैकशेषवाक्येऽनुदात्तानामित्यनेनैव चतुरादयोऽप्यनुदात्ता गृह्यन्ते॥

२ निर्देश एव सहविवक्षा। कार्य्यप्रवृत्तिस्तु प्रत्येकं यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ताम् इत्युक्ते देवदत्तादयः पृथगेव भुञ्जते॥

३ अपृक्तसंज्ञायां हल्ग्रहणं हल्ङ्यादिलोपे हलोऽग्रहणार्थम्। वा॥

४ पदद्वयोच्चारणमेव गौरवमिति भावः॥

[1]लुगपेति ॥ (कै)

अण एव । (कै)

[1]"तस्यापत्यम्" इति सामान्यविहितस्य ॥

प्राप्तस्येति । (कै)

अणपवादत्वेनेति शेषः । तदेवं पास्य लुगभावं प्रसाध्यहल्ग्रहण इवाल्ग्रहणेऽपि चौरेव पद्मानौति पचद्वयसाम्यमित्याह भाष्ये

[2]तानीति । (भा)

अनेन पदसाम्ये मात्रावैषम्यकिञ्चित्करमिति सूचितम् ॥ ननु प्रत्ययेनाल्वि विशेष्यमाणे तदन्तविध्यभावात् कथमत्र प्राप्तिरत आह

प्रत्ययस्येति । (कै)

व्याप्तिन्यायेनालेव विशेषणमिति भावः ॥ ननु [4]"वेरपृक्तस्य" इत्यत्रानुनासिकः परो यस्तस्य वेर्लोप इति वक्ष्यते इति कथं इवौ प्राप्तिः । अत एवास्य अत इलं न इत्यत आह

इदं त्विति ॥ (कै)

भाष्ये

अल् चेति । (भा)

केवलात्मक इत्यर्थः ॥

---

१ लुगपवादो यो विधास्यतेऽन्यथाऽण एव लुकि सिद्धे य विधानमनर्थकं स्यादित्यर्थः ॥ २अ ४ । पा १ । सू ९२ ॥

२ तान्येतानि चौणि ग्रहणानि भवन्ति । भा ॥

४ अ ६ । पा १ । सू ६७ ॥

अन्यश्चेति। (भा)

समुदायात्मक इत्यर्थः॥

[1]अयं साम्प्रतिक इति। (भा)

[2]"वेरपृक्तस्य" इति सूत्रे उद्देश्यतया प्रधानस्य विग्रहणस्य मुख्यार्थलाभाय हल् इत्यत्र भौचो मतुप् लोप इति भावः॥

हलः प्राधान्यादिति। (कै)

संज्ञावाक्यार्थप्रतिपत्त्युत्तरमेव प्रदेशार्थप्रतिपत्तेरसंजातविरोध-न्यायेन तत्रोक्तकल्पनानुचितेति भावः। किं च शास्त्रस्याव्यविष-यतापत्तिरित्यपि बोध्यम्॥

किं न गौणीति। (कै)

क्लिष्टेत्यर्थः॥

[1]किमनेनेति। (कै)

"वेरपृक्तस्य" इत्यस्य लक्ष्यानुसारात् सर्वत्र प्रवृत्त्यङ्गीकारे इत्यर्थः॥

तिलोपः स्यादिति। (कै)

आगमविशिष्टस्य तित्वात् हलन्तत्वेनापृक्तत्वाच्च याट् इत्यस्य

---

१ अयं साम्प्रतिको विग्रब्द इति क्विबादिषु भूतपूर्वगतिर्न लभ्यते तत्रा-ऽपृक्तसंज्ञायां हल्ग्रहणेन हल्वान् गृह्यते। यथा गुरोश्च हल इत्यत्र गुरुमान्॥ २ अ ६। पा १। सू ६७॥

२ क्विबादयोऽपि हलन्तो दर्विरित्यादौ विप्रत्ययोऽप्यौति क्विमनेन व्यवच्छिन्नं स्यादित्यर्थः॥

लोपः स्यादित्यर्थः ॥ अत्र पक्षे [1]"हल्ङ्याब्" इति सूत्रे हल्ग्रहणं नास्त्येवेति भावः ॥

[2]अल्ग्रहणे त्विति । (कै)

तदुपादानसामर्थ्येन तदन्तविध्यभावादिति भावः ॥

ज्ञापित इति । (कै)

एवं चात्र जातिग्रहणशंकाकरणायैवैकग्रहणं चरितार्थमिति कथं ज्ञापकमिति भावः ॥

पुनरिहेति । (कै)

युगपदेव विनिगमनविरहात् प्रमाणद्वयप्रवृत्तिरिति भावः ॥

[3]वृद्धिरादैजिति । (पा)

अस्य तत्त्वं तत्रैवोक्तम् ॥

व्यवस्थापितमिति । (कै)

मयेति शेषः ॥

---

१ अ ६ । पा १ । सू ६८ ॥

२ अल्ग्रहणे तु क्रियमाणे न कर्त्तव्यं कृतं तु ज्ञापनार्थं तद्दर्शितं भाष्ये । यद्यप्ययमर्थो "निपात एकाजनाङ्" ( १ । १ । १४ ) इत्यत्रैकग्रहणेन ज्ञापितस्तथापि मन्दबुद्धीनामनुग्रहाय पुनरिह ज्ञापितः । अपृक्त-प्रदेशेषु हल्ग्रहणेनैव सिद्धे संज्ञाविधानं विस्पष्टार्थम् ॥

३ "वृद्धिरादैच्" ( १ । १ । १ ) इत्यत्रास्य परिभाषात्वं व्यवस्थापितमिह कथं संज्ञात्वेन व्यवहारः । परार्थसामान्यात् परिभाषा संज्ञात्वेन व्यवह्रियते इत्यदोषः ॥

# [1]तत्पुरुषः समानाधिकरणः कर्मधारयः । १ । २ । ४२ ॥

समासैकार्थत्वादिति । (भा)

वार्त्तिके समासस्यैकप्रवृत्तिनिमित्तत्वादित्यर्थः ॥ पर्य्याय-व्यावृत्त्यर्थं

[2]भिन्नेति । (कै)

---

१ तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत् समासैकार्थत्वादप्रसिद्धिः । वा । तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत् समासस्यैकार्थत्वात् संज्ञाया अप्रसिद्धिः । एकोऽयमर्थस्तत्पुरुषो नामानेकार्थाश्रयं च सामानाधिकरण्यम् ॥ सिद्धं तु पदसामानाधिकरण्यात् । वा । सिद्धमेतत् । कथम् । तत्पुरुषः समानाधिकरणपदः कर्मधारयसंज्ञो भवतीति वक्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते । यथा न्यासमेवास्तु । ननु चोक्तं तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत् समासैकार्थत्वात् प्रसिद्धिरिति । नैष दोषः । अयं तत्पुरुषोऽस्त्येव प्राथमकल्पिको यस्मिन्नेकपद्यमैकस्वर्यमेकविभक्तित्वं च । अस्ति तादर्थ्यात् ताच्छब्द्यं तत्पुरुषार्थानि पदानि तत्पुरुष इति । तद्यत्तादर्थ्यात् ताच्छब्द्यं तस्येदं ग्रहणम् ॥

२ भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्यानेकस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमुच्यते ॥

( तत्पुरुषः समानाधिकरणः कर्मधारयः । १ । २ । ४२ । )

भिन्नप्रवृत्तिनिमित्तप्रकारकभिन्नोपस्थितिजनकस्येत्यर्थः ॥ वस्तुतः पर्य्यायाणामपि कोशे सामानाधिकरण्यस्येष्टताया "[1]नामन्त्रिते समानाधिकरणे" इति सूत्रे भाष्ये ध्वनितत्वेनेदं चिन्त्यम् ॥ "गौरश्व" इत्यादौ तद्व्यावृत्तये

एकस्मिन्नर्थे इति ॥ (कै)

भाष्ये

एकोऽयमर्थस्तत्पुरुषो नामेति । (भा)

तत्पुरुषसंज्ञकनीलोत्पलादिशब्दार्थ एक एकोपस्थितेरित्यर्थः । यद्येकविशेष्यकप्रतीतिजनकत्वं सामानाधिकरण्यं तदा तत्पुरुषमात्रस्य कर्मधारयत्वापत्तिः । समानाधिकरणपदवैयर्थ्यं चेति तात्पर्य्यम् ॥

तत्पुरुषत्वमिति । (कै)

समासादिसंज्ञासमुदाय निवेशिनीति भावः ॥ ननु एकपदत्वैकविभक्तित्वयोः पौनरुक्त्यमित्यत आह

[2]पदशब्देनेति । (कै)

पदतदर्थयोरभेदोपचारादिति भावः ॥

---

१ नामन्त्रिते समानाधिकरणे । ८ । १ । ७३ । इह कस्मान्न भवति । अग्ने देवि सरस्वति इडे काव्ये विहव्ये एतानि ते अघ्न्ये नामानि । योगविभागः करिष्यते । नामन्त्रिते समानाधिकरणे सामान्यवचनम् । ततो विभाषितं विशेषवचन इति ॥

२ पदशब्देनार्थोच्यते । एकार्थमित्यर्थः ॥

( तत्पुरुषः समानाधिकरणः कर्मधारयः । १। २। ४२ । )

[1]अथवेति । (कै)

अन्तर्वर्त्तिविभक्त्यपेक्षस्तूत्तरपदादिव्यवहार इति भावः॥ नन्वेकविभक्तीति पुनरुक्तमत आह

[2]एककारकत्वमिति । (कै)

विभज्यतेऽनया प्रातिपदिकार्थ इति व्युत्पत्तेः॥

तद्यः (भा)

इत्यादि भाष्ये

ताच्छब्द्यम् (भा)

इति स्वार्थे ष्यञ्। "तत्" ततो हेतोर्मुख्यार्थे समानाधिकरणासंभवाद्धेतोर्यस्मादर्थात्तच्छब्दः तस्येदं ग्रहणमित्यक्षरार्थः। यद्वा यस्मादर्थात्ताच्छब्द्यं तच्छब्दवाच्यतां लभत इति शेषः॥

[3]अन्तरङ्गन्त्विति । (कै)

अर्थनिबन्धनसामानाधिकरण्याश्रयोऽन्तरङ्गन्यायस्तत्पुरुषशब्दमात्राश्रयगौणमुख्यन्यायात् प्रबल इति भावः॥ ननु तत्पुरुषार्थ-

---

१ अथवा समासाद्विभक्त्युत्पत्तौ सत्यां एकपद्यमुच्यते॥

२ एककारकत्वमित्यर्थः॥

३ तत्पुरुषस्य पदान्तरेण सामानाधिकरण्यं बहिरङ्गमन्तरङ्गं तु वर्त्तिपदानामिति तदेवाश्रीयते। ततश्च सामर्थ्यात्तत्पुरुषशब्दो गौणार्थवृत्तिः परिगृह्यते तेन समासावयवानामेव पदानां कर्मधारयसंज्ञा विधीयते समुदाये च वाक्यपरिसमाप्त्या पदसमुदायस्यैकैव कर्मधारयसंज्ञा न तु प्रत्येकम्। तत्पुरुषसंज्ञाप्रकरणे इयं संज्ञा न कृता एकसंज्ञाधिकारात् तत्पुरुषसंज्ञाया बाधा मा भूदिति॥

( प्रथमानिर्दिष्टं समास उपसर्जनम्। १। २। ४३। )

पदानां कर्मधारयसंज्ञालाभेऽपि समुदायस्य सा न स्यात्। इष्यते च तस्य इत्यत आह

समुदाये चेति। (कै)

समानाधिकरणपदम् अत्र आद्यजन्तन्तु नाश्रितं तादृशानामपि गौणत्वाद्॥

बाधा मा भूदिति। (कै)

"तत्पुरुष" इत्यनुवृत्तावपि पाक्षिको बाधो माभूदित्यर्थः। समानाधिकरणः कर्मधारयश्च इति तु सुवचम् [1]"द्विगुश्चे"ति वत्॥

---

# [2]प्रथमानिर्दिष्टं समास उपसर्जनम्। १। २। ४३॥

समासे किमिति। (कै)

समासे इति सप्तमीनिर्देशात् समासे विद्यमानं प्रथमान्तमिति सूत्रार्थं मत्वा वार्त्तिकारम्भ इत्याशयः॥

---

१ द्विगुश्च। २। १। २३॥

२ प्रथमानिर्दिष्टं समास उपसर्जनमिति चेदनिर्देशात् प्रथमायाः समासे संज्ञाप्रसिद्धिः। वा। प्रथमानिर्दिष्टं समास उपसर्जनमिति चेदनिर्देशात् प्रथमायाः समास उपसर्जनसंज्ञायाः अप्रसिद्धिः।

## तत एवेति। (कै)

समासादेवेत्यर्थः। तथा च समासः प्रथमानिर्दिष्टः स्यात्। न तु समासे किं चिदिति सन्नत्यनुपपत्तिः स्यादिति भावः॥

## अन्तर्वर्तिन्येति। (कै)

समासे विद्यमानाद् यतः प्रथमोच्चार्य्यत इत्यर्थ इति भावः॥

## न कष्टशब्दस्येति। (कै)

तच्चानिष्टमिति भावः॥

## प्रथमान्तमिति। (कै)

संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधादन्तपदोच्चारणम्॥

## मुख्यार्थासम्भवादिति। (कै)

निर्दिष्टग्रहणोपबृंहितसमासग्रहणस्य मुख्यार्थाऽसम्भवादिति अर्थः॥ ननु प्रत्यासत्त्या यत् समासशास्त्रे यत् प्रथमानिर्दिष्टं तन्निरूपितकार्य्ये एव तदुपसर्जनं स्यादत आह

---

न हि कष्टादीनां समासे ( २। १। २४ ) प्रथमां पश्यामः॥ सिद्धन्तु समासविधाने वचनात्। वा। सिद्धमेतत्। कथम्। समासविधाने प्रथमानिर्दिष्टमुपसर्जनसंज्ञं भवतीति वक्तव्यम्॥ तत्तर्हि वक्तव्यम्। न वा तादर्थ्यात्ताच्छब्द्यम्। वा। न वा वक्तव्यम्। किं कारणम्। तादर्थ्यात्ताच्छब्द्यं भवति ("भविष्यति" इति पाठोऽपि दृश्यते॥) समासार्थं शास्त्रं समास इति॥ यस्य विधौ प्रथमानिर्देशस्ततोऽन्यत्राप्युपसर्जनसंज्ञाप्रसङ्गः ("अन्यत्रोपसर्जनसंज्ञाप्रसङ्गः" इत्यपि दृश्यते)। वा। यस्य विधौ प्रथमानिर्देशः क्रियते ततोऽन्यत्रापि तस्योपसर्जनसंज्ञा

( प्रथमानिर्दिष्टं समास उपसर्जनम्। १। २। ४३। )

निर्देशापेक्षयेति। (कै)

ईदृग्प्रत्यासत्तिर्दुर्ज्ञेयेति भावः॥

सत्युपेति। (कै)

परिनिष्ठितविभक्त्या समास इति पक्ष इदम्। इदमेव ध्वनयितुं भाष्ये "श्रित" पदोपादानम्॥ अवयववृत्त्या सर्वनामादिपदैरिवानेनाभीष्टार्थालाभादाह

लोके चेति। (कै)

संज्ञामहत्त्वमेतत्पदस्यान्वर्थभूतलौकिकार्थापरित्यागे हेतुरिति भावः॥ अप्रधानस्यैव संज्ञित्वे व्याप्तिः प्रकृते

यद्येवमिति॥ (कै)

---

प्राप्नोति। राज्ञः कुमारीं राजकुमारीं. श्रितः। श्रितादिसमासे द्वितीयान्तं प्रथमानिर्दिष्टं तस्य षष्ठीसमासेऽप्युपसर्जनसंज्ञा प्राप्नोति (१।२।४८॥ २।२।३०)॥ सिद्धं तु यस्य विधौ तं प्रतीति वचनात्। वा। सिद्धमेतत्। कथम्। यस्य विधौ प्रथमानिर्दिष्टं तं प्रति तदुपसर्जनसंज्ञं भवतीति वक्तव्यम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। उपसर्जनमिति ("हि" इति पाठोऽप्यस्ति) महती संज्ञा क्रियते। संज्ञा च नामयतो न लघीयः। कुत एतत्। लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करण एतत् प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत। अप्रधानमुपसर्जनमिति। प्रधानमुपसर्जनमिति च सम्बन्धिशब्दा-

( प्रथमानिर्दिष्टं समास उपसर्जनम् । १। २। ४३ । )

## पुरुषव्याघ्र इति । (कै)

इदमुदाहरणं चिन्त्यम् "[1]परवल्लिङ्ग" सूत्रस्थतत्पुरुषग्रहण-प्रत्याख्यान परेण भाष्येण तस्योत्तरपदप्रधानता सूचनात् ॥ ननु संज्ञाविधानमेव कथं तत्प्रयोजकाभावेऽत आह

## प्रथमानिर्देशेति । (कै)

पूर्वापराधरोत्तरम् अर्धमिति । एतेन प्रदेशेष्वन्वर्थत्वेनैव व्यवहारोपपत्तौ संज्ञाविधानं व्यर्थं स्यादित्यपास्तम् । निर्विभक्तिकस्योच्चारणासम्भवात् प्राथम्याच्च लघुत्वाच्च तन्निर्देशस्य सत्त्वेन तत् सामर्थ्यं चिन्त्यम् ॥ भाष्ये

## प्रधानमुपसर्जनमिति च सम्बन्धिशब्दौ इति । (भा)

तत्र "अप्रधानम्" इति दृष्टान्तार्थं तद्वदुपसर्जनशब्दस्तत्प्रतिद्वन्द्व्यप्रधानार्थकत्वात् "सम्बन्धिशब्द" इति भावः ॥ तदाह

---

१ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । २ । ४ । २६ ॥

---

वेतौ । तत्र सम्बन्धादेतद्गन्तव्यं यं प्रति यदप्रधानं तं प्रति तदुपसर्जनसंज्ञं भवतीति ॥ अथ यत्र द्वे षष्ठ्यन्ते कस्मात्तत्र प्रधानस्योपसर्जनसंज्ञा न भवति । राज्ञः पुरुषस्य राजपुरुषस्येति (२।२।८)॥ षष्ठ्यन्तयोस्तोपसर्जनत्व उक्तम् । वा । किमुक्तम् । षष्ठ्यन्तयोः समासे ऽर्थाभेदात् प्रधानस्यापूर्वनिपात इति (२।२।३०)॥

( प्रथमानिर्दिष्टं समास उपसर्जनम् । १। २। ४३ । )

## यं प्रति यदिति । (भा)

समासे प्रथमानिर्दिष्टमप्रधानत्वसमानाधिकरणोपसर्जनपदाभिन्नमिति सूत्रार्थः । एवं च प्रत्यासत्त्या यन्निरूपितमप्रधानत्वं तन्निरूपितमेवोपसर्जनसंज्ञाकार्य्यं पूर्वनिपात इत्यर्थः । ह्रस्वोऽपि नायं प्रत्यप्रधानत्वं तद्घटितसमासोत्तरपदभूतस्यैव ह्रस्वविधानात् ॥ परेतु "यं प्रति" इत्यादिभाष्यस्यायमर्थः । समासशास्त्रे यन्निरूपितं यस्याप्राधान्यं तं प्रति तदुपसर्जनम् इति समासशास्त्रे च सहार्थतृतीयार्थापेक्षया प्रथमान्तार्थस्याप्रधानत्वमिति तं प्रत्येव तदुपसर्जनम् । यद्यपि सहार्थविशेषणत्वरूपम् प्राधान्यं तृतीयान्तार्थस्य तथापि तत् समभिव्याहृतप्रथमाद्यन्तार्थस्य तदपेक्षया लौकिकमप्रधानत्वमितराधीनत्वरूपं बुध्यते । अत एव समकक्षयोर्मध्ये एकेन सह त्वया गन्तव्यमित्युक्ते परस्य दुःखं दृश्यते पूर्वकायासिद्धा कैयटोक्ततदाश्रयणमशक्यमित्याहुः । इत्यभिप्रायेण भाष्ये

## अथ यत्रेति । (भा)

---

एवं न चेदमकृतं भवेदुपसर्जनं पूर्वमित्यर्थस्याभिन्न इति कृत्वा प्रधानस्य पूर्वनिपातो न भविष्यति ॥ यद्यपि तावदेतदुपसर्जनकार्य्यं परिहृतमिदमपरं प्राप्नोति । राज्ञः कुमार्य्याः । राजकुमार्य्याः "गोस्त्रियोरुपसर्जनस्य" (१।२।४८) इति ह्रस्वत्वं प्राप्नोति । उक्तं वा । वा । किमुक्तम् । परवल्लिङ्गमिति शब्दशब्दार्थाविति । ( परवल्लिङ्गमिति शब्दशब्दार्थौ । वा । परवल्लिङ्गमिति शब्दः

( प्रथमानिर्दिष्टं समास उपसर्जनम् । १ । २ । ४३ । )

"परिहारान्तर" इत्यादिकैयटस्थिमन्य एव । उपसर्जनसंज्ञा-प्रयोज्यत्वं पूर्वनिपातस्य नास्तीति दर्शयितुं पूर्वनिपातप्रकरण-प्रत्याख्यानमनुवदति

तत्र हीति । (कै)

एवं हि तत्र भाष्यमुपसर्जनस्य पूर्ववचनं परप्रयोगनिवृत्त्यर्थं न वा निष्ठादर्शनात् ॥ अथ यत्र द्वे षष्ठ्यन्ते कस्मात् तत्र प्रधानस्य पूर्वनिपातो न भवतीत्याशङ्कायां

षष्ठ्यन्तयोः समासे (भा)

इत्यादि ॥

अनिष्टेति । (कै)

नित्येषु शब्देषु प्रयोगे स्थिते [1]गव्यादिप्रयोगनिवारणाय शास्त्रम् इह तु पुरुषराजेति प्रयोगो न दृश्यते इति । किं तन्निवृत्त्यर्थेन यत्नेनेत्यर्थः ॥ अबुधबोधनाय तदारम्भे पूर्वपक्षिणाशंकितस्य राज्ञः

१ गाव्यादि-। इ ॥

शब्दार्थावति दिश्येते । तत्रौपदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणं भविष्यति । इदं तर्हि । दत्ता च कारीषगन्ध्या च दत्ता-कारीषगन्ध्ये । दत्ता च गार्ग्यायणी च दत्तागार्ग्यायण्यौ । द्वौ ष्यङौ द्वौ ष्फौ च प्राप्नुतः ( ४ । १ । ७८–१७ ) । स्ताम् । पुंवद्भावे-नैकस्य निवृत्तिर्भविष्यति ( ६ । ३ । ३५ ) ॥ इदं तर्हि । दत्ता च युवतिश्च । दत्तायुवती । द्वौ तिशब्दौ प्राप्नुतः ( ४ । १ । ७७ ) ।

( प्रथमानिर्दिष्टं समास उपसर्जनम् । १। २। ४३। )

पुरुषस्य इत्यादौ [1]पूर्वनिपातितानि यमदोषस्योद्धारपरं षष्ठ्यन्तयोरितिवार्त्तिकं तद्व्याचष्टे

तथापीति । (कै)

पुरुषस्य पूर्वनिपाते हि राज्ञः प्राधान्यमेव स्यात् पुरुषराजशब्दात् तथैव प्रतीतेरिति वाक्यसमासयोर्भिन्नार्थतेति भावः ॥

नासौ भिद्यते इति । (कै)

वाक्यात् समासे इति शेषः । पूर्वनिपाते हि तस्याप्राधान्यं प्रतीयेतेति भावः ॥ तदेवाह

न व्यतिरिच्यते इति । (कै)

व्यतिरेको विशेषणत्वं तदा न भवतीत्यर्थः ॥ परेतु ननु प्रधानस्य पूर्वनिपातेऽपि "अर्धपिप्पली"त्यादौ न वाक्यसमासयोर्भिन्नार्थतेत्यतो भाष्यं प्रकारान्तरेण व्याचक्षते

---

१ "पूर्वनिपातितानि" इत्यारभ्य "पुरुषस्य" इत्यन्तं नास्ति । इ ॥

---

तस्मान्नैतच्छक्यं वक्तुं शब्दशब्दार्थावतिदिश्येते इति । ननु चोक्तं समासादन्यलिङ्गमिति चेदश्ववडवयोष्टाबलुग्वचनमिति । परिहृतमेतन्निपातनात् सिद्धमिति ॥ अथवा नैवं विज्ञायते परस्यैव परवदिति । कथं तर्हि । परस्येव परवदिति । यथा जातीयकं परस्यलिङ्गं तथा जातीयकं समासस्यातिदिश्यते ॥) तत्रौपदेशिकस्य कृत्स्नत्वमातिदेशिकस्य अवयवे भविष्यति ॥

( प्रथमानिर्दिष्टं समास उपसर्जनम् । १। २। ४३ । )

षष्ठीति (पा)

सूत्रे येन समासस्तन्निरूपितसम्बन्धार्थकषष्ठ्यन्तमेव गृह्यते तदेव च तत्र "प्रथमानिर्दिष्टं" पुरुषपदे च न राजापेक्षभेदसम्बन्धे षष्ठी तस्याविशेषणादेवोत्पत्तेरित्यर्थः ॥

अर्थश्चाभिन्न इति (भा)

भाष्यस्य प्रधानोऽर्थो न समासघटकविशेषणेन भेदमूलकसम्बन्धवानतः प्रधानस्य तादृशषष्ठ्यन्तत्वाभावादनुपसर्जनत्वेनापूर्वनिपातः । कैयटरीत्यातु प्रधानपक्षकापूर्वनिपातानुमाने हेतोर्वैयधिकरण्यम् । उपसर्जनसंज्ञा न भविष्यतीत्यनेन पूर्वनिपाता भावः । प्रधानस्यैतन्मूलक एव तत्रापीति सूचितम् । किं च कैयटरीत्या व्याख्यानेन प्रयोजनानुवर्त्तिप्रमाणमिति न्यायविरोधः । कैयटोऽपि वा एवमेव व्याख्येयः । एवं च पुरुषापेक्षयाऽप्रधानस्यैव राज्ञः षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वमस्मिन् समासे इति तस्यैवोपसर्जनत्वेन पूर्वनिपात इति भावः ॥ राजकुमार्य्या इत्यादौ ह्रस्वत्वमपि अनेन वारितमिति सूचयन् आह

उक्तं वेति । (भा)

विकल्पार्थवाशब्दघटितमन्यथा तदसंगतिः ॥

स्त्र्यक्षेऽस्त्रिकेति । (कै)

अर्धपिप्पल्यादौ तु गतिरुक्तैवेति भावः ॥

---

# [1]एकविभक्ति चापूर्वनिपाते । १ । २ । ४४ ॥

स्पष्टप्रतिपत्तये सूत्रार्थं दर्शयति

**समास इति ॥** (कै)

**समासार्थं वेति ।** (कै)

अस्याद्यपेक्षया बहिरङ्गक्रियाध्याहाराश्रयणं युक्तं मन्यते शास्त्रं तु न गृह्यते "एकविभक्ती"त्यस्य वैयर्थ्यापत्तेः ॥

**सर्वस्य चेति ।** (कै)

एकस्मिन् योगे इत्यादिः ॥

---

१ द्वितीयादीनामप्यनेनोपसर्जनसंज्ञा प्राप्नोति । तत्र को दोषः । तत्राऽपूर्वनिपात इति प्रतिषेधः प्रसज्येत ॥ नाप्रतिषेधात् । नायं प्रसज्यप्रतिषेधः पूर्वनिपाते नेति । किं तर्हि । पर्युदासोऽयं यदन्यत्पूर्वनिपातादिति । पूर्वनिपातेऽव्यापारः । यदि केनचित् प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति तेन भविष्यति । अप्राप्तेर्वा । अथवाऽनन्तरा या प्राप्तिः सा प्रतिषिध्यते । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥ एकविभक्तावषष्ठ्यन्तवचनम् । वा । एकविभक्तावषष्ठ्यन्तानामिति वक्तव्यम् । इह माभूत् (१ । २ । ४८) अर्धं पिप्पल्या अर्धपिप्पली इति (२ । २ । २) ॥ उक्तं वा । वा । किमुक्तम् । परवल्लिङ्गमिति शब्दशब्दार्थाविति ( २ । ४ । २६ ) तत्रौपदेशिकस्य स्त्रीत्वमाति-

श्रितादिविशेषणत्वादिति। (कै)

कर्माकाङ्क्षश्रितादिविशेषणत्वादित्यर्थः॥ ननु निरवकाशपूर्व-प्राप्त्या इयं प्राप्तिर्बाध्येतात आह

पूर्वसूत्रस्य त्विति॥ (कै)

अपवादेति। (कै)

अपूर्वनिपात इति हि सः॥ भाष्ये

एकविभक्ताविति। (भा)

"शब्दशब्दार्थौ" इत्यस्य प्रत्याख्याने इदं वचनमेव कर्त्तव्यम्। एकदेशिसमासविषयकमेव तत्। भाष्ये तथोदाहरणात्॥ नन्वेव-मपि "प्राप्तजीवक" इत्यादौ परवल्लिङ्गं स्यात्। एवं स्त्रीगोव्यक्तिभिः क्रीतपटेषु पञ्चगूनिर्जीव्यते न च सिध्यतीत्यत आह

द्विगुप्राप्तेति। (कै)

---

देशिकस्य अवश्यं भविष्यति॥ कानि पुनरस्य योगस्य प्रयोजनानि। प्रयोजनं द्विगुप्राप्तापन्नालं पूर्वोपसर्गाः क्तार्थे। वा। द्विगुः (२। १। ५१) पञ्चभिर्गोभिः क्रीतः पञ्चगुः। प्राप्तापन्न (२। २। ४)। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नो जीविकामापन्नजीविकः॥ अलं पूर्वं (२। २। १८)। अलं कुमार्य्यै अलं कुमारिः॥ उपसर्गाः क्तार्थे (प्रादयः क्तार्थे। वा। प्रादयः क्तार्थे समस्यन्त इति वक्तव्यम्। प्रगत आचार्य्यः प्राचार्य्यः। प्रान्तेवासी। प्रपितामहः। एतदेव च सौनागै-र्विस्तरतरकेन पठितम्। स्वती पूजायाम्। स्वती पूजयामिति वक्तव्यम्। सु राजा। अति राजा। २। २। १८)। निष्कौशाम्बिः। निर्वाराणसिः॥

वस्तुतो द्विगुग्रहणं परवदित्यस्यान्तरङ्गत्वेन तत्पुरुषसंज्ञकशब्द-मात्र निमित्तकलिङ्गबाधकताया एव युक्तत्वाद्व्यर्थमिति बोध्यम् ॥

पर्य्यादय इति । (कै)

१"कुगतीति" सूत्रे आदिशब्दस्य प्रकारार्थत्वादिति भावः ॥ अलं शब्दयोगे चतुर्थीविधानसामर्थ्यादाक्रमपीत्याहुः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते
महाभाष्यप्रदीपोद्योते प्रथमस्य
द्वितीये प्रथमाह्निकम् ॥

---

१ अ २ । पा २ । सू १८ ॥

## महाभाष्यप्रदीपोद्द्योतः ॥

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥



# अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।

## १ । २ । ४५ ॥



### अभिधेयेति । (कै)

सर्वशब्दानां प्रयोजनवत्त्वेनाव्यभिचारात् प्रयोजनवाचिनोऽसम्भवाच्च धनवाचिनो ग्रहणाभावादिति भावः ॥

कस्येत्याकाङ्क्षायामाह

---

महाभाष्यम् ॥ अर्थवदिति व्यपदेशाय वर्णानां च माभूदिति । किञ्च स्यात् । वनम् धनमिति "नलोपः प्रातिपदिकान्तस्य" (८ । २ । ७) इति नलोपः प्रसज्येत ॥ अधातुरिति किमर्थम् । अहन् वृत्रमिति ॥ अधातुरिति शक्यमकर्तुम् । कस्मान्न भवति अहन् वृत्रमिति । आचार्य्यप्रवृत्तिर्ज्ञापयति

---

कैयटः ॥ अभिधेयवचनोऽत्रार्थशब्द आश्रीयते तत्राधातुरप्रत्यय इति पर्य्युदासाश्रयणादर्थवत एव संज्ञा भविष्यति नार्थोऽर्थवद्ग्रहणेनेत्याशङ्क्याह "अर्थवदिति" (भा) ॥ "व्यपदेशायेति" । (भा) । संज्ञिन इति वाक्यशेषः । पर्य्युदासाश्रयणे केन धर्मेण सादृश्यमाश्रीयत इत्यप्रतिपत्तिः स्यादिति भावः ॥

---

शब्दकौस्तुभः ॥ डित्थादीन्यव्युत्पन्नान्युदाहरणम् । अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकम् । यत्तु व्युत्पत्तिपक्षेऽपि निपातार्थमनुकरणार्थं चेदमिति हरदत्तेनोक्तम् । तन्न । तत्रापि प्रकृत्यादिकल्पनसम्भवादिति बोध्यम् । वस्तुतस्तु

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५। )

## संज्ञिन इति । (कै)

"व्यपदेशो" विशिष्टसंज्ञिनो लाभः ॥

## केनेति । (कै)

शब्दत्वादिनापि तदाश्रीयेतेति भावः ॥ नञिवयुक्तन्याया-नित्यत्वज्ञापकं तदित्यन्ये ॥ च श्रवणाद् व्यवदेशापेक्षयाभिन्नमेव तत् फलमिति भ्रमनिवृत्तये आह

---

न धातोः प्रातिपदिकसंज्ञा भवतीति । यदयं "सुपो धातुप्रातिपदिकयोः" ( २ । ४ । ७१ ) इति धातुग्रहणं करोति । नैतदस्ति ज्ञापकम् । प्रतिषिद्धार्थमेतत् स्यात् । अपि काकः श्येनायत इति ( ३ । १ । ११ ) ॥ अप्रत्यय इति किमर्थम् । काण्डे कुड्ये ( १। २। ४१ )॥ अप्रत्यय इति शक्यमकर्त्तुम् । कस्मान्न भवति काण्डे कुड्ये इति । कृत् तद्धितग्रहणं ( १ । २ । ४६ ) नियमार्थं भविष्यति । कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भवति नान्यस्येति ॥

---

"वर्णानां मा भूदिति" । (भा) । विशिष्टसंज्ञिव्यपदेशफलं दर्शयति । क्वचिद्वर्णानां चेति पाठः ( अस्माकं भाष्यपुस्तके 'वर्णानां मा भूद' इति पाठोऽस्ति । किलहरण प्रभृतीनां भाष्यपुस्तके 'वर्णानां च मा भूद' इति पाठोऽस्ति ) । तत्र चशब्देन पदसमुदायोऽनर्थको दशदाडिमानी-त्यादिः समुच्चीयते ॥

---

बहुपटव इत्याद्यर्थमिदम् । न च तद्धितग्रहणे मत्वर्थलक्षणया निर्वाहः । पचतकीत्यादावतिव्याप्तेः । अव्युत्पत्तिपक्षस्तु कमि ग्रहणेन सिद्धे कंसग्रहणेनैव ज्ञाप्यः । ज्ञापितं च तत्राप्यनेनैव संज्ञासिध्यति । नन्वेतदेव ज्ञापकं बहुच्

## विशिष्टेति । (कै)

च पाठस्तु प्रामादिक इति भावः॥ तमपि समर्थयते

## क्वचिदिति । (कै)

समासग्रहणं त्वर्थवत् समुदायस्यैव नियामकमिति भावः॥

## संख्येति । (कै)

द्व्येकयोः कर्मणीत्यादीनां स्वादिविध्येकवाक्यत्वादिति भावः॥ एवं च कार्य्याभावात् संज्ञापि न स्यादिति तात्पर्य्यम् ॥

---

अर्थवत्यनेकपदप्रसङ्गः । वा । अर्थवति ("अर्थवदिति" इत्यपि पाठोऽस्ति ) प्रातिपदिकसंज्ञायामनेकस्यापि पदस्य प्रातिपदिकसंज्ञा प्राप्नोति । दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत् कुमार्य्याः स्फैयकृतस्य पिता प्रतिशीन इति॥ समुदायोऽत्राऽनर्थकः । समुदायोऽनर्थक इति चेदवयवार्थवत्त्वात् समुदायार्थवत्त्वं यथा लोके । वा । समुदायोऽनर्थक इति चेदवयवैरर्थवद्भिः समुदाया अप्यर्थवन्तो भवन्ति यथा लोके । तद्यथा । लोक आढ्यमिदं नगरं गोमदिदं नगरमित्युच्यते न च तत्र

---

"किं च स्यादिति" । (भा)॥ संख्याकर्मादिषु स्वादीनां विधानादनर्थकेभ्यः स्वाद्युत्पत्तिर्नभविष्यतीति प्रश्नः । "धनमिति" । (भा)॥ ननु 'अधातु-रि'ति नान्तस्य प्रतिषेधो भविष्यति । "नैतदस्ति" । (भा)॥ प्रतिवर्णमत्र विभक्त्युत्पत्तिप्रसङ्गः । न च प्रतिवर्णं धातुसंज्ञासमावेशः । अयं भावः । अविशेषेण स्वादय उत्पद्यन्ते तेषूत्पन्नेष्वर्थनियमः प्रकृतार्थापेक्षया वा प्रत्यय

---

पूर्वं कृतार्थत्वादित्यवधेयम् । अर्थवत् किम् । धनं वनमित्यादौ प्रतिवर्णं संज्ञा माभूत । स्यादेतत् । विशिष्टरूपोपादानविषयतया अर्थवत्परिभाषाया इहाप्रवृत्तावपि अधातुरप्रत्यय इति पर्य्युदासादेव सिद्धम् । न चाधीते यावक

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। १। २। ४५।)

न च प्रतीति। (कै)

क्रियावचनलाभावादिति भावः॥ ननूक्तरीत्या स्वाद्यनुत्पत्तौ कथं पदत्वनिबन्धनो नलोपोऽत आह

अयं भाव इति॥ (कै)

उत्पन्नेष्विति। (कै)

उत्पन्नस्यापि लुगादिनैव निवृत्तिरित्यर्थः। एकस्मिन्नेवैकवचनमिति सामान्यापेक्षप्रत्ययनियमे कस्या अप्यनवस्थितेराह

---

सर्वं ("सर्वे तत्राढ्या" इति पाठोऽप्यस्ति) आढ्या भवन्ति सर्वे वा गोमन्तः। यथा लोक इत्युच्यते लोके चावयवा एवार्थवन्तो न समुदायाः। आतश्चावयाव एवार्थवन्तो न समुदाया यस्य हि ("यद्" इतप्यस्ति) तद्द्रव्यं भवति स तेन कार्य्यं करोति यस्य च ता ("या") गावः सन्ति स तासां क्षीरं घृतं चोपभुङ्क्तेऽन्यैरेतद्द्रष्टुमप्यशक्यम् ("द्रष्टुमशक्यम्" इत्यपि)। का तर्हीयं वाचो युक्तिराढ्यमिदं नगरं गोमदिदमिति। एषैषा वाचो युक्तिः। इह तावदाढ्यमिदं नगरमित्यकारो

---

नियम इति स्यादेव स्वाद्युत्पत्तिः। अव्ययादिवत्। यदुक्तं संघातस्यैकार्थ्यात् सुबभावो वर्णादिति तद्वर्णानामर्थवत्त्वापत्ते। तत्र हि तत्त्वेनैकैव विभक्तिः। समुदायावयवत्वेऽथंगतमेकत्वं प्रत्याययिष्यति। एकमेव हि तदेकत्वं तच्चैकेनैव हि सुपा प्रत्यायितमित्यवयवेभ्यो विभक्तिर्नस्यात्। अनर्थकस्य तु प्रातिपदिकसंज्ञायां प्रकाशयितव्यस्यार्थस्याभावात् समुदायादिव प्रतिवर्णं विभक्त्यु-

---

इत्यादौ इक्श्तिपो निरर्थकावपि धातुप्रत्ययौ स्त इति वाच्यम्। अडादिव्यवस्थायै इक एवार्थवत्त्वस्वीकारात् स्वार्थिकानां च प्रकृत्यर्थेनार्थवत्त्वात्। न चेदं कल्पनामात्रमिति वाच्यम्। डित्यादावपि तथात्वात्। उक्तं हि।

(अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५। )

अर्थनियम इति । (कै)

अनेकप्रकरणव्यवधानादेकवाक्यतापत्तो दुर्बल इत्यभिमानः ॥ प्रत्ययनियमेऽपि न दोषः इत्याह

प्रकृतेति । (कै)

संनिहितेत्यर्थः ॥ अवश्यमेवमाश्रयणीयमित्याह

अव्ययादिवेति ॥ (कै)

---

मत्वर्थीयः । आढ्या अस्मिन् सन्ति तदिदमाढ्यमिति । गोमदिदमिति ("गोमदिदं नगरमिति" इति पाठोऽप्यन्ति ) मत्वन्तान्मत्वर्थीयो लुप्यते ॥ एवमपि वाक्यप्रतिषेधोऽर्थवत्त्वात् । वा । वाक्यस्य प्रातिपदिकसंज्ञायाः प्रतिषेधो वक्तव्यः । देवदत्त गामभ्याज शुक्लाम् देवदत्त गामभ्याज कृष्णामिति । किं कारणम् । अर्थवत्त्वात् । अर्थवद्ध्येतद्वाक्यं भवति ॥ न वै पदार्थादन्यस्यार्थस्योपलब्धिर्भवति वाक्ये । पदार्थादन्यस्यानुपलब्धिरिति

---

त्पत्तिप्रसङ्गः ॥ न लोप इति (भा) । विभक्तेस्तु श्रवणं न भवति समुदायस्य पृथक्प्रातिपदिकसंज्ञायां तदन्तर्भावाद् लुकोऽभावात् न लोपस्योपलक्षणार्थत्वाज्जश्त्वादीनामपि प्रसङ्गः ॥ अहन्निति । भा । विशेषविहितत्वात्सुबाद्युत्पत्तौ सत्यामडागमस्य धातुभक्तत्वात् प्रातिपदिकसंज्ञायां सत्यां नलोपप्रसङ्गः । न चाप्रत्यय इति प्रत्ययलक्षणप्रतिषेधः । "नङिसम्बुद्ध्योरि"ति ज्ञापनाद् नलोपे विधीयमाने प्रत्ययलक्षणेनाप्रत्यय इति निषेधाभावात् ॥

---

अर्थवत्ता नोपपद्यते केवलेनावचनात् किं तु त्वन्वयव्यतिरेकाभ्यामिति । कल्पिताभ्यामिति हि तदर्थः । वस्तुतः पदस्फोटवाक्यस्फोटयोरेवार्थवत्त्वात् । सत्यम् । उत्तरार्थमर्थवद्ग्रहणं इह तु स्पष्टार्थम् । अधातुः किम् । अहन् । नलोपो माभूत् ।

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५। )

यत्तूक्तमिति । (कै)

"हयवरट्" (शिवसू—५) सूत्रे इति शेषः ॥

प्रकाशयितव्यस्यार्थस्याभावादिति । (कै)

तदभावेऽपि प्रातिपदिकसंज्ञासामर्थ्यादित्यर्थः ॥

समुदायादिवेति । (कै)

अनर्थकनिपातरूपात् समुदायादिवेत्यर्थः । वस्तुतः संख्याकर्मादेरभावाद्विभक्तेरेवानुत्पत्तिरेव । अर्थनियमादिप्रकारस्तु महासंज्ञाविरोधाद्गमके सत्येव न सर्वत्र । एतद्भावत्त्वं तु निरर्थकसमुदाय

---

चेत् पदार्थाभिसम्बन्धस्योपलब्धिः । वा । पदार्थादनस्यानुपलब्धिरिति चेदिदमुच्यते । पदार्थाभिसम्बन्धस्योपलब्धिर्भवति वाक्ये । इह देवदत्त-इत्युक्ते कर्त्ता निर्दिष्टः कर्म क्रियागुणौ चानिर्दिष्टौ । गामित्युक्ते कर्मनिर्दिष्टं कर्त्ता क्रियागुणौ चानिर्दिष्टौ । अभ्याजेत्युक्ते क्रिया निर्दिष्टा कर्तृकर्मणी गुणश्चानिर्दिष्टः । शुक्लामित्युक्ते गुणो निर्दिष्टः कर्तृकर्मणी क्रिया चानिर्दिष्टा ।

---

धातुग्रहणं करोतीति । भा । पुत्रीयतीत्यादौ प्रातिपदिकत्वादेव लुक् सिद्ध इति भावः ॥ श्येनायत इति । भा । अत्राप्रत्यय इति निषिद्धा प्रातिपदिकसंज्ञा ॥ कृत्तद्धितेति । भा । तद्धितग्रहणमत्र नियमार्थं कृद्ग्रहणं तु प्रतिषिद्धार्थम् ॥ भिद् छिद् इति । भा । अत्र हि अधातुरिति प्रतिषेधप्रसङ्गः ॥ अनेकपदप्रसङ्ग इति । भा । अनेकं पदमस्मिन्नित्यनेकपदः समुदायस्तस्य संज्ञाप्रसङ्ग इत्यर्थः ॥ अनेकस्यापि पदस्येति । भा । समु-

---

न च "सुपोधातु"रिति धातुग्रहणात् धातोर्नेयं संज्ञेति वाच्यम् । श्येनायते इत्यादौ प्रत्ययान्ते धातुग्रहणस्य चरितार्थत्वात् । अप्रत्ययः किम् । पचतीति तिपो माभूत् । सुपोऽप्येवम् । न चैवन्तद्धन्तेषु अतिव्याप्तितादवस्थ्यम् ।

इति बोध्यम् ॥ ननु सर्वसुबुत्पत्तौ तेषां श्रवणापत्तिः । सर्वैकवचनोत्पत्तावपि एवमेवात आह

विभक्तेस्तु इति ॥ (कै)

समुदायस्येति । (कै)

तदन्तस्य अन्तरङ्गत्वादवयवसंज्ञा तन्निमित्तसुप्रवृत्तिकालोत्तरकाले इत्यर्थः । समासनियमस्त्वर्थवत्समुदायविषय इति भावः ॥ न च धनतीत्यादौ प्रतिवर्णं सुबुत्पत्तौ तच्छ्रवणप्रसङ्ग इति वाच्यम् । धातुप्रत्ययपदयोर्धात्ववयवप्रत्ययान्तावयवपरतया तत्र सर्वत्र वारणेनादोषात् तस्मात् अव्युत्पन्नप्रातिपदिकावयववर्णानां संज्ञैवापाद्या तत्र च समुदायप्रातिपदिकावयवत्वेन तल्लोपो धनवनादिकमव्युत्पन्नमिति भावस्तद्ध्वनयन्नाह

---

इहेदानीं देवदत्त गामभ्याज शुक्लामित्युक्ते सर्वं निर्दिष्टं भवति ("भवति" इति नास्ति बहुषु पुस्तकेषु ) देवदत्त एव कर्त्ता नान्यः । गौरेव ("गामेव" इति पाठोऽप्यस्ति ) कर्म नान्यत् । अभ्याजिरेव क्रिया नान्या । शुक्लामेव न कृष्णामिति । एतेषां ("येषाम्" इति पाठोऽप्यस्ति ) पदानां सामान्ये वर्त्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थः ॥ तस्मात् प्रतिषेधः । वा । तस्मात् प्रतिषेधो

---

दितस्येति बोद्धव्यम् । प्रतिपदं तु नैव संज्ञा प्राप्नोत्यप्रत्यय इति निषेधात् समुदायस्य तु निषेधो न प्रवर्त्तते प्रत्ययग्रहणे यस्मात् सविहित इति वचनात् समुदायाच्च प्रत्ययस्याविधानात् प्रत्ययान्तत्वाभावात् । न विद्यते प्रत्ययो यस्मिन् सोऽयमप्रत्यय इत्यप्याश्रयितुं न युज्यते बहुपटव इत्यस्यापि

---

उत्तरसूत्रे तद्धितग्रहणस्य नियमार्थत्वात् । तद्धितान्तानामेव न त्वन्यप्रत्ययान्तानामिति । न च तत्रापि संज्ञाविधित्वेन तदन्तग्रहणं दुर्लभमिति वाच्यम् ।

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। १। २। ४५। )

## जश्त्वादीनामिति। (कै)

एतेन जश्त्वादौ धकाराद्युच्चारणं वैयर्थ्यमित्यपास्तम्॥

## विशेषेति। (कै)

अनवकाशत्वात् सुपं वाधिष्येति भावः॥ न च श्येनायत इत्यादौ लडादयः सावकाशा इति अत्र परत्वाद् दुर्वारा एवं तर्हि "भूवादि" सूत्रस्य यत्लडादिविधावुपस्थानं तस्यानवकाशत्वादित्यर्थः॥

## अडागमस्येति। (कै)

अङ्गभक्तत्वेऽपि धातुरेवाचाङ्गमिति धातुभक्तत्वादित्युक्तम्। इदं च स्वरूपकथनम्॥

---

वक्तव्यः॥ न वक्तव्यः। अर्थवत् समुदायानां समासग्रहणं नियमार्थम्। वा। अर्थवत् समुदायानां समासग्रहणं नियमार्थं भविष्यति। समास एवार्थवतां समुदायानां प्रातिपदिकसंज्ञो भवति नान्य इति॥ यदि नियमः क्रियते प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा न प्राप्नोति बहुपटवः (५। ३। ६८)। उच्चकैरिति (५। ३। ७१)। किं पुनरत्र प्रातिपदिकसंज्ञया

---

समुदायस्य निषेधप्रसङ्गात् स्वरे दोषप्रसङ्गात्॥ समुदायोऽत्राऽनर्थक इति। भा। पदार्थानां समन्वयाभावात्॥ अवयवार्थवत्त्वादिति। भा। अवयवधर्माणां च समुदाये व्यपदेशात् सति च प्रातिपदिकत्वे सुब्लुक्प्रसङ्गः॥ एषैवेति। भा। एषा या वाचो युक्तिः सैषा एतत्प्रमाणेत्यर्थः॥ अकारो मत्वर्थीय इति। भा। ततश्च नावयवधर्मेण समुदाये व्यपदेशः किं तर्हि

---

अर्थवदित्यनुवृत्तिसामर्थ्यात्तत्सिद्धिः। प्रशंसायां हि मतुप्। एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वं च प्रशंसार्थः। अधातुप्रत्ययाविति सिद्धे नञ् द्वयोपादानं स्पष्टार्थम्। महासंज्ञाकरणं प्राचामनुरोधात्॥

न ङिसम्बुद्ध्योः इति । (कै)

कथमन्यथा राजेत्यादौ न लोपः। न च कृदन्तत्वात् सिद्धिः। तत्राप्यप्रत्यय इत्यनुवृत्तेरिति भावः॥

पुत्रीयतीति। (कै)

अप्रत्यय इति प्रत्ययस्यैव निषेध इत्यभिमानः॥ प्रत्ययान्तस्य स निषेध इत्यभिप्रायेणाह

अत्राप्रेति॥ (कै)

भाष्ये

---

प्राप्नोति । प्रातिपदिकादिति स्वाद्युत्पत्तिर्यथा स्यात् ( ४ । १ । १-२ ) । नैष दोषः । यथैवात्राप्रातिपदिकत्वात् स्वाद्युत्पत्तिर्न भवत्येवं लुगपि ( २ । ४ । ७१ ) न भविष्यति । तत्र यैवासावन्तर्वर्तिनी विभक्तिस्तस्या एव श्रवणं भविष्यति । नैवं शक्यम् । स्वरे हि ("हि" इति नास्ति बहुषु पुस्तकेषु) दोषः स्यात् । बहुपटव इत्येवं स्वरः प्रसज्येत ("स्यात्" इति अत्र पाठोऽस्ति बहुषु पुस्तकेषु)। बहुपटव इति चेष्यते । पठिष्यति ह्याचार्यः । चितः स प्रकृतेर्बह्वकजर्थमिति। (चितः । ६ । १ । १६३। चितः स प्रकृतेर्बह्वकजर्थम् । वा । चितः स प्रकृतेरिति वक्तव्यम् । किं प्रयोजनम् । बह्वकजर्थम् । बह्व-

---

दश्वादिवद्यौगिक इत्यर्थः॥ मत्वन्तादिति । भा । मत्वन्तान्मतुप् न भवति "सरूपः प्रत्ययो नेष्ट" इति (शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ४ । १ । ७॥ ५ । २ । ९४॥) वचनात् तस्माद् "एकगोपूर्वाद्" इति ठञो भाष्यकारवचनप्रामाण्याल्लोपः । अत इति च तत्र निरस्तम् । गौत्रिकादिसिद्ध्यर्थं गवां समूहो गोत्रा साऽस्मिन्नस्तीति गौत्रिकम् । अथवा मत्वन्तान्मत्वर्थीयो लुप्यत इति । अनेनावयवधर्मस्य समुदाये उपचारमाह । इह तु मुख्येऽर्थवत्त्वे सम्भवत्युपचरितत्वस्याश्रयो न

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। १। २। ४५। )

## काण्ड इति। (भा)

परादिवद्भावेन प्रत्ययान्तत्वमिति भावः। न च पर्युदासे प्राब्दफललाभायान्तवत्त्वस्यैव प्रवृत्तेस्तेनाप्रत्ययान्तत्वात् प्रातिपदिकत्वं स्यादेव तथा च ह्रस्वः स्यादिति वाच्यम्। भाष्यकृता वक्ष्यमाणत्वात्॥

## अत्र हीति। (कै)

न च कृद्ग्रहणस्य प्रतिषेधबाधनार्थत्वे तद्धितग्रहणनियमात् कारकशब्दे प्रातिपदिकत्वानापत्तिः। कृद्ग्रहणं तु मध्येऽपवादन्यायेनाधातुरिति प्रतिषेधस्यैव बाधकं स्यादिति वाच्यम्। शाब्दसामान्यचिन्ताश्रयणादित्यभिमानः। वस्तुतो धातोः प्रत्ययान्तस्य च चेत् कृत्तद्धितान्तस्यैवेति नियमे भाष्यतात्पर्य्यम्। तेनाधातुग्रहणमपि प्रत्याख्यातं क्विबाद्यन्तस्यापि प्रत्ययान्तत्वात् प्रत्य-

---

र्थमकजर्थं च। बह्वर्थं तावत्। बहुभुक्तम्। बहुकृतम्। अकजर्थम्। सर्वकैः। विश्वकैः। उच्चकैः। नीचकैः। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। मतुब्लोपोऽत्र द्रष्टव्यः। तद्यथा। पुष्पका एषां पुष्पकाः। कालका एषां कालकाः। अथवाकारो मत्वर्थीयः। तद्यथा। तुन्दः घाट इति पूर्वसूत्रनिर्देशस्य। चित्वात् चित इति॥) तस्यां पुनर्लुप्तायां यान्या विभक्तिरुत्पद्यते

---

युक्तः॥ अर्थवद्वाक्यमिदानीं दर्शयति। एवमपीति। भा॥ अर्थवद्वीति। भा। पदार्थानां समन्वयावगमात्॥ न वै पदार्थादिति। भा। पदानि संसमर्थं प्रतिपादयन्ति॥ वाक्यम्। पदार्था एव त्वाकाङ्क्षा योग्यता सन्निधिवशात् परस्परसंसृष्टो वाक्यार्थ इत्यर्थः। न तु वाक्यं वाक्यार्थो वा पृथगस्तीति

यान्तस्यैवेत्येव भाष्ये उक्तम्। न च अस्यापत्यम् इः इत्यादौ प्रत्ययलप्रयुक्तनिषेधबाधनार्थं तद्धितस्यैव संज्ञाविधानमस्त्विति वाच्यम्। तस्य निषेधे फलाभावात्। न च हरिस्त्वित्यादौ सोः प्रातिपदिकत्वापत्तिरेवं च औत्सर्गिकैकवचनापत्तिः "सात्पदाद्योः" (८। ३। १११) इति षत्वनिषेधापत्तिश्चेति वाच्यम्। औत्सर्गिकस्यापि विना गमकमप्रवृत्तेर्बहुव्रीहावनेकस्यापि पदस्येति भाष्यानुपपत्तेराह

**समुदितस्येति । (कै)**

अत एवानेकग्रहणं चरितार्थम् ॥ बहुव्रीह्याश्रयणफलं दर्शयति

**प्रतिपदं त्विति ॥ (कै)**

---

तस्याः प्रकृत्यनेकदेशत्वादन्तोदात्तत्वं न भविष्यति ॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञेति । यदयमप्रत्यय इति प्रतिषेधं शास्ति । स च तदन्तप्रतिषेधः । स तर्हि ज्ञापकार्थः प्रत्ययप्रतिषेधो वक्तव्यः । ननु चायं प्राप्त्यर्थोऽपि वक्तव्यः । नार्थः प्राप्त्यर्थेन । कृत्तद्धितग्रहणं नियमार्थं भविष्यति । कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भविष्यति नान्यस्य प्रत्ययान्तस्येति । स एषोऽनन्यार्थः प्रत्ययप्रतिषेधो वक्तव्यः प्रकृतिप्रत्ययसमुदायस्य वा प्रातिपदिकसंज्ञा वक्तव्या ॥ उभयं

---

भावः॥ पदार्थाभिसम्बन्धस्येति। भा। ध्वनिव्यङ्ग्यं नित्यं वाक्यं विशिष्टस्यार्थस्य पदार्थसंसर्गरूपस्य वाचकम्। अन्यथा लुप्तशब्दो वाक्यार्थः स्यात्। कर्त्ता निर्दिष्ट इति। भा। सम्बोधनविषयमनियतक्रियं कर्तृमात्रमित्यर्थः॥ अविशेषेऽवस्थानमिति। भा। पदार्थसंसर्गरूपे वाक्यार्थे इत्यर्थः। अत एव वाक्यमेव मुख्यः शब्दो वाक्यार्थ एव मुख्यः शब्दार्थः। सादृश्यादन्वयव्यतिरेकौ कल्पितौ लाघवार्थमाश्रित्य पदार्थव्यवस्थापनं क्रियते। प्रतिवाक्यं व्युत्पत्त्य-

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५ । )

## प्रत्ययान्तत्वाभावादिति । (कै)

"संज्ञाविधावि"ति निषेधस्तु नात्र । यत्र प्रत्ययस्य संज्ञा तत्रैव तन्निषेधप्रवृत्तेरिति भावः ॥

## स्वरे दोषेति । (कै)

अनुपदमेव स्फुटो भविष्यत्येतत् ॥

## समन्वयेति । (कै)

स एव हि वाक्यशक्यः ॥

---

न वक्तव्यम् । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः । यथा जातीयकानां समासः । कथं जातीयकानां समासः । सुबन्तानाम् ॥ सुप्तिङ्समुदायस्य तर्हि प्रातिपदिकसंज्ञा प्राप्नोति । सुप्तिङ्समुदायस्य ("अपि" इति पाठोऽप्यस्ति) प्रातिपदिकसंज्ञारभ्यते । अहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधातीति (२ । १ । ७२ गणसूत्रम्) । तन्नियमार्थं भविष्यति । एतस्यैव सुप्तिङ्समुदायस्य प्रातिपदिकसंज्ञा भवति नान्यस्येति ॥ तिङ्समुदायस्य तर्हि प्रातिपदिकसंज्ञा प्राप्नोति । तिङ्समुदायस्यापि प्रातिपदिकसंज्ञारभ्यते । आख्यातमाख्यातेन क्रियासातत्य इति (२ । १ । ७२ गणसूत्रम्) । तन्निय-

---

सम्भवात् प्राब्द्व्यवहाराभावप्रसङ्गात् ॥ बहुपटव इति । भा । द्योत्येनार्थेनार्थवान् प्रत्ययः । प्रकृतिस्तु वाच्येनेत्यर्थवत्समुदायोऽयं भवति ॥ उच्चकैरिति । भा । तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति यदा नाश्रीयते नाप्यकच् अव्यय इति तदायं दोषः । तदा हि सुबन्तस्याकचि कृते "अव्ययादि"ति सुब्लुगभावात् "सुपो धातुप्रातिपदिकयोरि"ति लुगिष्यते स च न प्राप्नोति ॥ किं पुनरत्रेति । भा । उच्चकैरित्याद्यन्यथा सिध्यतीति प्रश्नः ॥ इतरो बहुपटव इति न सिध्यतीति मन्यमान आह प्रातिपदिकादिति स्वर इति ॥

अवयवधर्माणामिति । (कै)

यथा ग्रामो दग्ध इत्यादौ ॥ वीप्साया निष्प्रयोजनत्वादाह

एषा येति । (कै)

नैवात्र वीप्सेति भावः ॥

मतुप् नेति । (कै)

इदमेव ध्वनयितुं भाष्ये "मत्वर्थीय" इति उक्तम् । मतुबिति नोक्तम् ॥ लुग्विधायकाभावादाह

भाष्यकारेति ॥ (कै)

ननु अत इत्यनुवृत्तेरस्मादिञ् दुर्लभोऽत आह

अत इतीति । (कै)

गोत्र इत्यत्र "इनित्र कट्यचश्च" (४ । २ । ५१) इति 'त्रः' ॥ एकपूर्वस्याहपर्य्याद् गोपूर्वस्यापि समासस्यैव तत्र ग्रहणमिति मते आह

---

मार्थं भविष्यति । एतस्यैव तिङ्समुदायस्य प्रातिपदिकसंज्ञा भवति नान्यस्येति । अर्थवत्ता नोपपद्यते केवलेनावचनात् । वा । अर्थवत्ता नोपपद्यते वृक्षशब्दस्य । किं कारणम् । केवलेनावचनात् । न केवलेन वृक्षशब्देनार्थो गम्यते । केन तर्हि । सप्रत्ययकेन ॥ न वा प्रत्ययेन नित्यसम्बन्धात् केवल-

---

भा । वज्रपटव इति वकाराकारस्योदात्तत्वं प्राप्नोति टकाराकारस्य चेष्यते ॥ प्रकृत्यनेकदेशत्वादिति । भा । न ह्यसौ प्रकृतेरेकदेश इत्यर्थः । अप्रत्यय इति प्रतिषेधं शास्तीत्यस्ते कस्य न ब्रूयाद् वज्रपटव इत्यत्राप्रत्यय इति

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५। )

## आदीति । (कै)

आदिना गोशकटिप्रकृतिकगौशकटिकस्य ग्रहणम् ॥

## अथवेति । (कै)

गम्यमानार्थस्य निवृत्तिरेव वादिलोप इतिवल्लोपशब्देनोक्तेति भावः ॥ परे तु एषा व्याख्या न भाष्यस्वरससिद्धा । अवयवार्थवत्त्वेन समुदायार्थवत्त्वाभावं प्रकल्प्यैतदुक्तेः । तस्माद् अग्नं आद्यचस्तत्प्रामाण्याद् "गुणवचनेभ्य" इति मत्वर्थीयलोप इति सारं ग्रामो दग्ध इत्यादावपि अग्नं आद्यजेव । अवयवेनासमुदायरूपाद् रूप इति भाष्यतात्पर्य्यम् ॥ भाष्ये "अर्थवद्धोतद्वाक्यम्" इति पाठः ॥ नन्वन्वयरूपोऽर्थः पदार्थातिरिक्त उपलभ्यतेऽत आह

## पदानीति । (कै)

"पदार्था एव तु" इत्यनेन संसर्गबोधे पदानां व्यापारो नास्तीति । एवं च पदार्थैरिवाकाङ्क्षादिभिः संसर्गस्य गम्यमानत्वाच्च तत्र वाक्यशक्तिर्वाक्यस्यातिरिक्तस्याभावाच्च । तदाह

---

स्याप्रयोगः । वा । न वैष दोषः । किं कारणम् । प्रत्ययेन नित्यसम्बन्धात् । नित्यसम्बन्धावेतौ अर्थौ प्रकृतिः प्रत्यय इति । प्रत्ययेन नित्यसम्बन्धात् केवलस्य प्रयोगो न भविष्यति ॥ अन्यद्भवान् पृष्टोऽन्यदाचष्टे । आम्रान्पृष्टः कोविदारानाचष्टे । अर्थवत्ता नोपपद्यते केवलेनावचनादिति भवानस्माभि-

---

निषेधः प्राप्नोतीत्यत आह स च तदन्तप्रतिषेध इति प्रत्ययग्रहणे यस्मात् स विहित इति तदन्तविधिः । संज्ञाविधौ च प्रत्ययग्रहणे तदन्तविधिः । संज्ञाविधौ च प्रत्ययग्रहणे तदन्तविधिर्निवारितः । अपप्रय इत्ययं तु प्रतिषेधविधिः । पटुशब्दाच्चाच्च जसुत्पन्नो न बह्वपटुशब्दादिति बह्वपटव इत्येत-

न तु वाक्यमिति ॥ (कै)

वाक्यार्थो वेति । (कै)

संसर्गस्य पदार्थबोध्यत्वादिति भावः ॥ ननु पदातिरिक्तवाक्याभावात् कस्य पदार्थाभिसम्बन्धो वाच्यः स्यादत आह

ध्वनिव्यङ्ग्यमिति । (कै)

अनेन स्थिरत्वं तस्य दर्शितम् ॥

विशिष्टस्यार्थस्येति । (कै)

विशेषणत्वादिविशिष्टस्येत्यर्थः ॥ पदार्थानां संसर्गबोधकत्वे दोषमाह

अन्यथेति । (कै)

न च शब्दप्रयोज्यत्वाच्छाब्दत्वं प्रत्यक्षदृष्टधूमबोध्यवह्नेरपि प्रत्यक्षत्वात् पक्षे श्रुतधूमशब्दोपस्थितधूमार्थबोध्यवह्नेरपि शाब्दत्वापत्तेश्च ।

---

चोदितः केवलस्याप्रयोगे हेतुमाह । एवं च किल नाम कृत्वा चोद्यते समुदायस्यार्थे प्रयोगादवयवानामप्रसिद्धिरिति ॥ सिद्धं त्वन्वयव्यतिरेकाभ्याम् । वा । सिद्धमेतत् । कथम् । अन्वयाद्व्यतिरेकाच्च । कोऽसावन्वयो व्यतिरेको वा । इह वृक्ष इत्युक्ते कश्चिच्छब्दः श्रूयते वृक्षशब्दोऽकारान्तः

---

स्प्रत्ययान्तमेव । अथवा अप्रत्यय इति बहुव्रीह्याश्रयणात् प्रत्ययादेरपि बहुपटव इत्यस्य निषेधः प्राप्नोतीत्याह स चेति । भा । अप्रत्यय इति तत्पुरुषः आश्रीयते तस्य स्वपदार्थप्रधानत्वेनान्तरङ्गत्वादिति भावः ॥ प्रात्यर्थं इति । भा । प्रतिषेधः प्रात्यर्थं इत्यर्थः ॥ स एषोऽनन्यार्थ इति । भा । आप-

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५। )

यदि तु पदसमभिव्याहाररूपाकाङ्क्षा तत्कारणत्वज्ञानं च शाब्दबोधे कारणमिति शाब्दत्वं पदानां पदार्थेष्वपि शक्तिर्न सिध्येत । तदुक्तम् "अशब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेद्" इति । यदि बोधजनकताया असम्बद्धेव वक्तुमशक्यतया पदार्थैः पदानां शक्तिरूपसम्बन्धकल्पनं तदा समभिव्याहारे संसर्गबोधकारणताया अपि असम्बद्धेव वक्तुमशक्यतया तेन तादात्म्यसम्बन्धस्य वाक्ये आवश्यकत्वात् । तादात्म्यमेव च शक्तिरिति तत्त्वम् ॥ पदार्थातिरिक्तः कश्चिद्वाक्यार्थोऽस्तीति वक्तुमुपक्रमते भाष्ये

इह (भा)

इत्यादि ॥ ननुकर्तृत्वस्य क्रियानिरूपितत्वात् क्रियायाश्चासन्निधानात् तत्त्वाभावेन कर्त्रीत्यनुपपन्नमत आह

कर्तृमात्रमिति । (कै)

प्रधानीभूतधात्वर्थमात्राश्रय इत्यर्थः । एवं कर्मशब्देन धात्वर्थफलमात्राश्रयः ॥

---

सकाराश्च प्रत्ययः । अर्थोऽपि कश्चिद्दृश्यते मूलस्कन्धफलपलाशवानेकत्वं च । वृक्षावित्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी । सकारो हीयते औकार उपजायते वृक्षशब्दोऽकारान्तोऽन्वयी । अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी । एकत्वं हीयते द्वित्वमुपजायते मूल-

---

नार्थ एवेत्यर्थः ॥ सुबन्तानामिति । भा । एतच्चोपलक्षणं भेदसंसर्गद्वारकार्थवत्त्वयुक्तानाम् । यस्मात् सुबन्तानामपि समासो दृश्यते । अश्वक्रीतीत्यादौ "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति

**अनिर्दिष्टाविति ।** (भा)

पूर्वत्र विभक्तिविपरिणामेनान्वयः । ईदृग्प्रकारोऽपि भाष्यप्रामाण्यायुक्त एव तृतीयस्थले "अनिर्दिष्ट" इत्येव पाठः ॥

**देवदत्त एव कर्त्ता नान्यः इति ।** (भा)

अनेनैतद्दर्शयति यत्किञ्चित्कारकस्य क्रियायाश्चोच्चारणे सर्वक्रियाणां योग्यानां सर्वकारकाणां च योग्यानामाक्षेपो भवति । एवं च सर्वत्र वाक्यमेव बोधकं तत्तदुपादानं तु नियमायेति ॥

**गामेव नान्यदिति ।** (भा)

गामिति शब्दवाच्यमेव कर्म नान्यदित्यादिक्रमेणार्थः ॥ भाष्ये

**सामान्ये ।** (भा)

सामान्यतः क्रियाकर्तृत्वादिविशिष्टे ॥

---

त्वान्वयव्यतिरेकाभ्यामर्थवानन्वयी । ते मन्यामहे यः शब्दो हीयते तस्यासावर्थो योऽर्थो हीयते यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते यः शब्दोऽन्वयी तस्यासावर्थो योऽर्थोऽन्वयी ॥ विषम उपन्यासः । बहवो हि शब्दा एकार्था भवन्ति । तद्यथा । इन्द्रः शक्रः पुरुहूतः पुरन्दरः । कन्दुः

---

वचनात् । देवदत्तो ग्रामं गत इत्यादेः सुबन्तसमुदायस्यैव वाक्यस्य नियमेन निवृत्तिः स्यादित्यभिप्रायेणाह सुप्तिङ समुदायस्येति । भा ॥ अहिकर्मणेति । भा । ननु समाससंज्ञेयं समासान्तोदात्तार्था । नैष दोषः । समासत्वादेव प्रातिपदिकत्वमिति तत्तुल्यजातीयताप्रतिपादनार्थमेतदुपन्यसम् ॥ तिङ्समुदायस्येति । भा । पचत धावतेत्यादि । ततश्च प्रातिपदि-

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५ । )

विशेषे (भा)

विशेषणविशेष्यभावापन्ने ॥ तदाह

संसर्गरूपे (कै)

इत्यादि । विशेषणविशेष्यभावरूपसंसर्ग इत्यर्थः । स एव वाक्यार्थ इति निरूपितं मञ्जूषायाम् ॥

अत एवेति । (कै)

तेनैव लौकिकवैदिकव्यवहारादित्यर्थः ॥ नन्वेवं पदार्थव्यवहारोऽसङ्गतः स्यादत आह

सादृश्यादिति । (कै)

लाघवार्थं कल्पितान्वयव्यतिरेकावाश्रित्य सादृश्यात् पदपदार्थव्यवस्थेत्यन्वयः । यथा वर्णेष्वारोपिता उदात्तादयो व्यञ्जकध्वनिधर्मा व्यवहारे हेतव एवमिहापि काल्पनिकः पदपदार्थविभागस्तथेति भावः ॥ ननु तादृशकल्पना व्यर्थेत्यत आह

---

कोष्ठः कुसूलः इति । एकश्च शब्दो बह्वर्थः । तद्यथा अक्षाः पादा माषा इति । अतः किं न साधीयो अर्थवत्ता सिद्धा भवति । न ब्रूमोऽर्थवत्ता न सिद्ध्यतीति । वर्णितार्थवत्तान्वयव्यतिरेकाभ्यामेव । तत्र कुत एतदयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति न पुनः प्रकृतिरेवोभावर्थौ ब्रूयात् प्रत्यय एव वा ।

---

कान्तोदात्तत्वप्रसङ्गः ॥ आख्यातमिति ॥ भा । ततश्च समासेन तुल्यजातीयानां सर्वेषां वाक्यानां नियमान्निवृत्तिः सिद्धेत्यर्थः ॥ अर्थवत्तेति । भा । अर्थवत्तासंज्ञानिमित्तत्वेनेहोपात्ता सा च वाक्यस्यैव पदस्य वा केवलस्य लोके प्रयुज्यमानस्योपपद्यते । न तु प्रकृतिभागस्य केवलस्य प्रयोगाभावादर्थवत्-

प्रतिवाक्यमिति ॥ (कै)

नन्तु बह्वजादीनां स्वार्थिकत्वेनार्थवत्त्वं नेत्यर्थवत्समुदायत्वमस्मिन् कथमत आह

द्योत्येनेति ॥ (कै)

ननु तन्मध्यपतितन्यायेनाकज्ग्रहणात: [1]सर्वनामाव्ययविधौ इति "येन विधिः" इति सूत्रस्थवचनेन प्राप्यत्वात् लुक् सिद्ध इति किमत्र प्रातिपदिकत्वेन अत आह

तन्मध्येति ॥ (कै)

तदा हीति । (कै)

तन्मध्यपतित इत्यादिन्यायाभावे इत्यर्थः । अन्तरङ्गत्वात् लुक् त्वाच पूर्वमेवाकचो"ऽव्ययाद्" इति सूत्र् लुक् कुतो नेति चिन्त्यं बहुपटव उच्चकैर्नीचकैरिति वाक्ये बहुपटव इत्युदाहरणं 'किं पुनः' इति प्रश्नाशयस्तु 'यथैव' इत्यादिना वक्ष्यमाण इत्यन्ये ॥

---

[1] सर्वनामाव्ययधातुविधौ । इ ॥

---

सामान्यशब्दा एत एवं स्युः । सामान्यशब्दाश्च नान्तरेण विशेषं प्रकरणं वा विशेषेष्ववतिष्ठन्ते । यतस्तु खलु नियोगतो वृत्त इत्युक्ते स्वभावतः कस्मिंश्चिदर्थे प्रतीतिरुपजायतेऽतो मन्यामहे नेमे सामान्यशब्दा इति । न चेत् सामान्यशब्दाः प्रकृतिः प्रकृत्यर्थे वर्त्तते प्रत्ययः प्रत्ययार्थे ॥ किं पुनरिमे

---

र्थवत्त्वाग्र्यत्वात् ॥ न वेति । भा । अन्यथा सिद्धः केवलस्याप्रयोगः । "न केवलाप्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय" इति "परश्चे"ति ( ३ । १ । २ ) सूत्रज्ञापितनियमात् । अर्थवत्तान्वयव्यतिरेकाभ्यामवसेयेति भावः । अन्वयव्यतिरेकाभ्यामिति । भा । अन्वयोऽनुगमः सति शब्देऽर्थागमः ।

(अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५ ।).

अन्यथा सिध्यतीति । (कै)

तन्मध्ये पतितादिन्यायेनेति भावः ॥

टकाराकारस्येति । (कै)

प्रातिपदिकत्वे सति अन्तरङ्गानपीति न्यायेन लुकिकृते टुशब्दो-कारस्यैव स्वरप्रवृत्तिरिति भावः ॥

न ह्यसाविति । (कै)

समुदायादुत्पत्तेरिति भावः ॥

अप्रत्यय इति प्रतिषेधः प्राप्नोतीति । (कै)

अवयवमाश्रित्येति भावः ॥

प्रतिषेधेति । (कै)

पर्युदासेऽपि प्रत्ययस्य संज्ञित्वाभावान्न दोष इति भावः ॥

बहुव्रीहीति । (कै)

न विद्यते प्रत्ययो [1]यस्मिन्नित्यर्थः ॥

---

१ यस्मिन्नितीत्यर्थः । इ ॥

---

वर्णा अर्थवन्तः आहोस्विदनर्थकाः । वर्णस्यार्थवदनर्थकत्व उक्तम् । वा । किमुक्तम् । अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णाना-मर्थदर्शनाद् (शिवसू-वा-५) वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतः संघातार्थवत्त्वाच्च । संघातस्यैकार्थ्यात् सुबभावो वर्णात् । अनर्थ-

---

व्यतिरेकः शब्दाभावे तदर्थानवगमः ॥ विषम इति । भा । यद्येकः शब्दः एकस्मिन्नर्थे नियतः स्यात् तत एतद्युज्यते वक्तुं यतस्त्वनियतः ततः प्रकृतेरेव सर्वेऽर्थाः स्युः । यथा दधिमध्वग्निचिदिति । प्रत्ययस्तु क्वचिद्द्योतकः ।

## भेदसंसर्गेति । (कै)

[1]पदार्थयोर्विभागेनापि प्रयोगे इतरसंसर्गाकाङ्क्षाभेदसंसर्गः सदारभूतो यस्य विशिष्टार्थवत्तस्य तद्युक्तानामित्यर्थः । समासेऽपि वाक्यीयेनैव तेन विशिष्टार्थवत्त्वं न हि प्रकृतिप्रत्यययोर्विभागः परस्येति वचनादिति भावः । एवं च [2]समुदायघटका भागाः स्वातन्त्र्येणापि प्रयोगार्हा अर्थवन्तो गृह्यन्ते इति तात्पर्य्यम् ॥ उपलक्षणत्वेन व्याख्याने वीजमाह

## यस्मादिति ॥ (कै)

## अश्वक्रीतीति । (कै)

सुबन्तेन समासे तु अन्तरङ्गत्वात् टापि ङीबेव नस्यादित्यर्थः ॥ सुबन्तानामित्यस्योपलक्षणत्वमजानानस्योद्यतीत्याह

---

१ "वाक्ये" इत्यधिकम् । इ ॥ २ समुदायघटकभागाः । इ ॥

---

कात्तु प्रतिवर्णमर्थानुपलब्धेः ( शिवसू-वा-५ ) वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनादिति ( शिवसू-वा ५ ) ॥ तत्रेदमपरिहृतं संघातार्थवत्त्वाच्चेति । तस्य परिहारः । संघातार्थवत्त्वाच्चेति चेदृदृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः । वा । संघातार्थवत्त्वाच्चेति चेदृदृश्यते हि पुनरतदर्थेन गुणेन

---

प्रत्ययस्यैव वा सर्वे अर्थाः स्युः । इयानधुनेति यथा । प्रकृतिस्त्वर्थाभिधाने साहायकमात्रं कुर्य्यात् । अतः किं न साधीय इति । भा । प्रकृतिः सर्वार्थानभिदधाति । द्योतकास्तु विभक्तय इति सिद्धैवार्थवत्ता ॥ प्रत्यय एवेति । भा । ततश्च प्रकृतेरर्थवत्ता न सिध्यतीति तदवस्थो दोष इत्यर्थः ॥

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५। )

देवदत्तविति ॥ (कै)

ननु सुप्तिङ् समुदायस्य प्रातिपदिकसंज्ञेत्ययुक्तं तेनोन्तोदात्त-स्वरस्यापि सिध्यर्थं समाससंज्ञाया एव विधानादिति शङ्किते

नन्विति ॥ (कै)

समासत्वादेवेति । (कै)

समाससमूलकार्थवत्त्वादेव प्रातिपदिकत्वमिति सुप् तिङ् समु-दायस्यापि समासतुल्यजातीयता प्रतिपादनाय "जहिकर्मणा" इत्येतदुपन्यस्तमित्यर्थः । एवं च भाष्ये

प्रातिपदिकसंज्ञारभ्यत (भा)

इत्यस्य तन्मूलभूतासमाससंज्ञारभ्यत इत्यर्थः इति तात्पर्य्यम् ॥ तिङन्तस्यासत्त्ववाचित्वेन संख्याकारकाद्यभावात् विभक्त्यनुत्पत्तेः प्रातिपदिकस्य फलाभावोऽत आह

---

गुणिनोऽर्थभावः । तद्यथा । एकस्तन्तुस्त्वक्त्राणेऽसमर्थस्तत्समुदायश्च कम्बलः समर्थः । एकश्च तण्डुलः क्षुत्प्रतिघातेऽसमर्थस्तत्समुदायश्च वर्धितकं समर्थम् । एकश्च बल्वजो बन्धनेऽसमर्थस्तत्समुदायश्च रज्जुः समर्था भवति ॥ विषम उपन्यासः । भवति हि तत्र या च यावती चार्थमात्रा । भवति हि किञ्चित्प्रत्येकस्तन्तुस्त्वक्त्राणे समर्थ एकश्च तण्डुलः क्षुत्प्रतिघाते समर्थ एकश्च

---

सामान्यशब्दा इति । भा । प्रकृतिश्चेत् सर्वानर्थानभिदध्यात् वृक्ष इत्युक्ते सर्वा संख्या प्रतीयेत । प्रत्ययो वा सर्वस्य प्रातिपदिकस्यार्थं प्रत्यायये-दित्यर्थः ॥ यतस्तु खल्विति । भा । प्रकरणादिना विनैवेति भावः ॥ अतद-र्थेनेति । भा । अतत्प्रयोजनेनेत्यर्थः ॥ गुणेनेति । भा । अवयवेन । स

ततश्चेति ॥ (कै)

"समासश्चे"ति सूत्रं तु परमसर्वं इत्यादौ "आङ्गग्निटाम्" इत्यादेः प्राप्तस्य बाधाय स्यादिति तात्पर्य्यम् ॥

तुल्यजातीयानामिति । (कै)

तत्त्वं च प्रयोगार्हस्वतन्त्रार्थवत् समुदायत्वेनेत्याहुः ॥ वार्त्तिकद्वयेनायमेवार्थ उपलक्ष्यत इति बोध्यम् ॥ प्रकृतिभागस्यार्थवत्त्वे किं केवलस्य प्रयोग आपाद्यते उत तत्र प्रमाणं नास्तीत्युच्यते इति विकल्पे नाद्य इत्याह

अन्यथेति ॥ (कै)

द्वितीये आह

अर्थवत्ता त्विति ॥ (कै)

भाष्ये

नित्यसम्बन्धाविति । (भा)

मायेश्वरवदिति भावः ॥

---

बल्वजो बन्धने समर्थः । इमे पुनर्वर्णा अत्यन्तायैवानर्थकाः ॥ यथा तर्हि रथाङ्गानि विहृतानि प्रत्येकं व्रजिक्रियां प्रत्यसमर्थानि भवन्ति तत्समुदायश्च रथः समर्थ एवमेषां वर्णानां समुदाया अर्थवन्तोऽवयवा अनर्थका इति ॥ निपातस्यानर्थकस्य प्रातिपदिकत्वम् । वा । निपातस्यानर्थकस्य प्रातिपदिक-

---

ह्यवयविन उपकारकत्वाद् गुणाः । अवयवी तु गुणी ॥ अर्थभावः (भा) प्रयोजनोत्पत्तिः ॥ बल्वजः (भा) तृणविशेषः ॥ या च यावती चेति । भा । अयं समुदाय काचिदित्यस्यार्थे वर्त्तते ॥ विहृतानीति । भा । विच्छिन्नानीत्यर्थः ॥ अनर्थकस्येति । भा । निपातानां द्योतकत्वादभिधेयार्थाभावेऽपि

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५ । )

अवयवानामप्रसिद्धिरिति । (भा)

अवयवमात्रार्थगत्यभावेऽवयवानामर्थवत्त्वे हेतोरप्रसिद्धिरित्यर्थः। लोके केवलप्रकृत्यादेरप्रयोगेऽपि ताभ्विककल्पितावन्वयव्यतिरेकौ दर्शयति

इह (भा)

इत्यादिना । एवं कल्पितान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययविभागं तयोरर्थवत्त्वं च परिकल्प्य शास्त्रेऽन्वाख्यानमिति भावः । अत एव पूर्वप्रश्नः "कोशौ" इति लोकसिद्धत्वे हि प्रश्नासंगतिरिति बोध्यम् । अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययोरर्थवत्त्वोपपादनस्यानैकान्तिकत्व-मिह भाष्ये उक्तं वैषम्यं तथा हि ताभ्यां नार्थसिद्धिः। अध्यागच्छतीत्यादौ निपातेषु व्यभिचारात् [1]तत्सत्त्वेऽपि तदर्था-प्रतीतेः। तद्व्यतिरेकेऽप्यागच्छतीत्येतन्मात्रादर्थप्रतीतेश्च । एवं च

१ तत्सत्त्वे तदर्थाप्रतीतेः । इ ॥

संज्ञा वक्तव्या । खञ्जति निखञ्जति । लम्बते प्रलम्बते ॥ किं पुनरत्र प्राति-पदिकसंज्ञया प्रार्थ्यते । प्रातिपदिकादिति स्वाद्युत्पत्तिः ( ४ । १ । १-२ ) सुबन्तं पदमिति पदसंज्ञा ( १ । ४ । १४ ) पदस्य पदात् ( ८ । १ । १६-१७ ) इति निघातो यथा स्यात् ( ८ । १ । २८ ) ॥ नैतदस्ति प्रयोजनम् । सत्या-

द्योत्यार्थसद्भावाद्येषामर्थवत्त्वं तेषां सिध्यत्येव संज्ञा । यस्य तु द्योत्योऽप्यर्थो नास्ति तदर्थं वचनम् ॥ निघातो यथा स्यादिति । भा । अर्थवदनर्थकयो-रसत्यपि सामर्थ्ये संज्ञाविधानसामर्थ्यान्निघातो भवतीत्येके । समानवाक्य-तानिमित्तो निघातो न सामर्थ्यनिमित्तः स चेहास्ति आख्यातं साव्यय·

प्रकृतिप्रत्ययान्यतरस्यैव सर्वार्थतास्तु । अन्यतरस्य साधुत्वमात्रार्थत्वमस्तु । अन्याय्यो नेकार्थत्वमिति त्वप्रयोजकमश्वादिषु दर्शनात् । बहुपर्यायदर्शनादन्याय्योऽनेकशब्दत्वमितिवदित्याशयेन प्रकृतिप्रत्ययोरर्थवत्ताया अनैयत्यं दर्शयति

**यद्येक इति ॥ (कै)**

**यतस्त्विति । (कै)**

एवं च अश्वादिशब्दे 'तस्मिन् शब्दे सत्येव तदर्थाप्रतीतेरर्थान्तरप्रतीतेः । पर्यायस्थले तस्मिन्शब्देऽसत्यपि तदर्थप्रतीतेश्चेत्यन्वयव्यतिरेका च निर्णायकाविति भावः । यदि प्रकृतिरेव संख्यावाचिका तर्हि क्वापि विभक्तिर्न प्रयुज्येतेत्यत आह

**प्रत्ययस्त्विति । (कै)**

इदम ईशि यश्चेति लोपे स्यात् ॥

---

१ तस्मिन शब्देन प्रकृतिप्रतीतेः— । ह ॥

---

मपि प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिर्न प्राप्नोति । किं कारणम् । न हि प्रातिपदिकसंज्ञायामेव स्वाद्युत्पत्तिः प्रतिबद्धा । किं तर्हि । एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते (१ । ४ । २१-२२ ) न चैषामेकत्वादयः सन्ति ॥ नैष दोषः । अविशेषेणोत्पद्यन्ते उत्पन्नानां नियमः क्रियते ॥ अथवा प्रकृता-

---

कारकविशेषणम् वाक्यमिति परिभाषणादावाक्यस्येत्यपरे ॥ न हीति । भा । स्वादिविधिवाक्यस्य संख्याविधिवाक्येनैकवाक्यत्वात् ॥ अविशेषेणेति । भा । नानावाक्यताश्रयणात् । नियमस्यार्थानां न प्रत्ययानां इत्यनर्थकेभ्योऽपि ते भवन्ति ॥ अथवेति । भा । प्रत्ययनियमेऽपि दोषाभाव इत्यर्थः ॥ अधिपरी

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। १। २। ४५। )

अधुनेति। (कै)

इदमोऽधुनाप्रत्यय इति पक्षे इदम् प्रकृतिराश्रयम्। तदत्र या ज्ञातुं पृच्छति भाष्ये

अतः किमिति॥ (भा)

उक्तेन बहवः शब्दा इत्यादिना ग्रन्थेन किं साधितं त्वयेति भावः॥ इतरः स्वाशयमाह

न साधीय इति॥ (भा)

तदेवाह

न पुनरिति। (भा)

अन्यतरद् द्योतकमिति भावः॥ तद्व्याचष्टे

प्रकृतिः (भा)

इत्यादिना॥

सिद्धैवेति। (कै)

किन्तु विपरीतं प्राप्नोतीति भावः॥ तदाह

---

नर्थानपेक्ष्य नियमः। के च प्रकृताः। एकत्वादयः। एकस्मिन्नेवार्थे एकवचनं न द्वयोर्न बहुषु। द्वयोरेवार्थयोर्द्विवचनं नैकस्मिन् बहुषु। बहुष्वेवार्थेषु बहुवचनं नैकस्मिन् द्वयोरिति। अथवाचार्य्यप्रवृत्तिर्ज्ञापयति अनर्थकानामप्येतेषां भवत्यर्थवत् कृतमिति यदयमधिपरी अनर्थकौ (१। ४।

---

इति। भा। क्रियायोगे गत्युपसर्गसंज्ञयोर्विधानादनर्थकयोः क्रियायोगाभावात् प्राप्तिरेव नास्तीति संज्ञाविधानं यथोक्तार्थस्य ज्ञापकं सम्पद्यते। आनर्थक्यं च निपातस्य धातुनिपातयोः साधारणार्थतयाऽधिकद्योत्यार्थाभावादुच्यते। न तु सर्वात्मनार्थाभावात्। तिवेकादेश इति। भा। तिमस्मि-

ततश्चेति । (कै)

एवं च प्रकृतेरर्थवत्त्वाभावात् संज्ञा न स्यादिति भावः ॥ परिहरति

सामान्यशब्दा इति । (भा)

एवं सत्येते सामान्यशब्दाः स्युस्तत्त्वं चैषां न दृश्यते इति भावः । तदुपपादयति

प्रकृतिश्चेद् (कै)

इत्यादिना ॥

वृक्ष इत्युक्ते (कै)

इत्यस्य प्रातिपदिकप्रयोगमात्रे तात्पर्य्यम् ॥ सामान्यशब्दाः कीदृशा इत्यत आह भाष्ये

सामान्यशब्दाश्चेति । (भा)

बोद्धार्थे विशेषं विशेषबोधकपदान्तरसमभिव्याहारम् एवं च प्रकरणादिसापेक्षतयाऽर्थप्रत्यायकत्वं सामान्यशब्दत्वमिति भावः । एते तु नैवमित्याह

---

६.३ ) इत्यनर्थकयोगंत्युपसर्गसंज्ञाबाधिकां कर्मप्रवचनीयसंज्ञां प्राप्ति ॥ किं पुनरयं पर्य्युदासो यदन्यत् प्रत्ययादिति । आहोस्वित् प्रसज्यायं प्रतिषेधः प्रत्ययो नेति । कश्चात्र विशेषः । अप्रत्यय इति चेत्तिवेकादेशे प्रतिषेधोऽन्तवत्त्वात् । वा । अप्रत्यय इति चेत्तिवेकादेशे प्रतिषेधो वक्तव्यः । काण्डे

---

शब्दादारभ्य सुपः पकारेण प्रत्याहारः ॥ अन्तवत्त्वादिति । भा । पूर्वस्य प्रत्ययसदृशस्य प्रातिपदिकसंज्ञाकार्य्यमिति पूर्वं प्रत्ययान्तवद्भावः ॥ आदिवत्त्वा-

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५। )

यतस्त्विति । (कै)

तद्रीत्या हि प्रकृतिः स्वार्थं प्रत्ययार्थसामान्यं चाभिदधाति तच्च विना प्रकरणादिकं केवलस्य स्वार्थस्य बोधः कथमपि न स्यात् । दृश्यते तु सः । संख्यादेश्च न सामान्यरूपेणापि बोधः । एवं च प्रत्ययमात्रात् न कदापि प्रत्ययार्थबोधः । प्रकरणाद्यसत्त्वेऽपि स्वार्थोपस्थितिः । शास्त्रवासनावतामतो नैषामुभयार्थबाधकत्वरूपं सामान्यशब्दत्वं ततः किमित्याह

न चेद् (भा)

इत्यादि ॥

प्रत्ययार्थे (भा)

तद्द्योत्यार्थे । पञ्चकं प्रातिपदिकार्थ इति मुख्यपक्षे तस्य द्योतकत्वात् वर्णवारणायार्थवत् ग्रहणमित्युक्तम् । तत्र वर्णानामानर्थक्यं दृढकर्तुं पृच्छति भाष्ये

---

कुर्ष्ये । किं कारणम् । अन्तवत्त्वात् । तिबतिपोरेकादेशोऽतिपोऽन्तवत् स्यात् । अस्त्यन्यत्तिप इति कृत्वा प्रातिपदिकसंज्ञा प्राप्नोति ( १ । २ । ४० ) ॥ अस्तु तर्हि प्रसज्यप्रतिषेधः प्रत्ययो नेति । न प्रत्यय इति चेदूङेकादेशे प्रतिषेध आदिवत्त्वात् । वा । न प्रत्यय इति चेदूङेकादेशे प्रतिषेधः प्राप्नोति । ब्रह्मबन्धूः ( ४ । १ । ६६ ) । किं कारणम् । आदिवत्त्वात् ।

---

दिति । भा ।' परकार्यप्रतिषेधे कर्त्तव्ये परं प्रत्येकादेशस्यादिवद्भावः ॥ यदयमिति । भा । अथवा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्वादय उत्पद्यन्ते ॥ दे इति । भा । तत्रान्तरङ्गत्वात् प्रत्ययोत्पत्तेः प्रागेव ब्रह्मबन्धूशब्दस्य प्रवृत्ता प्रातिपदिकसंज्ञेत्यूङेकादेशस्य पूर्वं प्रत्ययान्तवद्भावा-

किं पुनरिति ॥ (भा)

उक्तमिति । (भा)

हयवरट् सूत्रे इति शेषः ॥

अनर्थगतेरिति । (भा)

अर्थानवगतेरित्यर्थः । सङ्घातार्थवत्त्वाच्च वर्णानामर्थवत्त्वम् अन्यथानर्थकावयवकसमुदायोऽप्यर्थवान् स्यादित्यर्थः ॥ नन्वर्थवत्त्वे प्रत्येकं सुप्स्यादत आह

संघातस्येति । (भा)

एकाज्द्विर्वचनन्यायेन न प्रत्येकं विभक्तिरिति भावः ॥ अर्थशब्दस्याभिधेयपरत्वे दृष्टान्तासङ्गतिरत आह

अतत्प्रयोजनेति । (कै)

यथा तत्रातत्प्रयोजनकानां समुदायस्तत्प्रयोजनस्तथेहानर्थकानां समुदायोऽर्थवानिति भावः ॥ भाष्ये

याच यावती चार्थमात्रेति (भा)

काचित् प्रयोजननिष्पत्तिरित्यर्थः ॥ तदुपपादयति

भवति हि कश्चिदिति ॥ (भा)

---

प्रत्ययाप्रत्यययोरेकादेशः प्रत्ययस्यादिवत् स्यात् । तत्र प्रत्ययो नेति प्रतिषेधः प्राप्नोति ॥ नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति उत्पद्यन्त ऊङन्तात् स्वादय इति यदयं नोङ्धात्वोः (६।१।१७५) इति विभक्ति स्वरस्य

---

दस्यैव प्रातिपदिकत्वमिति न कश्चिद्दोषः ॥ राजेति । भा । तत्र नलोपो न स्यात् । अत्राप्यन्तरङ्गत्वात् पूर्वमेव प्रवृत्ता प्रातिपदिकसंज्ञा बहिरङ्गेण

विक्षिपानीति । (कै)

विरहतिरिह पृथक्करणे वर्त्तत इति भावः ॥ "अनर्थकस्येति" विशेषणकृत्यमाह

निपातानामिति ॥ (कै)

ननु पदादित्यधिकृत्य विधीयमानस्य निघातस्य पदविधित्वात् समर्थपरिभाषोपस्थितेः प्रकृते सामर्थ्याभावात् तदप्राप्तिरत आह

अर्थवदनर्थकयोरिति । (कै)

सामर्थ्यं व्यपेक्षालक्षणे ॥

सामर्थ्यादिति । (कै)

पदत्वसम्पादकप्रातिपदिकसंज्ञाविधानसामर्थ्यादित्यर्थः ॥

एकेति । (कै)

अत्राहुस्तु समर्थसूत्रे एकार्थीभावस्यैव ग्रहणेन निघातविधौ तदनुपस्थितिः । तदपवादस्य समानवाक्ये निघातेष्वस्य सत्त्वं चेति तदाह

समानेति ॥ (कै)

आख्यातमिति । (कै)

अथ वाक्यलक्षणोऽर्थवत्त्वं न निविष्टमिति निखन्नतीत्यादेरपि वाक्यत्वं बोध्यम् । एकतिङ्वाक्यमिति युक्तं वक्तुम् ॥

---

प्रतिषेधं प्राप्तिः ॥ अथवा द्वे ह्यत्र प्रातिपदिकसंज्ञे अवयवस्यापि समुदायस्यापि । तत्रावयवस्य या प्रातिपदिकसंज्ञा तयान्तवद्भावात् स्वाद्युत्पत्ति-

---

प्रतिषेधेन न शक्यते निवर्त्तयितुमिति परिहारोऽस्ति । नडिसम्बुद्ध्योरिति । मा । ननु हे सुराजन् हे अतिराजन्निति समासप्रातिपदिकसंज्ञार्थः प्रति-

नानावाक्येति । (कै)

औजस् इत्यादेर्द्व्येकयोरित्यादेश्चेत्यर्थः। "अव्ययादाप् सुप" इति लिङ्गात् वाक्यभेदोऽप्यभिमत इति भावः॥ ननु प्रत्ययनियमे दोष एव इत्यत आह

नियमश्चार्थानामिति । (कै)

एकत्वे एकवचनमेवेति नियमो न त्वेकत्व एवैकवचनमिति भावः। एकवाक्यतापक्षेऽप्यौत्सर्गिकत्वात् सर्वविभक्त्येकवचनमित्यन्यत्रोक्तम् ॥

संज्ञाविधानमिति । (कै)

तयोस्तद्विधानं च केवलं गत्युपसर्गसंज्ञाबाधनार्थमेवेति भावः॥ अनेन च ज्ञापकेन वार्त्तिकं प्रत्याख्यायते. विभक्त्युत्पत्तिस्त्वकारीत्येवेति बोध्यम्॥

न त्विति । (कै)

तथाच प्रयोगो व्यर्थः स्यादिति भावः। एतेन ज्ञापकशिथिल-मिति ध्वनयति। धात्वर्थानुवादकत्वरूपस्यापि योगस्य ग्रहीतुं शक्य-त्वादिति बोध्यम्। ध्वनितं चेदं "अधीपरी"ति सूत्रे भाष्ये॥

अन्तवद्भाव इति । (कै)

तस्य हि पर्य्युदासे शाब्दकार्य्यलाभ इति तस्यैव प्रवृत्तिर्न्नत्वादि-वत्त्वस्येति भावः॥ भाष्ये

---

भविष्यति। सुब्लोपे च प्रत्ययलक्षणत्वात्। वा। सुब्लोपे च प्रत्ययलक्ष-णेन प्रतिषेधः प्राप्नोति। राजा तक्षा (६।१।६८॥८।२।७)।

---

षेधः स्यात्। न चोत्तरप्राप्तेरप्रत्यय इति प्रतिषेधः। मध्येऽपवादा इति

( अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १। २। ४५ । )

## अस्त्यन्यत्तिप इति । (भा)

अतिप्प्रातिपदिकमिति न्यासाश्रयेणेदम् । एवं चोत्तरत्र तद्धितग्रहणं न कार्यमिति लाघवम् पञ्चनावप्रिय इत्यत्र पञ्चनावेत्यस्य प्रातिपदिकत्वेऽपि न क्षतिः । टजन्तस्योपसर्जनत्वेन ङीपोऽप्राप्तेः सुबपि समासे संख्याऽभावान्न प्रकृते संख्याया उक्तत्वाच्च । वस्तुतः प्रत्ययस्यार्थवत्त्वाभावात् प्रातिपदिकत्वाप्राप्तिरेव । ( एतेन टाप्स्यादित्युक्तिः परास्ता । इत्याधिकम् क पुस्तके ) । काण्डे इत्यत्र च प्रातिपदिकत्वे ह्रस्वापत्तिर्दोष इति बोध्यम् । एवम् ओजायत इत्यत्रापि ह्रस्वापत्तिरत एव तिप् ग्रहणञ्चरितार्थम् ॥

## परकार्य्यं इति । (कै)

आदिवत्त्वस्य हि प्रतिषेधरूपं शाब्दफलमिति भावः ॥ न चादिवद्भावेन ऊ इत्यस्य प्रत्ययत्वेऽपि यतो विहितस्तदादित्वाभावात् कथं निषेधः । पूर्वान्तवद्भावेन तदादित्वं दुर्लभम् उभयत आश्रयणे तन्निषेधादिति वाच्यम् । धान्ते समुदाये दृष्टाः शब्दा इति न्यायेनैकदेशविकृतन्यायेन च ऊङ्प्रकृतित्वारोपाददोषः ॥ भाष्ये

## द्वे हीति । (भा)

तत्रावयवस्य सिद्धा समुदायस्य प्रार्थ्यमानेति भावः ॥

## तत्रान्तरङ्गत्वादिति । (कै)

---

प्रत्ययलक्षणेन प्रत्ययो नेति प्रतिषेधः प्राप्नोति ॥ नैष दोषः । आचार्य्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेन प्रतिषेधो भवतीति यदयं गडिसम्बुद्ध्योः

---

न्यायात् । एवं तर्हि समासेऽप्यप्रत्यय इति वर्त्तते । अन्यथा सुराजाऽति-

प्रथमवृत्तिकत्वमचान्तरङ्गत्वम्। उपदेशप्राप्तायाः समुदायनिष्ठाया एव हि प्रत्ययान्तत्वेन निषेध इति बोध्यम्॥ भाष्ये

अन्तवद्भावादिति। (भा)

एकदेशविकृतन्यायस्याप्युपलक्षणं न चैवं काण्डे इत्यत्र दोषः। अग्रे भाष्य एव वक्ष्यमाणत्वात्॥

अत्रापीति। (कै)

अत्रेदं चिन्त्यं नायं दोषः। कार्य्यकालपक्षे व्यवस्थितयोः पक्षयोरेकेन लक्ष्ये सिद्धे पक्षान्तरेण दोषशंकाया अनौचित्यात्। ध्वनितं चेदं प्रगृह्यसंज्ञाप्रकरणेभाष्ये। अत एव पर्य्युदासपक्षे नायं दोषः शङ्कितोऽत्र भाष्ये। तस्माद् यथोद्देशेऽपि न सिध्यतीति भाष्याशयः। न च कैयटोक्तयुक्त्यासिध्यतीति वाच्यम्। लुगादिनैव प्रतिषेधेन जातनिवृत्तिरपीति भाष्याशयात्। भुक्तवन्तं प्रतीति न्यायस्यापि लुगादिशास्त्र इवात्रापि त्याग इति भावः॥ अत एव ज्ञापकेन परिहरति

नैष इति। (भा)

यदि त्वनेन ज्ञापकेन जातनिवृत्त्यभाव एवाख्यायते। लुगादिनाप्यनुत्पत्तिरेवोच्यते। अवयवलोपशास्त्रेऽपि तत् तदवयवरहितस्यैव तत्तद्विषये प्रत्ययत्वादिबोध्यते इत्युच्यते तदास्तु इत्याहुः॥ ननु "ढे" इति समासग्रहणं विध्यर्थमिति शङ्काशयः। सुराजन्शब्दे "न पूजनाद्" इति समासान्तनिषेधः॥

---

(८। २। ८) इति प्रतिषेधं शास्ति॥ अथवा पुनरस्तु पर्य्युदासः। ननु

---

राजेत्यादौ विध्यर्थतायां सम्भवत्यां नियमार्थं समासग्रहणं न स्यात्॥ यत्त-

एवं तर्हीति । (कै)

प्रत्याख्याने तु तद्धितनियमांशे बाध्यसामान्यचिन्ताश्रयणीयेति भावः । पर्युदासेऽपि ज्ञापकाश्रयणमावश्यकं न च स्वाश्रया प्रत्ययान्तत्वात्सिद्धिः । अतिदिश्यमानविरुद्धस्वाश्रयकार्य्याभावस्यातिदेशस्वभावसिद्धत्वात् । अत एव तण्डुलानित्यादेर्न प्रातिपदिकत्वमिति न नलोपस्तच्च इदं चासिद्धवत्सूत्रभाष्यकैयटयोः स्पष्टम् । सिद्धान्ते तु समासांशे तदनुवृत्तेः फलं चिन्त्यम् ॥ भाष्ये

गृह्यते चेति । (भा)

अन्तवत्त्वेनेति भावः ॥

संख्याप्रधानं चेति । (कै)

काण्डे तिष्ठत इत्यादौ । तत्र च संख्याया एव स्वाश्रयसम्बन्धेनान्वय इति भावः । तत्र संख्यायाः प्राधान्यं ( चिन्त्यं इति नास्ति इ पुस्तके ) न हि तद्वि शेष्यको बोधोऽनुभवसिद्धः शक्तेः प्राधान्यं च सम्बन्धघटकतया बोध्यम् । प्रथमान्तस्यापि वारिणी तिष्ठत इत्यादौ क्रियाकारकभावेनैवान्वयाद् वारिकर्त्तृकास्थितिरित्यर्थेन सम्बन्धघटकशक्तेरेव प्राधान्यमिति बोध्यम् ॥

न च तयोरिति । (कै)

---

चोत्तमप्रत्यय इति चेत्तिवेकादेशे प्रतिषेधोऽन्तवत्त्वादिति । प्रसज्यप्रतिषेधेऽप्येष दोषः । द्वे ह्यत्र प्रातिपदिकसंज्ञे अवयवस्यापि समुदायस्यापि ।

---

स्येति । भा । विभक्त्यन्तं च प्रातिसंख्याप्रधानं न च तयोर्लिङ्गयोगः । न वाऽन्तवद्भावेनार्थः शक्योऽतिदेष्टुमिति न भवति प्रसङ्गः । अथवा नपुंसकत्वं

तदर्थशक्तिसंख्ययोरित्यर्थः । यस्य ह्रस्वस्तस्य माचाघदा नपुंसकत्वं तदा ह्रस्वः । यस्त्ववयवद्वारकं तस्य माभूदित्येतदर्थं तस्येत्युक्तेरिति भावः ॥ भाष्ये

**किं च नपुंसके इति ।** (भा)

नपुंसकलिङ्गवदर्थे किमित्यर्थः ॥

**यस्येति ।** (भा)

यदर्थस्येत्यर्थः ॥

**कस्येति ।** (भा)

किं शब्दार्थस्येति अर्थः ॥

**प्रातिपदिकस्य** (भा)

इत्यस्य सत्त्वप्रधानस्येत्यर्थः । एवं च प्रत्ययान्तपर्युदासो निषेधो वेत्युभयमपि व्यर्थम् । तत्फलं हि तत्र ह्रस्वव्यावृत्तिरेव । तस्या-मन्यथासिद्धायां तद्व्यर्थमेवेति भावः । फलान्तरं तु नास्त्येव । औत्स-र्गिकैकवचनस्येष्टसिद्ध्यर्थं क्वाचित्कत्वेन तदर्थस्य संख्याकर्माद्ययोगेन च सुबनापत्तेः । न च प्रत्ययान्तस्य प्रातिपदिकत्वे तदवयवसुपो-लुगापत्तिः । विधिवैयर्थ्यापत्तेः । तस्मात् धातुसाहचर्यात् विभक्त्य-तिरिक्तशब्दघटितप्रातिदिकावयवस्यैव तेन लुग् इति न दोषः । नापि फिट्स्वरप्राप्तिः । तत्तत् स्वराणां विशेषविहितानां बाधकत्वात्

---

गृह्यते च प्रातिपदिकाप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन । तस्मा-

---

प्रातिपदिकार्थस्यैव सम्भवतीति प्रातिपदिकग्रहणं मुख्यप्रातिपदिकपरि-ग्रहार्थमित्यन्तवद्भावेन यत्प्रातिपदिकं तस्य फलाभावः । अत्र च सूत्रे यद-

(अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। १। २। ४५।)

प्रकृतिप्रत्ययविभागशून्येष्वेव फिट्स्वरप्रवृत्तेश्च। नापि पचेरन्नित्यादौ न लोपप्राप्तिः। रत्नादेश्चस्यैव कर्तुं युक्तत्वात्। अन्यथा पर्युदासे कृत्त्वाभावेऽपि कार्य्यान्तराणामवारणादस्तु पर्युदास इति भाष्याशङ्कतेरिति दिक्॥ यथा न्यासेऽप्याह

अथवेति। (कै)

वस्तुतो यथा न्यासेऽपि नपुंसकलिङ्गवदर्थं विशेष्यतया वर्त्तमानस्येत्यर्थः॥

नचेदं तथेति।

अयं प्रयासो व्यर्थ एवेति दिक्॥

यत्तस्येति। (भा)

अनेनायमेवार्थो बोध्यते इति बोध्यम्॥

आहुरिति। (कै)

अचारुचिवीजं बहुपटव इत्याद्यर्थं व्युत्पत्तिपक्षेऽपि सूत्रमावश्यकमिति। इदं च बहुज्विधायके कैयटे स्पष्टम्। अव्युत्पत्तिपक्षज्ञापकं तु "[१]अतः कृकमिकंसे"ति सूत्रे कंसग्रहणमिति बोध्यम्। अस्यापि ज्ञापकं "[२]चरुक्" सूत्रे उपपादितम्॥

---

१ अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। ८। ३। ४६॥
२ शिवसू—२।

---

द्वाभ्यामपि वक्तव्यं स्याद्ध्रस्वो नपुंसके यत्तस्येति। किं च नपुंसके। नपुंसकं यस्य गुणः। कस्य च नपुंसकं गुणः। प्रातिपदिकस्य॥

---

व्युत्पन्नमर्थवत्तदुदाहरणं व्युत्पत्तौ तु कृदन्तत्वादेव सिध्यतीति पृथगस्यारम्भोऽनर्थकः स्यात्। अव्युत्पत्तिपक्षस्य चेदमेव सूत्रं ज्ञापकमित्याहुः॥

# १कृत्तद्धितसमासाश्च।१।२।४६॥

## अर्थवत्समुदायानामिति। (भा)

लोकेऽर्थबोधकतया पृथक्प्रयुज्यमानानां यः समुदाय इत्यर्थः॥

---

१ समासग्रहणं किमर्थम्। समासग्रहणमुक्तम्। किमुक्तम्। अर्थवत्समुदायानां समासग्रहणं नियमार्थमिति॥

---

१ अर्थवन्त एते प्रातिपदिकसंज्ञाः स्युः। विशेषणसामर्थ्यात् तदन्तविधिः। न हि जहत्स्वार्थायां वृत्तौ कृत्तद्धितानां चार्थोऽस्ति। भूतपूर्वगतिलभ्यस्तु न प्रशस्तः सः। भित्। छित्। अत्राधातुरिति पर्युदासे प्राप्ते कर्त्ता, हर्त्ता, अत्र तद्धितान्तानामेवेति नियमेन निरासे प्राप्ते सन्निहितत्वाच्च कृद्ग्रहणेन प्रागुक्तमेव बाध्यते न तु समासग्रहणकृतो नियमोऽपि। तेन कृद्ग्रहणपरिभाषानुपस्थानात् "मूलकेनोपदंशम्" इति वाक्यस्य न भवति॥ ननु बाध्यसामान्यचिन्तायां समासनियमोऽपि बाध्यते। विशेषचिन्तायां तु मध्येऽपवादन्यायावतारात् तद्धितनियमोऽपि न बाध्येतेति चेत्। सत्यम्। आद्ये एवेह पक्षः। न च वाक्येऽतिप्रसङ्गः। शब्दाधिकारमाश्रित्येहार्थवच्छब्देनैकार्थीभावविवक्षणात्। अतिशये मतुप्स्मरणात्।

( भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥ ५। २। ९४ )

वक्ष्यमाणरीत्या अप्रत्यय इति निषेधः प्रत्ययान्तपरः इति पक्षे तु पुरस्तादपवादन्यायादिष्टसिद्धिरिति दिक्॥ तद्धितः। औपगवः। अत्रानेन मध्येऽपवादन्यायात् सर्वेष्टसिद्धिः। अप्रत्यय इत्यस्य प्रत्याख्यानपक्षेऽपि

पूर्वेषां वा संज्ञानियमविधीनां विधिरूपेण निषेधरूपेण वा प्रवृत्तिरिति मतभेदस्योक्तत्वात् । एवं समासेऽपि । न चासमर्थसमासेषु विध्यर्थं समासग्रहणमिति वाच्यम् । अर्थवद्ग्रहणानुवृत्तेरुक्तत्वात् । असमर्थानां तर्हि कथं संज्ञेति चेत् धर्मिग्राहकमानादेवेति गृहाण । "असूर्य-ललाटयोः" ( ३ । २ । ३६ ) इत्यादिना हि समास उपपदे कृद्विधीयते । उपपदं च महासंज्ञाकरणबलात् विभक्त्यन्तमेव । न चैवमपि स्त्रीप्रत्यये तदादिनियमाभावात् ( परिभाषेन्दुशे—२७ ) राजकुमारीत्यादौ प्रत्ययान्ते विध्यर्थं तदिति वाच्यम् । अन्तरङ्गस्यापि हल्ङ्यादिलोपस्य लुग्विषये प्रवृत्त्या ङ्यूमाया एव सुपि समासप्रवृत्तेः । अत एव गोमत्प्रिय इत्यादौ नुमादयो नेति वक्ष्यते । तस्मात् प्रकृते समासग्रहणं नियमार्थं सद्वाक्यस्य संज्ञां निवर्त्तयति इति स्थितम् । नियमस्य सजातीयापेक्षः । यत्र पूर्वो भागः पदमुत्तरश्च प्रत्ययभिन्नः तादृशस्य समुदायस्य चेत् स्यात्तर्हि समासस्यैवेति । षष्ठ्विधेऽपि समासे पूर्वभागस्य पदत्वाव्यभिचारात् । तेन बह्वच् पूर्वस्यास्येव रूञ्ज्ञेति बहुपटच इति टकारस्योदात्तता लभ्यते । प्रथमस्य जसो लुकि "चितः सप्रकृतेर्बह्वकजर्थम्" ( ६ । १ । १६३ । वा ) इति चित् स्वरे कृते पुनर्विभक्त्युत्पत्तेः । अन्यथा तु जसेवोदात्तः स्यात् । उत्तरस्येत्यादि किम् । हरिष्वित्यादेरनेन व्यावृत्तिर्माभूत् । एवमस्तु को दोष इति चेत् । शृणु । तथा सति जन्मवान् इत्यादौ तद्धितान्ते विध्यर्थं तद्धितग्रहणं स्यात् । राजानौ इत्यादेस्तु प्रातिपदिकत्वं केन वार्यताम् । न तावदनेन नियमेन । पूर्वभागस्यापदत्वात् । नापि तद्धितग्रहणेन । तस्योक्तरीत्या नियमार्थत्वायोगात् । न च "सुपोधातुप्रातिपदिकयोः" ( २ । ४ । ७१ ) इति धातुग्रहणं प्रत्ययान्तानां प्रातिपदिकसंज्ञा नेति ज्ञापकमिति वाच्यम् । तस्य प्रासादीयतीत्यादौ हरिष्वितिवदप्रातिपदिके चरितार्थत्वात् । नापि ज्ञावग्रहणं ज्ञापकम् । लिङ्गविशिष्टपरिभाषया सिद्धौ तस्यान्यार्थताया एव सिद्धान्तयिष्यमाणत्वात् । तस्मादुक्तमेव साधु । यद्यपि प्रकृतिप्रत्ययभावानापन्नसङ्घातविषयको नियम इत्यपि सुवचं तथापि एकरूपसूत्रे समुदायाद्विभक्त्युत्पत्तिरिति ग्रन्थं योजयितुमिदं गौरव-

भावृतम् । निष्कर्षे तु तथैवास्तु । तथा च तद्धितग्रहणं नियमार्थमेव । भेदसंसर्गद्वारकमर्थवत्त्वमिति कैयटस्याप्ययमेव भावः । भेदे परस्परपरिहारेण प्रयोगे सति यः संसर्गस्तद्द्वारकमित्यर्थात् न तु भेदः संसर्गो वा द्वयं वा वाक्यार्थ इत्याशयेन तद्ग्रन्थः । बहुच् समासयोर्वैरूप्यालाभात् । यद्वा । सात्पदाद्योरिति सातिग्रहणात् प्रत्ययो न प्रातिपदिकमिति सिद्धे पूर्वसूत्रस्थं प्रत्ययग्रहणं सामर्थ्यात्तदन्तपरम् । तद्धितग्रहणन्तु विध्यर्थमेव । स्यादेतत् । पक्षत्रयेऽपि राजपुरुषावित्यादौ पुरुषावित्यादेः संज्ञादुर्वारेति प्रातिपदिकावयवत्वात् सुपो लुक् स्याद् इति चेन्नैवम् । अजहत् स्वार्थायामानर्थक्यात् । अजहत् स्वार्थायामपि पूर्वपदविनिर्मुक्तस्य विशिष्टार्थविरहेण तत्सहितस्यैव विशिष्टार्थगमकत्वात् । प्रशंसायां हि मतुब् इत्युक्तम् । एवं घटपटावित्यादावपि मिलितयोरेव पदयोः सहभूतार्थता । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वाच्च । घटावित्यंशो नार्थवानिति । एतेनासमर्थसमासे दशदाडिमादिवदनर्थके विध्यर्थं समासग्रहणं किं न स्यादिति चोद्यं प्रत्युक्तम् । अर्थवद्ग्रहणस्येहार्थंताया एवोक्तत्वादिति दिक् । यदि तु नैयायिकरीत्या अर्थवत्त्वं वृत्तिमत्त्वं तच्च समासस्य शास्त्रीयाश्रित्य समासग्रहणं विध्यर्थम् । तद्धितग्रहणमपि तथा । अप्रत्यय इति तु प्रत्ययवारणार्थमित्याश्रीयते तथापि न क्षतिः । तद्धितग्रहणस्य तद्विशिष्टपरतामाश्रित्य बहुपटव इत्यस्य सुसाधुत्वात् । किन्त्वस्मिन् पक्षे सिद्धान्तविरोधः । सूत्रकेणोपदंशं पचतकीत्यत्राति-प्रसक्तश्चेति यथास्थितमेवास्तु । इह प्रकरणे यथा श्रुताः प्राचां ग्रन्था दुष्टा एवेत्यवधेयम् । निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम् । अवयति । अनुक्तसमुच्चयार्थाच-काराल्लिङ्गमिदम् । अनुकरणेषु तु अनुकरणेन सहाभेदविवक्षायामर्थ-वत्त्वाभावान्न प्रातिपदिकता । भूसत्तायामिति यथा । भेदविवक्षायान्तु संज्ञा स्यादेव । "भुवो वुग्" इति यथा । न चाधातुरिति पर्युदासा-पत्तिः । प्रकृतिवदनुकरणमित्यतिदेशस्यानित्यतयोक्तंशे प्रसक्तावपि संज्ञांशे आप्रवृत्तिसम्भवात् । एतच्च अल्लक्सूत्रे उपपादितम् ॥

# [1]ह्रस्वो नपुंसके प्रातिपदिकस्य।
# १। २। ४७॥

शक्तिप्रधानत्वादिति। (कै)

तिङभिहितकर्तृशक्तिबोधकत्वेन प्रथमाया अपि शक्तिप्रधानत्वमित्याशयः॥

द्वयोरपीति। (कै)

समुदायेनेति शेषः। काण्डस्य विशेषणतया प्रविष्टत्वादिति भावः॥

साधनेति। (कै)

साधनगतां संख्यामाख्यातं तदर्थः। क्रिया यथोपादत्ते तदुपादानेन यथा संख्यावती तथा तद्गतलिङ्गोपादानेन लिङ्गवत्यपि स्यादित्यर्थः। कारकगता संख्या आरोपेण क्रियायामेव बोध्यते तिङादिभिरिति स्पष्टं "ङ्याप् प्रातिपदिकात्" इति सूत्रे भाष्यकैयटयोः॥ अलिङ्गसंख्यस्याव्ययत्वादाह

---

१ प्रातिपदिकग्रहणं किमर्थम्। नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं तिब्निवृत्त्यर्थम्। वा। नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं क्रियते तिब् निवृत्त्यर्थम्। तिबन्तस्य ह्रस्वत्वं माभूत्। काण्डे कुड्ये। रमते ब्राह्मणकुलमिति॥ अव्ययप्रतिषेधः। वा। अव्ययानां प्रतिषेधो वक्तव्यः। दोषा ब्राह्मण-

---

१ प्रातिपदिकग्रहणमिति। भा। नपुंसकलिङ्गं द्रव्यस्यैव सम्भवति। द्रव्यवाचित्वं तु प्रातिपदिकस्यैव सम्भवति न तु सुबन्तस्य शक्तिप्रधानत्वात् नापि तिङन्तस्य क्रियाप्रधानत्वादिति प्रश्नः। काण्डे इति। द्वयोरपि शक्तिशक्तिमतोरभिधानादस्ति नपुंसकार्थवृत्तित्वं। सुबन्तस्यापीति भावः॥

यथेति। (कै)

तिङन्तविषयोपवर्णितेत्यर्थः। यथा तत्र साधनलसम्बन्धेन तद्धर्मग्रहणं तथाच सामानाधिकरण्यात् स्यादिति भावः॥ वैयधिकरण्येन दोषा शब्दे नपुंसकत्वाभिव्यक्त्यभावादाह

दोषासहेति। (कै)

दोषा शब्दो लाक्षणिक इत्यभिमानः॥

इत्यत्रार्थे इति।

शब्दशक्तिस्वभावादिति भावः॥ ननु कारकं क्रियाया न द्रव्यस्य इति कथं नपुंसकस्याधिकरणमित्युक्तिरत आह

ब्राह्मणकुलसाधनानामिति॥ (कै)

तत्रोपपत्तिमाह

आधेयेति॥ (कै)

बहिरङ्गत्वादिति। (कै)

अर्थधर्मनपुंसकत्वाश्रयत्वादित्यर्थः। एवं च पूर्वं दीर्घे ततो ह्रस्वे लक्ष्ये लक्षणस्येति न्यायेन पुनर्दीर्घाप्रसङ्ग इति भावः। वस्तुतः

---

कुलम्। दिवा ब्राह्मणकुलमिति॥ स तर्हि वक्तव्यः। न वक्तव्यः। नाप्ययं नपुंसके वर्त्तते। किं तर्हि। अधिकरणमत्राव्ययं नपुंसकस्य॥ इह तर्हि प्राप्नोति। काण्डीभूतं वृषलकुलम्। कुड्यीभूतं वृषलकुलमिति॥ न

---

रमते ब्राह्मणकुलमिति। भा। यथैव साधनाश्रया संख्यामाख्यातमुपादत्ते तथा तल्लिङ्गमपि॥ अव्ययप्रतिषेध इति। भा। यथोपवर्णितन्यायेनाव्ययस्यापि लिङ्गयोगात् प्राप्तिः॥ दोषा ब्राह्मणकुलमिति। भा। दोषा

समत्वेऽपि परत्वात् "द्यौ" इति दीर्घे ततो ह्रस्वे लब्धे सकृद्गतन्यायेनेति न्यायेन पुनरप्रवृत्तिरिति बोध्यम् ॥

असत्त्वेति (कै) ।

कश्चिल्लिङ्गवता सामानाधिकरण्येऽपि तस्य लिङ्गवत्तया स्वार्थबोधकत्वाभाव इति भावः ॥

किं चिद् (भा)

इत्यादिना एतावता द्विविधमेवाव्ययमिति भ्रमितव्यम् उभयातिरिक्तस्यापि चाव्ययस्य सत्त्वात् । हिरुगादेः क्रियाप्रधानत्वं क्रियामात्रविशेषणत्वेन "काण्डीभूतमि"त्यत्राप्येतदेव स्वभावाच्च तादृशस्य लिङ्गाद्ययोगः ॥

न चैतयोरिति । (भा)

प्रायेणेति शेषः । तत्राव्ययार्थस्य काण्डेत्यादेश्चोभयायोगः ।

---

वा लिङ्गाभावात् । वा । न वा वक्तव्यम् । किं कारणम् । लिङ्गाभावात् । अलिङ्गमव्ययम् ॥ किं पुनरयमव्ययस्यैव परिहारमाहोस्वित् तिबन्तस्यापि । तिबन्तस्यापीत्याह । कथम् । अव्ययं हि किंचिद्विभक्त्यर्थप्रधानं किंचित् क्रियाप्रधानम् । उच्चैर्नीचैरिति विभक्त्यर्थप्रधानं हिरुक् पृथगिति क्रियाप्रधानम् । तिबन्तं चापि किंचिद्विभक्त्यर्थप्रधानं किंचित्क्रियाप्रधानम् ।

---

सहचरितत्वाद् ब्राह्मणकुलमेव दोषा शब्देनोच्यते इति ह्रस्वप्रसङ्गः । नान्वयमिति । भा । दोषाशब्दो रात्रावित्यर्थे वर्तते दिवाशब्दोऽप्यहनीत्यत्रेति । ब्राह्मणकुलसाधनानां क्रियाणामधिकरणं कालो भवन् ब्राह्मणकुलस्याधिकरणं भवति । दोषा दृश्यते चरत्यधीते चेति । आधेयव्यवधानेनाधिकरणस्य क्रियाधारणात् ॥ काण्डीभूतमिति । भा । प्रकृतिविका-

"रमते" इत्यादेर्लिङ्गायोग इति बोध्यम्। अन्यथा "शतग्रामिकाः ग्रथ्यन्ते" इत्यादौ "पचति रूपम्" इत्यादौ च ताभ्यां योगेन भाष्यासङ्गतिः स्यात्॥

## भावशक्तीति। (कै)

पदार्थशक्तिरित्यर्थः। "विचित्रत्वादि"त्यनेनेदं सूचयति "पचति कल्पम्" इत्यादौ भवत्येव। पचतकीत्यादौ च नेति॥ "काण्डे तिष्ठत" इति प्रथमायाः प्रातिपदिकार्थे विधानाद्विभक्त्यर्थाप्रधानत्वेनास्त्येव लिङ्गयोग इति स्यादेव ह्रस्वत्वमित्यभिमानः॥ समाधत्ते

## संख्याया इति। (कै)

विभक्त्या संख्याया लिङ्गवत्त्वेनाप्रतिपादनं भावशक्तेवैचित्र्यादिति भावः। अत्र "संख्याया" इति शक्त्युपलक्षणं संख्यायाः प्राधान्यासम्भवात्। प्रथमास्थलेऽपि यथा शक्तिरस्ति तथोक्तम्॥ भाष्ये

---

काण्डे कुड्ये इति विभक्त्यर्थप्रधानं रमते ब्राह्मणकुलमिति क्रियाप्रधानम्। न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति। अवश्यं चैतदेवं विज्ञेयम्। क्रियमाणेऽपि हि प्रातिपदिकग्रहणे इह प्रसज्येत। काण्डे कुड्ये। द्वे ह्यत्र प्रातिपदिकसंज्ञे अवयवस्यापि समुदायस्यापि। प्रश्यते च प्रातिपादिका-

---

र्थयोरभेदविवक्षायां च्विप्रत्ययः। द्वयोरप्यत्र तयोर्नपुंसकत्वाद् ह्रस्वप्रसङ्गः। कृते ह्रस्वत्वे "च्वौ च" (७। ४। २६) इति दीर्घो भविष्यतीति चेत्। ह्रस्वस्य बहिरङ्गत्वाद्दीर्घे कर्त्तव्येऽसिद्धत्वाद्दीर्घाप्रसङ्गः। एवं रमते इत्यत्रापि ह्रस्वे सति टेरेत्वस्याप्रसङ्गः॥ न चेति। भा॥ असत्त्ववाचित्वादव्ययस्य न तेन लिङ्गं प्रतिपाद्यत इत्यर्थः॥ न चैतयोरिति। भा। आख्यातस्य शक्त्याश्रयद्रव्यसंख्याप्रतिपादने सामर्थ्यं न तु तल्लिङ्गप्रतिपादने

अवश्यं चैतदेवमिति । (भा)

एतत् तिबन्तम् अलिङ्गमित्यवश्यं स्त्रीकार्य्यमित्यर्थः॥ समुदायस्याप्युक्तं प्रातिपदिकत्वमुपपादयति

गृह्यते च प्रातिपदिक (भा)

इत्यादिना ॥

अवयवधर्मेणेति । (कै)

अवयवभूतप्रकृत्यर्थधर्मेणेत्यर्थः। समुदायः प्रत्ययान्तः। यद्यवयवधर्मेण समुदायस्य व्यपदेशस्तदा प्रातिपदिकग्रहणे क्रियमाणेऽप्येतदवश्यवाच्यमिति भाष्यार्थ इति भावः॥ भाष्ये

उभाभ्यामपि वक्तव्यमिति । (भा)

एवमर्थकतया सूत्रं व्याख्येयमित्यर्थः॥ अवयवद्वारा समुदायस्यापि नपुंसके वृत्तिसम्भवात् कथमनेन परिहारोऽत आह

साक्षादिति । (कै)

तस्यैव तज्जन्यबोधविशेष्यस्य असुपजातव्यतिरेकस्य अनुपजात-

---

प्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन। तस्मादुभाभ्यामपि वक्तव्यं स्याद् ह्रस्वो नपुंसके यत्तस्येति। किं च नपुंसके। नपुंसकं यस्य गुणः। कस्य च नपुंसकं गुणः। प्रातिपदिकस्य॥ यच्चेकादेशदीर्घत्वेषु प्रतिषेधः।

---

विधिवत्वाद्भावशक्तीनाम्। काष्ठे तिष्ठत इत्यत्रापि संख्यायाः प्राधान्यान्नपुंसकत्वायोगः॥ अवश्यमिति। भा। यद्यवयवधर्मेण समुदायो व्यपदिश्यते इत्यर्थः॥ यत्तस्येति। भा। साक्षात्तस्यैव यदा नपुंसकत्वं तदा ह्रस्वः। यस्य त्ववयवद्वारकं तस्य माभूत्। अथवा तस्यैवानुजातव्यति-

सम्बन्धस्य अनुपजातेतराकाङ्क्षस्येति यावत्॥ अनेन सत्त्वप्रधानत्व-मुपलक्षितम्।

**सूत्रकारेण त्विति।** (कै)

अवयवद्वारकमपि नपुंसकवृत्तित्वं गृह्यते इति तदाशयः। अत्र यद्वक्तव्यं तदुक्तम्। यदर्थस्य शास्त्रे नपुंसकगुणः प्रसिद्धस्तस्य नपुंसके वर्त्तमानस्य ह्रस्व इति भाष्यार्थः॥ भाष्ये

**अन्तरङ्गं ह्रस्वत्वमिति।** (भा)

एवं ह्रस्वत्वे कृते दीर्घप्रवृत्तेर्लक्ष्येलक्षणस्येति न्यायेन पुन-र्प्रवृत्तिरित्यर्थः॥

**चक्रकप्रसङ्ग इति।** (कै)

लक्ष्येलक्षणस्येति न्यायमनालोच्येदम्॥

---

वा। यण्एकादेशदीर्घत्वेषु प्रतिषेधो वक्तव्यः। युगवरत्राय युगवरत्रार्थम् युगवरत्रेभ्यः॥ यण्एकादेशदीर्घत्वेषु बहिरङ्गलक्षणत्वात् सिद्धम्। वा। बहिरङ्गा एते विधयः (६।१।१०१॥ ७।३।१०२-३)। अन्तरङ्गं ह्रस्वत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे॥

---

रेकस्येत्यर्थः। विभक्त्यन्तं चोपजातव्यतिरेकमिति ह्रस्वाभावः॥ सूत्रकारेण तु प्रातिपदिकग्रहणं मुख्यप्रातिपदिकपरिग्रहार्थं कृतं प्रातिपदिकस्यैव नपुंसके वृत्तिसम्भवात्। तेनान्तवद्भावादतिदिष्टप्रातिपदिकस्य ह्रस्वाभावः॥ युगवरत्रायेति। भा। दीर्घे कृते पुनर्ह्रस्वः पुनर्दीर्घ इति चक्रकप्रसङ्गः॥

# [1]गोस्त्रियोरुपसर्जनस्य ।१।२।४८॥

भाष्यवार्त्तिकयोर्विभज्यकथनाकथने हेतुमाह

धात्विति ॥ (कै)

ननु स्वरितत्वे उत्तरत्रानुवृत्तिरेव स्यात् । न तु तदधिकारस्य-लाभोऽत आह

स्वरितेनेति ॥ (भा)

ह्रस्वभावित्वाभावादिति । (कै)

न धातिमतेरित्यादौ सम्भवगुणस्य बहिरङ्गत्वेनासिद्धत्वात् । किं च तद् ग्रहणे अन्तरङ्गत्वात् पूर्वमेव ह्रस्वे ततो गुणे लक्ष्ये लक्षणस्येति न्यायेन पुनः तद्प्रवृत्तौ फलाभाव इति भावः ॥ भाष्ये

स्त्रीप्रत्ययेनेति । (भा)

एवं च स्त्रीप्रत्यये तदादिनियमाभावाद् ह्रस्वसिद्धिरित्यर्थः ॥

अतिकारीषेति । (कै)

कारीषगन्ध्यामतिक्रान्तस्य पुत्र इति विग्रहः ॥

अनुपसर्जनेति । (कै)

---

१ उपसर्जनह्रस्वत्वे च । वा । उपसर्जनह्रस्वत्वे च किम् । यणेकादेशदीर्घत्वेषु प्रतिषेधो वक्तव्यः (वा—१ । २ । ४७) । अतिखट्वाय अतिखट्वार्थम् अतिखट्वेभ्यः ॥ उपसर्जनह्रस्वत्वे च । किम् । बहिरङ्गलक्षणत्वात् सिद्धमित्येव (वा—१ । २ । ४७) । बहिरङ्गा एते विधयः । अन्तरङ्गं ह्रस्वत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥ गोटाङ्ग्रहणं कृन्निवृत्त्यर्थम् । वा । गोटाङ्-

एवं च त्यङः अतिक्रान्तार्थं प्रत्युपसर्जनत्वात् तदादिनियमेन पुत्रोत्तरपदकतत्पुरुषेत्यङन्तस्यापूर्वपदत्वान्न सम्प्रसारणमित्यर्थः॥

उपसर्जनत्वादिहेति। (कै)

वस्तुतस्त्विन्यसेतत्प्रत्यासत्यायस्य ("पुत्रोत्तर" इत्यारभ्य "यस्य" इत्यन्तं नास्ति क पुस्तके) समुदायस्त्रीप्रत्ययान्तत्वं प्रार्थ्यते तदर्थं प्रत्यनुपसर्जनत्वेन तदादिनियमाप्रवृत्तौ दोषाभावात्॥

किं दीर्घेति। (कै)

"हल्ङ्यादि" सूत्रे "हल्ङ्याब्भ्य" इत्यस्य परविशेषणत्वेनावयवत्वान्तात् परत्वेन च निष्कौशाम्बिरित्यादौ सोर्लोपवारणार्थत्वात् दीर्घग्रहणस्येदमपि चिन्त्यम्। विहितविशेषणे तु यासेत्यादावव्याप्तिः। कर्त्त्रीत्यादावव्याप्तिश्च (कर्त्री इत्यादा- इति नास्ति इ पुस्तके)। अत्वादिविधौ विषयसप्तमी तु "तस्मिन्निति" शास्त्रबाधापत्त्या गमकाभावेन चायुक्तेति दिक्॥

कारीशब्दादपीति। (कै)

तथा च कुम्भशब्दे आदिवृद्धिर्नस्यादितीति भावः॥ ननु पुम्वदतिदेशे स्त्रीप्रत्ययस्यापि निवृत्तिः स्यादत आह

यथेति। (कै)

ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुम्वत्। पुंसि

---

ग्रहणं कर्त्तव्यम्। किमिदं टाङिति। प्रत्याहारग्रहणम्। क्वसन्निविष्टानां प्रत्याहारः। टापः प्रभृत्या ष्यङो ङकारात् (४। १। ४–१८)। किं प्रयोजनम्। इह्निवृत्त्यर्थम्। कृत्स्त्रिया धातुस्त्रियाश्च ह्रस्वत्वं माभूदिति। अतितन्त्रीः अतिश्रीः अतिलक्ष्मीरिति॥ तत्तर्हि वक्तव्यम्। न वक्तव्यम्।

यथा पपीरित्यादौ ईकारस्य श्रवणं तथा तत्र स्त्रीप्रत्ययभूतस्यापी-त्येवं वचनव्यक्त्येति भावः। अत एवात्रैवेदं कृतम्। अन्यथा पुंवद्भाव प्रकरण एव वदेत्। "ईयसश्च" इति प्रतिषेधात्कप्। नपुंसकह्रस्वत्वं तु भवत्येव अत्र पाठात्। न च नेत्येव सिद्धे पुंवद् वचनं व्यर्थं वार्त्तिकाचरेषु लाघवगौरवविचाराभावादित्याहुः। अन्ये तु तस्या-प्यभावं मन्यन्ते। अत एवोत्तरवार्त्तिके नपुंसकह्रस्वत्वस्यापि निषेध इति भ्रमव्यावृत्तये गोसमासनिवृत्त्यर्थमित्युक्तम्। अत एव च विग्रहे स इत्यादि न प्रयुक्तमित्याहुः। तत्र समासपदं स्त्र्यन्तसमासपरम्॥

## प्रथमेति। (कै)

षष्ठीति प्रथमानिर्दिष्टत्वादित्यर्थः। शास्त्रीयमिहोपसर्जनं न तु केवल लौकिकमेवेति भावः। प्रत्ययलक्षणेनाप्रत्यय इति निषेधा-प्रवृत्तेर्गोशब्दस्य प्रातिपदिकत्वमस्त्येव॥

## राजकुमारीशब्द इति। (कै)

नन्वस्यानुपसर्जनत्वात्तदादिनियमाभावेन प्रत्ययान्तत्वात् कथं प्रातिपदिकत्वम्। न च समासत्वात्। समासग्रहणस्य नियमार्थत्व-भङ्गापत्तेः। तत्राप्रत्यय इत्यनुवृत्तेरुक्तत्वेन तेनापि दुर्लभत्वाच्चेति चेन्न स्त्रीप्रत्ययविशेषस्य सामान्यस्य वा ग्रहणाभावेन तदप्रवृत्तेः॥ भाष्ये

---

स्त्रीग्रहणं स्वर्यते तत्र स्वरितेनाधिकारगतिर्भवति (१। ३। ११)। "स्त्रियाम्" (४। १। ३) इत्येवं प्रकृत्य ये विहितास्तेषां ग्रहणं विज्ञा-स्यते। स्वरितेनाधिकारगतिर्भवतीति न दोषो भवति॥ यद्येवं प्रत्यय-ग्रहणमिदं भवति तत्र प्रत्ययग्रहणे यस्मात् स तदादेर्ग्रहणं भवतीतीह न प्राप्नोति। अतिराजकुमारिः अतिसेनानीकुमारिरिति। अस्त्रीप्रत्ययेने-

**किमुच्यते इति।** (भा)

गोस्त्रीनिवृत्त्यर्थमित्येव वक्तुं युक्तमिति भावः॥

**न पुनरिति।** (भा)

असमासेऽपि किं चित् पूर्वपदस्यान्तं नेति काक्वा प्रश्नः॥ भाष्ये

**न चान्तरेणेति।** (भा)

तदाशयमाह

**इह त्विति।** (कै)

एतच्चाप्रत्यय इति सूत्रन्यासे। अतिविति न्यासे तु कुमारीत्य-स्यापि तत्त्वमस्त्येवेति तत्रापि दोषः॥ भाष्ये

**[1]उभयत इति।** (भा)

एणेय सिद्धये "स्त्रीभ्यो ढक्" (४। १। १२०) इत्यत्र प्रातिपदिकादित्यसम्बन्धात् गाङ्गेये न दोषः। [2]प्रातिपदिकग्रहणे लिङ्गविशिष्टस्येति परिभाषामनाश्रित्येदं तथा हि प्रातिपदिकत्व-तद्व्याप्यधर्माणां स्त्रीप्रत्ययविशिष्टे बोधनमिति "[3]बह्वीहेरूधस" इत्यत्र भाष्ये स्पष्टम्। वक्ष्यमाणसमाधानेन [4]समाधानादेकदेश्युक्तावत्र

१ अ ४। पा १। सू १२०॥ २ परिभाषेन्दुशे — १२॥
३ अ ४। पा १। सू २५॥ ४ 'सर्वं'। इ॥

---

त्येवं तत्॥ ईयसो बहुव्रीहौ पुंवद्वचनम्। वा। ईयसो बहुव्रीहौ पुंवद्भावो वक्तव्यः। बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी। विद्यमानश्रेयसी॥ पूर्वपदस्य च प्रतिषेधे। गोसमासनिवृत्त्यर्थम्। वा। पूर्वपदस्य च प्रतिषेधो वक्तव्यः। किं प्रयोजनम्। गोसमासनिवृत्त्यर्थम्। गोनिवृत्त्यर्थं समासनिवृत्त्यर्थं च। गोनिवृत्त्यर्थं तावत्। गोकुलं गोक्षीरं गोपालक इति॥ समासनिवृत्त्य-

मात्याहृतं भगवतेति बोध्यम् ॥ ननु चित्रगुरित्यादौ गोन्तस्य प्रातिपदिकस्योपसर्जनत्वाभावाद्ध्रस्वाप्राप्तिरत आह

उपसर्जनेति । (कै)

श्रुतत्वादिति भावः ॥

गोस्त्रियौ इति । (कै)

गोस्त्रीप्रत्ययान्तावित्यर्थः ॥

न तु सूत्रस्येति । (कै)

वस्तुतः सूत्र ग्रेषत्वेऽपि न चतिः । "[१]येन विधिः" "[२]असमासे निष्कादिभ्यः" इति सूत्रभाष्ययोरस्याः प्रत्ययविधिविषयतायाः सूत्रोपात्तान्तादिशब्दविषयतायाश्च बोधितत्वेनास्य भाष्यस्यैकदेश्युक्तित्वावश्यकत्वात् वच्यमाणसमाधानेनास्यापि परिहारः । तच्च गोशब्दांशेऽप्यावश्यकमिति ध्वनयन्नाह

अगोपुच इति । (कै)

ततस्तत्पुरुषादिति समासान्त निषेधः ॥ भाष्ये

अप्रधानमुपसर्जनमिति । (भा)

---

१ अ १ । पा १ । सू ७२ ॥ २ अ ५ । पा १ । सू २० ।

---

र्थम् । राजकुमारीपुत्रः सेनानीकुमारीपुत्र इति । किमुच्यते समासनिवृत्त्यर्थमिति न पुनरसमासोऽपि किंचित् पूर्वपदं यदर्थः प्रतिषेधः स्यात् । स्व्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवतीत्युच्यते न चान्तरेण समासं स्व्यन्तं प्रातिपदिकमुपसर्जनमस्ति । ननु चेदमस्ति । खट्वापादः

अत्र सूत्रे सम्भवसत्त्वात् लौकिकार्थसमानाधिकरणशास्त्रीयस्यैव ग्रहणमिति भावः । केवललौकिकस्य ग्रहणे तु गार्गी चासौ वृन्दारिका चेति गार्ग्यवृन्दारिका इत्यादौ वृन्दारिका ("इत्यादौ वृन्दारिका" इति नास्ति क पुस्तके) शब्दस्य गुणशब्दत्वादप्रधानत्वादुत्तरपदत्वात्तदन्तस्य समासप्रातिपदिकत्वाच्च ह्रस्वप्रसङ्ग इति दिक् ॥

## यं प्रतीत्यादि । (भा)

यदर्थं प्रति यदर्थस्याप्रधानत्वं तद्बोधकस्य चेत्तद्बोधको गोशब्दादिरन्तो भवतीत्यर्थ इति कैयटानुसारिणः । परे तु "प्रथमानिर्दिष्टम्" (१।२।४३) इति सूत्रोक्तरीत्या येन शब्देन समासविधौ यत्प्रथमानिर्दिष्टं तस्य तं प्रत्यप्रधानत्वेनोपसर्जनत्वात् प्रत्यासत्त्या तत्समासप्रातिपदिकान्तस्यैव ह्रस्व इति भाष्यार्थः । अत एव "यं प्रति यदिति" भिन्नलिङ्गनिर्देश इत्याहुः ॥ वार्त्तिकेन यथा न सिद्ध्यति तथोपपादयति

## त्रिपदे इति ॥ (कै)

## द्विगुसमास इति । (कै)

अत एव तस्य समुदायस्य प्रातिपदिकत्वं कपि कृते स्त्रीप्रत्ययान्तत्वाभावादाह

---

मालापाद इति । एकादेशे कृतेऽन्तादिवद्भावात् प्राप्नोति । उभयत आश्रये नान्तादिवत् ॥ गोनिवृत्त्यर्थेन तावन्नार्थः । गोऽन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवतीत्युच्यते न चैतद्गोऽन्तम् । ननु चैतदपि व्यपदेशिवद्भावेन गोऽन्तम् । व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ समासनिवृत्त्यर्थेन चापि नार्थः । स्त्र्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवतीत्युच्यते

अन्तरङ्गत्वादिति। (कै)

कपः प्राक् प्राप्तौ ह्रस्वः "कपि चे"ति वार्त्तिकेन कथं निवर्त्त्येत अत आह

कपीति चेति॥ (कै)

द्वन्द्वस्योभयपदार्थप्रधानत्वेनानुपसर्जनत्वादाह

समासार्थ इति। (कै)

उद्भूतावयवभेदसमूहः समासार्थः। तत्रावयवी च प्रधानमित्यर्थः॥ नन्वेवमपि शास्त्रीयोपसर्जनत्वाभावात् कथं प्राप्तिरत आह

प्रथमेति॥ (कै)

परे तु अनेकविभक्तीत्युपसर्जनत्वं समासापेक्षया च तत्र नियतविभक्तिकत्वं द्वन्द्वस्य प्रथमान्तानामेव न परिनिष्ठितविभक्त्या वाक्ये प्रत्येकमेव कर्मत्वकरणत्वाद्यवगत्यासमासे च समुदाय एव तदवगत्या-समाससमानार्थत्वाभावेन तस्य वाक्यत्वासम्भवात्। अत एव यदग्नये च प्रजापतये च इत्यादौ वाक्ये प्रत्येकमेव देवतात्वमग्नीषोमावित्यादौ

---

प्रधानमुपसर्जनमिति च सम्बन्धिशब्दावेतौ। तत्र सम्बन्धादेतद्गन्तव्यम् यं प्रति यदप्रधानं तस्य चेत् सोऽन्तो भवतीति। अवश्यं चैतदेवं विज्ञेयम्। उच्यमानेऽपि हि प्रतिषेध इह प्रसज्येत। पञ्चकुमार्य्यः प्रिया अस्य पञ्चकुमारीप्रियः। दशकुमारीप्रिय इति॥ कपि च। वा। कपि च प्रतिषेधो वक्तव्यः। बहुकुमारीकः। बहुवृषलीकः (५। ४। १५३)॥ द्वन्द्वे च। वा। द्वन्द्वे च प्रतिषेधो वक्तव्यः। कुक्कुटमयूर्य्यौ॥ उक्तं वा। वा। किमुक्तम्। कपि तावदुक्तं "न कपि" (७। ४। १४) इति

समासे च समुदितस्यैवेति व्यवस्था सिध्यति ध्वनितं चेदं “ऐन क्ङिच्च्नुह्योः” इति सूत्रे भाष्ये इति तत्रैव निरूपयिष्याम इत्याहुः ॥

## प्रियं ग्रामणि इति । (भा)

तस्य नपुंसकत्वप्रदर्शनाय ब्राह्मणकुलमित्यस्योपन्यासः । अत्र नपुंसकह्रस्वत्वस्यापि निषेधः स्यादित्यर्थः । प्रकल्प्य चापवादविषय-मिति न्यायेन पूर्वमपि ह्रस्वो न स्यादिति तात्पर्य्यम् ॥

## समासान्त इतीति । (कै)

कवन्तरङ्गतर इति वक्ष्यमाणोभिप्रायः ॥

## बहुयवागूक इति । (कै)

यवागूशब्दो दीर्घान्त इति “ऊङुतः” (४।१।६६) इत्यस्याप्राप्तेः । स न स्त्रीप्रत्ययान्त इति भावः ॥ विशेषापेक्षस्यावहिरङ्गत्वेऽप्याह

## नद्युत्तरपदमिति ॥ (कै)

ननु द्वयोः स्पर्धमानयोरेकस्य बहिरङ्गत्वेतदपेक्षमन्यस्यान्तरङ्गत्व-मिति प्रकर्षाभावादातिशयिकोऽयुक्तोऽत आह

---

१ अ ८ । पा २ । सू ८ ॥

---

प्रतिषेध इति । नैतदस्त्युक्तम् । “केऽणः” (७ । ४ । १३) इति या ह्रस्वप्राप्तिस्तस्याः प्रतिषेधः । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते या च यावतीं ह्रस्वप्राप्तिस्तस्याः प्रतिषेध इतीहापि तस्य प्रतिषेधः प्रसज्येत । प्रिय ग्रामणिब्राह्मणकुलमस्य प्रियग्रामणिकः । प्रियसेनानिकः ॥ इदं तर्ह्युक्तम्

परेति । (कै)

यदि भवान् ह्रस्वत्वमन्तरङ्गं मन्यते तदा ततोऽप्यन्तरङ्गतरः कबित्यर्थः ॥

ततश्चावयवापेक्षत्वादिति । (कै)

समासशब्देन तदर्थमुत्तरपदं लक्ष्यत इति भाव इति कश्चित् । वस्तुतस्तु समासार्थं विग्रहवाक्यं लक्ष्यत इति भाष्याशयः । तथैवा-न्यत्र दृष्टत्वात् । येषां पदानां समासो न तावत्तेषामन्यद्भवतीति वाक्यशेषस्वारस्याच्च । एवं चान्तरङ्गतरत्वं स्पष्टमेव कैयटेऽप्यवयवा-पेक्षत्वादित्यस्यावयवगतप्रातिपदिकसंज्ञापेक्षत्वादित्यर्थः । समासान्त-विधायकानां च तत्तत्समासार्थविग्रहवाक्यान्त्यावयवः शरदादिप्राति-पदिकात् परः प्रत्ययः इत्यर्थ इति भावः ॥ "समुदायापेक्ष" इत्यस्य च समुदायगतप्रातिपदिकापेक्ष इत्यर्थः ("पर" इत्यारभ्य "इत्यर्थः" इत्यन्तं नास्ति क पुस्तके)। एवं च समाससंज्ञापेक्षसमुदायगत-प्रातिपदिकत्वात् पूर्वमेव समासान्त इत्यन्तरङ्गतर इति भावः । "अन्तः" (६।२।१४३) इति सूत्रस्थभाष्यात् समासावयवत्वस्यैव प्रतीतेः । न तावत्तेषामिति कपः प्रथममित्यर्थः ॥

अन्यत् (भा)

समासशास्त्रम् । कबन्तादिति । तच्छास्त्रवैयर्थ्यभिया तद्भवनकाले

---

कपि कृतेऽनन्तत्वाद् ह्रस्वत्वं न भविष्यति । इदमिह सम्प्रधार्य्यम् । कप् क्रियतां ह्रस्वत्वमिति किमत्र कर्त्तव्यम् । परत्वात् कप् । अन्तरङ्गं ह्रस्व-त्वम् । अन्तरङ्गतरः कप् । ननु चायं कप् समासान्त इत्युच्यते । तादर्थ्या-

प्रतीक्षत इत्यर्थः। अन्यथा समासशास्त्रस्य कबपेक्षत्वेन तत्प्रतीक्षोक्तेरसङ्गतिः। एवं च कपा समकालं तत्पूर्वभागस्य समाससंज्ञा कपस्तदाद्यन्तावयवत्वेन समासप्रातिपदिकावयवत्वात् स्त्रीप्रत्ययस्य तदन्तत्वाभाव इति भावः॥

प्राधान्यादिति। (कै)

इदं "परवल्लिङ्गम्" (२।४।२६) "चार्थेद्वन्द्वः" (२।२।२९) इति सूत्रे भाष्यविरोधात् "द्वन्द्वे च प्रतिषेधः" इति वार्त्तिकविरोधाच्च चिन्त्यम्। तस्मादयनारम्भ एव ज्यायान्। ध्वनितं चेदम् अन्वर्थत्वमुक्त्वा "द्वन्द्वे चेति" निषेधं वदता दूषयिष्यमाणसमाधानोक्त्या च भगवतेति बोध्यम्॥

शब्दशब्दार्थाविति। (भा)

परिहारस्तु परमयुवतिरित्यादौ तिप्रत्ययदयापत्त्या तत्रैव भाष्ये दूषित इति दिक्

---

ताच्छब्द्यं भविष्यति। येषां पदानां समासो न तावत्तेषामन्यद्भवति कथं तावत् प्रतीक्ष्यते॥ द्वन्द्वेऽप्युक्तम्। किमुक्तम्। "परवल्लिङ्गमिति शब्दशब्दार्थौ" (वा—२। ४। २६) इति। तत्रौपदेशिकस्य कृतत्वमातिदेशिकस्य अवश्यं भविष्यति॥

# [1]लुक् तद्धितलुकि ।१।२।४९॥

ननु "उपसर्जनस्य" इति अत्र वर्त्तते तत्र अवन्तिभ्यां "वृद्धेत्" (४।१।१७१) इति "अङः" कुरोः "कुर्वादिभ्यः" (४।१।१७२) इति "ण्यस्य" च तद्राजस्य "स्त्रियामवन्ति कुन्तिकुरुभ्यश्च" (४।१।१७६) इति लुकि "इतो मनुष्य" (४।१।६५) इति "ऊङुतः" (४।१।६६) इति च ङीषूङोः कृतयोः स्त्र्यपत्यवृत्तौ स्त्रीप्रत्ययान्तस्यानुपसर्जनत्वात्तद्धितलुगनन्तरं स्त्रीप्रत्ययोत्पत्तेस्तत्परत्वाभावाच्च कथं लुक् प्राप्तिरत आह

अवन्तीत्यत्रेति । (कै)

उपसर्जनसम्बन्धिस्त्रीप्रत्ययस्य लुगित्यर्थस्तद्धितलुकीति च सत् सप्तमी इत्याशयेन चोद्यमिति भावः॥ नास्ति लुक्परो यस्मात् स्त्रीप्रत्ययादित्यलुक्परत्वादित्यस्यार्थः॥

---

१ तद्धितलुक्यवन्त्यादीनां प्रतिषेधः । वा । तद्धितलुक्यवन्त्यादीनां प्रतिषेधो वक्तव्यः । अवन्ती कुन्ती कुरूः॥ तद्धितलुक्यवन्त्यादीनामप्रतिषेधोऽलुक् परत्वात् । वा । तद्धितलुक्यवन्त्यादीनामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । लुक् कस्मान्न भवति । अलुक् परत्वात् । लुकीत्युच्यते न चात्र लुकं पश्यामः॥ लुकीति नैषा परसप्तमीशक्या विज्ञातुं न हि लुका पौर्वापर्यमस्ति । का तर्हि । सत्सप्तमी । लुकि सतीति । सत्सप्तमी चेत् प्राप्नोति॥ एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति । किम् । उपसर्जनस्येति वर्त्तते । न च जातिरुपसर्जनम्॥

**क्ते इति । (कै)**

एवं च न तत्परत्वं स्यादेरिति भावः ॥ कथं तर्हि वार्त्तिककृता लुक्परत्वादित्युक्तं तत्राह

**बुद्धीति ॥ (कै)**

उपसर्जनसम्बन्धिन इत्यर्थान्न च जातिरुपसर्जनमित्ययुक्तमत आह

**उपसर्जनेति । (कै)**

सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति भावः ॥ इह लुग्विधायके

**स्त्रीत्वयुक्ता प्राधान्येनेति । (कै)**

एवं च प्रधानजातिगतस्त्रीत्वाभिधायीप्रत्ययो नोपसर्जनमिति भावः ॥ स्वयं लुगभावे हेत्वन्तरमाह

**अप्रातिपदिकत्वाच्चाच ह्रस्वाभाव इति । (कै)**

अत्रावन्तीत्यादौ ह्रस्वपदेन ह्रस्वप्रयोजको लुगुच्यते ङीलुकि हि अवन्तिरिति ह्रस्वमवतिष्ठत इति तत्प्रयोजकता लुको बोध्या। तद्धितलुकि (तद्धितान्तात् स्त्रीलुकि इत्यधिकम् क पुस्तके) स्त्रीप्रत्ययान्तप्रातिपदिकावयवस्य प्रत्यासत्त्या स्त्रीप्रत्ययस्य लुगिति सूत्रार्थः प्रकृते च न तत्त्वम् । तद्धितान्तात् स्त्रीप्रत्ययोत्पत्तेरिति भावः ॥ "गोस्त्रियोः" (१।२।४८) इति ह्रस्वस्य तु नात्र प्राप्तिः । तत्र ग्रास्त्रीयोपसर्जनस्य ग्रहात् । यथा चैतत्तथोपपादितम् । क्वचित्तु लुगभाव इत्येव पाठः ॥ नन्वेवं कथम् "आमलकम्" इत्यादौ लुगत आह

आमलेति॥ (कै)

तद्धितान्तत्वादिति। (कै)

मयटो लुकि प्रत्ययलक्षणेनेति भावः॥ ननु लिङ्गविशिष्टपरिभाषया प्रातिपदिकग्रहणानुवृत्तावप्यवन्तीत्यत्र दोषोऽत आह

लिङ्गेति। (कै)

लिङ्गविशिष्टस्योपादानेऽपि तत्परिभाषाप्रवृत्तौ बाधकाभावेन भाष्योक्तसमाधिरेव युक्त इति बोध्यम्॥

---

# [१]इद् गोण्याः। १। २। ५०॥

पञ्चभिर्गोणीभिः क्रीतः इति द्विगौ क्रीतार्थठको लुकि "लुक् तद्धित" (१।२।४९) इति लुगपवादभूतमिदं सूत्रम्। तत्रानेन लुको निषेधे एकविभक्तीत्युपसर्जनत्वात् ह्रस्वेन सिद्धे इद् ग्रहणं व्यर्थमिति बोध्यम्। समाधत्ते भाष्ये

इति वा वचने तावदिति। (भा)

ह्रस्वोक्तौ न ग्रहोक्तौ च तावदेव न तु मात्राप्यधिकेति तदर्थः। "लुकि"। स्त्रीप्रत्ययलुकि॥

---

१ इद्गोण्या नेति वक्तव्यं ह्रस्वता हि विधीयते।
इति वा वचने तावन्मात्रार्थं वा कृतं भवेत्॥ १॥
गोण्या इत्त्वं प्रकरणात् सूच्याद्यर्थमथापि वा॥

सिध्यत्येव ह्रस्वत्वमिति । (कै)

गोवस्त्रक्रयणीत्यादौ ह्रस्ववारणाय शास्त्रीयोपसर्जनस्यैव ग्रहा-
श्चिन्त्यमिदम् भाष्यन्तु यथाश्रुतं रमणीयमेव ॥

तदापि प्रथमेति । (कै)

"[१]प्रस्थादिभ्यः" परिच्छेदकवाचिभ्यः प्रमेयविवक्षायां प्रथमां
बाधित्वा तद्धितः प्राप्नोति तदविवक्षायां प्रातिपदिकार्थत्वादेव
सिध्यतीति व्यर्थं तदित्याशङ्क्य तद्धितमन्तरेणापि "यदा परि-
माणे"त्यादि प्रातिपदिकार्थसूत्रे वक्ष्यतीति भावः ॥ न चानुप-
सर्जनत्वादित्वमपि न प्राप्नोति तस्येहासंबन्धादिति भावः ॥

अभेदोपचारेणेति । (कै)

गेण्येव श्रीहय इत्याद्यर्थं बुद्ध्वा गोणीशब्दस्य प्रमेयवृत्तितया
लाक्षणिकत्वेनानुपसर्जनत्वमित्यर्थः ॥ तत्र शङ्कते

सर्वत्र तर्हीति ॥ (कै)

तेन यत्रेति । (कै)

लाक्षणिकस्याप्युपसर्जनत्वं मन्यते । एवं हि गोणीपदलक्षणाया-
मपि ह्रस्वापत्तेश्चिन्त्योऽयं कैयटः । तर्हि ह्रस्वत्वेनैव सिद्धे व्यर्थ
इद्विधिः स्यादत आह

ह्रस्वत्वं त्विति ॥ (कै)

अप्रातिपदिकत्वादिति । (कै)

गोणीशब्दस्य ङ्यन्तत्वादिति भावः । प्रातिपदिकग्रहणे लिङ्ग-

---

१ ते इत्यधिकम् । इ ॥

विशिष्टस्यापि यथा "ङ्प्रातिपदिकत्वादि"ति चिन्त्यम् । ननु लुका विच्छिन्नत्वात् कथं ह्रस्वानुवृत्तिरत आह

गोस्त्रियोरिति ॥ (कै)

लुगपवाद (कै)

इत्यनेनोपसर्जनस्येत्यनुवृत्तिं दर्शयति

तत्र ह्रस्वमिष्यते इति । (कै)

तच्च न सिध्यतीति शेषः ॥ [1]इत् ग्रहणे यथा सिध्यति तदाह

योगेति ॥ (कै)

इद् इति (भा)

एको [2]गोलुगपवादार्थः ॥

गोण्या इति । (भा)

द्वितीयस्तस्यासार्वत्रिकत्वायेति नातिप्रसङ्ग इति भावः ॥ ननु अस्य लुगपवादत्वे यत्र प्रमेयस्तत्पाथा गोणीशब्दप्रयोगस्तत्र लुगभावादित्वमपि न स्यादत आह

गोण्योरिति ॥ (कै)

लोपेनेति । (कै)

लुकेत्यर्थः ॥ एवं च कैयटस्य पूर्वापरविरोधोऽपि द्रष्टव्यः । अत्र पक्षे तत्पाथा गोणी इति दीर्घान्तस्यैव दृष्टत्वादित्याहुः ॥

---

१ इतो । क ॥ २ यो । इ ॥

# [1]लुपियुक्तवद्व्यक्तिवचने। १। २। ५१॥

पदार्थानवगमे तद्भावत्त्यावगन्तुं न शक्यतेऽतः सूत्रार्थमाह

प्रकृतीति । (कै)

युक्तशब्देन प्रकृत्यर्थ उच्यते स हि प्रत्ययार्थेन युक्तो भवति । प्रकृतौ यादृशं लिङ्गसंख्याप्रयुक्तं कार्य्यं तत्प्रत्ययार्थप्रतिपादिकायां तत्रातिदिश्यते इति तात्पर्य्यं व्यक्तिर्लिङ्गं वचनं संख्या ॥ न च पुष्पः फलवान् वनस्पतिः । तथा च शिरीषस्य कथं वनस्पतित्वं यद् ग्रामेऽतिदिश्येतेत्यत आह

फलीति ॥ (कै)

अस्यापुष्प इत्यादिः । फलाभावेऽपि इत्यस्यापुष्पफलाभावेऽपीत्यर्थः । यद्वा शिंबीनां फलत्वाभावं मन्यते । एवं च वनस्पतिशब्देन वृक्ष एवोच्यत इति भावः ॥ [2]षष्ठ्याश्च प्रकृत्यर्थधर्मत्वाभावात् कथमतिदेशोऽत आह

प्रकृत्यर्थेति ॥ (कै)

व्यतिरेकस्य (कै)

सम्बन्धस्य ॥ शङ्का एव प्रसङ्गे हेतुमाह

---

१ प्रागपि वृत्तेर्युक्तं वृत्तं चापीह यावता युक्तम् ।
वक्तुश्च कामचारः प्रागवृत्तेर्लिङ्गसंख्ये ये ॥

२ षष्ठ्याः । इ ॥

तथेति। (कै)

युक्तशब्देन प्रकृतिस्तद्गतलिङ्गमेकवचनादिप्रत्ययाश्च लुपि सति भवन्तीति सूत्रार्थः। अर्थशब्दयोरभेदाच्च लिङ्गस्य प्रकृतिनिष्ठत्वमेवं चोपस्थितत्वात्तस्या एवातिदेशः प्राप्नोतीति भावः॥ ननु वचनमिति पारिभाषिकसंज्ञाभावात् "नेदम्" इत्ययुक्तमत आह

एकवचनादीति॥ (कै)

अनुनिष्पादीति। (कै)

नान्तरीयक इत्यर्थः॥ भाष्ये

अन्वर्थेति। (भा)

लौकिकः संख्यारूपोऽर्थो वचनशब्देनोच्यत इति भावः। अन्वर्थत्वम् अत्र लोकप्रसिद्धार्थत्वम्॥ नन्वेवं षष्ठ्यप्युच्यते इति अनुपपन्नमत आह

षष्ठीशब्देन चेति॥ (कै)

ननु लुपो भावस्य कथमभिधायकत्वं किं च लुपा दूरभवार्थोक्तावपि षष्ठ्यर्थस्य कथमुक्तिरत आह

लुप् सहचरितेनेति। (कै)

तेन हि [1]स्वसम्बन्ध्यदूरभव उच्यते इति भावः॥ तदाह

अभिहित इति॥ (कै)

व्यतिरेकाभाव इति। (कै)

---

१ स्वसम्बन्ध्यदूरभव इति यावत्। ह।

[1]भेदनिबन्धनसम्बन्धत्वाभाव इत्यर्थः। शेषत्वाय इति यावत्। कारकप्रातिपदिकार्थव्यतिरिक्तो हि शेषः॥ षष्ठ्यतिदेशाभावेन आतिदेशिकीत्ययुक्तमत आह

संख्यायामिति। (कै)

चेत्यर्थः इति। य इयांस्तु विशेषः॥ वाक्ये भिन्नोपस्थिति-विषयतया वृत्तौ चैकोपस्थितिविषयतयेति उत्तरार्थे पक्षान्तरा-प्रतीतेः कामचार इत्ययुक्तमत आह

चशब्द इति। (कै)

तथाच तेन पक्षान्तरद्योतनमस्तीति भावः॥ भाष्ये उक्तश्लोकस्य व्याख्यानं "प्रागपि वृत्तेर्युक्तं वनस्पतिभिः" इत्यादिकामचारविषये एकतरपक्षग्रहणे विनिगमकाभावोऽत आह

प्रत्यासत्त्येति॥ (कै)

तदुक्तं भाष्ये

वृत्ते च युक्तवद्भावो विधीयते इति। (भा)

वृत्तिप्राक्कालावच्छिन्नार्थनिष्ठलिङ्गसंख्ययोरतिदेश उतवृत्ति-कालावच्छिन्नयोरिति संशयः। तत्राद्ये संख्यायाः षष्ठीप्रतिपाद्य-सम्बन्धवदर्थनिष्ठत्वात् तादृशयोरेवातिदेशे षष्ठी स्यादिति बोध्यम्। द्वितीयमादायोत्तरं तत्र प्रातिपदिकप्रतिपाद्ये सम्बन्धवदर्थनिष्ठत्वात् तादृशयोरेवातिदेशे प्रातिपदिकार्थमात्रत्वात् प्रथमैव। अतिदेशस्य वृत्तिनिष्ठत्वात् तद्गतयोरेवातिदेशे एकनिष्ठत्वं प्रत्यासत्तिरिति

१ "व्यतिरेकाभाव" इत्यारभ्य "यावत्" इत्यन्तं नास्ति इ पुस्तके॥

बोध्यम् ॥ ननु वृत्तावुपसर्जनार्थस्य संख्याभेदानवगतेः कथं तत्काला-वच्छिन्न तदतिदेशोऽत आह

वृत्ता उपेति । (कै)

आदेशात् "तवकममकावेकवचन" इति विहितात् तत्र सम्बोध्यत्वादिनैकस्यैवोपस्थितिर्नत्वेकत्वेनेति तत्त्वम् ॥

तथेहेति । (कै)

शिरीषा ग्राम इति बहुवचनात् तत्प्रकृत्यपि शिरीषत्वेनानेकोपस्थितिर्न तु बहुत्वेनेति तत्त्वम् अन्यथातिदेशाप्राप्त्या तदनुपपत्तिरिति भावः ॥ ननु संख्यातिदेशेऽपि तन्निबन्धना षष्ठी कस्मान्नेत्यत आह

वृत्तावुपसर्जनमिति ॥ (कै)

व्यतिरेकाभावादिति । (कै)

तदतिदेशस्तु न मानाभावादिति भावः ॥

अथवा प्राग् वृत्तेरिति । (कै)

इदमयुक्तं प्रत्यासत्तिबाधापत्तेरित्याहुः ॥ ननु तद्धितार्थस्यैकत्वादेकवचननिवृत्तयेऽवश्याश्रयणीयोऽतिदेशोऽत आह

अन्तरेणापीति ॥ (कै)

[1]भाष्यवार्त्तिकयोगाप्रयोगयोर्बीजमाह

अभेदमिति ॥ (कै)

---

१ भाष्यवार्त्तिकयोर्वर्तिप्रयोगाप्रयोगयोर्बीजमाह । क ॥

लिङ्गसंख्ययोरिति। (कै)

विशेष्यमात्रगतलिङ्गसंख्ययोर्विशिष्टगतलिङ्गसंख्ययोस्चेत्यर्थः॥

पटितमिति। (कै)

अभिधेयस्य व्यक्तीति पठितमित्यर्थः॥

वतिनेति। (कै)

[1]विशेष्यमात्रवाचकयलिङ्गसंख्याप्रयुक्तं कार्य्यं दृश्यते तद्वदेवान्यत्र विशिष्टवाचकेऽपि दृश्यते तथा प्रकृतेऽपि स्यात् तद्वारणार्थं सूत्रमिति भावः॥ अभिधेयं विशेष्यं अभिधानशब्दस्य वाचकपर्य्यायलादभिधानवदित्ययुक्तमत आह

उपसर्जनमिति॥ (कै)

तत्र योगं दर्शयति

तेन हीति॥ (कै)

प्रधानार्थः। (कै)

तदा स्कन्दितस्यार्थः॥

तस्य चेति। (कै)

त्रिलिङ्गोऽयं शब्द इत्यादिप्रयोगदर्शनादिति भावः॥ भाष्ये

लुपोऽदर्शनसंज्ञित्वादिति। (भा)

लुपः लुप्शब्दस्य॥ ननु लुपीत्यनेन प्रत्ययार्थो वाच्य इत्यत आह

---

१ विशेष्यमात्रवाचके। इ॥

अदर्शनसंज्ञित्वादिति । (भा)

बहुव्रीहिः ॥

न वाऽदर्शनस्येति । (भा)

लुबर्थादर्शनस्येत्यर्थः ॥ अशक्यत्वे हेतुमाह

अभावेति । (कै)

स्वरूपसद्भावे शब्दावाच्येऽतिदेशो शक्य इति भावः ॥

साहचर्य्यादिति । (भा)

लुप्शब्देन लुपो यः स्थानी प्रत्ययस्तदर्थो लक्ष्यते युक्तार्थस्य लिङ्गसंख्ये लुप्स्थानिप्रत्ययार्थेऽतिदिश्येत इति तात्पर्य्यम् ॥

युक्तः (कै)

सम्बन्ध इति ॥ "प्रकृत्यर्थ" इत्युच्यते । तच्च केन युक्त इत्याकाङ्क्षायां उपस्थितत्वाल्लुबर्थस्यैव सम्बन्धः स्यात् न च तदर्थादर्शनेन कस्यचिद् योग इति युक्तपदार्थाप्रसिद्धिस्ततोऽपि तत् स्थानिप्रत्ययार्थलाभ इत्यर्थलाभ इत्यर्थकं भाष्ये

योगाभावाच्चेति ॥ (भा)

ननु एवमपि उद्भूतावयवसमूहस्यैव द्वन्द्वार्थत्वेन द्विवचनमेव स्यादिति बहुवचनसिद्ध्यर्थोऽतिदेशः स्यादत आह

वर्त्तिपदेति ॥ (कै)

मधुरा पञ्चाला इति (भा)

भाष्ये उदाहृतत्वादिह समासशब्देनेतरेतरद्वन्द्व एवाभिधीयते ।

उत्तरसंख्याया पूर्वसंख्याबाधादतिदिष्टसंख्यामादाय बहुवचनं लुबन्तस्य पूर्वपदत्वेत्वतिदेशाभावाद्द्विवचनमेवेति भावः॥

अत एव (कै)

वृत्तिपदार्थप्राधान्यादेव समासे बहुवचनान्तप्रकृतिकलुबन्तार्थे चेदतिदेशस्तदोत्तरपदस्यैवेति वार्त्तिकार्थो न तु उत्तरपदस्य चेद्बहुवचनान्तस्यैवेत्यर्थ इति भावः। बहुवचनग्रहणं तु अबहुवचनान्तलुबन्त पूर्वपदस्य नियमेन व्यावृत्तिर्माभूदिति तेन गोदमधुरा इति भवति न तु गोद मधुरे इतीत्याहुः॥

---

# विशेषणानां चाजातेः।१।२।५२॥

परिच्छेदकमत्र विशेषणं तत्रासमस्ताया जातेर्विशेषणानामित्यनेन कथमन्वयोऽत आह

असमर्थेति। (कै)

एवं च नञ इवोत्तरपदार्थस्याप्यन्यत्रान्वयो न दोषायेति भावः। पूर्वसूत्रेण प्रकृत्यर्थगतलिङ्गसंख्ययोर्लुबर्थेऽतिदेशात्तद्विशेषणानामपि सिद्ध एवातिदेशः। लुबर्थविशेषणानां स्वविशेष्यगतलिङ्गवचनयोरुचितत्वात्। सूत्रं तु जातिप्रतिषेधार्थं तत्र सन्देह इति तात्पर्य्यम्।

भाष्ये

सुभिक्ष (भा)

इत्यादि ॥

न सिध्यतीति । (भा)

तेषां जनपदविशेषणत्वेऽपि तद्द्वारा लुबन्तविशेषणस्यापि सत्त्वेन बहुवचनमेव स्यादीदृशविशेषणेषु विध्यर्थमेव विशेषणानामित्यंशः स्यादित्याशयः ॥

यदा तु जातिः प्रक्रम्यते इति । (कै)

अत एव पञ्चालाः सुभिक्षा जनपद इति पञ्चाला जनपदः सुभिक्ष इत्येव च भवति जातौ प्रक्रान्तायां यद्विशेषणमुपनिपति तं तज्जातिमेव साक्षाद्विशिनष्टीति भावः। "विशेषणानाम्" इत्यनेनापि साक्षाल्लुबर्थविशेषणग्रहणमेवोचितमिति तात्पर्य्यम् ॥ जातिगुणसमभिव्याहारे जातेर्विशेष्यत्वनियमादाह

विशेष्यत्वेन वेति ॥ (कै)

अङ्कते भाष्ये

[1]अथ किमर्थपुनरिदमिति । (भा)

"विशेषणानामि"त्येतदित्यर्थः ॥ उत्तरयति

[2]जातिनिवृत्त्यर्थ इति ॥ (भा)

---

१ उपलब्ध भाष्य पुस्तकेषु 'अथ' इति नास्ति ॥

२ किमर्थपुनरिदमुच्यते । विशेषणानां वचनं जातिनिवृत्त्यर्थम् । वा ॥

विशेषणानामिति। (भा)

सुभिक्षादीनामित्यर्थः॥

[१]समानाधिकरणत्वादिति। (भा)

अर्थस्य युक्तवद्भावे तदर्थाभिन्ने अनियतलिङ्गसंख्ये सर्वत्र सिद्धमिति तात्पर्य्यम्। अन्यत्रापि जातेर्युक्तवद्भावोनेति विशेष्यलिङ्गादिग्राहिता नेत्यर्थः॥

वृक्षोपनिपातेत्विति। (कै)

वदरीवृक्षो मधुर इति यथा॥ एवं प्रकृतेऽपि रूपद्वये सिद्धे व्यर्थं सूत्रमिति भावः॥ पृच्छति

किं पुनरिति॥ (भा)

उत्तरयति

[२]आविष्टेति॥ (भा)

ननु जातेर्लिङ्गाश्रयत्वाल्लिङ्गाविष्टाजातिरिति वक्तव्ये विपरीतोच्चारणमयुक्तमत आह

आविष्टमिति। (कै)

विशिष्यगृहीतमित्यर्थः॥ एवं व्युत्पत्तौ जातेर्नियतलिङ्गोपादानत्वेन तत्त्वं प्रतीयत इत्याह

नियतेति। (कै)

---

१ समानाधिकरणत्वात् सिद्धम्। वा॥

२ किं पुनः कारणमन्यत्रापि जातेर्युक्तवद्भावो न भवति। आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्त्तते उत्पत्तिप्रभृत्या विनाशान्न तल्लिङ्गं जहाति।

यद्यपि जातिशब्दा अनियतलिङ्गा अपि दृश्यन्ते तथापि प्रकृताभिप्रायमेतत् ॥ ननु सर्वंच सर्वलिङ्गसत्त्वात् कथं नियतलिङ्गत्वमत आह

सर्वं चेति ॥ (कै)

शब्दव्यवहारगताविति । (कै)

व्यक्तिगतेति नोक्तं व्यक्तेरपि कस्याश्चिन्नित्यत्वात् । अत एव शब्दगतेति नोक्तम् । जातिरित्युपलक्षणम् । नियतलिङ्गशब्दमात्रार्थस्य भाविन इति । भाविबुद्धिविषयस्येत्यर्थः ॥

गुणवचनानामिति । (भा)

[1]जातिक्रियादिभिन्नानामित्यर्थः ॥ तेन शक्यं च श्वुदुपहन्तुम् इत्याद्युपपन्नं गुणाभेदेनगुणोपसर्जनगुणिबोधकानामाश्रयत आश्रयविशेषतो लिङ्गादिकमित्यर्थः । [2]अयं भाष्यकृत् कृतः सूत्रार्थः ॥

तन्निष्ठत्वादिति । (कै)

तन्निष्ठत्वेन ग्रहादित्यर्थः ॥

यदा तु जातीति । (कै)

यथा बदरीवृत्त इत्यादाविति भावः ॥ [3]मनुष्यलुपीत्यस्य युक्तवद्भाव (१।२।५१) प्रतिषेधत्वे "चञ्चा" इत्यसङ्गतमित्यत आह

विशेषणानामिति । (कै)

लुबन्तस्य तु भवत्येवेति भावः ॥

---

१ जातिक्रियाभिन्नामित्यर्थः । इ ॥

२ 'अयं' इत्यारभ्य "सूत्रार्थः" इत्यन्तं नास्ति । इ पुस्तके ॥

३ मनुष्यलुपि प्रतिषेधः । वा । मनुष्यलुपि प्रतिषेधो वक्तव्यः । चञ्चाभिरूपः । वध्रिका दर्शनीयः ॥

अभिधेयाश्रय इति। (कै)

विशेष्यगतं यत्युक्तवद्भावेन लिङ्गं विशेषणे प्राप्तं तस्यायं उपस्थितत्वात् निषेध इति विशेष्यभूतार्थगतं पुंलिङ्गमत्र भवतीति भावः। एतेन "मनुष्य लुपि" इत्यनेन विशेषणानां विशेष्यगतलिङ्गादिनिषेध इति[1]॥ [2]"अभिरूप" इत्यत्र भाष्यकारवचनादेव पुंस्त्वमिति बोध्यमित्यपास्तम्॥

---

# [3]तदशिष्यं संज्ञाप्रमाणत्वात्।१।२।५३॥

तत् (भा)

युक्तवद्भावशास्त्रम्॥ भाष्ये

कृत्रिमा इति। (भा)

शास्त्रकृता बोधितशक्तिका इत्यर्थः॥ कृत्रिमसंज्ञाग्रहणे हेतुमाह

---

१ वार्त्तिककृता सूत्रार्थस्योक्तत्वेन तस्यैवायं निषेध इति उभयोरपि विशेष्यगतलिङ्गयोर्निषेधः। इत्यस्ति ह. पुस्तके॥

२ चञ्चाभिरूप इत्यत्र॥

३ किं या एताः कृत्रिमाष्टिघुघभादिसंज्ञास्तत्प्रामाण्यादशिष्यम्। नेत्याह। संज्ञानं संज्ञा॥

---

३ किं या एता इति। भा। प्रत्यासत्त्याश्रयेण प्रश्नः। नेत्याहेति। प्रत्यासत्तेः सामर्थ्यं बलवत्। न हि टिघुभादिसंज्ञानां प्रमाणत्वं युक्तवद्भाव-

---

३ "तत्" युक्तवद् वचनम्॥ "अशिष्यम्" अकर्त्तव्यम्। कुतः संज्ञानां प्रमाणत्वात्। अयं भावः। पञ्चाला वरणा इत्यादयो न यौगिकाः। तन्नि-

प्रत्यासत्तीति ॥ (कै)

सामर्थ्यमिति । (कै)

प्रकरणालिङ्गं बलवदित्यर्थः ॥

अवगम इति । (कै)

भावे क्तान्तो यौगिकः संज्ञाशब्द इत्यर्थः ॥ [1]"लुब् योगाप्रख्या-

---

१ लुबप्यशिष्यः । "जनपदे लुप्" (४ ; २ । ८१) "वरणादिभ्यः" (४ । २ । ८२ ) चेति । कुतः । योगस्यावयवार्थस्येह अप्रख्यानात् । अप्रतीतेः ॥ तथा चात्र "तस्य निवासः" ( ४ । २ । ६९ ) "अदूरभवश्च" ( ४ । २ ; ७० ) इति तद्धितो नैवोत्पद्यते किं लुपो विधानेन ॥

---

शास्त्रस्याशिष्यत्वे हेतुरुपपद्यते सम्बन्धाभावात् । संज्ञानमिति । भा । अव-गमः सम्प्रत्यय इत्यर्थः । तत्र यथाऽऽपो दाराः सिकता वर्षाः इत्युक्ते लिङ्ग-संख्याविशेषावगतिरुत्पद्यमाना प्रमाणम् । एवं पञ्चाला वरणा इत्यादावपि । न च पञ्चालादयो यौगिका अपि तु जनपदादीनां संज्ञास्ततो योगानवगमात् तद्धितो नोत्पद्यते इति लुबपि न वक्तव्यः । तत्र सर्वेषां लिङ्गानां सर्वत्र-भावात् । केन चिच्छब्देन प्रत्याय्यमानं वस्तु कस्य चिल्लिङ्गस्य व्यञ्जकमिति दारादिषु नियतलिङ्गता सिद्धा । बहुत्वमप्यवयवगतं शक्तिगतं वान्यत्र समारोप्यत इति संख्यायोगोऽपि सिद्धः । एकासिकता इत्याद्यपि शिष्ट-प्रयोगदर्शनात् सिध्यति ॥

---

वासेऽपि देशान्तरे अप्रयोगात् । देशे तन्नाम्नीत्यधिकृत्यादूरभवे प्रत्ययविधा-नाच । किन्तु संज्ञाशब्दा एते । ते च यल्लिङ्गसंख्यतया लोके प्रसिद्धास्तत्र प्रमाणभूता एव । तदर्थप्रमाणका इत्यर्थः । यथा आपो दारा वनं गृहाः सिकता वर्षा इत्यादौ नेह शास्त्रेऽनुशासनमारब्धं तदर्थमपि मास्तु ॥

नात्” (१।२।५४) [1]“योगप्रमाणे च तदभावेऽदर्शनं स्यात्” (१।२।५५) इत्यनयोस्तात्पर्य्यं दृष्टान्तदार्ष्टान्तिकयोरूढयौगिकत्वरूपवैषम्यपरिहारं [2]चाह

न चेति। (कै)

एवं च लिङ्गप्रकरणं “जात्याख्यायाम्” इत्यादिसंख्याप्रकरणं च पूर्वाचार्य्यानुरोधेन कृतमिति ध्वनितं सूत्रकृता सर्वं चेदं [1]“कालोपसर्जने च” (१।२।५७) इति न सङ्गृहीतम् ॥

योगानवगमादिति। (कै)

संप्रति विनापि क्षत्रिययोगं जनपदे पञ्चालशब्दा व्यवहारदर्शनादित्यर्थः ॥

तत्र सर्वेषामिति। (कै)

---

१ चकारो ह्यर्थे। यदि हि योगस्यावयवार्थस्येदं प्रमाणं बोधकं स्यात्तदा तदभावे न दृश्यते। दृश्यते च सम्प्रति। विनैव क्षत्रिययोगं जनपदे पञ्चालशब्दः। न च भूतपूर्वगतिः। क्षत्रिययोगद्देशे देशयोगाद्वा क्षत्रिये शब्द इत्यत्र विनिगमकाभावेन वैपरीत्यस्यापि सुवचत्वापत्तेरिति भावः। अतोऽत्रादिवन्नानार्था एवैते इति तत्त्वम् ॥

२ ‘चाह’ इति नास्ति ङ पुस्तके ॥

३ कालोपसर्जने च तुल्यम्। १। २। ५७। अतीतायाः रात्रेः पश्चार्द्धेन आगामिन्याः पूर्वार्द्धेन च सहितो दिवसोऽद्यतनः। विशेषणमुपसर्जनमित्यादिकमेषां काल उपसर्जनं च पूर्वाचार्यैः परिभाषितं तत्रापि तुल्यम्। अशिष्यत्वं समानमित्यर्थः। लोकप्रसिद्धत्वादेवेति भावः ॥

---

१ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्। १। २। ५६। प्रत्ययार्थप्रधानमित्येवं रूपं वचनमपि अशिष्यं कुतः अर्थस्य लोकतः एव सिद्धेः। आख्यातस्य क्रिया प्रधानतया व्यभिचाराच्च इत्यर्थः ॥

[1]उपचयादिरूपस्य तस्य केवलाम्वयित्वादिति भावः ॥ "वस्तु" द्रव्यं लिङ्गसंख्याकारकाश्रयत्वं हि द्रव्यत्वमिति तदेव द्रव्यत्वानुपपत्तिपरिहाराय लिङ्गव्यञ्जकं शब्दस्तु करणमिति भावः । एवं च दारपदार्थस्य स्त्रीत्वेऽपि शब्देन उपचयलक्षणं [2]पुंस्त्वमेव व्यज्यते । सर्वेषां सर्वत्र सत्त्वादिति तात्पर्यम् ॥

[3]एका सिकतेति । (कै)

अयं प्रयोगो "हयवरट्" (शिवसू-५) सूत्रे भाष्ये एवमन्येऽपि ॥ अत्रादिविषयेऽपि शिष्टप्रयुक्ताः साधव इति ध्वनयन् आह

आदीति ॥ (कै)

---

# [4]जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् । १ । २ । ५८ ॥

जातिवादिनो मते जातेरेकत्वात् बहुवचनार्थमावश्यकमितीदमयुक्तमित्यसङ्गतमत आह

---

१ उपचयापचयादि । इ ॥

२ पुरुषमेव । क ॥

३ 'एका च सिकता' इति 'हयवरट्' सूत्रस्य 'सङ्घातार्थवत्त्वाच्च' इति वार्तिकव्याख्यानावसरे उक्तं भगवता ॥

४ इदमयुक्तं वर्त्तते । किमत्रायुक्तम् । बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम् । तद्यदेकवचने प्रासितव्ये बहुवचनं शिष्यते एतदयुक्तम् । बहुष्वेकवचनमिति

( जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् । १। २। ५८ । )

द्रव्यं त्विति । (कै)

जातेरुपलक्षणत्वं तु प्रकृततावच्छेदकतया बोध्यम् । प्रकारान्तरमपि मञ्जूषायां द्रष्टव्यम् ॥ जात्याख्यायां बह्वेकवचनमित्यसङ्गतमत आह

अत्र पक्ष इति । (कै)

क्रियादिप्रवृत्तिनिमित्तकास्तु तद्व्यावर्त्या इति भावः ॥ द्रव्यवादे उत्तरासङ्गतेराह

जातिपदार्थेति ॥ (कै)

---

नाम वक्तव्यम् ॥ अत उत्तरं पठति । जात्याख्यायां सामान्याभिधानादैकार्थ्यम् । वा । जात्याख्यायां सामान्याभिधानादैकार्थ्यं भविष्यति । यत्तद् व्रीहौ व्रीहित्वं यवे यवत्वं गार्ग्ये गार्ग्यत्वं तदेकं तच्च विवक्षितम् । तस्यैकत्वादेकवचनमेव प्राप्नोति । इष्यते च बहुवचनं स्यादिति तच्चान्तरेण यत्नं न सिध्यतीति जात्याख्यायामेकस्मिन् बहुवचनम् । एवमर्थमिदमुच्यते ॥ अस्ति प्रयोजनमेतत् । किं तर्हीति । तत्रैकवचनादेश उक्तम् । वा । किमुक्तम् । व्रीहिभ्य आगत इत्यत्र "घेर्ङिति" ( ७। ३। १११ ) इति गुणः प्राप्नोतीति ॥ नैष दोषः । अर्थातिदेशात् सिद्धम् । वा । अर्थातिदेशोऽयम् । नेदं पारिभाषिकस्य वचनस्य ग्रहणम् । किं तर्हि । अन्वर्थग्रहणम् । उच्यते वचनम् । बहूनामर्थानां वचनं बहुवचनमिति । यावद् ब्रूयादेकोऽर्थो बहुवद्भवतीति तावदेकस्मिन् बहुवचनमिति ॥

संख्याप्रयोगे प्रतिषेधः । वा ।

संख्याप्रयोगे प्रतिषेधो वक्तव्यः । एको व्रीहिः सम्पन्नः सुभिक्षं करोति ॥ अस्मदो नाम युवप्रत्यययोश्च । वा । अस्मदो नाम प्रयोगे च प्रतिषेधो वक्तव्यः ॥ नाम प्रयोगे । अहं देवदत्तो ब्रवीमि । अहं यज्ञदत्तो ब्रवीमि ॥ युवप्रत्यययोगे । अहं गार्ग्यायणो ब्रवीमि । अहं वात्स्यायनो ब्रवीमि ॥ युवग्रहणेनार्थः । अस्मदो नाम प्रत्ययप्रयोगे नेत्येव । इदमपि सिद्धं भवति । अहं गार्ग्यो ब्रवीमि । अहं वात्स्यो ब्रवीमि ॥ अपर आह । अस्मदः सविशेषणस्य प्रयोगे नेत्येव । इदमपि सिद्धं भवति । अहं पटुर्ब्रवीमि । अभिरूपं

( जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् । १। २। ५८ । )

जात्याख्यायामेकस्मिन्निति । (भा)

यदैकार्थ्यं तद्युक्तं सामान्याभिधानादिति योजना ॥ वार्त्तिकस्य अत्र पक्षे [1]आह दोषाद्यन्वयौ विशेषणीभूता व्यक्तिद्वारकपरम्परया जातावेवेति भावः ॥ अभ्युपगमत्वे हेतुमाह

बहुष्विति । (कै)

अभिन्नस्याभावादिति पाठः । अत एवाभ्युपगमवादोयमिति तात्पर्य्यम् ॥ क्वचि"त्वभिन्नस्य भावाद्" इति पाठः ॥ तदा जात्यङ्गीकारे प्रमाणदर्शनमिदम् । अन्यथा गर्गनिष्ठजनकतानिरूपित-जन्यत्वस्य प्रतीति व्यक्तिभेदात् । गार्ग्य इत्यनुगताकारप्रतीतिर्न स्यादिति भावः ॥ नन्वेवं परिमाणभेदाद् द्रव्यभेदे न डित्थत्वादीनामपि जातिशब्दत्वेन तत्रापि बहुवचनं स्यादत आह

एकस्मिन्निति ॥ (भा)

सामर्थ्यमेव दर्शयति

१ आह दोहाद्यन्वयौ । का ॥

---

वा बहुवत्पृथक्त्वाभिधानात् । वा । अस्मिन्थ्यो वा बहुवद्भावः । किं कारणम् । पृथक्त्वाभिधानात् । पृथक्त्वेन हि द्रव्याण्यभिधीयन्ते । बहुवत्त्वेऽर्थास्तत्र युक्तं बहुवचनम् । किमुच्यते पृथक्त्वाभिधानादिति यावतेदानीमेवोक्तं जात्याख्यायां सामान्याभिधानादैकार्थ्यमिति ॥ जातिशब्देन हि द्रव्याभिधानम् । वा । जातिशब्देन हि द्रव्यमप्यभिधीयते जातिरपि । कथं पुनर्ज्ञायते जातिशब्देन द्रव्यमप्यभिधीयत इति । एवं हि कश्चिन्महति गोमण्डले गोपालकमासीनं पृच्छति । अस्त्यत्र काचिद् गां पश्यसीति । स पश्यति पश्यति चायं गाः पृच्छति च कां चिदत्र गां पश्यसीति नूनमस्य द्रव्यं विवक्षितमिति । तद्यदा द्रव्याभिधानं तदा बहुवचनं भविष्यति यदा सामान्याभिधानं तदैकवचनं भविष्यति ॥

जातिपदार्थेति ॥ (कै)

सर्वे शब्दा इति । (कै)

उक्तयुक्त्या याचकादयोऽपि ॥ भाष्ये

तच्च विवक्षितमिति । (भा)

प्राधान्येनेति शेषः ॥ भाष्ये

व्रीहिभ्य इति । (भा)

सूत्रे एकस्मिन्नित्येकशब्देन एकवचनं गृह्यते । भीमो भीमसेन इतिवत् सप्तमी च षष्ठ्यर्थे इति भावः । सप्तम्युपादानादतिदेश एवेत्युत्तरम् ॥ बहूनामर्थानां वचनं [1]बहुवचनमपि भवतीत्यत आह

बहूनामिति । (कै)

कर्मणि ल्युट् । बहूनामर्थानां सम्बन्धियदुच्यते तद्बहुवचनं तच्चोपस्थितत्वाद्बहुत्वमेव ॥ तदाह

बहुत्वमेवोच्यते इति । (कै)

एकत्वरूपेऽर्थे शास्त्रीयो बहुत्वरूपार्थस्य तादात्म्येनाहार्य्यारोप इति तात्पर्य्यम् । अत एव तद्विशेषणानामपि सिध्यति ॥

एवमिति । (कै)

अन्यथा तत्रापि "तिष्यपुनर्वस्वो" (१।२।६३) इत्यत्र "जसि च" (७।३।१०९) इति गुणः स्यादिति भावः ॥ एकशब्दप्रयोगविरोधात् बहुवचनाप्राप्तेराह

एकस्यैवेति । (कै)

---

१ भ्यसादि । इ ॥

जातेरेकत्वावगतावेवातिदेशप्रवृत्तेरिति भावः॥ भाष्ये प्रसङ्गाद् "अस्मदो द्वयोश्च" (१।२।५९) इत्यस्य प्रतिषेधमाह

अस्मदो नामेति॥ (भा)

ननु द्रव्यपदार्थाश्रयेण प्रत्याख्याने "व्रीहिः सम्पन्नः" इति प्रयोगो न स्यादत आह

उभयेति। (कै)

कदाचिद्द्रव्यं प्रधानं कदाचिज्जातिः प्रधानमित्यर्थः॥ भाष्ये

पृथक्त्वेनेति। (भा)

भेदेनेत्यर्थः॥

जातिशब्देनेति। (भा)

जातिशब्दाभिमतेनेत्यर्थः॥ निःशब्दजात्यभिधायकगोत्वादिशब्दे तु नायं विधिरिष्ट इति भावः। तदाह

द्रव्यमपीति। (कै)

प्राधान्येनेति शेषः॥ तदाह

तच कदाचिदिति। (कै)

जातिप्रकारकव्यक्तिविशेष्यक एव शक्तिग्रहः। गौर्गोपदवाच्य इति जातिव्यक्त्युभयविषयकबोधे कारणम् अत एव जातिविशेष्यक-शक्तिग्रहविषयात् गोत्वपदाच्च कदापि व्यक्तिबोधः। जातिव्यक्त्यो-रन्यतरस्य विशेष्यताया च पुरुषे चैव नियामिका तात्पर्यग्राहकं चैकवचनबहुवचनादि। एतदेवाभिप्रेत्य जातिप्राधान्यद्वन्द्वैकवद्भावो

व्यक्तिप्राधान्ये तु नेति व्यवहार इति भावः। तत्र जातौ व्यक्तेः प्रकारताऽभेदप्रधानतादात्म्ये नेति। न वाहाद्यन्वयानुपपत्तिः। गोत्वपदजन्यगोत्वबोधे तु भेदप्रधानतादात्म्येति न गोत्वं वाहयेत्यादिप्रयोगः। व्यक्तिद्वारकोऽन्वय इत्यस्याप्ययमेवार्थ इति बोध्यम्॥ भाष्ये

महति गोमण्डल इति। (भा)

अतिनिविडगोमण्डले अविविक्ततया दृष्टे इत्यमुक्तिः। तत्र जातेरेव शब्दार्थत्वे जातेर्दृष्टत्वात् प्रश्नानुपपत्तिरित्यर्थः॥

---

# [1]अस्मदो द्वयोश्च। १। २। ५९॥

[2]ननु इन्द्रियाणां स्वातन्त्र्येऽपि एकेन्द्रियसाध्यक्रियायामिन्द्रियान्तराणां कर्तृत्वाभावाद् बहुवचनमनुपपन्नमत आह

एकेन्द्रियेति। (कै)

स्वविषयौदासीन्यं संविधातृत्वे हेतुः। "संविधातृत्वं" सहकारित्वम्॥ नन्वेवम् अस्मदः प्रयोगोऽनुपपन्नोऽत आह

शरीर इवेति॥ (कै)

अहङ्कारः (कै)

अहन्त्वप्रतीतिरहङ्कारेण इत्यादिः॥

पारतन्त्र्येति। (कै)

तथाच करणत्वेन विवक्षितत्वात् संविधातृत्वलक्षणकर्तृत्वं नास्ती-

---

१ अयमपि योगः शक्योऽवक्तुम्॥ २ ननु। इ॥

त्यर्थः। उच्चारयितात्मन अहङ्कारास्पदात्मनो वा एकत्वादामि-
त्यनुपपन्नमत आह

एकशेषे इति। (कै)

त्यदादीनां यत् परं तच्छिष्यत इति भावः॥

अस्मदोऽर्थद्वयाभिधानादिति। (कै)

अत्र "अस्मद्" इति शेषत्वविवक्षया षष्ठीसम्प्रत्ययेति व्यवहार इत्यर्थः। एवं च युष्मदि गुरावेकेषामिति क्वचिद् वृत्तावुच्यमानमसङ्गत इति भावः। अत एवाचार्य्याः कथयन्तीत्यादिसङ्गच्छते इत्यमेव डित्थाः कथयन्तीत्याद्युपपत्तिर्बोध्या। एतदर्थं च प्रत्याख्यानप्रकारस्यावश्यकत्वात् सूत्रं प्रत्याख्यातमिति भावः॥

## [1]फल्गुनीप्रोष्ठपदानां च नक्षत्रे। १। २। ६०॥



अमायां चन्द्रस्य नष्टत्वात् कथं बहुवचनमित्यत आह

अमेति॥ (कै)

ननु चन्द्रस्य फल्गुन्यादिपदवाच्यत्वाभावात् कथं तमादाय फल्गुन्य इत्यादिप्रयोगोऽत आह

अर्द्धर्चा इति। (कै)

तद्रूपारोपात्तच्छब्दप्रवृत्तिर्भावः॥ नन्वेवमेकर्चविवक्षायामेकवचनमपि स्यादत आह

१ अयमपि योगः शक्योऽवक्तुम्॥

१ बहुवत्तेऽर्था इति। भा। अमावास्यायामप्यादित्यमण्डलं प्रविष्टेन

एकस्यामिति॥ (कै)

नन्वेवं नक्षत्रान्तरेऽपि चन्द्रसम्बन्धविवक्षायां द्विवचनादिस्यादत आह

सर्वत्रेति॥ (कै)

अनवस्था। (कै)

अतिप्रसङ्गः॥

---

# [१]तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्।१।२।६३॥

---

ननु मानवक वाचि द्वन्द्वनिवृत्त्यर्थं तदत आह

तिष्येणेति।

नक्षत्रेण युक्तः काल इत्यणो "लुबविशेषे" (४।२।४) इति लुपि जाते "सन्धिवेला" (४।३।१६) इत्यणः "तिष्य पुनर्वस्वि"ति लुक् यौगिकत्वादिति लोपेनापि अवशिष्टस्य तदर्थान्तर्भावेन शक्तिरेव बोध्यते। अत एव लुबादिप्रत्याख्यानं सूत्रकृतोक्तमिति भावः॥

अन्तरङ्ग इति। (कै)

कालार्थतद्धितान्तान्माणवकार्थतद्धितोत्पत्तिरिति कालमाणवकयोरन्तरङ्गबहिरङ्गतेति भावः॥

---

१ छन्दसि पुनर्वस्वोरेकवचनम्।१।२।६१॥ विशाखयोश्च।१।२।६२॥ इमावपि योगौ शक्यावक्तुम्॥

---

चन्द्रेण नक्षत्राणां योगोऽस्त्येवेति तदापि बहुवचनमर्द्धर्चाः क्वचिन इत्यादिन्यायेन सिद्धम्॥

( तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् । १ । २ । ६३ । )

यथेति । (कै)

द्रव्यकर्मणा क्रियास्वरूपपरिपूरणं कालकर्मणात्ववगतायाः क्रियायाः कालसम्बन्धपूरणमिति तयोरन्तरङ्गबहिरङ्गता बोध्या ॥

नन्विति । (कै)

अकर्मकग्रहणेन श्रुत्यैव साक्षात्कर्मणि व्यावर्त्यमाने युक्ता पूर्वपश्चात् सम्बन्धसत्त्वेनान्तरङ्गस्यैव व्यावृत्तिः । न त्वेवं प्रकृते अस्य हि स्वार्थसमर्पणद्वारान्यव्यावर्त्तकत्वेनाविशेषादुभयव्यावर्त्तकत्वसम्भवाद् इति भावः ॥ अचत्य अङ्गाधिकारस्थेन कथं सम्बन्धोऽत आह

तिष्येति । (कै)

नक्षत्राण् ततः सप्तम्यां नक्षत्राणीति निर्देशः ॥

यलोप इति । (कै)

तच्च पुष्यविशेषणार्थमावश्यकमेवेति भावः ॥

पुनर्नक्षत्रेति । (कै)

तिष्यपुनर्वस्वोः शब्दयोरभिधेये नक्षत्रे वर्त्तमानानां नक्षत्रशब्दानां द्वन्द्व इति सूत्रार्थ इति भावः ॥ ॥

अर्थस्यैवेति । (कै)

तदर्थसम्बन्धिनो बहुत्वस्य द्वित्वातिदेश इत्यर्थः ॥

समासस्येति । (कै)

"कृत् तद्धिते" (१।२।४६) तिसूत्रादिपरिणतविभक्तिकं समासग्रहणमनुवर्त्त्येत्यर्थः ॥

नास्तीति (कै)

इत्यन्तेन पूर्वमतदूषणम् ॥ अथ भाष्यं व्याचष्टे

(अ. १। पा. २। आ. २)
(तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्। १। २। ५०।)

**अवयवेन** (कै)

इत्यादिना॥ अवयवार्थत्वेन वर्त्तिपदार्थस्य बोधनमित्यर्थस्तदाह

**समुदाय इति।** (कै)

उद्भूतावयवभेद इत्यर्थः॥

**विपर्य्यासविषया इति।** (कै)

यस्तिष्य इत्युपलक्षणम् यौ पुनर्वसू स तिष्यो येषामित्यर्थ-स्यापीति भावः॥ "विपर्य्यासः" भ्रमः॥ "उन्मुग्धा" इत्यस्य च विपर्य्यासेन दृश्यमाना इत्यर्थः॥ अविविक्ततावचनान्मुहे कर्त्तरि क्त अविविक्ता इत्यर्थादिति भावः॥ भाष्ये

**कथं चाचेति।** (भा)

प्राण्यङ्गादीनामेव समाहारद्वन्द्व इति नियम इति भावः॥

**एवं तर्हीति।** (भा)

"द्वन्द्वश्च" (२।४।२) इत्यादिषु समाहार एवेति नियमबोधन-द्वारा तद्व्यतिरिक्तसर्वद्वन्द्वस्यानेनोभयरूपता बोध्यते इत्यर्थः। तदाह

**अप्राणीति।** (कै)

न्यायसिद्धार्थद्योतकत्वेन सर्वशब्दस्य सङ्कोचस्तद्वृत्तितैव युक्तेति भावः। तद्भ्रमयन्नाह

**न्यायेति॥** (कै)

एकवद्भावप्रकरणवैयर्थ्यमुद्धरन् न्यायमेव दर्शयति

**एकेति॥** (कै)

**विषयविभागः।** (कै)

विषयनियमः। न तु विधेयद्वन्द्वनियमार्थमिति भावः॥

( तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् । १। २। ६३ । )

न त्विति । (कै)

अन्यथा च बहुवचनग्रहणवैयर्थ्यापत्तिरिति भावः ॥

सिद्ध एवेति । (कै)

चार्थ इत्यनेनेत्यर्थः ॥

न ह्येतेष्विति । (कै)

आपोमयः प्राण इति श्रुतेरद्भिर्विना ग्लायमानप्राणा एव लोके प्राणिन इत्युच्यन्ते इदमेव पूज्यत्वं भाष्ये अत्र भवच्छब्देनोच्यते इति भावः ॥ लोके प्राण इति व्यवहारस्याप्यभावादाह

तदधीनेति । (कै)

एवं च तथा नियमेऽपि नक्षतिरिति भावः । केचित्तु दृष्टानुरोधेन "द्वन्द्वश्च" (२।४।२) इत्यदिषु समाहार एवेति नियमः । एवं चात्रापि पक्षे "जातिरप्राणिनाम्" (२।४।६) इति नित्यैकवद्भावे वचनाभावात् सूत्रमनर्थकं सदुक्तार्थज्ञापकः ज्ञाप्यकोटौ सर्वशब्देनैकवद्भावविषयो जातिद्वन्द्व एव गृह्यते । "द्वन्द्वश्च" इत्यादीनामन्येषां तु नित्यत्वमेवात एवैकवद्भावप्रकरणं पूर्वत्र नित्यार्थमुत्तरत्र व्यभिचारार्थमिति "विभाषा वृक्षमृग" (२।४।१२) इति सूत्रस्थभाष्येण न विरोधः । अत एव मृदङ्गशङ्खतूणवा इत्यादिसङ्गच्छते । यद्वा जातिप्राधान्य एकवचनं व्यक्तिप्राधान्ये बहुवचनमित्युभयमप्यत्र । अत्रैवार्थे इदं ज्ञापकमित्याहुः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते
महाभाष्यप्रदीपोद्योते प्रथमस्य द्वितीये
द्वितीयमाह्निकम् ॥

---

# महाभाष्यप्रदीपोद्योतः।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्यनिबन्धने ॥

## सरूपाणामेकशेष एकविभक्तौ। १। २। ६४ ॥

ननु अर्थकृतमपि साम्यं गृह्येतेति प्रश्नानुपपत्तिरत आह

रूपस्येति। (कै)

---

रूपग्रहणं किमर्थम्। समानानामेकशेष एकविभक्तावितीयत्युच्यमाने यत्रैव सर्वं समानं शब्दोऽर्थश्च तत्रैव स्यात्। वृक्षाः प्लक्षा इति। इह न स्यात्। अक्षाः पादा माषा इति। रूपग्रहणे पुनः क्रियमाणे न दोषो

---

रूपग्रहणमिति। भा। रूपस्यान्तरङ्गत्वादहेयत्वादुपदेशानपेक्षणाच्च तत्कृतमेव समानत्वं ग्रहीष्यते। प्रतिपत्तिलाघवं च समानानामित्युच्य-

---

समानायां विभक्तौ यानि सरूपाण्येव दृष्टानि तेषां मध्ये एक एव शिष्यते। अनैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव डन्ता-

"अन्तरङ्गत्वं" शब्दार्थप्रतीतेः पूर्वं नियमेन प्रतीयमानत्वम् अर्थो हि तद्विपरीतत्वाद्बहिरङ्गः ॥ तथानुकरणशब्दायामप्रतीतेर्हेयस्य । शब्दस्य तु ज्ञानमात्रे भानात् स कुत्रापि न हेयः ॥ उपदेशः सम्बन्धग्रहः । पर्य्यायाप्रतिपाद्यमानत्वमसाधारणत्वम् ॥ ननु समानानामित्युक्तेऽपि वर्णकृतलाघवाभावोऽत आह

## प्रतिपत्तीति ॥ (कै)

यद्यपि सहमानेन इतियोगस्तथापि प्रवीणादिवद्रूढ एवाय-मिति भावस्तदाह

## रूढशब्दत्वादिति । (कै)

सरूपशब्दस्तु "१ज्योतिर्जनपद" इति समानस्य सभावविधाना-दवयवानुसन्धानद्वारेणैव सादृश्यं प्रतिपादयतीति तात्पर्य्यम् ॥

---

१ ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु । ६। ३। ८५ ॥

---

भवति । रूपं निमित्तत्वेनाश्रीयते श्रुतौ च रूपग्रहणम् । अथैकग्रहणं किमर्थम् । सरूपाणां शेष एकविभक्तावितीयत्युच्यमाने द्वित्रयोरपि शेषः प्रसज्येत । एकग्रहणे पुनः क्रियमाणे न दोषो भवति । अथ शेषग्रहणं किमर्थम् । सरूपाणामेक एकविभक्तावितीयत्युच्यमान आदेशोऽयं विज्ञा-येत । तत्र को दोषः । अश्वश्चाश्वश्च अश्वौ । आन्तर्यतो द्युदात्तवतः

---

माने भवति । रूढशब्दत्वात् समानशब्दस्य तुल्यार्थत्वावगमात् । सरूपाणा-मिति पुनरुच्यमाने पदद्वयार्थावगमपूर्वकान्यपदार्थावगमात् प्रतिपत्तिगौरवं

---

बन्तप्रातिपदिकानां प्रवर्त्तते । हरिणी मृगी हरितवर्णा च । तयोः सह विवक्षायां हरिण्यौ हरिण्यः । क्षितिक्षान्त्योः क्षमा । "वासो न सम्यक्

ज्ञापितमिति। (कै)

शब्दार्थविषये क्वचिदुक्तन्यायाप्रवृत्तेर्ज्ञापनादित्यर्थः॥ श्रोत्रेन्द्रियस्य करणत्वेऽप्याधारत्वासम्भवादाह

श्रोत्रोपेति। (कै)

भावसाधनः श्रुतिशब्द इति भावः॥

अर्थवेति। (कै)

श्रुत्यवच्छेदेनेत्यर्थः। करणसाधनः स इति भावः। आद्ये ग्रहणं विषयता द्वितीये तु प्रतीतिरिति विवेकः। प्राधान्येन श्रोत्रेन्द्रियग्राह्यं वस्त्वत्र रूपशब्देनोच्यते इति तात्पर्य्यम्॥

शेषणमिति। (कै)

अचेतरनिवृत्तिविशिष्टमवस्थानं विधेयं तच्चैकस्य द्वयोरित्याद्याकाङ्क्षायां प्राथम्यादेकस्यैव भविष्यतीत्यर्थः॥

---

स्थानिनो ह्युदात्तवानादेशः प्रसज्येत। लोप्यलोपिता च न प्रकल्पेत। तत्र को दोषः। गर्गा वत्साः। विदा उर्वाः। अभ्यो बहुषु यभ्यो बहुष्विलुग्घमानो लुग प्राप्नोति (२। ४। ६४)। माभूदेवम्। अभन्तं यद्बहुषु यजन्तं यद्बहुष्वित्येवं भविष्यति। नैवं शक्यम्। इह हि दोषः स्यात्।

---

भवतीति प्रश्नः॥ शब्दार्थस्येति। भा। स्वं रूपमित्यत्र रूपग्रहणेन ज्ञापितं व्याकरणे रूपवदर्थोऽप्यङ्गीक्रियत इति। ततश्चार्थरूपाभ्यां समानत्वं गृह्यतेत्यर्थः। शब्दानुशासनप्रस्तावाच्च शब्दसम्बन्धिरूपं गृह्यते न तु चक्षुर्ग्राह्य-

---

समयोश्च तस्मिन्" इति कौश्यः। "श्रियौनरेन्द्रस्य निरीक्ष्य तस्य" इति च। सकृच्छ्रुतात् सकृदर्थः प्रत्यय इति मते शब्दसारूप्येति द्वन्द्वः स्यात्।

न चैकमिति ॥ (कै)

विपर्य्ययस्यापीति। (कै)

सत्प्रतिपक्षसंभवादित्यर्थः। एवं चानेकद्रव्यगतिका जातिरभ्युपगन्तुमेव न शक्यते इति भावः॥ ननु जातेर्नित्यत्वात् कथं नाशादि किञ्चैकनाशेऽपि व्यक्त्यन्तरेणाभिव्यक्तजात्याश्चाग्रचरेद्वेत्यत आह

अभिव्यंजकेति। (कै)

व्यासज्यवृत्तिर्जातिः सर्वव्यक्तिभिः सम्भूयाभिव्यज्यत इति मते इदं दूषणम्। जातेर्नाशश्च तिरोभाव एवेत्यर्थः। एवं "श्वा नामलोके न [१]संचरे"दिति भाष्यस्य व्यक्त्यन्तरे स्वप्रत्ययविषयो न संचरेत्। न स्यादित्यर्थः। एवं विनाशपदं व्यक्तिवृत्त्यन्वयपरम्। तथेति परामृष्टमाकृतौ तिरोधानपरमित्ययुक्तमत आह

यद्वेति। (कै)

आविद्यको धर्मविशेषो जातिरिति भावः॥

१ "प्रचरेत्" इत्यपि पाठः॥ "संचरेद्" इत्यनेन नागेशभट्टीयभाष्यपुस्तके एवंविधपाठोऽस्तीत्यनुमीयते॥

अष्टाकपालं निर्वपेत्। एकं निरूप्य द्वितीयस्तृतीयश्च निरूप्यते। यदि च द्व्यर्थं पदार्थः स्यादेकं निरूप्य द्वितीयस्य तृतीयस्य च निर्वपणं न प्रकल्पेत॥

भवति। तस्माद्द्व्यर्थमेव शब्देनोच्यते इति न्याय्यम्॥ न चैकमिति। भा। न हेतुरहितेनादित्यदृष्टान्तेन साध्यसिद्धिर्भवति देवदत्तदृष्टान्तेन विपर्य्यय-

तावन्न व्याकरणे आश्रीयते। दाशान् इत्यादौ नत्वाभावप्रसङ्गात्। तटस्तटीतटमित्यादौ यथायथं लिङ्गात् त्रितयनिबन्धनकार्य्याणामसिद्धि

आतेनेति । (कै)

व्यासज्यसर्वाश्रयशक्तिगोत्वं सर्वाश्रयज्ञानैरभिव्यङ्ग्यम् अन्यथा गोत्वज्ञानमेव न स्यादित्यर्थः ॥ अस्तु तर्हि तत्प्रत्यक्षत्वाय तदाश्रय-सर्वस्य प्रत्यक्षत्वमत आह भाष्ये

अनवकाशमिति । (भा)

अर्थान्तरप्रत्ययावकाशरहितं गोभूतं गोत्वप्रत्यक्षाय गोरूपं वस्तु सर्वं प्रत्यक्षं स्यात् । गोव्यक्तीनामनन्तत्वादनवकाशत्वमित्यर्थः । न विद्यते अवकाशो यस्मादिति बहुव्रीहिरिति तात्पर्यम् । अत्र पक्षेऽध्याहारक्लेशात् पक्षान्तरमाह

अथवेति ॥ (कै)

नायातीति । (कै)

उत्पन्नगवि व्यक्त्यन्तरादायातीति न शक्यं वक्तुम् । तस्या निःक्रियत्वात् ॥ "न याती"ति पाठे उत्पन्नव्यक्तिं व्यक्त्यन्तरादागत्य प्राप्नोतीत्यर्थः ॥

न च तत्रासीत इति । (कै)

प्रागाश्रयाभावादित्यर्थः ॥ तत्रैव हेतुमाह

---

कः पुनरेतयोर्जाति चोदकयोर्विशेषः । एकानिर्देशेनापराभिनिर्वर्त्तेन ॥ द्रव्याभिधानं व्याडिः । वा ॥ द्रव्याभिधानं व्याडिराचार्यो न्याय्यं मन्यते ।

---

स्यापि साधनात् । स्था म्नत इति । भा । अभिव्यञ्जकविनाशे जातेस्तिरो भावात् सिद्धान्तरे स्वेति प्रत्ययो न स्यात् । घटप्रत्यय इवैकापाय इत्यर्थः ।

---

प्रसङ्गाच्च किन्तु पारिभाषिकमेव लिङ्गत्रयम् । तच्च केवलान्वयि । अयमर्थः, इयं व्यक्तिः, इदं वस्तु, इति शब्दानां सर्वत्राप्रतिबद्धप्रसरत्वात् । तच्च

अस्ति पश्चादिति। (कै)

यतः पश्चादेवास्ति अतः पूर्वं नासीदित्यर्थः। एतेन मा चासीत् मा च भूत् तच गोत्वमिति परास्तम्॥ ननु सक्रियत्वमङ्गी-कृत्यांशेनागमनमस्त्वत आह

न चांशवदिति। (कै)

निरवयवत्वेनांशाभावादित्यर्थः॥ ननु पूर्वमाधारं त्यक्त्वैवा-यातीत्यत आह

जहातीति। (कै)

पूर्वत्रापि प्रतीतेरिति भावः॥ तस्मात् सर्वगैकेति वाच्यम्। ततश्च कयाचिद्व्यक्त्यैव व्यक्ता सा अभेदात् सर्वगेति वाच्यम्। ततश्च सर्वत्र दृश्येत तदाह

सर्वेष्विति। (कै)

अत्र पक्षे गोभूतमभिव्यक्तगोत्वेन व्याप्तं तुल्यव्यक्तित्वेन आत्य-न्तरावकाशरहितं सर्वं स्यादिति भाष्यार्थः। जातिसंकरप्रसङ्गश्च इत्यपि बोध्यम्॥

---

न्यथमभिधीयत इति॥ तथा च लिङ्गवचनसिद्धिः। वा॥ एवं च कृत्वा लिङ्गवचनानि सिद्धानि भवन्ति। ब्राह्मणी ब्राह्मण्यः ब्राह्मणौ ब्राह्मणा इति।

---

यदाश्रयापाये आश्रितस्याप्यपायः अवयवापाये अवयविन इवेति जातेर्वि-नाशप्रसङ्ग इत्यर्थः॥ गोर्नात इति। भा। जातेन गोपिण्डेन गोत्वमभि-व्यक्तं तच्च सर्वाश्रयवर्तीति एकगोपिण्डप्रत्यक्षत्वे सर्वगोपिण्डप्रत्यक्षत्वप्रसङ्गः॥

---

कश्चिच्छब्दः एकस्मिन्नेव लिङ्गे प्रयुक्तः कश्चित्तु द्वयोः कश्चित् त्रिष्विति लिङ्गानुशासनादिभ्यो निर्णेयम्। कुमारब्राह्मणादिशब्दात्तु लौकिकपुंस्त्व-

न ह्यौति । (कै)

एवं च तत्तच्छब्दप्रतिपाद्ये एकस्मिन् विरुद्धधर्मोपपत्तेरभावाद्द्रव्यमेव पदार्थ इति भावः ॥ भाष्ये गौश्च गौश्च इत्यनेनाभिप्रेतवैरूप्यमुपपादयति ।

भेदेति । (कै)

एवं खण्डो गौर्मुण्डो गौरिति च न स्यादिति भावः ॥

प्रत्यभिज्ञाप्रत्ययः । (कै)

तद्विषयप्रत्ययः ॥ भाष्ये

अस्ति च वैरूप्यमिति (भा)

वाक्यस्थ च शब्दं व्याचष्टे तथा च

विग्रह इति । (भा)

एकार्थत्वे पर्य्यायाणामिव सहप्रयोगो न स्यादिति भावः ॥

भाष्ये

व्यर्थेष्विति । (भा)

विजातीयानेकार्थसरूपशब्देष्वित्यर्थः ॥

---

चोदनासु च तस्यारम्भात् । वा । चोदनासु च तस्यारम्भात् मन्यामहे द्रव्यमभिधीयत इति । गौरनुबन्ध्योऽजोऽग्नीषोमीय इति । आकृतौ

---

अनवकाशमिति । भा । पदार्थान्तरप्रत्ययस्यावकाशाभावात् । अथव सर्ववस्तु व्यापि गोत्वमेवेत्यथम् । अन्यथा—

नायाति न च तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पूर्वं नाधारमहो व्यसन सन्ततिः ॥

---

विशिष्टे शास्त्रीये पुंस्त्वे शास्त्राः लौकिकस्त्रीत्वविशिष्टे च शास्त्रीयस्त्रीत्वे । कथ

मुक्तसंशयमिति । (भा)

एकशेषाङ्गीकरणमिति शेषः ॥ जात्यभावो व्याडिमते उक्तस्तं निरस्यति

आकृतिसद्भाव इति ॥ (कै)

"अथवा" इत्यादिना व्याख्यातं सर्वगोभूतमित्यादिदोषं परिहरति

सर्वगतत्वेऽपीति । (कै)

संकरोऽपि न । परस्परपरिहारेण भिन्नवस्तुनिष्ठानामेवैकत्र-स्थितेः संकरत्वात् न स गोत्वादीनामिति भावः ॥ आद्य व्याख्या-रीत्या दोषस्तु जातेः प्रत्येकं परिसमाप्त्यङ्गीकारेण सूद्धरः । एकैक-व्यक्तिव्यङ्ग्यत्वाच्च न विनाशेत्यादि दोषः ॥ ननु "सर्वामिति" (कै) यथात्मनां व्यापकत्वेऽपि क्वचित् शरीरे कश्चिदेवात्मा स्फुरति न तु सर्वः सर्वत्र तद्वदित्यर्थः ॥

एकार्थसमवायेति । (कै)

तेन च निमित्तेन जातौ लिङ्गसंख्यारोप इत्यर्थः ॥ भाष्ये

---

चोदितायां द्रव्य आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्ते ॥ न चैक-मनेकाधिकरणस्थं युगपत् । वा ॥ न खल्वप्येकमनेकाधिकरणस्थं युगपदुप-

---

इति दोषापत्तिः । ततश्च । व्यक्तौ चैकत्र सा व्यक्त्याऽभेदात् सर्वत्र सा यदि जातिर्दृश्येत सर्वत्रेति सर्वेषु पदार्थेषु गोप्रत्ययप्रसङ्गः ॥ नास्ति च वैरूप्यमिति । भा । तस्माद् द्रव्यमेवास्तु न तु सामान्यं न ह्येकस्य भेदा-

---

मन्यथा कुमारी कुमार इत्यादयः प्रयोगाव्यवतिष्ठेरन् । करेणुरिभ्यां स्त्रीनेभ इत्यमरस्याप्ययमेवार्थः ॥ नन्वेवं पशुनेति पुंस्त्वं विवक्षितमिति मीमांसको-

गुणस्येति । (भा)

जातावेकवचनम् ॥

अनित्या इति । (भा)

अनियता इत्यर्थः ॥ अपायित्वोपायित्वाभ्यामनियतत्वमेव भाष्ये दर्शितम् ॥

बहुवचनवदिति । (कै)

आश्रयगतसंख्यावत् आश्रयबोधे इष्टानेकशब्दत्वमपि प्राप्नोतीत्यभिमानः ॥

जातिर्व्यपदिश्यत इति (कै

यव इत्येक वचनेन तत्र जातिप्राधान्यावगमादिति भावः । एवं चारोपितद्वित्वादिना न प्रतिबन्धान्यादीति तात्पर्य्यम् ॥

अभ्युपगममिति । (कै)

गौण्युत्तरासंख्या पूर्वां संख्यां बाधत इति भावः ॥

---

लभ्यते । न ह्येको देवदत्तो युगपत् स्रुघ्ने भवति मथुरायां च ॥ विनाशे प्रादुर्भावे च सर्वं तथा स्यात् । वा ॥ किम् । विनश्येच प्रादुःष्याच । श्वा ह्रत इति श्वा गामलोके न प्रचरेत् । गौर्जात इति सर्वं गोभूतमनवकाशं

---

भेदौ विरुद्धौ उपपद्येते इत्यर्थः । एकार्थक्रियाकारित्वादिर्निमित्तत्तु प्रत्यभिज्ञाप्रत्ययः ॥ गौश्चेति । भा । भेदाधिष्ठानः समुच्चयः । सामान्यस्यैकत्वाभिधेयत्वयोर्न स्यादित्यर्थः ॥ आकृतावपीति । भा । यदर्थं आकृति-

---

द्दोषः कथं योज्यः । पारिभाषिकस्याव्यावर्त्तकतया तद्विवक्षाया न्तरत्वात् । लौकिकस्य तु पशुशब्दादप्रतीतेरिति चेत् । सत्यम् । "ग्राम्य

आविष्टलिङ्गेति। (कै)

स्वाश्रयानेकलिङ्गसत्त्वेऽपि स्वयं किंचिदेकमेवोपादत्ते तथा चानेकलिङ्गत्वासिद्धिरिति भावः॥ उक्तमेवार्थं दृष्टान्तेनाह

ततश्चेति। (कै)

न चैवं लिङ्गव्यासिद्धिः कुतः ब्राह्मणीशब्दवाच्यया जात्या आश्रयगतं स्त्रीत्वमेवोपादीयते ब्राह्मणशब्दवाच्यया पुंस्त्वमेवेति व्यवस्था सम्भवादित्वाच्यं ब्राह्मणीपदार्थः। इयं ब्राह्मणव्यक्तिः। इदं ब्राह्मणवस्तु ब्राह्मणीदारा इत्यादिव्यवहारानुपपत्तेरित्याशयात्॥

सिद्धान्तत्वादीति। (कै)

आकृतिवादीत्यर्थः॥

स्तनकेशादीति। (कै)

केशो भगम्॥

लिङ्गान्तरेणेति। (कै)

---

स्यात्॥ अस्ति च वैरूप्यम्। वा॥ अस्ति खल्वपि वैरूप्यम्। गौश्च गौश्च खण्डो मुण्ड इति॥ तथा च विग्रहः। वा॥ एवं च कृत्वा विग्रह उपपन्नो भवति। गौश्च गौश्चेति॥ अर्थेषु च मुक्तसंशयम्। वा॥ अर्थेषु च

---

पक्षपरिग्रहः तदेव न सिध्यति न हि प्रकटाद्यदेवमाद्यादिष्वेकाकृति-सद्भावः। इदानीमाकृतिवादीदोषान् परिहर्तुमाह लिङ्गेति। भा। आकृतिः सद्भावः पूर्वमेव। प्रत्यक्षानुमानागमप्रवृत्तिभिः प्रतिपादितः।

---

वा.मनववर्णात्" (पूर्वमीमांसासू-३१। अध्या-६। पा ८। अधिक-६)

ब्राह्मणी दारा इत्यादौ द्रव्यदाराजातेर्लिङ्गान्तरेण योगो न स्यात् तटस्तटीत्यादौ च कस्यापि लिङ्गस्य योगो न स्यादिति भावः। शब्दविशेषापेक्षया तु जातेराविष्टलिङ्गत्वोक्तिरिति तात्पर्य्यम् ॥ भाष्ये

कृतान्तः। (भा)

सिद्धान्तः ॥

किमिति। (कै)

संस्त्यानप्रसवशब्दयोः कोऽर्थ इति प्रश्नः॥ उत्तरं संस्त्यानेऽभिधेये स्त्यायतेर्ड्रट्प्रत्ययान्तस्त्रीशब्द (उणादिसू ६०५) इत्यर्थः। सूतेः सप्सकारस्य पकार इत्यर्थः। प्रसवेऽभिधेये पुमानितिशब्दः। गर्भः शुक्रं स्त्यायति शोणितेन सङ्घीभवतीत्यर्थः॥ सूते शुक्रं त्यजति योनिरूपे आधारे। स्त्यानमपचयः। प्रवृत्तिः वृद्धिः॥

शब्देत्यादि। (कै)

---

मुक्तसंशयं भवति। आकृतावपि पदार्थे एकशेषो वक्तव्यः। अक्षाः पादाः माषा इति॥ लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात्। वा॥ लिङ्गवचनानि सिद्धानि भवन्ति। कुतः। गुणस्यानित्यत्वात्। अनित्या गुणा अपायिन

---

सर्वगतत्वेऽपि पदार्थानां विचित्रशक्तियोगात्॥ कश्चित् पदार्थः कांचिदेवाकृतिमभिव्यनक्ति न तु सर्वां सर्वः। गुणाश्चात्र द्वित्वस्त्रीत्वादयो विवक्षिताः तेषामाकृतेरेकार्थसमवायलक्षणः सम्बन्ध इत्याकृतावपि पदार्थे लिङ्गसंख्या-

---

इति षष्ठ्यन्ताधिकरणन्यायेन पुंस्त्वस्य नियमो बोध्यः। छागशब्दस्य लौकिकपुंस्त्वविशिष्टपारिभाषिके शक्तत्वादिति दिक्। तच्च जातिश्चयमित्येके।

इदमुपलक्षणं सत्त्वादिकार्य्यमात्रस्येति बोध्यम् ॥ उपलक्षणत्वं ध्वनयन्नुक्तयोर्व्याप्तिमाह

सर्वाश्चेति ॥ (भा)

मूर्त्तयः। (भा)

पदार्थाः ॥

एवमात्मिका (भा)

इत्यस्य विवरणं "संस्थाने"त्यादि ॥ "गन्धवत्य" (भा) इत्यन्तं पृथिव्यपेक्षयाप्सु अल्प अप् पृथिवी भा तेजसि अल्पे इत्यल्पीयांसः इत्यच इत्युपलक्षणं वायौ रूपाभावात्। आकाशे स्पर्शस्याऽप्यभावाच्च। वस्तुतः तेजोवद् (अ। इ) रूपाणां सर्वमूर्त्तीनां त्रिवृत्करणमात्राभिप्रायेणेदमुक्तम्। वाय्वाकाशशब्दवाच्ययोः लिङ्गव्यवहारस्तु ईश्वर इव स्वकार्य्यतेजो (वस्न। इ) वद्गतोपचयारोपेणेति बोध्यम् ॥

प्रवृत्तिः खल्वपीति। (भा)

परिणाम इत्यर्थः ॥ प्रतिक्षणपरिणामित्वाद् वस्तूनां

---

उपाधिनश्च। किं य एते शुक्लादयः। नेत्याह। स्त्रीपुंनपुंसकानि सत्त्वगुणा एकत्वद्वित्वबहुत्वानि च। कदाचिदाकृतिरेकत्वेन युज्यते कदाचिद्-

---

लिङ्गिरित्यर्थः॥ अनित्या इति। भा। कदाचित् स्त्रीत्वयुक्तेन लिङ्गेनाकृतिर्व्यज्यते कदाचित् पुंस्त्वयुक्तेन कदाचिदेकाधारस्था प्रतिपाद्यते कदाचिदनेकाधारस्थेत्यर्थः॥ किं य एत इति। भा। ते हि गुणत्वेन प्रसिद्धा

---

उक्तं च हरिणा,—

"तिस्रो जातय एवैताः केषांचित्समवस्थिताः।
अविरुद्धा विरुद्धाभिर्गोमनुष्यादिजातिभिः" इति ॥

न हीति । (भा)

अत्र "अवतिष्ठते" इत्यनेनान्वयः। किन्तु परिणमन्त एवेति शेषः॥

तथोभयमिति । (भा)

द्रव्यपर्यायरूपमित्यर्थः॥

सर्वत्रेति । (भा)

पदार्थ इत्यर्थः। सर्वदा इत्यपि बोध्यम्॥ कैयटे

गुणानामिति । (कै)

शब्दादीनामित्युपलक्षणं सत्त्वकार्यमात्रस्य अन्यथा शब्दे लिङ्ग व्यवहारो न स्यात्॥ तासां लिङ्गत्वे प्रमाणं दर्शयति

शब्दैकेति । (कै)

शब्दजन्यबोधविषया इत्यर्थः॥ अप्रवृत्तिधर्मत्वेऽपि स्वतो लिङ्ग-रहितत्वेऽपि

अन्यप्रवृत्त्यनुयायित्वादिति । (कै)

परिणामवदन्यदात्माध्यासेन तत्परिणामानुयायित्वादित्यर्थः।

---

हित्वेन कदाचिद् बहुत्वेन कदाचित् स्त्रीत्वेन कदाचित् पुंस्त्वेन कदाचिन्न-पुंसकत्वेन। भवेल्लिङ्गपरिहार उपपन्नो वचनपरिहारस्तु नोपपद्यते। यदि हि कदाचिदाकृतिरेकत्वेन युज्यते कदाचिद्द्वित्वेन कदाचिद्बहुत्वे-

---

न च तदनित्यत्वं लिङ्गवचनसिद्धौ हेतुरुपपद्यत इति प्रश्नः॥ प्रकरणादर्थं-निश्चय इत्याह। नेत्याहेति। भा॥ वचनपरिहारस्त्विति। भा॥ लिङ्ग-परिहारे न किंचिद् दुष्यति वचनपरिहारे त्वभिधीयमाने एकाकृतिरिति

---

भाष्ये तु "स्त्रियाम्" ( ४ । १ । ३ ) इति सूत्रे प्रकारान्तरमुक्तम्॥

एवं च प्रकृतिपरिणामविशेषजातेः खत एव "लिङ्गयोग" इति तात्पर्य्यम् ॥ भाष्ये

कथं तस्येति। (भा)

असंकरेणेति शेषः ॥ ननु शब्दनित्यतायां वाचनिकानीत्ययुक्तमत आह

संकीर्णानीति। (कै)

गोदौ पञ्चाला इत्यादावेकत्वापि द्विवचनादिदर्शनेन सार्थकमिति भावः ॥

व्याचष्टे इतीति। (कै)

"द्व्येकयोरि" (१। ४। २२) त्यादिसूत्राणीति भावः ॥ अभिधेयत्वेऽप्युपसर्जनत्वात् कथं तत्कृत उपकारोऽत आह

तच यथेति ॥ (कै)

---

नैकाकृतिरिति प्रतिज्ञा हीयेत यचास्य पक्षस्योपादाने प्रयोजनमुक्तमेकशेषो न वक्तव्य इति स चेदानीं वक्तव्यो भवति। एवं तर्हि लिङ्गवचनसिद्धिर्गुणविवक्षानित्यत्वात्। लिङ्गवचनानि सिद्धानि भवन्ति। कुतः। गुणविवक्षाया अनित्यत्वात्। अनित्या गुणविवक्षा। कदाचिदाकृतिरेकत्वेन

---

प्रतिज्ञाहानिः द्वित्वबहुत्वसम्बन्धस्याप्यभ्युपगमात् द्विवचनबहुवचनवदनेकशब्दत्वमपि प्राप्नोतीत्येकशेषोऽपि वक्तव्य इत्यर्थः ॥ गुणविवक्षानित्यत्वादिति। भा। खत आकृतेरेकत्वं द्रव्यगतद्वित्वबहुत्वविवक्षायां तु द्विवचनबहुवचने भवतः। आश्रयधर्मैराश्रितानां व्यपदेशः। यथा संपन्नो यवो

---

"संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।
संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः स प्रसवे पुमान्" ॥

भाष्ये

द्रव्यं गुणभूतमिति । (भा)

अत्रोपपत्तिरुक्ता [1]"जात्याख्यायामि"ति सूत्रे ॥

साधनसंख्याक्षत इति । (कै)

साधनसंख्यारोप इत्यर्थः ॥

इत्यदोष इति । (कै)

एवं च लिङ्गयोगः क्षत एव । संख्यायोगस्त्वारोपेण । [2]एका आकृतिरिति प्रतिज्ञा चानारोपितसंख्याभिप्रायाणामप्येकशेषारम्भः । अनेकशब्दप्रयोगे मानाभावादिति तात्पर्य्यम् ॥ अत्र भाष्ये द्रव्य-

१ अ १ । पा २ । सू ५८ ॥

२ एकाकृतिरिति प्रतिज्ञा । एका आकृतिरिति च प्रतिज्ञा । इति पाठोऽपि दृश्यते भाष्ये ॥

विवक्षिता भवति कदाचिद्द्वित्वेन कदाचिद्बहुत्वेन कदाचित् स्त्रीत्वेन कदाचित् पुंस्त्वेन कदाचिन्नपुंसकत्वेन ॥ भवेल्लिङ्गपरिहार उपपन्नो वचनपरिहारस्तु नोपपद्यते । यदि कदाचिदाकृतिरेकत्वेन विवक्षिता भवति कदाचिद्द्वित्वेन कदाचिद्बहुत्वेनैकाकृतिरिति प्रतिज्ञा हीयेत यथास्य पक्ष-

विनष्टो यव इति संपत्तिविनाशाभ्यां द्रव्यगताभ्यां जातिरुपदिश्यते तथा लिङ्गसंख्याभ्यामपीत्यर्थः ॥ भवेदिति । भा । अभ्युपगमविरोधाभावात् । वचनपरिहारस्त्वभ्युपगमं विरुणद्धि द्वित्वबहुत्वयोगेऽभ्युपगतैकत्वहानादनेकशब्दत्वप्रसङ्गाच्चेत्यर्थः ॥ लिङ्गपरिहारस्तावदिति । भा । "विशेषणानां चा-

"उभयोरन्तरं यच्च तदभावे नपुंसकम्" ।

इति ॥ अयमर्थः । संस्त्यानं स्त्री । सत्त्वरजस्तमोरूपाणां गुणानाम-

पदार्थवादे आकृतेर्विशेषणत्वोक्त्या [1]तज्जात्यानुमतौ जातानेकव्यक्ति-बोधस्यैकस्मादेव शब्दात् संभवेन नानाशब्दप्रयोगाप्राप्त्या तत्पक्षे-ऽेकशेषो न कार्य्य इति सूचितम् ॥

[2]जाति वादेति।

(जातिवादे। इ) व्यक्तिद्रव्यवादे जातिः शक्यतावच्छेदिकेति च सूचितम् ॥ ननु "गुणवचनानाम्" इत्यादिवचनातन्त्राः (तु। इ) तथा इह तु अजातिरिति निषेधात् कथं तत्प्रवृत्तिरत आह

जातितद्वतोरिति। (कै)

न तत्र तद्वचनप्राप्तिः। अत एव "गुणवचनवत्" इति भाष्ये उक्तमिति भावः॥ यद्यपि जातेराश्रयतो न लिङ्गादीति "विशेषणानां चे" (१। २। ५२) त्यत्रोक्तं तथापि विशेष्यगतलिङ्गादिनिषेधः स:

---

१ तज्जात्यनुमतौ। क ॥ २ "जातिवादेति" इति नास्ति कैरटादौ ॥

---

स्योपादाने प्रयोजनमुक्तमेकशेषो न वक्तव्य इति स चेदानीं वक्तव्यः भवति ॥ लिङ्गपरिहारस्यापि नोपपद्यते। किं कारणम्। आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्त्तते उत्पत्तिप्रभृत्या विनाशात्तल्लिङ्गं न जहाति। तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यं कश्चित् स्वकृतान्त आश्रेयः। कोऽसौ स्वकृतान्तः।

---

जातेः" (१। २। ५२) इत्यत्रोक्तम् "आविष्टलिङ्गा जातिः" इति ॥ तत-श्चैकमेवाश्रयगतं लिङ्गमुपादत्ते सर्वदा जातिः यथा ग्राम्यपशुजातयः स्त्रीत्वमेवोपाददते गाव इमा इति अन्यास्तु पुंस्त्वमेव ब्राह्मणा इमे इति

---

प्रत्ययः। प्रसवो गुणानामुपचयः। स एव पुमान्। सूतेर्धातोः सप्तकारस्य पकारादेश इत्यर्थः। सूङो डुम् सुम्निति माधवः। मत्तूक्ष्मत्वदर्शने जातेर्ल-

तथाश्रयपदेन विशेष्यग्रहणात् इहत्वाश्रयपदेनाधारो गृह्यत इति न विरोध इति भावः। अत्र चाभेद एव बीजं यो यदभेदमापन्नः स स्वाभिन्नाश्रयगतलिङ्गवचनादिग्राहीति नियमात् । इयांस्तु विशेषः शुक्लादिशब्दवाच्यगुणानां गुणिना भेदाभेदविवक्षा (चे । इ । क) शब्दवाच्यजातेस्त्वभेदविवक्षैवेति ॥ परे तु तयोरभेदमादाय ग्रन्थयोजने तदभेदादेवारम्भणादीन्यपि तत्र भविष्यन्तीत्यधिकरणगतिरित्युत्तरग्रन्थानुत्थानमतो गुणवचनानां विशेष्यगतलिङ्गादिग्राहित्ववज्जातेराश्रयगतलिङ्गादिग्राहित्वं स्वभावादिति एतद् भाष्यार्थमाहुः ॥ भाष्ये

संस्त्यानप्रसवौ लिङ्गम् ।

संस्त्यानप्रसवौ लिङ्गमास्थेयौ । किमिदं संस्त्यानप्रसवाविति ।

संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप्प्रसवे पुमान् ॥

ननु च लोकेऽपि स्त्यायतेरेव स्त्री सूतेश्च पुमान् । अधिकरणसाधना लोके स्त्री । स्त्यायत्यस्यां गर्भ इति । कर्तृसाधनश्च पुमान् । सूते पुमानिति। इह पुनरुभयं भावसाधनम् । स्त्यानं प्रवृत्तिश्च । कस्य पुनः स्त्यानं स्त्री प्रवृ-

---

त्येत्यर्थः ॥ तस्मादिति । भा । सिद्धान्तवादी युक्तं पक्षमाश्रयति । लौकिकमिति । भा ॥ स्तनकेशादिसम्बन्ध इत्यर्थः । तस्मिन्नाश्रीयमाने लिङ्गान्तरेण सम्बन्धो न स्यात् । तस्मात् स्वसिद्धान्तव्यवस्थाश्रीयते । गुणानां सत्त्वरजस्तमःपरिणामरूपाणां शब्दादीनां वृद्धिह्रासमध्यस्थावस्थाः शब्दैकगोचराः लिङ्गत्वेन परिगृह्यन्ते आत्मनस्त्वपरिणामित्वरूपत्वादप्रवृत्तिधर्मत्वेऽप्यन्यप्रवृत्त्यनुयायित्वाल्लिङ्गयोगः ॥ वाचनिकानीति । भा । सङ्कीर्णप्रयोगोपलम्भात् । अतश्च-

---

श्चमित्युक्तम् । यत्तु "पुंसोऽसुङ्" (७ । १ । ८९) इति सूत्रे न्यासरक्षिताभ्यां पुमातेर्मकसुन् ह्रस्वश्च इति सूत्रं पठितं तदुभयमपि भाष्याननुगुणमतो-

आकृताविति । (भा)

[1]प्रधानभूतायामित्यादि आकृतेरेव तज्जन्य बोधे प्रधानं क्रिया तु पाचे इव द्रव्ये इति भावः। शाब्दबोधे तु न वाधज्ञानं प्रतिबन्धकमिति न तदनुपपत्तिः ॥

सर्वं एवेति । (कै)

गौरानीयतामित्यादिरपीत्यर्थः ॥ भाष्ये "आरम्भणं" क्रमः ॥ "आलम्भनं" स्पर्शः ॥

आकृति सहचरिते इति । (भा)

आकृत्याश्रये इत्यर्थः ॥

इतीन्द्रवद्विषयः । (भा)

स्वभावाद् हेतुरहितदृष्टान्तेनाप्यनेकवृत्तित्वं जातेरभ्युपगम्यते इत्यर्थः ॥ नन्वनेकव्यक्तिवृत्तिसामान्यलक्षणविरुद्धमेतदत आह

१ आकृतिः प्रधानभूता । भा ॥

त्तिर्वा पुमान्। गुणानाम्। केषाम्। शब्दस्पर्शरूपरसगन्धानाम्। सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्थानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः। यत्राल्पीयांसो गुणास्तत्रावरतस्त्रयः शब्दस्पर्शौ रूपमिति। रसगन्धौ न सर्वत्र। प्रवृत्तिः खल्वपि नित्या। नहीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्य-

र्थो यथा द्रव्यपदार्थकस्य वाचनिको वचननियमः तथाकृतिवादिनोऽपि स ह्येवं व्याचष्टे एकाश्रयसम्बन्धविवक्षायामाकृतेरेकवचनं यथा पशुना यजेतेति। अनेकाश्रयसम्बन्धविवक्षायां द्विवचनबहुवचने ॥ ननु द्रव्यस्यानभिधेयत्वात् कथं तत्कृत आकृतेर्वचनोपकार इत्याह। न हीति। भा। तच्च

उपचयापचययोरभावे सति यदुभयोरन्तरसदृशं तन्नपुंसकम्। न आम्नपादिति (६। ३। ७५) निपातनादिति भावः। तथा च स्थितिमात्रं नपुंसकम्।

यथेति । (भा)

द्रव्याधीनस्थितिकत्वमाश्रितत्वं विवक्षितमित्यर्थः ॥

अन्यथापीति । (कै)

कर्णशष्कुल्यनधीनस्थितिकस्याप्याकाशस्य तदवच्छिन्नतया श्रोत्ररूपत्ववद्द्रव्यमनाश्रित्यस्यापि महा सामान्यस्येत्यस्य गवादिद्रव्यपरिच्छिन्नतया गोत्वादिरूपतेत्यर्थः ॥ "अन्यथापीति" क्वचित् पाठः । तत्र व्यक्त्यन्तरेत्यर्थः ॥

प्रत्ययः । (कै)

ज्ञानम् ॥

---

वतिष्ठते। वर्धते यावदनेन वर्धितव्यमपचयेन वा युज्यते । तच्चोभयं सर्वत्र । यद्युभयं सर्वत्र कुतो व्यवस्था । विवक्षातः । संस्त्यानविवक्षायां स्त्री प्रसवविवक्षायां पुमान् उभयोरप्यविवक्षायां नपुंसकम् । तत्र लिङ्गवचनस्तित्रिगुणविवक्षानित्यत्वादिति लिङ्गपरिहार उपपन्नः । वचनपरिहारस्तु नोपपद्यते । वचनपरिहारस्याप्युपपन्नः । इदं तावदयं प्रष्टव्यः । अथ यस्य द्रव्यं पदार्थः कथं तस्यैकवचनद्विवचनबहुवचनानि भवन्तीति । एवं स वक्ष्यति ।

---

यथा पचति पचतः पचन्तीति क्रियाप्राधान्येऽपि साधनसङ्ख्याकृतो वचनभेदः एवमाकृतिप्राधान्येऽपि द्रव्यसङ्ख्याकृत इत्यदोषः ॥ यदसाविति । भा ॥ जातितद्वतोरभेदाध्यवसायाद् द्रव्यात्मा जातिः प्रतीयमाना तद्गतलिङ्गसङ्ख्याग्राहिणीत्यर्थः ॥ चोदनासु च तस्यारम्भादिति यदुक्तं तत् परिहारार्थमाह । अधिकरणगतिरिति । भा । यथाश्रीरानीयतामित्युक्ते केवलस्याग्नेरानयनासम्भवान्नान्तरीयकत्वादचोदितमपि पात्रमानीयते एतदेवाग्नेरानयनं

---

अत एवाविर्भावतिरभावयोरपि स्थितिसामान्यविवक्षासम्भवान्नपुंसकलिङ्गसर्वनामेति सिद्धान्तः । स्त्रीपुमान्नपुंसकमिति शब्दाच्च श्रुतयादिशब्दवद्धर्मे

## अभिधानम्। (कै)

शब्दः॥

## पूर्वोक्त एवेति। (कै)

अनाश्रितत्वादि (तौष्ट एवेत्यर्थः। इ) त्येष एवेत्यर्थः॥

## भेदादिति। (कै)

नित्यमेकमनेकव्यक्तिवृत्तिसामान्यं तद्विपरीतं द्रव्यमितिभेद इत्यर्थः॥

## अनैकात्म्याद् (भा)

इत्यस्य भिन्नस्वभावत्वादित्यर्थ इति भावः॥ ननु विग्रहवत्वे इन्द्रापत्तिरत उक्तं

---

एकस्मिन्नेकवचनं द्वयोर्द्विवचनं बहुषु बहुवचनमिति। यदि तस्यापि वाचनिकानि न स्वाभाविकान्यत्रमप्येवं वक्ष्याम्येकस्मिन्नेकवचनं द्वयोर्द्विवचनं बहुषु बहुवचनमिति। न ह्याकृतिपदार्थिकस्य द्रव्यं न पदार्थो द्रव्यपदार्थिकस्य वाकृतिर्न पदार्थः। उभयोरुभयं पदार्थः कस्यचित्तु किंचित्प्रधानभूतं किंचिद्गुणभूतम्। आकृतिपदार्थिकस्याकृतिः प्रधानभूता द्रव्यं गुणभूतम्। द्रव्यपदार्थिकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता॥

---

यत्पानस्यस्य तथाकृतावारम्भणादीनि चोद्यमानानि सामर्थ्यात् साहचर्य्यात् द्रव्यमभिनिविशन्ते। सर्वं एवाकृतेः क्रियायोगोऽन्तर्भावितद्रव्याया एवेति द्रव्यद्वारकः सम्पद्यते॥ अनाश्रितत्वादिति। भा। यथा गुणानां द्रव्याधीनस्थितित्वादाश्रितत्वं नैवमाकृतेः अन्यत्रापि प्रत्ययाभिधानयोराकृतिनिमित्तयोर्भावान्नित्यत्वं तस्या इत्यर्थः॥ इतरः सम्बन्धमात्रमाश्रितत्वं मत्वा पृच्छति। किमुच्यत इति। भा॥ अनैकात्म्यादिति। भा। पूर्वोक्त

---

धर्म्मिणि वर्तन्त इत्यवधेयम्। स्वकृतान्त इति। कृतान्तौ यमसिद्धान्तौ इत्यमरः। वैयाकरणसिद्धान्ते इत्यर्थः॥

समुच्चयोपपत्त्येति। (कै)

तत्र तु सहविवक्षाभावान्न द्वन्द्व इति भावः। सहविवक्षायां तु न तथा प्रयोगोऽनभिधानादितिबोध्यम्॥ द्रव्यगतलिङ्गादिग्राहित्ववस्तुगतभेदग्राहित्वमपि तस्या इति बोध्यम्॥

भिन्नास्विति। (कै)

आश्रयभेदात् कर्मभेदाच्च इत्यर्थः॥

तदेवेति। (कै)

समवेतसमवायेनेत्यर्थः॥ आश्रयान्तरगतं पाकक्रियागतं सामान्यम् पाकत्वादिपरम्परयोपकर्त्तृत्वे दृष्टान्तमाह

यथेति। (कै)

एवं च व्याप्यादिगतसामान्यस्य परम्परया द्रव्ये सत्त्वेन तत्तद्जातिविशिष्टस्य द्रव्यस्य वाच्यत्वमितिभावः॥ न चैवं नानार्थोच्छेदः।

---

गुणवचनवद्वा। वा॥ गुणवचनवद्वा लिङ्गवचनानि भविष्यन्ति। तद्यथा। गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति। शुक्लं वस्त्रं शुक्ला शाटी शुक्लः कम्बलः शुक्लौ कम्बलौ शुक्लाः कम्बला इति। यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति। एवमिहापि यदसौ द्रव्यं श्रिताकृतिस्तस्य यल्लिङ्गं वचनं च तदाकृतेरपि भविष्यति॥ अधिकर-

---

एवार्थो विशिष्यानेन प्रतिपाद्यते नित्या आकृतिरेका सर्वगा तद्विपरीतं द्रव्यमिति भेदाद् द्रव्यविनाशेऽपि न जातेर्विनाशः। गुणानां तु द्रव्याधीनस्थित्युत्पत्तित्वादाश्रयनाशेऽवश्यं नाश इति न तैर्व्यभिचारः॥ वृक्षस्थोऽवतान इति। भा। यथा वृक्षस्योपरिशाखादिलतावतानः स्थितो न वृक्षविनाशमनुविनश्यति तथा जातिरपीत्यर्थः॥ वैरूप्यविग्रहाविति। भा। द्रव्याणां स्वगतभेदप्रतिबद्धौ वैरूप्यविग्रहावित्यर्थः। तत्र द्रव्यगतभेदोपचारादेकस्याम-

नानाजातीनां सम्बन्धघटकत्वेन भाषार्थत्वोपपत्तिः (नेः । क)।
तत्र क्रियारूपसामान्यसमनियतसाधत्वादेर्जातिरूपस्यापदार्थत्वस्य-
साधारणस्यापि शक्यतावच्छेदकत्वशक्यत्वान्यतराङ्गीकारात् सिद्ध-
मिति भाष्यार्थमन्ये सूत्रारम्भेऽपीदमावश्यकम् एकरूपेणैव सर्वार्थ-
बोधादितिभाव इति बोध्यम् ॥ नन्विदानीन्तनमाषस्य षोडशभाग-
त्वाभावात् कथं संख्यासामान्यमत आह

पुरेति । (भा)

व्यपदिश्यते त्। र् त। (कै)

---

१ नार्थत्वोपपत्तिः । ड ॥

---

तिः साहचर्य्यात् । वा ॥ आकृतावारम्भणादीनां सम्भवो नास्तीति कृत्वाकृति-
सहचरिते द्रव्य आरम्भणादीनि भविष्यन्ति ॥ न चैकमनेकाधिकरणस्थं
युगपदित्यादित्यवद्विषयः । वा ॥ न खल्वप्येकमनेकाधिकरणस्थं युगपदुपलभ्यत
इत्यादित्यवद्विषयो भविष्यति । तद्यथा । एक आदित्योऽनेकाधिकरणस्थो
युगपदुपलभ्यते ॥ विषम उपन्यासः । नैको द्रष्टानेकाधिकरणस्थमादित्यं
युगपदुपलभते ॥ एवं तर्हीन्द्रवद्विषयः । तद्यथा । एक इन्द्रोऽनेकस्मिन्

---

याकृतौ समुच्चयोपपत्त्या विग्रहो न विरुध्यते ॥ क्रियासामान्यादिति । भा ।
भिन्नासु क्रियासु अभिन्नप्रत्ययाभिधाननिमित्तं यत्सामान्यं तदेव द्रव्येष्वपि
निमित्तं भवति । यथा पाचक इत्याश्रयान्तरगतमपि हि सामान्यं समवेत
समवायाद् द्रव्य उपकरोति । यथा गौरिकादिगतं लौहित्यं संयुक्तसमवा-
यात् पटे लौहित्य प्रत्ययमादधाति । पुराकल्प इति । भा । पुराकल्पप्रसि-
द्धोऽर्थः सम्प्रतिनिमित्ताभावेऽपि तथैव व्यपदिश्यते ॥ माषसंवद्य इति । भा ।
त्र षोडशभागत्वेन माषः प्रसिद्धः तथैव कार्षापणे माषः षोडशभाग इति
षोडशभागत्वं नाम सामान्यमुपादत्ते माषशब्द इति सिद्धमेकशब्दत्वम् ॥

आरोपादिति भावः ॥ [1]माषसम्बन्धः माषः षोड्शभागफलरूपः ॥ कार्षापणे माषः ( कै ) । पञ्च गुञ्जामितः षोड्शो भागः तयोः षोड्शभागत्वेन सामान्येन सर्वेषु माषत्वव्यवहारः ॥ इदानीं लघु-गुञ्जामिते माषे षोड्शत्वमारोप्य तथा प्रयोग इति भावः ॥ ननु संख्यागतं सामान्यं संख्याशब्दप्रवृत्तावेव कारणमत आह

संख्यैवेति ॥ (कै)

तत्संख्येति । (कै)

संख्यामूलकत्वादित्यर्थः ॥ ॥अ

अभिन्नप्रत्ययः । (कै)

एकाकारप्रत्ययः ॥

---

१ माषसम्बन्धः क–भा ॥ माषशंबन्धः द:–भा ॥

---

भनुगत आकृतौ युगपत् सर्वत्र भवति । एवमाकृतिर्युगपत् सर्वत्र भविष्यति ॥ अविनाशोऽनाश्रितत्वात् । वा ॥ द्रव्यविनाशः आकृतेरविनाशः । कुतः । अनाश्रितत्वात् । अनाश्रिताकृतिर्द्रव्यम् ॥ किमुच्यते । अनाश्रितत्वादिति यदिदानीमेवोक्तमधिकरणगतिः साहचर्यादिति ॥ एवं तर्ह्यविनाशोऽनेका-त्म्यात् । द्रव्यविनाश आकृतेरविनाशः । कुतः । अनेकात्म्यात् । अनेक आ-त्माकृतेर्द्रव्यस्य च । तद्यथा । वृक्षस्थोऽवतानो वृक्षे छिन्नेऽपि न विनश्यति ॥

---

सङ्ख्यासामान्यादिति । भा । सङ्ख्यैव सामान्यमभिन्नप्रत्ययहेतुत्वात् ॥ ननु षोडशसङ्ख्यापूरणत्वं नाम यत्सामान्यं तत्सङ्ख्यामूलत्वात्सङ्ख्यासामान्यमुच्यत इत्यदोषः । अथ डित्था इति भिन्नेषु संज्ञिष्वेकाकृत्ययोगात् कथमेकशब्द-वाच्यत्वम् । उच्यते । भिन्नडित्थशब्दगतं डित्थशब्दत्वं नाम यथा शब्दे स्व-भिन्नप्रत्ययाभिधानहेतुः तथा सोऽयमिति शब्दार्थयोरभेदाध्यवसायादध्यस्त डित्थशब्देषु संज्ञिष्वपि सम्बन्धिसम्बन्धादभिन्नप्रत्ययाभिधाननिमित्तमिति

अभिधानम्। (कै)

शब्दप्रयोगः॥

परोक्षत्वेति। (कै)

इदं बुद्धिविषयतावच्छेदकावच्छिन्नत्वादीनामुपलक्षणम्॥

[1]तार्किकाः। (कै)

वैशेषिकादयः॥

निरुपाख्यत्वम्। (कै)

विशिष्टस्य निर्वक्तुमशक्यत्वं तत् समनियतो जातिविशेषोऽभावत्वमेव सर्वत्र [2]इत्यलम्॥

---

१ तैर्थिकाः। इ॥ उपलब्धकैयटे तु "तार्किकदर्शनम्" इति पाठोऽस्ति॥

२ इत्यन्ये। इ॥

---

वैरूप्यविग्रहौ द्रव्यभेदात्: वा॥ वैरूप्यविग्रहावपि द्रव्यभेदाद्भविष्यतः॥ व्यर्थेषु च सामान्यात् सिद्धम्। वा॥ विभिन्नार्थेषु च सामान्यात् सिद्धं सर्वम्। अश्नोतेरक्षः। पद्यतेः पादः। मिमीतेर्माषः। तत्र क्रियासामान्यात् सिद्धम्॥ अपरस्त्वाह। पुराकल्प एतदासीत् षोडशमाषाः कार्षापणं षोडशपणाश्च माषशंवत्सः। तत्र सङ्ख्यासामान्यात् सिद्धम्॥

---

सिद्धमेकशब्द वाच्यत्वम्। तथा तावित्येताविति परोक्षत्वप्रत्यक्षत्वादिकं सामान्यमाश्रयणीयम्। गोत्वाश्वत्वे सामान्ये इति व्यावृत्तेष्वनुवृत्तप्रत्ययहेतुसामान्यानामपि सामान्यमाश्रयितव्यम्। अथवा निःसामान्यानि सामान्यानीति तार्किकदर्शनं न वैयाकरणैर्नियोगत आश्रेयम। कार्येणानीयमाना हि तेषां पदार्था इति सामान्येष्वपि सामान्यमस्ति। अभावाश्चत्वार इत्यत्रापि निरुपाख्यत्वं सामान्यं कल्पनीयम्। तदेवं सर्वत्राकृतिसद्भावात् सिद्धमेकशब्दत्वम्॥

# [1]वृद्धो यूना तल्लक्षणश्चेदेव विशेषः। १।२।६५॥

अजवर्करादीनां वृद्धयुवसंज्ञकत्वाभावादाह

उभयेति॥ (कै)

अथवेति। (कै)

शास्त्रीयवृद्धसंज्ञकन्तु न गृह्यते व्याख्यानादिति बोध्यम्॥ सामान्यविशेषवाचिनां सहविवक्षाभावाद्द्वन्द्वाभावेन तदपवादे एकशेषस्याप्यप्राप्तेराह

अजोष्ट्रेति। (कै)

यद्यपि करभकिशोरशब्दौ शावकवचनौ तथापि भाष्यप्रामाण्यात् तरुणवचनौ बोध्यौ॥ "वर्करस्तरुणोऽजः"॥

समुच्चयाभावादिति। (कै)

सहविवक्षाभावादित्यर्थः॥

---

१ इह कस्मान्न भवति। अजस्य वर्करस्य। अश्वस्य किशोरस्य। उष्ट्रस्य करभस्येति। तल्लक्षणश्चेदेव विशेष इत्युच्यते न चात्र तल्लक्षण एव विशेषः। तल्लक्षण एव विशेषो यत् समानायामाकृतौ शब्दभेदः॥ वृद्धो गोत्रम्। अपत्यमन्तर्हितं वृद्धम् इति पूर्वाचार्यैः सूचितत्वात॥

वक्ष्यमाणम् । (कै)

यणोर्ह्रप्रकृतेरित्यादि ॥

उत्तरत्र । (कै)

१"भ्रातृपुत्रावि"त्यत्र ॥

---

# २स्त्री पुंवच्च । १ । २ । ६६ ॥

---

टाबादीति । (कै)

ङीनादीनां तु न ग्रहणं "वृद्धो यूना" (१ । २ । ६५) इत्यधिकारात् । अत्र पक्षे "पुंवद्" इति सामर्थ्यादभावातिदेशः ॥

---

१ अ १ । पा २ । सू ६८ ॥

२ इदं सर्वेष्वेव स्त्रीग्रहणेषु विचार्यते स्त्रीग्रहणे स्त्रीप्रत्ययग्रहणं वा स्यात् स्त्र्यर्थग्रहणं वा स्त्रीशब्दग्रहणं वेति । किं चातः । यदि प्रत्ययग्रहणं वा शब्दग्रहणं वा गार्गी च गार्ग्यायणी च गर्गाः केन यशब्दो न श्रूयेत । "अस्त्रियाम्" इति हि लुग् (२ । ४ । ६४) उच्यते । इह च गार्गीं च गार्ग्यायणीं च गर्गान् पश्य "तस्माच्छसो नः

---

२ इदमिति । भा । यदि स्त्रीशब्दस्य स्वरितत्वं प्रतिज्ञायते तदा स्त्र्यधिकारविहितटाबादि प्रत्ययग्रहणं ततश्चायमर्थः । पुंवत् स्त्रीप्रत्ययो न भवतीत्यभावातिदेशः क्रियते । स्वरितत्वाभावे तु शब्दग्रहणमर्थग्रहणं वा । तत्र शब्दग्रहणपक्षे स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवतीति

शब्देति । (कै)

स्त्र्यर्थवृत्तिशब्देत्यर्थः । "वृद्धे"ति विशेषणसामर्थ्यात् स्वरूपग्रहणं नेतिभावः ॥

दोष इति । (कै)

[1]"यञञोश्च" इत्यत्र [2]"अस्त्रियाम्" इत्यनुवृत्तेः ॥

पर्युदासे त्विति । (कै)

"सर्वं वाक्यं सावधारणम्" इति न्यायेन "अस्त्रियाम्" एव वर्त्तमानस्येत्यर्थात् । पर्युदासेऽपि दोष इत्यन्ये ॥

पुं बहुत्वे इति । (कै)

पुंमात्रगत बहुत्वे इत्यर्थः ॥

---

१ अ २ । पा ४ । सू ६४ ॥

२ तद्राजस्य बहुषु तेनैवास्त्रियाम् (२ । ४ । ६२) इत्यतः अस्त्रियाम् इत्यनुवर्त्तते ॥ "यञिञोश्च" (४ । १ । १०१) इत्युपलब्धविवरणपुस्तकेऽस्ति तत्तु न सम्यक् ।

---

पुंसि" (६ । १ । १०३) इति नत्वं न प्राप्नोति ॥ अथार्थग्रहणं न दोषो भवति । यथा न दोषस्तथास्तु ॥ इह कस्मान्न भवति॰ अजा च वर्करश्च । वड़वा च किशोरश्च । उष्ट्री च करभश्चेति । तल्लक्षणश्चेदेव विशेष इत्युच्यते न चात्र तल्लक्षण एव विशेषः । तल्लक्षण एव विशेषो यत् समानायामाकृतौ शब्दभेदः ॥

---

स्त्रीत्वमनिवृत्तमेव । अर्थग्रहणपक्षे तु पुमर्थातिदेशे तदर्थप्रतिबद्धानां कार्य्याणां सिद्धिः । तत्रार्थस्य प्राधान्याददुष्टत्वाच्चार्थपक्ष एवाश्रीयते ॥

# भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ।१।२।६८॥

यच्चैकेति । (कै)

समानेत्यर्थः ॥

अन्यस्त्विति । (कै)

अन्यकृतमित्यर्थः ॥

वैरूप्यमिति । (कै)

स्वार्थे ष्यञ् ॥

इत्येतद्वर्जयित्वेति । (कै)

"भ्रातृपुत्रौ" १"पितामाता" २"श्वशुरः श्वश्रा" इत्येतेषां ज्ञापक-

---

१ अ १ । पा २ । सू ७० ॥ २ अ १ । पा २ । सू ७१ ॥

---

पुमान् स्त्रिया । १ । २ । ६७॥ इह कस्मान्न भवति । हंसश्च वराटा च । कच्छपश्च डुली च । ऋष्यश्च रोहितश्चेति । तल्लक्षणश्चेदेव विशेष इत्युच्यते न चात्र तल्लक्षण एव विशेषः । तल्लक्षण एव विशेषो यत् समानायामाकृतौ शब्दभेदः ॥

---

अस्त्रियामितीति । भा । यदायं प्रसज्यप्रतिषेधः तदा दोषः । पर्युदासे तु भिन्नमायाः शब्दो निवर्त्यमानार्थाभिधायीत्यस्ति स्त्रीसदृशोऽर्थ इति लुक् सिध्यति ॥ गर्गान् पश्येति । भा । स्त्रीत्वस्यानिवृत्तत्वात् । नायं पुम् बहुत्वे शस् उत्पन्न इति नत्वं न सिध्यति ॥

त्वात् । "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इत्यत्र तदनुवृत्तेश्च "त्यदादीनि" (१ । २ । ७२) इत्यस्यैव वर्णनमुचितम् । तत्र हि सर्वग्रहणसामर्थ्यात् तन्निवृत्तिरितिभावः ॥ ननु स्त्रीगोव्यक्ति-पुंगोव्यक्तिवाचकयोर्गौश्च गौश्च इत्येकशेषानापत्तिस्तल्लक्षणविशेषाभा-वात् अत आह

पदान्तरगम्येऽपीति ॥ (कै)

तल्लक्षणविशेषे इति ॥ (कै)

स्त्रीत्वपुंस्त्वरूपविशेषे इत्यर्थः ॥

एतौ गावौ इति । (कै)

तल्लक्षण इत्यस्य तद्रूप इत्येवार्थः ॥

ऊर्ध्वम् (भा)

इत्यादेश्च प्रकृत्यतिरिक्तशब्दकृत एव चेत्तद्रूप विशेष इत्यर्थः ॥ सूत्रेऽप्येव इत्यस्य प्रकृत्यतिरिक्तकृत इत्यादिप्रकृत्यतिरिक्तकृत एव तद्रूपो विशेषश्चेदित्यन्वयः ॥ तद्रूप इत्यस्य स्त्रीत्वरूपः । स्त्रीत्वपुंस्त्व-रूप इत्यर्थः ॥ प्रकृतिस्थाच्च स्त्रीत्वाद्यर्थकप्रत्ययस्य ग्रहणमिति इति बोध्यम् ॥ न च इन्द्रेन्द्राण्यौ इत्यादावप्यस्य प्रवृत्तिः प्राप्नोति । आनुकः प्रकृत्यवयवत्वेन तत्कृतत्वाच्च स्त्रीत्वप्रतीतिरिति न दोषः । एवं हि "यशोर्ध्वम्" इति भाष्ये एवोत्थानो भवति । अथवास्ता-रस्यं च नेति । ऊर्ध्वं प्रकृतेर्विशेषश्चेत्तल्लक्षण एव इत्यन्वयेन तद्धितर-

कृतविशेषविरहरूपे विशेषाभावे तात्पर्य्याददोषः। स चेह विशेष्या-भावादस्त्येवेत्यन्ये ॥ भाष्ये

[१]असरूपाणाम् (भा)

इत्यनेन उक्तविस्तूचौ प्रत्याचष्टे ॥

गर्गापत्यत्वमिति । (कै)

गोत्रयुवसाधारणम् अपत्यत्वेनैव गोत्रादिप्रत्ययेभ्यो बोधात् युवत्वादिविशेषानादरेण गार्ग्यस्य गार्ग्यस्य इति गोत्रशब्दयोरेव सरूपैकशेषेण सिद्धमित्यर्थः ॥ नन्वेवमन्यतरस्यपुंवत्वं न प्रतीयेतेत्यत आह

आरभ्यमानेऽपीति ॥ (कै)

नार्थ इति । (कै)

[२]"वृद्धो यूना" इत्यादिनेत्यर्थः॥ ननु प्रकरणाद्यनपेक्ष्य युवत्वादिप्रतिपादनेच्छायां द्वन्द्वः स्यादत आह

द्वन्द्वोऽपीति । (कै)

सह विवक्षायां द्वयोः प्रयोगाभाव एवानभिधानादिति भावः॥ ननु स्त्र्यभिधाननिमित्तस्त्रीप्रत्यय निवृत्तये "[३]पुमान् स्त्रिया" इत्यावश्यकम् अत आह

---

१ असरूपाणां युवस्थविरस्त्रीपुंसानां विशेषस्याविवक्षितत्वात् सामान्यस्य च विवक्षितत्वात् सिद्धम् ॥

२ अ १ । पा २ । सू ६५ ॥ ३ अ १ । पा २ । सू ६७ ॥

**स्त्रीति ॥ (कै)**

इदानीं[1] "पुमान् स्त्रिया" इत्यस्य सार्थक्यं प्रकृते भाष्ये

**पुमान् स्त्रियेहेति । (भा)**

उक्तरीत्याचैकशेषस्य साधयितुमशक्यत्वादेतदर्थमेव तत्सूत्रं कस्मान्न भवतीति प्रश्नः । कृतेऽपि सूत्रेऽत्र न प्राप्नोतीत्युत्तरं तत्र प्रश्नमुपपादयति

**अस्त्यत्र प्रकृतेरिति । (कै)**

ब्राह्मणरूपायावत् सरूपास्त इत्यर्थः ॥

**विशेषः (कै)**

प्रधानत्वरूपः ॥

**एकशेषनिमित्त इति । (कै)**

सारूप्योपलक्षणमेवात्र निमित्तत्वम् ॥

**[2]लिङ्गस्याविभक्तिपरस्येति (भा)**

---

१ अ १ । पा २ । सू ६७ ।

२ "ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्य विभक्तिपरस्य विशेषवाचकत्वादनेकशेषः । वा । ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्य विभक्तिपरस्य विशेषवाचकत्वादेकशेषे न भविष्यति" इति पाठो बङ्गेषु दाक्षिणात्यभाष्यपुस्तकेषु वार्त्तिकपुस्तकेषु चास्ति ॥ "ब्राह्मणवत्सा ब्राह्मणीवत्सयोर्लिङ्गस्य अविभक्तिपरस्य विशेषवाचकत्वादनेकशेषः । वा । ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्य अविभक्तिपरस्य विशेषवाचकत्वादेकशेषो न भविष्यति" इति पाठो बहुषु मध्यदेशीयभाष्यपुस्तकेषु दृश्यते ॥

भाष्ये पाठः। "लिङ्गस्य" लिङ्गबोधकप्रत्ययस्य॥ कैयटे "ऽप्यविभक्तिपरस्ये"ति प्रतीकग्रहणं तद्भ्रनयन् भाष्ये आह

यत्र लिङ्गं विभक्तिपरमेवेति। (भा)

नात्र लिङ्गं विभक्तिपरमेवेति (भा)

च हेतोः पञ्च वृत्तित्वम्॥ अयमस्य सूत्रस्यार्थः। यत्र प्रकृत्यतिरिक्तैकशेषनिमित्तविभक्तिपरशब्दगम्य एव स्त्रीत्वरूपो विशेषस्तत्रैकशेषो विभक्तौ साम्यं च लिङ्गबोधकातिरिक्तकृतमेव सामर्थ्याद्बोध्यम्॥

स्त्रीपुंसकृत इति। (कै)

स्त्रीपुंसबोधकशब्दकृतस्तद्गम्यो विशेषः स्त्रीत्वादिरूप इत्यर्थः॥

[1]इत्वमप्यत्रेति। (कै)

सति इत्वे स्त्रीत्वप्रतीतेरित्यर्थः॥ भाष्ये "लिङ्गम्" लिङ्गबोधकः शब्दः॥

शब्दो या स्त्रीति। (भा)

सामर्थ्यात् तल्लक्षण इत्यस्य तन्निमित्तक इत्यर्थः॥ "अर्थ स्त्री" पक्षेऽपि [2]एवमेव तदर्थं मन्यते तदाह

न च तदिति॥ (कै)

नात्र यथादेशस्येति। (कै)

अर्थशब्दान्यतरस्त्रीकृत एव यत्र विशेषो नान्यकृत इत्यर्थ इति भावः॥

---

१ "इत्वमप्यस्य" इत्युपलब्धविवरणे पाठोऽस्ति॥

२ एव तदर्थं मन्यते। इ॥

**शब्दस्त्रीनिमित्तत्वेनेति ।** (कै)

स्त्रीप्रत्ययत्वेनेत्यर्थः ॥

**नार्थेति ।** (कै)

यौगपद्यग्रहणे तु उभयनिमित्तकस्य क्वाप्यभावेन सूत्रासङ्गति- रेव स्यादिति भावः ॥ भाष्ये

**शब्दार्थौ या स्त्रीति ।** (भा)

सा आश्रीयते इति शेषः ॥ नन्वेवमपि पटू इति न सिध्यति तत्राह

**[1]सद्भावेन चेति ॥** (भा)

तद्व्याचष्टे

**तद्भावभावित्वादिति ॥** (कै)

भाष्ये

**एवं च कृत्वेति ।** (भा)

अर्थस्त्रीकृत एव विशेष इति भावः ॥

**एवं तर्हीति ।** (भा)

स्त्रीरूपार्थस्य विभक्तिपरत्वं वक्तुमशक्यमिति भावः ॥

**प्रधान स्त्रीपुंसकृत इति ।** (कै)

तत्कृत एवेत्यर्थः ॥

---

१ "कथं तर्हि शब्दार्थौ या स्त्री तद्भावे न च तल्लक्षणो विशेष च इति काश्मीरस्थभाष्यपुस्तके । दाक्षिणात्यभाष्यपुस्तके इङ्गलर पुस्तके च "सद्भावेन च" इत्यस्ति ॥

# नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् । १ । २ । ६९ ॥

## नपुंसकपर्य्यायेणेति

इदं चिन्त्यम् । [1]"शुक्लानि" इत्यादौ नपुंसके प्रातिपदिकवैरूप्यात् तस्मात् अप्राप्ते विधिरयमित्येव वक्तुमुचितम् ॥

## [2]प्रधाने कार्य्यसंप्रत्ययात् (भा)

इत्यस्य कार्य्यस्यैकशेषस्यैकावस्थानरूपस्य प्रधाने नपुंसके संप्रत्ययात्तस्यैव शेष इति नार्थः । योगप्रत्याख्याने हेतुत्वानुपपत्तेरत आह

## शब्देनेति ॥ (कै)

## नपुंसकस्यैवेति । (कै)

प्रधानन्यायेनेत्यादिः । प्रधानन्यायेन नपुंसकत्वविशिष्टेनैव स्त्रीपुंसार्थस्यापि प्रतीतिरिति भावः ॥

## सा चेति । (कै)

---

१ शुक्लश्च कम्बलः शुक्ला च बृहतिका शुक्लं च वस्त्रं तदिदं शुक्लं तानीमानी शुक्लानि ॥

२ प्रधाने च कार्य्यसंप्रत्ययाच्छेषः । वा । प्रधाने कार्य्यसंप्रत्ययाच्छेषो भविष्यति । किं च प्रधानम् । नपुंसकम् । कथं पुनर्ज्ञायते नपुंसकं प्रधानमिति । एवं हि दृश्यते लोके । अनिर्ज्ञातेऽर्थे गुणसन्देहे च नपुंसकलिङ्गं प्रयुज्यते ॥

वृद्धिह्रासयोः स्थितेरपि सत्त्वादिति भावः ॥ नन्वनिर्ज्ञाते कथं प्रश्नोऽत आह

सामान्यरूपेणेति ॥ (कै)

भाष्ये

अनिर्ज्ञातेऽर्थे गुणसन्देहे चेति । (भा)

गुणसन्देहमूलकेऽनिर्ज्ञातार्थविषये प्रश्नवाक्ये इत्यर्थः ॥

शब्दैकगोचरत्वमिति । (कै)

तत्तच्छब्दमात्रबोध्योपचयादिरूपत्वमेवेत्यर्थः । ततश्च नपुंसकस्य प्रजननासमर्थस्यापि पुंस्यन्तर्भावोऽस्तीति भाव इति विवरणकृतः ॥

स्त्री वा पुमान् वा (भा)

इत्यस्य स्त्रीशब्दवाच्यं वा इत्यर्थः ॥ एतद्भाष्यस्य प्रायेणेत्यादिरित्यन्ये ॥ नन्वनेककोटिकस्यैव सन्देहस्य दृष्टत्वेनेदृक् सन्देहाकारोऽनुचितोऽत आह

यच्च दूरादिति ॥ (भा)

इत्यस्मिन्नर्थे इति । (कै)

इव शब्दो भिन्नक्रम इति भावः ॥

दृष्टान्तत्वेनेति । (कै)

स्त्रीविषयो रूपशब्दो नपुंसके स्त्रिया अन्तर्भावे दृष्टान्तत्वेनोपात्त इत्यर्थः । एवं च व्यापकत्वेन नपुंसकस्य प्राधान्यात् तद्विवक्षायां नपुंसकप्रयोगः ॥

आधिक्यादिति । (कै)

यदि विशेषस्तदा नपुंसकत्वस्त्रीत्वपुंस्त्वकृत एवेत्यर्थ इति भावः ॥ भाष्ये

[1]आकृतिवाचित्वादिति । (भा)

यदा आकृतौ स्वगतसंख्याविवक्षा तदैकवचनं यदाश्रयगत संख्यारोपस्तदापि द्विवचनादीति बोध्यम् । एतेन [2]सरूपसूत्रविषये-ऽप्येकवचनान्तत्वमनुमतं भगवतेति बोध्यम् ॥

---

# [3]पिता मात्रा । १ । २ । ७० ॥

# श्वशुरः श्वश्र्वा । १ । २ । ७१ ॥

---

भ्रात्रादीनां वैरूप्याद् भिन्नार्थत्वाच्चैकशेषाप्राप्तेः "पुमान्-

---

१ आकृतिवाचित्वादेकवचनम् । वा । आकृतिवाचित्वादेकवचनं भविष्यति । यदा द्रव्याभिधानं तदा द्विवनबहुवचने भविष्यतः ॥

२ अ १ । पा २ । सू ६४ ॥

३ । किमर्थमिदमुच्यते । न पुमान स्त्रिया ( १ । २ । ६७ ) इत्येव सिद्धम् । भ्रातृपुत्रपितृश्वशुराणां कारणाद्द्रव्ये शब्दनिवेशः । भ्रातृपुत्रपितृश्वशुराणां कारणाद्द्रव्ये शब्दनिवेशो भवति । भ्रातृपुत्रपितृ-

स्त्रिया" इत्यत्रापि [१]सरूपाणाम् इत्यनुवृत्तेः प्रश्नानुपपत्तिमाशङ्क्याह

वृत्तीति ॥ (कै)

भाष्ये

न [२]पुमान् स्त्रियेति । (भा)

सिद्धमिति । (भा)

"[३]सरूपाणाम्" इत्यपेक्षया परत्वादयमेव न्याय्य इति भावः ॥

स्वस्रादिष्वपीति । (कै)

एकापत्यत्वादेः प्रवृत्तिनिमित्तस्य सत्वात् इति भावः । एवं भ्राता च भ्रात्री च इति विग्रहे "पुमान् स्त्रिया" इत्येव सिद्धमिति तात्पर्य्यम् ॥ भाष्ये उत्तरयति

भ्रातृपुत्रे (भा)

त्यादि ॥ तद्व्याचष्टे

१ अ १ । पा २ । सू ६४ ॥ २ अ १ । पा २ । सू ६७ ॥
३ अ १ । पा २ । सू ६४ ॥

श्वशुराणां कारणाद्द्रव्ये शब्दनिवेश इति चेत्तुल्यकारणत्वात् सिद्धम् । वा । यदि तावद् विभर्त्तीति भ्राता । तथा यदि **पुनाति प्रीणातीति वा पुत्रः** दुहितरि अप्येतद्भवति । तथा यदि पाति पालयतीति वा पिता मातर्य्यप्येतद्भवति । तथा यदि आश्वाशव्यः श्वशुरः श्वश्र्वामप्येतद्भवति । **दर्शनं वै हेतुः ।** न हि स्वसरि भ्रातृशब्दो दृश्यते । **दर्शनं हेतुरिति चेत्तुल्यम् ।** वा । दर्शनं

[१]भिन्नं प्रवृत्ति निमित्तमिति । (कै)

एतदेव भाष्ये "कारण" शब्देनोक्तम् । पुंस्त्वविशिष्टमेकापत्यत्वं भ्रातृशब्दस्य स्त्रीत्वविशिष्टं स्वसृशब्दस्येत्यर्थः । तयोः सादृश्याभावात् "पुमान् स्त्रिया" ( १ । २ । ६७ ) । इत्यस्याप्राप्तिरिति भावः ॥

प्रत्याख्यानवाद्याह

इति चेत्तुल्येति ॥ (भा)

आरम्भवाद्याह

दर्शनं वै हेतुरिति ॥ (भा)

प्रत्याख्यानवाद्याह

दर्शनं हेतुरिति
चेत्तुल्यमिति । (भा)

---

१ उपलब्धकैयटपुस्तके "भिन्नं च प्रवृत्तिनिमित्तम्" इति पाठोऽस्ति ।

---

हेतुरिति चेत्तुल्यमेतद्भवति । स्वसर्यपि भ्रातृशब्दो दृश्यतां तुल्यं हि कारणम् । न वा एष लोके सम्प्रत्ययः । न हि लोके भ्रातानीयतामित्युक्ते स्वसानीयते ॥ तद्विषयं च । वा । तद्विषयं चैतद्द्रष्टव्यं भवति स्वसरि भ्रातृत्वम् । किं विषयम् । एकशेष-विषयम् ॥ युक्तं पुनर्यन्नियतविषया नाम शब्दाः स्युः । बाढं युक्तम् । अन्यत्रापि तद्विषयदर्शनात् । वा । अन्यत्रापि नियतविषयाः शब्दा

दर्शनं हेतोस्तुल्यत्वात्तत्रापि दर्शनं स्यादित्यर्थः ॥ [१]"शास्त्रारम्भेण" इति पाठः ॥

नियम्यते (कै)

उत्पाद्यते ॥ एवं च [२]भ्रातृत्वपुत्रत्वपितृत्वश्वशुरत्वादीनां [३]स्वसृदुहितृमातृश्वश्रूद्वारोपेणैकशेषविषये तत्तद्रूपेणैव स्वस्रादीनां बोध इति [४]स्वरूपसूत्रादिप्रत्याख्यानेऽपि न दोष इति तत्त्वम् ॥ एवं प्रत्याख्याता त्रिसूत्रीति दिक् ॥

---

१ एवमनारम्भेऽप्येकशेषे नित्यत्वाच्छब्दार्थस्य सम्बन्धस्य सह विवक्षायामेव भ्रातृशब्दः स्वसुरभिधायको भविष्यति । न ह्यविद्यमानसम्बन्धस्य शक्तिः शास्त्रेण नियम्यते । अनभिधानाच्च भ्रातृपुत्र शब्दयोः स्वसृदुहितृभ्यां द्वन्द्वाभावः । मातापितरौ श्वश्रूश्वशुराविति द्वन्द्व इष्यत एव ॥

२ भ्रातृपुत्रत्व — — — इति पाठोऽस्ति इ-पुस्तके ॥

३ "स्वसृदुहितृश्वश्रूद्वारोपेणैकशेषविषये" इति पाठोऽस्ति इ-पुस्तके ॥

४ अ १ । पा २ । सू ६४ ॥

---

दृश्यन्ते । तद्यथा । समानि रक्ते वर्णे गौर्लोहित इति भवत्यश्वः शोण इति । समानि च काले वर्णे गौः कृष्ण इति भवत्यश्वो हेम इति । समाने च शुक्ले वर्णे गौः श्वेत इति भवत्यश्वः कर्क इति ॥

# त्यदादीनि सर्वैर्नित्यम्। १। २। ७२॥

**द्व्याश्रय इति।** (कै)

त्यदादितद्भिन्नपक्षयोरेकशेषेण त्यदादिपक्षाश्रयणाद्द्वापि द्व्याश्रयसद्भावो बोध्यः। त्यदादीनामित्यर्थः॥

**पुंनपुंसकत इति।** (भा)

पुंनपुंसकयोरित्यर्थः। सहविवक्षितपुंनपुंसकवशेनेति भावः॥

**पुंस्त्वमिति।** (कै)

वचनं त्वभिधेयवशेन सिद्धमिति प्रसङ्गोच्चारितो वचनशब्दः। "शब्दपरेति" वार्त्तिके इति शेषः। ध्वनितं चेदं "[१]नपुंसकमनपुंसकेन" इति सूत्र तत्प्रत्याख्यानव्याख्याभ्याम् इदं वचनं त्यदादिभिः सजातीयविजातीयानां त्यदादीनां त्यदादिभिन्नानां च सह विवक्षायामेकशेषप्रवृत्तिविषयम् अक्षरस्वारस्येन तथैव लाभात्। न चैवं "गाव इमाश्चरन्ती"ति [२]उत्तरसूत्रस्थभाष्यप्रयोगे 'इमा' इत्यनुपपन्नं स्यात्। निषेधवार्त्तिके द्वन्द्वपदेनैकशेषस्यापि ग्रहणात्॥

**तल्लिङ्गस्य सिद्धत्वात्।** (कै)

---

१ अ १। पा २। सू ६९॥
२ अ १। पा २। सू ७३॥

प्रधानतन्त्रत्वाद्गुणानाम् ॥ ननु नेह गवादिवत् समान्यमर्थ इत्यत आह

वस्तुमात्रमिति । (कै)

अविवक्षितस्त्रीत्वपुंस्त्वाद्यवान्तर[1]विशेषं परोक्षत्वाद्यनुगतीकृतं वस्तुमात्रमित्यर्थः । एवं चैकेनैव तच्छब्देनोभयोः प्रतीतिः ॥

सिद्धेति । (भा)

एकशेषफलं सिद्धमित्यर्थः ॥ लिङ्गमपि लोकत एव सिद्धं तत्र तात्पर्य्यतो निर्णय इति भावः ॥

[2]सति सूत्रे इति । (कै)

"त्यदादीनि" इत्यनेनानुपूर्वीविशेषयुक्तानां निर्देशात् । असति तु वचने निर्णायकस्य विप्रतिषेधस्य न प्रवृत्तिरिति भावः । [3]एतन्मूलकमेव पठ्यते "त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते" इति "परस्य च" इति भाष्ये । परस्यैवेत्यर्थः ॥ आरम्भवादिनापि परस्योभयवाचित्वमङ्गीकार्य्यमित्यर्थः ॥

तद्देवदत्ताविति । (कै)

अवान्तरधर्मविशेषविवक्षायां तत्प्राप्तिरिति बोध्यम् ॥ भाष्ये

---

१ 'वि' इति नास्ति क पुस्तके ॥

२ उपलब्ध कैयटपुस्तके "सूत्रे सति" इत्यस्ति ॥

३ परस्य शेषं वक्ष्यामीति । परस्य चोभयवाचित्वात् । उभयवाचि परम् ॥

[1]उत्कालिताः (भा)

निष्कासिताः। पुरुषायेष्ठीत्यर्थः। विनाशितपुंस्का इत्यर्थं कश्चित्॥ तत्र उत्तरसूत्रस्थ "[2]पुंस उत्कालयितुम्" इति भाष्यासङ्गतेः॥ किमर्थं पुंसां निःकाशनमत आह

वाहाय च इति। (भा)

प्रायेण बलीवर्द्दा एव वाह्यन्ते विक्रीयन्ते च ॥

स्त्रिय एवेति। (भा)

ततश्च गोशब्दस्य स्त्रीत्वसमानाधिकरणं गोत्वं प्रवृत्तिनिमित्तं पुंस्त्वसमानाधिकरणं चेति। नानार्थो गोशब्दः तत्राद्यः प्रसिद्धः। अन्यस्तु कश्चिदेव। एवं च गोशब्दस्त्रीगवीणामेव वाचकः प्रायेण। क्वचिदेव तात्पर्य्यग्राहकवशेन पुंगवानां वाचको यथा "[3]एतान्

---

१ उपलब्ध भाष्यपुस्तके "उत्कालितपुंस्का" इति पाठोऽस्ति॥

२ कः पुनरर्हत्यग्राम्याणां पुंस उत्कालयितुं ये ग्रहीतुमशक्याः कुत एव वाहाय च विक्रयाय च ( १ । २ । ७३ )॥

३ प्रथमयोः पूर्वसवर्णः ( ६ । १ । १०२ ) इति सूत्रस्य "नकाराभावस्य तस्मादित्यनन्तरनिर्देशात्" (वा) इति वार्त्तिकव्याख्यानावसरे भगवता जगद्गुरुणा श्रीमत्पतञ्जलिनोक्तम्। "न लस्य चाभावः ( ६ । १ । १०३ )। वृक्षान् प्लक्षान्। किं कारणम्। तस्मादित्यनन्तरनिर्देशात्। तस्मादित्यनेनानन्तरो योगः प्रतिनिर्दिश्यते। इह माभूत्। एतान् गाः पश्य" अत्र बहुविधपाठो दृश्यते। एकस्मिन् भाष्यपुस्तके "एतान् गाः पश्य" इति। अपरैकस्मिन् "एतान्

गाश्चतुरो बलीवर्द्दान् पश्येति" "प्रथमयोः" ( ६ । १ । १०२ ) इति सूत्रस्थभाष्यप्रयोगे "गौर्वाहीक" इत्यादौ चेति भावः। एवं बलीवर्दसमभिव्याहारात् गोशब्दस्तदतिरिक्तपर इति कथा चिन्त्या। वाहाद्यर्थं निष्कासितपुरुषा एव गावः गोपदवाच्या॥ ननु तत्सहिता इत्यर्थो भाष्यस्य। भाष्यस्य "एतान् गा" इत्युदाहरणे "बलीवर्दान्" इति तु अवस्थाविशेषप्राप्तत्वबोधनाय इत्याहुः॥

ततश्चाचेति। (कै)

अत्रोदाहरणे पुंतात्पर्य्यग्राहकरहिते इत्यर्थः॥ भाष्यात् लोकाच्च गोशब्दव्यवहारः प्रायेण स्त्रीगवीष्वेवेति द्रष्टव्यम्॥

समुच्चय इति। (कै)

सहविवक्षेत्यर्थः॥

गतत्वादिति। (कै)

वस्तुमात्रविवक्षयेत्यर्थः॥

सामान्योपक्रमे इति। (कै)

न प्रथमत एव विशेषावगमः। तथा सति सामान्यविशेषवाचिनोरुभयोः प्रयोगवैयर्थ्यं तस्मात् सामान्योपक्रमे विशेषाभिधान-

---

गाश्चरतो बलीवर्द्दान् पश्येति" इति। अन्यस्मिन् "एतान् गाश्चतुरो बलीवर्दान् पश्येति" इति। परम् "एतान् गाश्चतुरो बलीवर्दान् पश्येति" इत्यनेन नागेशभट्टीयमहाभाष्यपुस्तके एवमासीद् इत्यनुमीयते॥

मित्यर्थः ॥ ननु [1]वाक्यं विशेषणविशेष्यविषयं [2]द्वन्द्वस्तूभयपदार्थ-प्रधानविषय इति कथमेतदत आह

---

१ आख्यातं साव्ययकारकविशेषणं वाक्यम् । वा । आख्यातं साव्ययं सकारकं सकारकविशेषणं वाक्यसंज्ञं भवतीति वक्तव्यम् ॥ साव्ययम् । उच्चैः पठति । नीचैः पठति ॥ सकारकम् । ओदनं पचति ॥ सकारक-विशेषणम् । ओदनं मृदुविशदं पचति ॥ सक्रियाविशेषणं चेति वक्तव्यम् । सुष्ठु पचति । दुष्ठु पचति ॥ अपर आह । आख्यातं सविशेषणमित्येव । सर्वाणि ह्येतानि क्रियाविशेषणानि ॥ एकतिङ् । वा । एकतिङ्वाक्यसंज्ञं भवतीति वक्तव्यम् । ब्रूहि ब्रूहि । २ । १ । १ ॥

"संक्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली" अग्निपुराणम् । अ – ३३६ । श्लो – ६ ॥

२ इदं तर्हि प्रयोजनं द्वन्द्वो माभूदिति । एतदपि नास्ति प्रयोजनम् । **सामान्यविशेषवाचिनोश्च द्वन्द्वाभावात् सिद्धम् ।** वा । सामान्यविशेषवाचिनोश्च द्वन्द्वो न भवतीति वक्तव्यम् ॥ यदि सामान्यविशेषवाचिनोर्द्वन्द्वो न भवतीत्युच्यते शूद्राभीरं गोबली-वर्दम् तृणोलपम् इति न सिध्यति । नैष दोषः । इह तावच्छूद्रा-भीरमिति । *आभीरा जात्यन्तराणि । गोबलीवर्दमिति । गाव उत्कालितपुंस्का वाहाय च विक्रयाय च । स्त्रिय एवावशिष्यन्ते । तृणोलपमिति । **अपाम् उलपम् इति नामधेयम् ॥** तर्त्तर्हि वक्तव्यम् । न वक्तव्यम् । सामान्येनोक्तत्वाद्विशेषस्य प्रयोगो न भविष्यति । सामान्येनोक्तत्वात् तस्यार्थस्य विशेषस्य प्रयोगेण न भवितव्यम् । किं कारणम् । उक्तार्थानामप्रयोग इति ॥ न तर्हीदानीमिदं भवति तं ब्राह्मणमानय गार्ग्यमिति । भवति यदा नियोगतस्तस्यैवानयनं भवति । एवं तर्हि येनैवं खल्वपि हेतुना एत-द्वाक्यं भवति तं ब्राह्मणमानय गार्ग्यमिति तेनैव हेतुना द्वन्द्वोऽपि प्राप्नोति । **तस्मात् सामान्यविशेषवाचिनोर्द्वन्द्वो न भवतीति वक्तव्यम् ॥**

---

* ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते । माहिष्योग्रौ प्रजायेते विट्-शूद्राङ्गनयोर्नृपाद् ॥

यथेति । (कै)

[1]"प्राच्यभरतेषु" इति तु सौत्रो निर्देशः । [2]"प्रमाणप्रमेये"त्यादि तु एतद्भाष्यरीत्या असाध्वेव इत्याहुः ॥

---

१ बह्वच इञः प्राच्यभरतेषु । २ । ४ । ६६ ॥

२ "अनित्योऽयं निषेधः ( "सामान्यविशेषवाचिनोश्च द्वन्द्वाभावात् सिद्धम्" इति निषेधः ) प्राच्यभरतेषु ( २ । ४ । ६६ ) इति सूत्रनिर्देशा- ल्लिङ्गात् । तेन "प्रमाणप्रमेय" इत्यादिषु द्वन्द्वः सिद्धः । एतेन "अविद्या तच्चितो योगः षडस्माकमनादयः" "मत्स्यादौ तद्विशेषयोः" इत्यादि प्रयोगा व्याख्याताः" इति दीक्षितादयः ॥ "प्राच्यभरतेषु ( २ । ४ । ६६ ) इति निर्देशात् सामान्यशब्दस्योपात्तविशेषातिरिक्तपरत्वे सइविवक्षासम्भ- वेन द्वन्द्वो भवत्येव । तेन गोबलीवर्दमित्यादि सिद्धिः" इति नागेशेनोक्तं शेखरे अत्र तु सौत्रत्वादित्युक्तं तेनैव ॥ प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्त- सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः । न्याय—अ १ । आ १ । सू १ ॥ "चार्थे द्वन्द्व- समासः इति तद्भाष्ये ॥ "सर्वपदार्थप्रधानः समासो द्वन्द्व इति किमुक्तं भवति । सर्वं एते प्रमाणादयो विज्ञेया इति । अन्यथा हि समासान्तर- परिग्रहाद्विशेषणत्वेनोपयुक्तानां प्रमाणादीनामविज्ञेयता स्यात् । यथा वचनं विग्रहः । यदेव निर्देशे वचनभेदोपादानेप्रयोजनं तदिहापि । द्रष्टव्यम्" इति न्यायवार्त्तिके ॥ अत्र तत्त्वज्ञाननिःश्रेयसयोः शास्त्रतत्त्वज्ञानयोश्च हेतु हेतुमद्भावः । प्रमाणादितत्त्वज्ञानयोर्विषयविषयिभावः । प्रमाणादिशास्त्रयोः प्रतिपाद्य प्रतिपादकभावः । शास्त्रनिःश्रेयसयोश्च प्रयोज्यप्रयोजकभावः । सम्बन्धः । तत्त्वं ज्ञायतेऽनेन इति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रम् । तथा च शास्त्रनिःश्रेयसयोरपि तत्त्वज्ञानद्वारकहेतुहेतुमद्भाव एव सम्बन्ध इति सम्प्रदायविदः ॥ अत्र च सर्वपदार्थप्रधानो द्वन्द्वः समासः । यद्यपि भेदे द्वन्द्वविधानादत्र च बहूनां पदार्थानाम् अभेदान्न द्वन्द्वसम्भवस्तथापि पदार्थ- तावच्छेदकभेदादेव द्वन्द्व इति न दोष ः ॥

# [१] ग्राम्यपशुसंघेष्वतरुणेषु स्त्री। १।२।७३॥

स्त्री शब्देनेति। (कै)

अन्यथा "[२]पुमान् स्त्रिया" इति पुंसः शेषः स्याद् इत्यर्थः॥

उभयेति। (कै)

सरूपेत्यादि॥

---

१ अयमपि योगः शक्योऽवक्तुम्। कथं गाव इमाश्चरन्ति अजा इमाश्चरन्ति। गाव उत्कालितपुंस्का वाहाय च विक्रयाय च। स्त्रिय एवावशिष्यन्ते॥ इदं तर्हि प्रयोजनं ग्राम्येष्विति वक्ष्यामीति। इह माभूत्। न्यङ्कव इमे सूकरा इम इति। कः पुनरर्हत्यग्राम्याणां पुंस उत्कालयितुं ये ग्रहीतुमशक्याः कुत एव वाहाय च विक्रयाय च॥ इदं तर्हि प्रयोजनं पशुष्विति वक्ष्यामीति। इह माभूत्। ब्राह्मणा इमे वृषला इमे। कः पुनरर्हत्यपशूनां पुंस उत्कालयितुं ये अशक्या वाहाय च विक्रयाय च॥ इदं तर्हि प्रयोजनं सङ्घेष्विति वक्ष्यामीति। इह माभूत्। एतौ गावौ चरतः। कः पुनरर्हति निर्ज्ञातेऽर्थेऽन्यथा प्रयोक्तुम्॥ इदं तर्हि प्रयोजनमतरुणेष्विति वक्ष्यामीति। इह माभूत्। उरणका इमे वर्करा इम इति। कः पुनरर्हति तरुणानां पुंस उत्कालयितुं ये अशक्या वाहाय च विक्रयाय च॥ अनेकशफेष्विति वक्तव्यम्। इह माभूत्। अश्वाश्चरन्ति। गर्दभाश्चरन्तीति॥

२ अ १। पा २। सू ६७॥

[1]वृषभस्यापीति । (कै)

सर्वेषामुत्कालनासम्भवादिति भावः ॥

[2]मिश्रत्वादिति । (कै)

तेषामुभयसाधारणजातिविशिष्ट एव शक्तिरिति भावः ॥

इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजिभट्टकृते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य द्वितीये पादे तृतीयमाह्निकम्

पादश्चायं समाप्तः ॥






---

१ यद्यपि तत्र वृषभस्यापि सम्भवः । तथापि मल्लग्रामवद् भूयस्त्वात् स्त्रीभिर्व्यपदेशो भवति ॥

२ अग्राम्यादिषु तु मिश्रत्वात् तत्रस्येति "पुमान् स्त्रिया" इति पुंसः शेषः ॥

# महाभाष्यप्रदीपोद्द्योतः।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्यनिबन्धने ॥

## भूवादयो धातवः । १ । ३ । १ ॥

कस्मान्निमित्तादिति । (कै)

फलमपि निमित्तम् । अत एव "मङ्गलार्थ" इत्युत्तरं सङ्गच्छते। तन्त्रेण कारणं प्रश्नश्च ॥ अत एव

---

कुतोऽयं वकारः । यदि तावत्संहितया निर्देशः क्रियते भ्वादय इति भवितव्यम् । अथासंहितया भूआदय इति भवितव्यम् ॥ अत उत्तरं पठति।

*भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ।

---

कुतोऽयमिति । भा । सन्ध्यभावं मत्वा कस्मान्निमित्ताद्वकार इति पृच्छति । यदि तावदिति । भा । यणादेशेनेको निवर्त्तितत्वात् ॥ अथासं-

---

क्रियावाचिनो गणपठिता धातुसंज्ञाः स्युः । धातुत्वाल्लडादयः । भवति एधते । क्रियावाचिनः किम् । "याः पश्य" इत्यादौ धातुत्वं माभूत् । सति

---

* विस्तरं तु तत्त्वचिन्तामणौ प्रत्यक्षखण्डे मङ्गलवादरहस्ये द्रष्टव्यम् ।

यदि तावदिति (भा)

भाष्योक्तो विकल्पः सङ्गच्छेते ॥ न च भ्वादय इत्युक्तेऽपि वकारस्य सत्वात् प्रश्नानुपपत्तिरत आह

यणेति । (कै)

उकारोत्तरवकारविषयः प्रश्न इति भावः ॥ अस्मात् भाष्यात् समासेऽपि संहिता विकल्प इति भ्रमं वारयति

अभ्युपगम्येति ॥ (कै)

नत्वेकस्मिनिति । (कै)

यद्यप्यत्र संहिता निमित्तेनैकपदत्वं प्रयोजकं

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

---

माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वकारमागमं प्रयुङ्क्ते । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ता यथा स्युरिति ॥ अथादिग्रहणं किमर्थम् । यदि तावत् पश्यन्ते नार्थ आदिग्रह-

---

हितयेति । भा । अभ्युपगम्य वादोऽयम् । नत्वेकस्मिन् पदेऽसंहितास्ति । संहितैकपदेति वचनात् । तस्मात् सर्वथा निर्देशोऽयं न सम्भवतीत्येवं परमेतत् ॥ भूवादीनामिति । भा । सूत्रोच्चारिते भूवादिशब्दे इत्यर्थो विवक्षितः । तत्र वाचकसम्बन्धी भूवादीनां भूवादिशब्दवाच्यानां वकार

---

हि तस्मिन् "आतो धातोः" (६ । ४ । १४० ) इत्यालोपः स्यात् । न च या प्रापणे इत्याद्यर्थनिर्देशो नियामकः । तस्यापाणिनीयत्वात् । भीमसेनादयो हि अर्थं निर्दिदिशुरिति स्मर्यते । पाणिनिस्तु भ्वेध इत्याद्यपाठीत् इति

इति श्लोके समासग्रहणेनैकपदशब्देनाखण्डपदस्यैव ग्रहणात् ॥ अत एव १"अग्रे अग्रे" इत्यादौ आष्टमिकद्वित्वे सा न नित्या किन्तु समासत्वं प्रयोजकं तथापि अनेनैकग्रेषोक्तश्लोकग्रहणान्न दोषः ॥ नचैवं भाष्यप्रामाण्योच्छेदेति आह

तस्मादिति । (कै)

तथाच तात्पर्य्यविषयाबाधान्नप्रामाण्यमिति भावः ॥ ननु

भूवादीनाम् (भा)

इत्यस्य स्वरूपपरत्वे बहुवचनानुपपत्तिः । अर्थपरत्वे प्रकृतासङ्गतिरतः पर्य्यवसितमर्थमाह

---

१ प्रकारे गुणवचनस्य ( ८ । १ । १२ ) इति सूत्रस्य "आनुपूर्व्ये" इति वार्त्तिकव्याख्यानावसरे दृष्टान्ततयोक्तं भगवता तद्यथा— "आनुपूर्व्ये । वा । आनुपूर्व्ये द्वे भवत इति वक्तव्यम् । मूले मूले स्थूलाः । अग्रेअग्रे सूक्ष्माः" ॥

---

णेन । अन्यत्रापि स्वयं पठन्नादिग्रहणं न करोति । क्वान्यत्र । "मृड मृद गुध कुषक्लिशवदवसः क्त्वा" ( १ । २ । ७ ) इति । अथ न पठ्यन्ते नतरामर्थ आदिग्रहणेन । न ह्यपठिताः शक्या आदिग्रहणेन विशेषयितुम् । एवं तर्हि सिद्धे सति यदादिग्रहणं करोति तज्ज्ञापयत्याचार्य्योऽस्ति च पाठो

---

इति व्यपदिश्यते ॥ मङ्गलार्थ इति । भा ॥ ननु निमित्ते पृष्टे प्रयोजनकथनमप्रस्तुतम् । नैष दोषः । प्रयोजनकथनेन निमित्तस्यापि कथनात् । अत एव निपातनादागमरूपोऽत्र वकारः कृतः । न चायमसाधुः । वैयाकरणभाष्यवार्त्तिकयोः स्पष्टम् । किञ्च । अभियुक्तैरपि कृतोऽर्थनिर्देशो नार्थान्तरनिवृत्तिपरः सुखमनुभवतीत्यादावधातुत्वप्रसङ्गात् । उक्तं च ।

## सूचोच्चारित इति ॥ (कै)

तल्लाभप्रकारमाह

## तथेति । (कै)

वाचकभूवादिशब्दसम्बन्धी वकारस्तद्वाच्यनिष्ठत्वेनोपपद्यत इति भावः ॥

## प्रयोजनेति । (कै)

अनिमित्तकस्यासत्प्रायतया प्रयोजनकथनानुपपत्तिरिति भावः ॥
उभयस्मिन् पृष्टे प्रयोजनमात्रकथनमसङ्गतमित्यपि बोध्यम् ॥

## न चायमिति । (कै)

सर्वलोकप्रयुक्तत्वाभावादिति भावः ॥

---

वाच्यश्च सूत्रादिति । किमेतस्य ज्ञापने प्रयोजनम् । पाठेन धातुसंज्ञेत्येतदुपपन्नं भवति ॥ पाठेन धातुसंज्ञायां समानशब्दप्रतिषेधः । वा । पाठेन धातुसंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । या इति धातुर्या इत्याबन्तः । वा इति धातुर्वा इति निपातः । नु इति धातुर्नु इति प्रत्ययश्च निपातश्च ।

---

निकाये प्रसिद्धत्वात् । तस्य च मङ्गलं प्रयोजनमित्यनेन प्रतिपादितं भवति । अपूर्वस्य हि लाभो दध्यादेर्लोके मङ्गलं सूचयति । तथेहाप्यागमो वकारो मङ्गलार्थः संपद्यते । अथवा सति वकारेऽविकृते भूशब्दे उच्चार्यमाणे महाव्याहृतिस्मरणं मङ्गलं भवतीति पारम्पर्येण वकारो मङ्गलार्थकः

---

क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः
प्रयोगतोऽनुसर्तव्या अनेकार्था हि धातवः । इति ॥

अत एव कुर्द खुर्द गुर्द गुद क्रीडायामेव इत्येवकारः । पठ्यते । ष्वञ्ज आलिङ्गने इत्यादि सूत्राण्यपीह ज्ञापकानि । तस्माद् "याः पश्य" इत्यादि

## वैयाकरणेति। (कै)

अनादिव्यवहार एव साधुत्वप्रयोजको न सर्वलोकप्रसिद्धिः। अन्यथा याज्ञिकमात्रप्रसिद्धस्फ्यादीनां व्याकरणप्रसिद्धटिघुभादीनामप्यसाधुत्वापत्तिरिति भावः॥ ननु मङ्गलं नाम धर्मः। तत्र न वकारोच्चारणं तज्जनकं मानाभावात् भ्वादिशब्देनाऽपि तत्सम्भवाच्चात आह

## अपूर्वस्य हीति। (कै)

मङ्गलजनक इति नार्थः। किन्तु सूचक इति न दोषः। निबन्धनं तु शिष्याणामप्यानुषङ्गिकमङ्गलसूचनार्थमिति भावः॥ नन्वस्य मङ्गलसूचकापूर्ववस्तुत्वं न लोकसिद्धमत आह

---

दिविति धातुर्दिविति प्रातिपदिकम्॥ किञ्च स्याद्यर्थेतेषामपि धातुसंज्ञा स्यात्। धातोः (३।१।९१) इति तव्यदादीनामुत्पत्तिः प्रसज्येत (३।१।९६)। नैष दोषः। साधने तव्यदादयो विधीयन्ते साधनं च क्रियायाः। क्रियाभावात् साधनाभावः। साधनाभावात् सत्यामपि धातुसंज्ञायां तव्यदादयो न भविष्यन्ति॥ इह तर्हि याः पश्य आतो धातोः (६।४।१४०)

---

सम्पद्यते॥ नार्थ इति। भा। भूवादय इति पठित्वा ते धातव इति वक्तव्यम्। यथा "ते तद्राजाः" (४।१।१७४) इति॥ नतरामिति। भा। सति पाठे गतार्थत्वान्न कर्त्तव्यमसति त्वसम्बन्धादित्यर्थः। अत एव प्रतिषेधप्रकर्षः। सम्बन्धाभावेत्यन्तमेवाकरणमित्यस्यार्थस्य प्रतिपत्तये निर्दिष्टः॥ एवं तर्हीति। भा। सूत्रेषु ये पठ्यन्ते ग्रह ग्रदादयः तान्

---

व्यावृत्तये क्रियावाचिन इति विशेषणं स्थितम्। गणपठिता इति किम्। हिरुक् पृथक् ऋते इत्याद्यव्ययानां शिष्ये इति भावार्थतिङन्तस्य च मा भूत्। न चैवं सौत्रेष्वव्याप्तिः। स्तम्भादीनामुदित्करणेन धात्वधिकारीय-

अथवेति ॥ (कै)

रेफान्तस्यैव महाव्याहृतित्वादाह

स्मरणमिति । (कै)

एवं च वकारलक्षणप्रश्ने इदमेव निपातनविधया लक्षणं गुरूच्चारणन्तु महाव्याहृतिस्मरणलक्षणमङ्गलार्थमित्युत्तरमिति बोध्यम् ॥ तदेतत्सर्वं भाष्ये

वकारमागमम् (भा)

इत्यनेन सूचितं वकारस्यामृतबीजत्वाद्दध्यादिवन्मङ्गलसूचकत्वमित्यन्ये ॥ ननु गणपाठेऽपि आदिग्रहणं विना कथं सर्वसङ्ग्रहोऽत आह

भूवादीति । (भा)

---

इति लोपः प्रसज्येत । नैष दोषः । अनाप इत्येवं सः (६ । ४ । १४० ) ॥ अस्य तर्हि वा शब्दस्य निपातस्याधातुरिति (१ । २ । ४५ ) प्रातिपदिकसंज्ञायाः प्रतिषेधः प्रसज्येत । अप्रातिपदिकत्वात् स्वाद्युत्पत्तिर्न स्यात् । नैष दोषः । निपातस्यानर्थकस्य प्रातिपदिकत्वं चोदितं (१ । २ । ४५ ) तत्रा-

---

समाप्य ते धातव इति वचनेन सिद्धे सतीत्यर्थः ॥ अस्ति च पाठ इति । भा । अनेनासम्बन्धत्वं परिहृतम् ॥ "वाशब्द" इत्यनेन गतार्थत्वं निराकृतम् ॥ पाठेनेति । भा । धातुपाठे ये पठितास्तेषामेव धातुसंज्ञा । तेषां च पाठो नोपलक्षणार्थः अपि तु इयत्ता प्रतिपादनार्थः तत्र यदि क्रियावाचो

---

कार्य्यविधानेन च धातुत्वानुमानात् । न चैवमपि लौकिकानां चुलुम्पादीनामसङ्ग्रहापत्तिः । आद्यन्ते यजादि समाप्त्यर्थं वृत्करणेऽपि आदीनामसमाप्तेः । धातुवृत्तिषु तथैव व्याख्यातत्वात् । "कास्यनेकाज्ग्रहणं चुलुम्पा-

एवं च भूपदस्थाने ते पदस्यावश्यकतया आदिपदमात्रविषयः प्रश्नो भाष्ये कृत इति भावः ॥

## इन्धिभवतिभ्यां च (पा)

इति भवतिमादिं मन्यते ॥

## असन्तमेवेति

अनेन सति पाठे संनिधानाविशेषाद्धातूनामिव प्रत्ययानामपि तत्पदं परामर्शकं स्यादितिज्ञापकक्लेशवारणाय स्पष्टप्रतिपत्तये आदिग्रहणं कदाचित् क्रियेतेतिनात्यन्तमकरणमितिसूचितम् ॥ ननु "एवं तर्हि सिद्धे" इति भाष्यमनुपपन्नं सूत्रपठितकतिपयानां धातुत्वसिद्धावपि सर्वेषां तत्सिद्ध्यभावादत आह

---

नर्थकग्रहणं न करिष्यते। निपातः प्रातिपदिकमित्येव ॥ इह तर्हि श्नु इति "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ( ६। ४। ७७ ) इत्युवङादेशः प्रसज्येत। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययस्योवङादेशो भवतीति यदयं तत्र श्नु ग्रहणं करोति ॥ अस्तु तर्हि दिव् शब्दस्याधातुरिति प्राति-

---

धातुरित्येतल्लक्षणं क्रियेत तर्हि आणवयति वट्ठयतीत्यादीनामपि धातुसंज्ञा स्यात्। अथ सूत्रपठितानामनन्तरं ते धातव इत्युच्येत तदा तत्रापठितानां न स्यात्। तस्मात् "भूवादय" इत्युक्तम्। तत्र सूत्रवार्त्तिकभाष्यगणेषु ये पठ्यन्ते तेऽपि सूत्रकारादिप्रामाण्याद्धातुत्वेनाश्रयणीयाः ॥ समानशब्दाना-

---

र्थम्" इति कात्यायनवचनेनाप्येतल्लभ्यते। एवं भ्वाद्यन्ते वृत्करणस्य पुषादिसमाप्त्यर्थतया दिवादीनामपरिसमाप्तेर्मंग्यतीत्यादि सिद्धिः। वस्तुतस्तु चुरादीनामन्ते "बहुलमेतन्निदर्शनम्" इतिं गणसूत्रेण सकलेष्टसिद्धिः। तद्धि धातुवृत्तिषु द्वेधा व्याख्यातम्। भ्वादिगणपठितेभ्योऽपि णिच् प्रयोगा-

सूत्रेष्विति। (कै)

पूर्वपक्षी वहिर्गणपाठं न जानात्येवेति "इन्धि भवतिभ्यां च" (१। २। ६) इति सूत्रस्थं भवतिमादिं मन्यते इति तं प्रत्याह सिद्धान्ती "यदि तावतामेव धातुत्वमिष्टं स्यात्तर्हि ते धातव इत्येव वदेत्" इत्यादिग्रहणं ज्ञापकमिति भावः। न च प्रकारवाच्या-द्यादिशब्दो दृष्ट इति कथं ज्ञापकत्वं व्यवस्थावाच्यादिशब्दस्य प्रसि-द्धतरत्वादिति भावः॥ ननु वाह्यः पाठ इत्येतावतैव सत्ताया अपि सिद्धेरस्ति पाठ इति व्यर्थमत आह

अनेनेति॥ (कै)

यथा चादिग्रहणाकरणे पाठेन संज्ञा इत्येतदुपपत्तिस्तथा दर्शयति

---

पदिकसंज्ञायाः प्रतिषेधः प्रसज्येत। अप्रातिपदिकत्वात् स्वाद्युत्पत्तिर्न स्यात्। नैष दोषः। आचार्य्यप्रवृत्तिर्ज्ञापयत्युत्पद्यन्ते दिव् शब्दात् स्वादय इति यदयं दिवः सावौत्वं शास्ति (७। १। ८४)। नैतदस्ति ज्ञापकम् अस्ति ह्यन्यदेतस्य ज्ञापने प्रयोजनम्। किम्। दिव् शब्दो यत्प्रातिपदिकं

---

मिति। भा। समानश्रुतीनामिष्टविपरीतानामक्रियावाचिनामित्यर्थः तव्यदादीनामिति। भा। यथैव दिवं पश्येति वाह्यक्रियापेक्षे कर्मणि द्वितीया भवति एवं तव्यदादयोऽपि स्युरित्यर्थः॥ साधन इति। भा अन्तरङ्गधातुवाच्यक्रियापेक्षे साधने तव्यदादयः सावकाशाः वाह्यक्रियापेक्ष

---

नुसाराज्जप इति। दशगणीपाठो दिङमात्रप्रदर्शनार्थस्तेनान्येऽपि शिष्ट प्रयुक्ता धातवः संग्राह्या इति च। स्यादेतत्। भूरादिर्येषां इति विग्र यस्मि सति भादय इति स्यात्। क्रियावाचित्वं च सूत्रामारूढमेवेति

## ये धातुपाठ इति । (कै)

यद्यपि ते इति पाठेऽपि पाठमूलैव संज्ञा तथापि पाठविशेष-मूलत्वज्ञापनं ज्ञापकफलमिति भावः ॥ ननु क्षतिप्रभृतीनां सौत्राणां धातुत्वाय भ्वादेराकृतिगणत्वमावश्यकमित्याणवयत्यादावतिप्रसङ्गोऽत आह

## तेषां चेति । (कै)

अत एव भ्वादिसमाप्तौ वृत्करणम् ॥ "बहुलमेतन्निदर्शनम्" (चुरादिगणसूत्रम्) इत्यपि यदि प्रामाणिकं तर्हि णिच एव तत् न गणपाठस्येति भावः । ध्वनितं चेदं "पाठेन धातुसंज्ञा" इत्येतद् भाष्येण ॥ ननु "याः पश्यति" इत्यादि व्यावृत्त्यर्थं क्रियावचनत्व-स्यावश्यवाच्यतया पाठफलं नास्तीत्यतस्तत्फलं दर्शयति

---

तदर्थमेतत् स्यात् । अच्चयूरिति । न वा वक्ष्यते । अनिष्टं च प्राप्नोति । इष्टं च न सिध्यति । एवं तर्ह्यननुबन्धकग्रहणे न सानुबन्धकस्य इत्येवमेतस्य न भविष्यति । एवमप्यननुबन्धको दिव् शब्दो नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते ॥ परिमाणग्रहणाच्च । वा । परिमाणग्रहणञ्च कर्त्तव्यम् ।

---

साधने नोत्पद्यन्ते इत्यर्थः । योऽपि प्रकारव (३ । ४ । ६५) इति स्वार्थि-कस्तुमुन् सोऽप्यनभिधानान्न भविष्यति ॥ याः पश्येति । भा । यच्छब्दो न धातुरिति विभक्तिरुत्पद्यते तस्यामत्वे टापि च कृते धातुसंज्ञायाम् "आतो धातोरिति" लोपप्रसङ्गः चक्रू इति । भा । ननु णुर्धातुषु पठितः ।

---

उच्यते । भवनं भूः क्रिया सामान्यम् । वदन्तीति वादयः । वदेरौणादिक इञ् इति भाष्यम् । यद्यपि "वसि वपि यजि राजि व्रजि सदि हनि वाशि वादि वारिभ्य इञ्" (उणा—सू—५९३ । चतुर्थ—पा) ("सदि" इत्यत्र—"सदि" इत्यपि पाठः) इत्यौणादिकसूत्रेण वदेर्ण्यन्तात् इञ् विहित-

सूत्रेष्विति। (कै)

पूर्वपक्षी वहिर्गणपाठं न जानात्येवेति "दृन्भि भवतिभ्यां च" (१।२।६) इति सूत्रस्थं भवतिमादिं मन्यते इति तं प्रत्याह सिद्धान्ती "यदि तावतामेव धातुत्वमिष्टं स्यात्तर्हि ते धातव इत्येव वदेत्" इत्यादिग्रहणं ज्ञापकमिति भावः। न च प्रकारवाच्या-प्यादिशब्दो दृष्ट इति कथं ज्ञापकत्वं व्यवस्थावाच्यादिशब्दस्य प्रसि-द्धतरत्वादिति भावः॥ ननु वाह्यः पाठ इत्येतावतैव सत्ताया अपि सिद्धेरस्ति पाठ इति व्यर्थमत आह

अनेनेति॥ (कै)

यथा वादिग्रहणाकरणे पाठेन संज्ञा इत्येतदुपपत्तिस्तथा दर्शयति

---

पदिकसंज्ञायाः प्रतिषेधः प्रसज्येत। अप्रातिपदिकत्वात् स्वाद्युत्पत्तिर्न स्यात्। नैष दोषः। आचार्य्यप्रवृत्तिर्ज्ञापयत्युत्पद्यन्ते दिव् शब्दात् स्वादय इति यदयं दिवः सावौत्वं शास्ति (७।१।८४)। नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य ज्ञापने प्रयोजनम्। किम्। दिव् शब्दो यत्प्रातिपदिकं

---

मिति। भा। समानश्रुतीनामिष्टविपरीतानामक्रियावाचिनामित्यर्थः॥ तव्यदादीनामिति। भा। यथैव दिवं पश्येति वाह्यक्रियापेक्षे कर्मणि द्वितीया भवति एवं तव्यदादयोऽपि स्युरित्यर्थः॥ साधन इति। भा। अन्तरङ्गधातुवाच्यक्रियापेक्षे साधने तव्यदादयः सावकाशाः वाह्यक्रियापेक्षे

---

नुसाराज्जप इति। दशगणीपाठो दिङमात्रप्रदर्शनार्थस्तेनान्येऽपि शिष्ट-प्रयुक्ता धातवः संग्राह्या इति च। स्यादेतत्। भूरादिर्येषां इति विग्रहे यणि सति भ्वादय इति स्यात्। क्रियावाचित्वं च सूत्रागाद्धमेवेति।

ये धातुपाठ इति। (कै)

यद्यपि ते इति पाठेऽपि पाठमूलैव संज्ञा तथापि पाठविशेष-मूलत्वज्ञापनं ज्ञापकफलमिति भावः॥ ननु स्तुतिप्रभृतीनां सौत्राणां धातुत्वाय भ्वादेराकृतिगणत्वमावश्यकमित्याणवयत्याद्यावतिप्रसङ्गोऽत आह

तेषां चेति। (कै)

अत एव भ्वादिसमाप्तौ वृत्करणम्॥ "बहुलमेतन्निदर्शनम्" (चुरादिगणसूत्रम्) इत्यपि यदि प्रामाणिकं तर्हि णिच एव तत् न गणपाठस्येति भावः। ध्वनितं चेदं "पाठेन धातुसंज्ञा" इत्येतद् भाष्येण॥ ननु "याः पश्यति" इत्यादि व्यावृत्यर्थं क्रियावचनत्व-स्यावश्यवाच्यतया पाठफलं नास्तीत्यतस्तत्फलं दर्शयति

---

तदर्थमेतत् स्यात्। अक्षद्यूरिति। न वा अन्वेष्यते। अनिष्टं च प्राप्नोति। इष्टं च न सिध्यति। एवं तर्ह्यननुबन्धकग्रहणे न सानुबन्धकस्य इत्येवमेतस्य न भविष्यति। एवमप्यननुबन्धको दिव् शब्दो नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते॥ परिमाणग्रहणञ्च। वा। परिमाणग्रहणञ्च कर्त्तव्यम्।

---

साधने नोत्पद्यन्ते इत्यर्थः। योऽपि प्रकाश्य (३। ३। ६५) इति स्वार्थि-कस्तुमुन् सोऽप्यनभिधानान्न भविष्यति॥ याः पश्येति। भा। यच्छब्दो न धातुरिति विभक्तिरुत्पद्यते तस्यामत्वे टापि च कृते धातुसंज्ञायाम् "आतो धातोरिति" लोपप्रसङ्गः स्यात् इति। भा। ननु णुर्धातुषु पठितः।

---

उच्यते। भवनं भूः क्रिया सामान्यम्। वदन्तीति वादयः। वदेरौणादिक इञ् इति भाष्यम्। यद्यपि "वसि वपि यजि राजि व्रजि सहि हनि वासि वादि वारिभ्य इञ्" (उणा—सू—५६३। चतुर्थ—पा) ("सहि" इत्यत्र—"सदि" इत्यपि पाठः) इत्यौणादिकसूत्रेण वदेर्ण्यन्तात् इञ् विहित-

तत्रेति॥ (कै)

आज्ञापयतीत्यर्थे

आणवयतीति। (कै)

प्राकृतं अपभ्रंशानामपि स्वातन्त्र्येणैव बोधकत्वाङ्गीकारादेतेषां क्रियावाचित्वं बोध्यम्॥ अथ पाठविशेषफलं दर्शयति

अथ स्त्वेति॥ (कै)

ननु पाठस्योपलक्षणत्वे स्त्यादीनां कथं धातुत्वमत आह

स्त्वेति॥ (कै)

ऋतेरियङ् (पा)

इति सूत्रमनेकाज्ग्रहणं "चुलुम्पाद्यर्थम्" इति वार्त्तिकं गणः "कण्ड्वादिः" धात्वधिकारविहितकार्य्योद्देश्यताकरणरूपं तत्प्रामाण्यम्। तेन च पूर्वं धातुपाठे पठितानामिदानीं पाठभ्रंशोऽनुमीयते इति

---

इयानवधिर्धातुसंज्ञो भवतीति वक्तव्यम्। कुतो ह्येतद्भूशब्दो धातुसंज्ञो भविष्यति न पुनर्भ्वेधशब्द इति॥ यदि पुनः क्रियावचनो धातुरित्येतल्लक्षणं क्रियेत। का पुनः क्रिया। ईहा। का पुनरीहा। चेष्टा। का पुनश्चेष्टा।

---

न चास्य तेन सारूप्यम्। नैष दोषः प्रयोगे नुशब्द एव धातुस्तेन चास्य सारूप्यमस्त्येव। यद्यपि चायं सानुबन्धकस्तथापि धातुष्वननुबन्धकपरिभाषा कैश्चिन्नाश्रीयते। अथवोपलक्षणार्थमिदं तेन स्नायू वेणू इत्युदाहरणम्। अक्षद्यूरिति। भा। अत्र कृदन्तत्वात् प्रातिपदिकत्वम्। न वै अनेन्यत

---

तथापि बहुलग्रहणात् केवलादपि भविष्यतीति न्यासकारादयः। वस्तुतस्तु वदन्तीति वादय इति भाष्यमर्थकथनपरम्। ण्यन्तादेवणिच्। न चेह ण्यर्थानन्वयः। पचति पाचयत्योस्तुल्यार्थत्वात्। भुवो वादय इति विग्रहः।

भावः ॥ न चैवमर्थवत्त्वं पठनीये गणे सूत्रान्तरे च गणं पठित्वा "ते धातव" इत्येव किं नोक्तमिति वाच्यम्। एवं विधसूत्रकरणे "अल्पाच्तरमसन्दिग्धम्" इति सूत्रलक्षणोच्छेदापत्तिः। अन्यथा सर्वादीनपि सूत्रान्तः पठित्वा सर्वनामानीत्याद्युक्त्यैव सिद्धे बहुव्याकुलतापत्तिरित्याहुः ॥ ननु समानशब्दानामित्यत्रार्थतः साम्ये पर्य्यायाणामित्यर्थेऽसंगतिः। पर्य्यायातिप्रसंगस्य पाठाश्रयणप्रयुक्तत्वाभावादत आह

## समानश्रुतीनामिति ॥ (कै)

ननु प्रयोगस्थानां गणपठितेभ्यो भिन्नत्वेन समानश्रुतित्वेनैव कार्य्यस्य वक्तव्यत्वादाह

## इष्टेति ॥ (कै)

इष्टानिष्टविभागस्य दुर्ज्ञेयत्वादाह

---

व्यापारः॥ सर्वथा भवान् शब्देनैव शब्दानाचष्टे न किं चिदर्थजातं निदर्शयत्येवं जातीयिका क्रियेति। क्रिया नामेयमत्यन्तापरिदृष्टा। अशक्या क्रिया पिण्डीभूता निदर्शयितुं यथा गर्भो निर्लुठितः। सासावनुमानगम्या।

---

इति। भा। शिष्टप्रयोगाभावात्। तस्माद् "दिव औत्" (७। १। ८४) इति ज्ञापकमेव। इतरो ज्ञापकत्वं विघटयति। अनिष्टं चेति। भा ॥ एवं तर्हीति। भा। धातुः सानुबन्धक इति भावः॥ एवमपीति। भा। अधातुरिति प्रातिपदिकसंज्ञानिषेधान्निरनुबन्धकात् सोरसम्भव उभयसम्भवे चास्याः

---

तथा च क्रियावाचित्वं तावत्सूत्राल्लब्धम्। निरनुबन्धानां शब्दविकरणानां भूप्रभृतीनां पाठसामर्थ्यात्पठितानामेव संज्ञेत्यनुमीयते। "सनाद्यन्ता धातवः" (३। १। ३२) इति सूत्रारम्भाच्च। अथवा भूरादिर्येषाम् इति विग्रहः।

अक्रियेति ॥ (कै)

नन्वेषामक्रियावाचित्वात् कारके विधीयमानतव्यादीनां कथं प्राप्तिरत आह

यथैवेति ॥ (कै)

अन्तरङ्गेति । (कै)

प्रतिपदिकाद्द्वितीयेत्यादौ प्रातिपतिकार्थनिरूपितकर्मासम्भवात्, तथा ग्रहणेऽपि धातोस्तव्यदित्यादिवाक्ये उपस्थितधात्वर्थापेक्षकारकसम्भवान्न वाक्यग्रहणमिति भावः । अनया रीत्या भावेऽप्यनुपपत्तिर्बोध्या । साध्यावस्थस्यैव तव्यदादिविधौ भावपदार्थत्वात् ॥ भाष्ये

साधन इति (भा)

भावोपलक्षणं बोध्यम् ॥

---

कोऽसावनुमानः । इह सर्वेषु साधनेषु सन्निहितेषु कदाचित् पचतीत्येतद्भवति कदाचिन्न भवति । यस्मिन् साधने सन्निहिते पचतीत्येतद्भवति सा नूनं क्रिया । अथवा यया देवदत्त इह भूत्वा पाटलिपुत्रे भवति सा नूनं क्रिया । कथं पुनर्ज्ञायते क्रियावचनाः पचादय इति । यदेषां करोतिना

---

परिभाषायाः उपस्थानं नान्यथा । इयानवधिरिति । भा । अवधिमानवधिनोपलक्ष्यते । तेन विशिष्टावधिपरिच्छिन्नस्य धातुसंज्ञा विधेयेत्यर्थः ॥ एधशब्द इति । भा । ततश्च एधशब्दाल्लुङादिप्रसङ्गः । न चार्थपाठः परिच्छेदकः । तस्यापाणिनीयत्वात् । अभियुक्तैरुपलक्षणतयोपात्तत्वादने-

---

निपातनाद्वुगागमः । महासंज्ञाकरणं तु दधति क्रियामिति धातव इत्यन्वर्थसंज्ञाविज्ञानार्थम् । यद्वा । भूश्च वाश्च इति द्वन्द्वः । आदिशब्दयोस्तु व्यवस्थाप्रकारवाचिनोरेकशेषः । ततो भूवौ आदी येषाम् इति बहुव्रीहिः । भूप्रभृतयो वा सदृशाः क्रियावाचिन इति यावत् अथवा वा इत्ययमादि-

भावे इति।

यद्यपि न यदृच्छादिशब्दपर्यायात् साध्यत्वेनापि भासमाने भावे एतद्विधानादित्याशयः॥ नन्वेवमपि स्वार्थिकास्तुमुनादयः स्युरत आह

योऽपीति। (कै)

तादर्थ्ये तुमुनः क्रियार्थक्रियोपपदत्वाभावादप्रसक्तेराह

शक्तिति॥ (कै)

वस्तुतो "ऽव्ययकृतो भाव" इत्युक्तेः। सोऽपि भाव एवेति बोध्यम्॥ ननु धातुत्वे विभक्त्यनुपपत्तिरेव कुतो न शङ्कितेत्यत आह

यच्छब्द इति॥ (कै)

अनाप इत्येवमिति (भा)

---

सामानाधिकरण्यम्। किं करोति पचति। किं करिष्यति पक्ष्यति। किमकार्षीत् अपाक्षीदिति॥ तत्र। क्रियावचन उपसर्गप्रत्ययप्रतिषेधः। वा। क्रियावचने धातावुपसर्गप्रत्यययोः प्रतिषेधो वक्तव्यः। पचति प्रपचति॥ किं पुनः कारणं प्राप्नोति। सङ्घातेनार्थगतेः। वा। सङ्घातेन ह्यर्थो गम्यते

---

कार्यत्वदर्शनादर्थस्य नियामकत्वाभावात्॥ क्रियावचन इति। भा। एवं सति समानशब्दानां प्रतिषेधो न वक्तव्यः नापि परिमाणग्रहणम्। न हि भिन्नशब्दसमुदायः क्रियावाची। का पुनरिति। भा। द्रव्यव्यतिरेकेण तस्याः सत्तामसंभावयतः प्रश्नः। ईहेति। भा। ईहाचेष्टाशब्दयोरन्यत्र-व्यापारविशेषवचनत्वेऽपि इह व्यापारमात्रवचनत्वं बोद्धव्यम्। कस्यचित्

---

येषाम् इति बहुव्रीहिः वा इत्यस्यादय इति तत्पुरुषः। तयोरेकशेषे स्वर-भिन्नानामिति बहुव्रीहिशेषः। भूवो वादय इति षष्ठीतत्पुरुषः। वाच्यवाचक-भावश्च षष्ठ्यर्थः। "द्विर्वचनेऽचि" (१।१।५९) इति वत्तन्त्राद्यस्यादिना वा

भाष्ये। अत एव क्तः अः इत्यादिसिद्धिरिति भावः॥ न च लक्षणप्रतिपदोक्तपरिभाषया टाबन्तस्य न धातुसंज्ञेति वाच्यम्। "षकारजः षकारस्तेर्याद्दवर्गस्तवर्गजः" इत्यभियुक्तोक्तेर्भूवादिसूत्रे तत्परिभाषाप्रवृत्तेर्वक्तुमशक्यत्वादित्याहुः॥ भाष्ये

तत्रानर्थकग्रहणं न करिष्यते इति। (भा)

एवं चानर्थकेष्वप्राप्तविध्यर्थं तत्॥

चादिषु अधातुरिति। (कै)

बाधकबाधनार्थमपीति भावः॥

नन्विति। (कै)

पठित साहचर्यस्यैव संज्ञाप्रयोजकत्वादिति भावः॥

---

सप्रकृतिकेन सप्रत्ययकेन सोपसर्गेण च॥ अस्ति भवति विद्यतीनां धातुत्वम्। वा। अस्ति भवति विद्यतीनां धातुसंज्ञा वक्तव्या। यथा हि भवता करोतिना पचादीनां सामानाधिकरण्यं निदर्शितं न तथास्त्यादीनां निदर्श्यते। न हि भवति किं करोति अस्तीति॥ प्रत्ययार्थस्याव्यतिरेकात्

---

केनचिच्छब्देनसोऽर्थः प्रसिद्धः इत्यनेकपर्य्यायोपादानम्। सर्वथेति। भा। यावद् द्रव्यव्यतिरेकेण क्रियासद्भावे प्रमाणं नोक्तं तावत् पर्य्यायोपादानमात्रेण तस्याः स्वरूपं न निश्चीयते इत्यर्थः। अर्थजातमिति। भा। अथ स्वरूपमित्यर्थः॥ अशक्येति। भा। आख्यातपदवाच्या पूर्वापरीभूतावयवा

---

उभयलाभः। सर्वथापि क्रियावाचिनोभ्वादय एव धातव इति स्थितम्। का पुनः क्रिया। उच्यते। करोत्यर्थभूता उत्पादनापरपर्य्याया उत्पत्त्यनुकूलव्यापाररूपा भावनैव क्रिया। तथा हि। अभवतो गगणादेरक्रियमाणतया भवतश्च घटादेः क्रियमाणतया भवत्यर्थकर्त्तुः करोति कर्मत्वम्। तथा च।

[1]नैष इति । (कै)

कार्य्यार्थत्वात् संज्ञायाः प्रयोगे (नुशब्दाऽ) ऽध्यारोपेण संज्ञा-प्रवृत्तिर्न तु णावस्थायां न शब्दसंज्ञार्थमेव णु पाठ इति प्रयोगस्थे पठितबुद्ध्यारोपेण संज्ञा प्रवृत्त्या तत्स्वरूपेति प्रसङ्गापादानं युक्तं "णो नः" ( ६ । १ । ६५ ) इत्यादौ तु धात्वादेरित्यस्य भावि-संज्ञा परत्वान्न दोषः इति भावः ॥ अयं क्तु प्रत्ययः "केचिद्" इति भूवादय इत्यत्र "नाश्रीयते" इत्यर्थः ॥

अथवेति । (कै)

अयमभ्युच्चयः प्रागुक्तरीत्या सामञ्जस्यात् । किं चैवं अग्रहणेऽस्य ज्ञापकत्वपरभाष्यासंगतिः । चक्षू इत्यादावुवङापत्तिस्थुवर्णान्तत्व-[2]धात्वन्ताङ्गस्य इत्यर्थमभिप्रेत्य बोध्या ॥ भाष्ये

१ कार्य्यार्थत्वात् संज्ञायाः प्रयोगे नु शब्दावस्थायामेव संज्ञाप्रवृत्तिर्न तु णावस्थायां नु शब्दसंज्ञार्थमेव — — इति क पुस्तके ॥

२ स्तुवर्णान्तधात्वन्ताङ्गस्य । क ॥

प्रकृत्यन्तरेषु । प्रत्ययार्थस्याव्यतिरेकात् प्रकृत्यन्तरेषु मन्यामहे धातुरेव क्रियामाहेति । पचति पठति । प्रकृत्यर्थोऽन्यस्यान्यस्य प्रत्ययार्थः स एव ॥

साध्यमानावस्थाभूतभविष्यद्वर्त्तमानसदसदनेकावयवसमूहरूपा सद्वस्तुविष-येन्द्रियग्राह्या न भवतीत्यर्थः । पिण्डीभूतेति । भा । यथा परमाणवः पिण्डी-भूता उपलभ्यन्ते न केवला एवं पिण्डीभावाभावात् क्रिया न प्रत्यक्षेत्यर्थः ॥

करोत्यर्थकर्त्तुर्भवितृप्रयोजकतया भवतेरुत्पत्त्यर्थाप्रयोजकव्यापारे णिजुत्पद्य-मानः करोत्यर्थमवलम्बते । उक्तं च,—

**अस्य तर्हि दिव् शब्दस्येति ।** (भा)

अव्युत्पन्नप्रातिपदिकस्येत्यर्थः ॥ ननु अत्रापि धातुत्वात् कथं प्रातिपदिकत्वमत आह

**अत्रेति ।** (कै)

तद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणादिति भावः ॥

**नवै अत्रेति** (भा)

भाष्यं पुनरुक्तमतो वाक्यभेदेन योजयति

**शिष्टेति ।** (कै)

अत्र शिष्टाप्रयोगादेवौत्वाप्रवृत्तौ स्वर्गार्थकदिव्शब्दार्थमेवेदं स चेद्धातुत्वादप्रातिपदिकं व्यर्थमेव तदिति ज्ञापकत्वमिति भावः ॥

**इतर इति ।** (कै)

अप्रयोगस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयतया चारितार्थ्यसम्भावना सत्वादिति भावः। यद्यपीष्टं न सिध्यति तथाप्यनिष्टप्राप्त्यर्थमेव शास्त्रं स्यात्। तथा च विपरीत एवेष्टानिष्टविभागः स्यात् इति भाष्यार्थः॥ ज्ञापकबाधाह

---

धातोस्स्वार्थाभेदात् प्रत्ययान्तरेषु । धातोस्स्वार्थाभेदात् प्रत्ययान्तरेषु मन्यामहे धातुरेव क्रियामाहेति । पक्ता पचनम् पाक इति । प्रत्ययार्थोऽन्यस्सा-

---

गर्भो निर्लुठित इति । भा । यथा कुक्षिस्थो गर्भोऽप्रत्यक्षस्तथा क्रियेत्यर्थः । अथवा यथा निर्लुठितो निर्गतः कुक्षेर्गर्भः । प्रत्यक्षो नैवं क्रियेति

---

करोति क्रियमानेन न कश्चित्कर्मणा विना ।
भवत्यर्थस्य कर्त्ता च करोतेः कर्मणायते ॥ १ ॥

एवं तर्हीति ॥ (भा)

तत् खण्डनवाद्याह

एवमपीति ॥ (भा)

"नास्ति" इत्यस्य सुपर इत्यादि तदाह

अधातुरिति । (कै)

तदेवं समानशब्दातिप्रसङ्गः स्थितः । अत एव

परिमाणग्रहणं चेति (भा)

चकारस्तदर्थे भगवता न व्याख्यातः ॥ अवधेः संज्ञायां ऊकारादेरेव सा स्यात् न भू इत्यादेरत आह

अवधिमानिति । (कै)

इदं च इयत्पदेन भाष्ये ध्वनितमिति भावः ॥

अभियुक्तैरिति । (कै)

भीमसेनेनेत्यैतिह्यम् । तत्रैव हेतुमाह

अनेकार्थत्वेति । (कै)

---

न्यश्च भवति प्रकृत्यर्थः स एव ॥ कथं पुनर्ज्ञायतेऽयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति । सिद्धं त्वन्वयव्यतिरेकाभ्याम् । वा । अन्वयाच्च व्यतिरेकाच्च । कोऽसा-

---

वैधर्म्येण दृष्टान्तः ॥ सासाविति । भा । या पूर्वमुक्ता सासावनुमानेन प्रतीयत इत्यर्थः । कोऽसाविति । भा । यो भावे ल्युट् स नपुंसकः । अन्यच्च त्वभिधेयवशादनियतलिङ्गः । अथवा मन्यतेर्घञनुमान इति रूपम् ।

---

करोत्यर्थस्य यः कर्त्ता भवितुः स प्रयोजकः ।
भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ॥ २ ॥

अर्थनिर्देशस्य व्यभिचारित्वेनाप्रयोजकत्वाद्व्यवस्थापकत्वाभावेन परिमाणग्रहणमपि कार्य्यमिति भावः ॥

क्रियेतेति (भा)

क्विङ्बोधितेऽस्य लक्षणस्य सम्भावनीयत्वे हेतुमाह

एवमिति ॥ (कै)

न हीति । (कै)

अवयवानां वाचकत्वेऽपि दशदाड़िमादिवत् समुदायोऽनर्थक इति भावः ॥ शब्दानुशासनप्रवृत्तानामर्थविवेचने का प्रसक्तिरत आह

द्रव्येति ॥ (कै)

असम्भावयत इति । (कै)

अप्रत्यक्षत्वादिति भावः । प्रकृतलक्षणेनापि द्रव्यवाचिनां धातुत्वानिवृत्तेः समानशब्दातिप्रसङ्गस्तदवस्थ इति भावः ॥

अन्यचेति । (कै)

---

वन्वयो व्यतिरेको वा । इह पचति इत्युक्ते कश्चिच्छब्दः श्रूयते पचशब्दस्य-कारान्तोऽति शब्दस्य प्रत्ययः । अर्थोऽपि कश्चिद्गम्यते विक्लित्तिः कर्तृत्वमेकत्वं च । पठतीत्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी । पच्

---

यस्मिन् सन्निहिते इति । भा । यस्मिन् वस्तुनि सन्निहिते सति पचतीत्येतत् प्रयुज्यते नासति सा क्रिया । क्वचित्तु यस्मिन् साधने सन्निहिते इति पाठः । तत्रायमर्थः । यस्मिन् सन्निहिते सति पचतीत्येतत् साधनविषये

---

प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादकाः ।
णन्ता एव प्रयुज्यन्ते तत्प्रयोजककर्मसु ॥ २ ॥

[1]मानसव्यापार इच्छारूप ईहा। इच्छाकाङ्क्षास्पृहेहातृडिति कोशात्कायपरिस्पन्दश्चेष्टा॥

ईहेति। (कै)

"समानमीहमानानाम्" इति भाष्यप्रयोगाद् ईह चेष्टाया-मित्यर्थनिर्देशाच्चेति भावः॥ नन्वेकपर्य्यायेणार्थस्य व्याख्यानसम्भवात् पर्य्यायान्तरोपादानमनर्थकमत आह

कस्य चिदिति॥ (कै)

"सर्वथा" इत्यादिभाष्यमुपहासपरं स किं शब्दैर्व्याकरोषीति वा उत शब्दान् व्याकरोषीति। नाद्यः शब्दैरेव यतो व्याख्यानं नाश्विनि कोशा (चा। क) दिभिर्नान्तः प्रयुक्तशब्दस्याप्रसिद्धत्वे व्याख्येयत्वादत आह

यावदिति। (कै)

क्रियापदार्थप्रश्ने इदं युक्तं न तु क्रियापदार्थो नातिरिक्तो

---

१ "मानस" इत्यारभ्य "इहेति" इत्यन्तं नास्ति इ पुस्तके॥

---

शब्दो हीयते पठ शब्द उपजायतेऽतिशब्दोऽन्वयी। अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी। विक्लित्तिर्हीयते पठिक्रियो-पजायते कर्त्तृत्वं चैकत्वं चान्वयि। ते मन्यामहे यः शब्दो हीयते

---

भवतीति। स्यादेतत्। मृगतृष्णिकाविषयजलज्ञानवत् पचतीत्येतदसत्य-विषयमेव ज्ञानमित्याशङ्क्याह। अथवेति। भा। देशान्तरप्राप्तिलक्षणेन कार्येणावाधितेन क्रियाख्यं कारणमनुमीयत इत्यर्थः॥ ननु प्रत्यक्षाप्रवृत्तौ

---

तेन भूतिषु कर्त्तृत्वं प्रतिपन्नस्य वस्तुनः।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः॥ ४॥

द्रव्यादिति प्रश्ने तत्र हि द्रव्यव्यतिरेक एव साधनीय इति उपहास इति भावः। स्वरूपं द्रव्यव्यतिरेकः शब्दैरेव शब्दान् व्याकरोतीति भाष्याक्षरार्थः॥ समूहार्थकजातशब्दस्य प्रकृते ऽन्वयादाह

अर्थेति। (कै)

अत्रेदं तत्त्वम्। कारकं न क्रिया तस्यां कारकानन्वयापत्तेः कारकाणां मिथः सम्बन्धायोग्यत्वात्। तस्मात् द्रव्यातिरिक्तक्रिया सिद्धः। सर्वथेत्युपहासः कारकातिरिक्तक्रिया प्रत्यक्षेणनोपलभ्यते इत्येवं परो वाच्यः सचेष्ट एवेतिगूढाभिसन्धिप्रत्युपहासपरं "क्रियानाम" इत्यादि भाष्यम्॥

[1]अत्यन्तापरदृष्टेति। (भा)

---

१ "अत्यन्तापरिदृष्टेति" पाठ उपलब्धभाष्यपुस्तकेष्वस्ति। परं विवरणे अत्यन्तापरदृष्टेति पाठोऽस्ति॥ परोक्षे लिट् (३ । २ । ११५) इति सूत्रस्थभाष्येऽपि एवं दृश्यते। तद्यथा। "क्रियानामेयम् अत्यन्तापरिदृष्टानुमानगम्याशक्या पिण्डीभूता निदर्शयितुं यथा गर्भो निर्लुठितः"॥

---

तस्यासावर्थो योऽर्थो हीयते यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते यः शब्दोऽन्वयी तस्यासावर्थो योऽर्थोऽन्वयी। विषम उप-

---

सम्बन्धग्रहणाभावात् कथं क्रियाविषयमनुमानं प्रवर्त्तते। नैष दोषः। धातुवाच्यस्य समूहस्य युगपदसन्निधानादप्रत्यक्षत्वेऽप्येकैकस्य तु क्षणस्य प्रत्यक्षत्वे बुद्ध्या तान् क्षणान् संकलय्य पचतीति प्रयुज्यते। यदाप्येकस्मिन्

---

सा च सकलधातूनां वाच्या। अत एव किं करोतीति प्रश्ने पचति पठति इत्याद्युत्तरं सङ्गच्छते। न चासौ मीमांसकोक्तरीत्या प्रत्ययवाच्ये-

परेण प्रमाणेन प्रत्यक्षेणात्यन्तमनवयवश्च: समूहरूपेण चादृष्टेत्यर्थः ॥ तत्र निदर्शनस्याप्रत्यक्षत्वे हेतुमाह

आख्यातेति ॥ (कै)

तच्चाप्रत्यक्षत्वे हेतुरनेकावयवरूपत्वं तच्च घटादिषु व्यभिचरितमतः

सदसदिति । (कै)

तदुपपादकं भूतेत्यादिसमूहव्यवहारो बुद्धिकृतो विकल्परूप एव न वास्तव इति बोद्धुम् ॥ नन्वतीतप्रयोगे सर्वेषामतीतत्वात् भविष्यति सर्वेषां भावित्वाच्च कथं सर्वत्र वैरूप्यमत आह

[१]पूर्वापरीभूतेति ॥ (कै)

तत्त्वे बीजमाह

साध्यमानेति । (कै)

वर्त्तमानविषयेऽपि तत्त्वमेवमुपपाद्यम् । तथा हि वर्त्तमानत्वं प्रारब्धपरिसमाप्तत्वम् ॥ नन्वेकत्र क्षणे तत्त्वं सम्भवति तस्मादारब्धत्व-

---

१ पूर्वापरभूतेति पाठो विवरणे ऽस्ति ॥

---

न्यासः । बहवो हि शब्दा एकार्था भवन्ति । तद्यथा । इन्द्रः शक्रः पुरुहूतः पुरन्दरः । कन्दुः कोष्ठः कुसूल इति । एकश्च शब्दो बह्वर्थः । तद्यथा । अक्षाः

---

क्षणे पचतीति प्रयोगस्तदा तत्र समूहरूपारोपणम् । शब्दशक्तिस्वभावाच्चैकः क्षणो नैव धातुवाच्यः । किं करोति पचतीति । सामान्यविशेषभावेन

---

वाच्यमिति वाच्यम् । भोक्तव्यमित्यादावाख्यातं विनापि तत्प्रतीतेः । तथाच तत्रापि कारकापेक्षा दृश्यते । अस्ति च तत्रापि करोति सामानाधिक-

मतीतक्षणमादाय। असमाप्तत्वं तु भविष्यत्क्षणमादाय इत्येव समर्थनीयं क्षणा एव च क्रियाधारा इति न च तत्तत्कालसम्बन्ध एव वर्त्तमानत्वमिति वाच्यम् एवं हि परं प्रति "पश्य मृगो धावति" इति शब्दप्रयोगानुपपत्तेः। न हि स्वज्ञानप्रभृतिपरज्ञानपर्य्यन्तम् एकः क्षणोऽस्ति समूहरूपत्वे तु अवयवान्तरावच्छेदेन स्वानुभूतां वर्त्तमानताम् अवयवान्तरावच्छेदेन [1]परं बोधयितुं तदुपपत्तेः। बिलाद्बिलं प्रविशति सर्वं किञ्चिदवच्छेदेन सर्वमनुभवतोऽवयवान्तरावच्छेदेन तं दर्शयितुं सूर्य्यं पश्येति प्रयोगवत्॥

सदसत्त्विति। (कै)

सदसन्ति विषयाणि येषाम् इन्द्रियाणां तत् ग्राह्या नेत्यर्थः॥ ननु यदि पिण्डीभूता क्रिया कुतो निदर्शयितुं न शक्यत्यत आह

यथेति। (कै)

पिण्डीभूता इति। (कै)

---

१ 'परम्' इत्यारभ्य 'तम्' इत्यन्तं नास्ति ह पुस्तके॥

---

पादाः मापा इति। अतः किं न साधीयोऽर्थवत्ता सिद्धा भवति। नापि ब्रूमोऽर्थवत्ता न सिध्यतीति। वर्णितार्थवत्तान्वयव्यतिरेकाभ्यामेव। तत्र कुत एतदयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति न पुनः प्रकृतिरेवोभावर्थौ ब्रूयात्

---

सामानाधिकरण्यात् क्रियाविशेषवचनाः पचादयः प्रतीयन्त इत्यर्थः। यदा तु किं करोतीति पृष्टे न करोत्यास्त एव केवलमिति प्रतिवचनं तदा

---

रण्यम्। किं कर्त्तव्यम्। भोक्तव्यम्। किं कृतवान्। भुक्तवान् इति। किञ्च। भावयति घटमितिवत्त्वन्मते भवति घटमित्यपि स्यात्। तुल्यार्थत्वात्। दृष्टान्ते

कार्य्यात्मना स्थिता इत्यर्थः ॥ अनेन दृष्टान्तेन परमाणुवदवयव-
क्रियाणामप्यप्रत्यक्षत्वं सूचितम् ॥

कुक्षिस्थ इति। (कै)

आद्येऽनिर्लुठित इति छेदः। द्वितीये निर्लुठित इति छेदो निष्क्रान्त इति च तदर्थ इति भेदः ॥ अत्यन्तापरदृष्टत्वेन अवयवरूपेणाप्यप्रत्यक्षत्वं तदवयवानां चलरूपत्वात् "पश्य धावती"ति तदनुमायकफलपरमेव। एतेन क्रियानुमेयैवेत्युक्तं भवति। "वर्त्तमाने लट्" ( ३। २। १२३ ) इति सूत्रस्थभाष्यस्वरसोऽप्येवमेव ॥

या पूर्वमिति। (कै)

अदः शब्द इदमर्थ इति न पौनरुक्त्यमिति भावः। तच्छब्दाव्यवहितोत्तरवर्त्ती अदस्शब्दः प्रसिद्ध्यर्थक इत्यन्ये ॥ ननु क्लृप्तत्वे नपुंसकत्वं स्यादत आह

---

प्रत्यय एव वा। सामान्यशब्दा एत एवं स्युः। सामान्य शब्दाश्च नान्तरेण प्रकरणं विशेषणं वा विशेषेष्ववतिष्ठन्ते। यतस्तु खलु नियोगतः पचतीत्युक्ते

---

व्यापारमात्रस्यावश्यं भावित्वाद्व्यापारविशेषविषयः। प्रतिवचनं तु विशेषनिराकरणेनेति बोद्धव्यम् ॥ सङ्घातेनेति। भा। सङ्घातस्यैव प्रयोगादर्थवत्त्वम्। केवलानां तु धातूनामप्रयोगादनर्थकत्वम् ॥ अतिशब्दस्येति। भा। यद्यप्ययं

---

कर्त्तुः कुम्भकारस्य व्यापारं शिलाचष्टे दार्ष्टान्तिके त्वाख्यातप्रत्ययः ॥ ननु प्रयोजकव्यापारशिलजर्थः। कर्तृव्यापारस्त्वाख्यातार्थ इति वैषम्यमिति चेत्। कारकचक्रप्रयोक्तुः कर्तृत्वे घटस्यातथात्वात्। यदि तु,—

"धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यत"

योभाव इति । (कै)

तथा करणे ल्युडिति भावः ॥

अथवेति । (कै)

प्रौढ्या ॥ नन्वनुमायकलिङ्गप्रश्ने कारकसमवधानकालिकपच-त्यादिव्यवहारव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वरूपं लक्षणमुक्तं न तु लिङ्गमित्यतस्तदपि सूचितमित्याह

यस्मिन्निति । (भा)

इतरभेदसाधने लक्षणस्यैव लिङ्गत्वेऽपि लिङ्गान्तरसूचनमिदं विमतं कारकेभ्यो भिद्यते बाधकाभावे कारकासत्ताकाले व्यवह्रियमाणत्वाद्बाधकाभावे यद्यत्कालेन व्यवह्रियते तत् ततो भिद्यत इति प्रयोगः ॥ ननु "[1]यस्मिन् साधन" इति पाठे यत्तच्छ्रुत्यां कारकस्यैव क्रियात्वं प्रतीयते तच्च विरुद्धमत आह

१ "यस्मिन् साधने सन्निहिते" इति पाठो दाक्षिणात्यभाष्यपुस्तके-ष्वस्ति । "यस्मिन् सन्निहिते" इति पाठः काश्मीरस्थभाष्यपुस्तकेष्वस्ति ॥

---

स्वभावतः कस्मिंश्चिद्विशेषे पचतिशब्दो वर्त्तते ऽतो मन्यामहे नेमे सामान्य-शब्दा इति । न चेत् सामान्यशब्दाः प्रकृतिः प्रकृत्यर्थे वर्त्तते प्रत्ययः

---

प्रत्ययसमुदायस्तथापि प्रकृतिभागावबोधपरत्वात् प्रत्ययभागपर्य्यालोचनेना-दरादेवमुक्तम् ॥ अथवा पूर्वाचार्यैः कैश्चिदतिः प्रत्ययत्वेन कल्पित इति तदपेक्षयैतदुक्तम् । किं न साधीय इति । भा । यदा प्रकृतिरेव क्रियां

---

इति भर्तृहरिप्रतिपादितरीत्या प्राधान्येन धातूपात्तव्यापारत्वरूपं कर्तृत्वं तवापि सम्मतं कस्तर्हि इदानीमाख्यातार्थः । व्यापारस्य धातुनैवा-

यस्मिन्निति ॥ (कै)

मृगेति । (कै)

ज्ञानं वस्तु सत्तासाधकम् असतोऽपि शशशृङ्गादेः शब्दज्ञानदर्शनादिति भावः ॥

देशान्तरेति । (कै)

संयोगजभिन्नः संयोगः क्रियाजन्यः कारकजन्यत्वे सति जन्यत्वादिति प्रयोगः संयोगस्य क्रियाफलमात्रोपलक्षकत्वं बोध्यम् । फलानुमेया क्रियेति तात्पर्य्यम् । एतेन पचत्यादिष्वस्य हेतोरसम्भव इत्यपास्तम् ॥

सम्बन्धग्रहणेति । (कै)

फलव्यापारयोर्जन्यजनकभावग्रहे सति हि कार्येण कारणानुमानं स्यात् स एव तु दुर्घटोऽप्रत्यक्षत्वादिति भावः ॥

एकैकस्येति । (कै)

अधिश्रयणादेरित्यर्थः ॥

---

प्रत्ययार्थे॥ क्रियाविशेषक उपसर्गः । वा । पचतीति क्रिया गम्यते तां प्रो विशिनष्टि ॥ यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्र धातुरुपसर्गं व्यभिचरति

---

साधनं चाह तदा सिद्धमेव प्रकृतेः क्रियावाचित्वम् । अधिकपरिभाव इति । भा । ततश्चाधीत इत्यस्य विशिष्टार्थयुक्तानां शब्दानां पठनं विधिपूर्वकं वा करोतीत्यर्थः । अध्येतीत्यत्र विशिष्टं स्मरणरूपं ज्ञानं धात्वर्थः । प्रोऽय-

---

भिहितत्वात् । अपि च । धातोः सकर्मकाकर्मकत्वविभाग उच्छिद्यते । "अकर्मकाच्च" (१ । ३ । २६) इत्यादिसूत्राणि च विरुध्येरन् । ननु सिद्धा-

[1]प्रत्यक्षत्वेनेति । (कै)

पश्य मृगो धावतीति प्रत्ययादित्यर्थः ॥

[2]बुद्ध्या सङ्कलय्येति । (कै)

स्मृत्या विषयीकृत्येत्यर्थः । उपस्थिते च सम्बन्धग्रहो न प्रत्यक्षेणोपस्थित एवेति नियम इति भावः ॥ एवं सम्बन्धग्रहे सति कार्य्येण तामनुमाय पचतीति प्रयुज्यते इति तात्पर्य्यम् । इदं च योगिप्रयोगविषयं तेषामेवावयवक्रिया प्रत्यक्षात् अस्माकं तद्व्यवहारपरम्परया सर्व्वथाविकल्पात्मक एव प्रयोगः क्रियापदानामिति वोध्यम् । एतच्च "वर्त्तमाने लट्" (३।२।१२३) इति सूत्रे भाष्ये ध्वनितम् ॥ ननु समूहस्याप्रत्यक्षत्वेऽपि एकक्षणस्य प्रत्यक्षत्वसम्भवात् क्रियामात्रे आनुमानिकत्वकथनमयुक्तमित्याशङ्कापरिहरति

यदापीति । (कै)

---

१ "प्रत्यक्षत्वे" इति पाठ उपलब्धकैयटेऽस्ति ॥
२ "बुद्ध्या तान् क्षणान् सङ्कलय्य" इत्युपलब्धकैयटेऽस्ति ॥

---

यत्र न खलु तं व्यभिचरति तत्र कथम् । अध्येति अधीत इति । यद्यप्यत्र धातुरुपसर्गं न व्यभिचरत्युपसर्गस्तु धातुं व्यभिचरति । ते मन्यामहे

---

मिति । भा । अन्यत्रापि प्रयोगात् । ततश्चान्यत्रास्य योऽर्थो द्योत्यः स एवेहापीत्यनुमीयते । अनेकार्थत्वाद्धातूनां तिष्ठतिरेव गतिवाचीति निर्णयः । भाववचन इति । भा । भावशब्दक्रियामात्र वाची । यथा "यस्य च भावेन"

---

न्तेऽपि क्रियायाः कर्मापेक्षा नि मात् कथमकर्मकतामिति चेत् न । फलव्यापारयोः सामानाधिकरण्यवैयधिकरण्याभ्याम् सकर्मकाकर्मकविभागस्य

तथा च तस्य व्यवहाराविषयत्वाद्व्यवहारविषया[१]सर्वानुमेयैवेति भाष्यतात्पर्य्यमिति भावः ॥ ननु तदारोपेऽपि वस्तुत एकस्यैव क्षणस्य क्रियात्वेन तत्र प्रत्यक्षत्वं व्यवहारविषयत्वं च दुर्वारमत आह

शब्दशक्तीति ॥ (कै)

एकः क्षण इति । (कै)

अनारोपितसमूहरूप एकः क्षण इत्यर्थः । परे तु [२]अधिश्रयणादिरूपानेकक्षणात्मकस्यापि हस्तप्रसारणपात्रादानचुल्लीसंयोजनादयोऽवयवाः सन्त्येवेति सोऽपि समूहरूप एव । यस्तु तेषामप्यवयवः परमाणुप्रख्यः स तु शब्दशक्तिस्वभावान्नैव वाच्यो नापि प्रत्यक्षः । अनुमानं त्वेवम् । उत्तरदेशसंयोगादिफलं कारणजन्यं कार्य्यत्वादिति । तच्च कारणं प्रसिद्धातिरेकि इत्यबाधबलात् क्रियारूपमेव सिध्यतीति भाष्यतात्पर्य्यमित्याहुः ॥ नन्वेकार्थबोधकत्वं सामानाधिकरण्यं न प्रकृतेऽत आह

---

१ विषयात् । ङ ॥ २ अधिश्रयणादिरूपनेकक्षणात्मकः । ङ । क ॥

---

य एवास्याधेरण्यार्थः स इहापीति । कः पुनरन्यत्राधेरर्थः । अधिरुपरिभावे वर्त्तते ॥ इह तर्हि व्यक्तमर्थान्तरं गम्यते । तिष्ठति प्रतिष्ठत इति ।

---

(२ । ३ । १७) इति भावे घञ् इति च । तेन पचादीनामपि धातुसंज्ञा सिध्यति । अस्तिभवतिविद्यतीनामपि भावरूपार्थाभिधायित्वात् । भवति पचतीति । भा । आत्मभरणवचनो भवतिः । तथात्मभरणं विशद्वैकार्थसमवायैः

---

वक्ष्यमाणत्वात् । किञ्च । "ज्योतिष्टोम याजी" इत्यादौ "करणे यजः" (३ । २ । ८५) इति णिनिरस्मत्पक्षे सङ्गच्छते । धातुत्वेन धातुपाठा

सामान्येति । (कै)

तथा च धातुलक्षणे क्रियातद्व्याप्यान्यतरवचनत्वं विवक्षितमिति न दोषः । यद्यपि करोतिर्गन्धनावक्षेपणादिष्वपि वर्त्तते । तथापि कारकव्यापार एव तदर्थः प्रसिद्ध इति भावः । तत्र यो व्यापार-सामान्यवाचीतद्विशेषाः पचादयः किं करोति इत्यस्य च यत्करोति तत् किम् इति व्यापारविशेषविषयप्रश्नोऽर्थः । एवं च यन्निष्ठतया प्रश्नविषयक्रियायाः करोति शब्दवाच्या या प्रतीतिः तन्निष्ठतयैवोत्तरभूतपचतिशब्दवाच्यक्रियायाः प्रतीतिरिति तयोः सामानाधिकरण्यं तत्र क्रिया प्रश्नजनकजिज्ञासायास्तद्विषयोत्तरेणैव विरामादेषां क्रियावाचित्वमिति भावः ॥ नन्वेवं येनासौ(पनसो । क) वृक्ष इति वत् पचति करोतीति सहप्रयोगापत्तिरिति चेन्न केवलस्य धातोः प्रयोगाभावेन तिङ्प्रयोगे तदर्थपौनरुक्त्यभीत्या तथा प्रयोगाभावात् यत्र तु नेदृशं वाधकं तत्रैधांचकारेत्यादि-प्रयुज्यते एवेति दिक् ॥

यदात्विति । (कै)

असि(सेः)रपि क्रियाविशेषत्वम् । अत एव गमनासनशयनसंश-

---

तिष्ठतीति असिक्रियाया निवृत्तिः प्रतिष्ठत इति असिक्रिया गम्यते । ते मन्यामहे उपसर्गकृतमेतद्येनात्र असिक्रिया गम्यत इति । प्रोऽयं

---

पाकत्वादिभिरविरुद्धैकार्थसमवायम् । यथा शुक्लं रूपमिति शुक्लो गुणी शुक्लत्वं रूपत्वं चास्तीति शुक्लादयो रूपवचनाः । एवं चादयो भाववचना इत्यर्थः । कः पुनरिति । भा । यदि क्रियैव भावस्तदा पच्यान्तरोपादान-

---

भावनां प्रति यजित्वेन तदुपात्तस्यांशान्तरस्य करणत्वात् । पच्यादयो हि धातुत्वेन भावनामाहुः । विक्लित्त्याद्यंशान्तरे तु पचित्वादिना प्रातिस्विकरू-

यात् प्रश्ने आस्ते इति [1]वचनमिति बोध्यम् ॥ पाठनिरपेक्षमिदं लक्षणमिति प्रकृते भाष्ये

तत्रेति ॥ (भा)

ननूपसर्गस्य धात्वर्थविशेषकत्वात् प्रत्ययस्य कर्त्रर्थमेकत्वाच्च प्राप्त्यभावेन प्रतिषेधानुपपत्तिरत आह भाष्ये

संघातेनार्थगतेरिति । (भा)

बोद्धेति शेषः ॥ तद्व्याचष्टे

संघातस्येति । (कै)

उपसर्गप्रत्यययोरित्यस्य तद्विशिष्टयोरित्यर्थ इति भावः ॥

अर्थवत्त्वमिति । (कै)

अन्वयव्यतिरेकाभ्यामिति भावः ॥ भाष्ये

यथा हीत्यादि (भा)

---

१ प्रतिवचनमिति । क ॥

---

वृक्षापचार आदिकर्मणि वर्त्तते । न चेदं नास्ति* बह्वर्था अपि धातवो भवन्तीति । तद्यथा । वपिः प्रकिरणे दृष्टश्छेदने चापि वर्त्तते । केशश्मश्रु

---

मनर्थकमथान्यस्तदाऽव्याप्तिरिति प्रश्नः । स्वपदार्थ इति । भा । स्वग्रहणमुपचरितार्थनिवृत्त्यर्थं गौणोऽपि पदार्थो भवति न तु स्वो व्यभिचारात् । पद-

---

पेक्षाङ्गः । तत्त्वांशान्तरभावतां प्रति प्रायेण भाव्यतया सम्बध्यते । "ज्योतिष्टोमयाजी"त्यादौ तु करणतया ज्योतिष्टोमाख्येन जागेन स्वर्गं यावित-

---

* "बह्वर्था अपि धातवो भवन्तीति" इत्यारभ्य "स्थापयेति मन्यते" इत्यन्तम् "चादेच उपदेशेऽशिति" (६।१।४५) इति सूत्रव्याख्यानावसरे भगवता पुनरप्युक्तम् ॥

प्रागुक्तकरोति सामानाधिकरण्यरूपक्रियावाचित्वविवक्षाभावात्तद्भाव इति भावः ॥ अतिव्याप्तिं निराकरोति भाष्ये

प्रत्ययार्थस्येति ॥ (भा)

अव्यतिरेकः । (भा)

अभेदः ॥

प्रकृत्यन्तरेषु । (भा)

भिन्नार्थकेषु ॥ प्रत्ययस्याप्यवापोद्धारं दर्शयति

धातोश्चेति ॥ (कै)

अन्यश्चेति । (भा)

लिङ्गभेदादित्यर्थः ॥ "[1]अन्वयव्यतिरेकाभ्याम्" (सिद्धं त्वन्वयव्यतिरेकाभ्याम् । एतत् सूत्रस्य वार्त्तिकम्) इति वार्त्तिकेन धातोरेव क्रियावाचित्वं काल्पनिकमिति प्रतिपाद्यते । इतः उत्तरभाष्यं

१ दाक्षिणात्यभाष्यपुस्तके "अर्थवत्" (१।२।४५) सूत्रे "भूवादि" (१।३।१) सूत्रे च "सिद्धं त्वन्वयव्यतिरेकाभ्याम्" इति वार्त्तिकद्वयमस्ति । मध्यदेशीयभाष्यपुस्तके विवरणे च "अन्वयव्यतिरेकाभ्याम्" इत्येवमस्ति ॥

वपतीति । ईडिः स्तुति चोदनायां याच्ञा दृश्यः प्रेरणे चापि वर्त्तते । "अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुतश्च्यावयन्ति" इति । करोतिरभूतप्रादुर्भावे प्रकरणाद्यनपेक्षत्वप्रतिपादनार्थम् । भवनं भाव इति विग्रहः कर्तृसाधननिवृत्त्यर्थः । भेद इति । भा । विनाशोत्पत्त्याभेदश्छेदश्च घटत्वादे स च भावविरोधीति भावः । सर्वान् पुरुषान् इति । भा । किं करोषि वानित्यर्थप्रतीतेः । स्पष्टं चेदं णिनिविधौ हरदत्तग्रन्थे । एतेन स्वार्थः पचिरिति भाष्यं व्याख्यातम् । भट्टिस्त्वाह,

[1]"न चेत्सामान्यशब्दाः" इत्याद्यन्तम् "अर्थवत्" (१।२।४५) सूत्रे व्याख्यातं तत एवावधार्य्यताम् ॥

**प्रत्ययः प्रत्ययार्थे इति।** (भा)

"प्रत्ययद्योत्येऽर्थे" इत्यर्थः। [2]प्रातिपदिकविषये पञ्चकस्य प्रातिपदिकार्थतया "अर्थवत्" (१।२।४५) सूत्रस्थभाष्यस्यैव व्याख्येयत्वात्। तदेवं सप्रत्ययकेति व्याप्तिं निरस्य सोपसर्गतां निराकरोति भाष्ये

**क्रियाविशेषक इति।** (भा)

यथा अन्वयव्यतिरेकाभ्याम् प्रत्ययार्थबोधकस्तथा ताभ्यामेव क्रियाविशेषद्योतक उपसर्गः क्रियावाची धातुरेवेति भावः ॥

**प्रोवीति।** (भा)

पचेरुत्कृष्टक्रियापरत्वं द्योतयतीत्यर्थः ॥

---

१ "न चेत्" इत्यारभ्य "अवधार्य्यताम्" इत्यन्तं नास्ति इ पुस्तके ॥

२ "इत्यर्थं" इति नास्ति इ पुस्तके ॥

---

प्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्त्तते। पृष्ठं कुरु। पादौ कुरु। उन्मृदानेति गम्यते। निक्षेपणे चापि वर्त्तते। कटे कुरु। घटे कुरु। अश्मानमितः कुरु। स्थापयेति गम्यते। एवमिहापि तिष्ठतिरेव व्रजिक्रियामाह

---

पचामि किं करोमि पचेत्यादौ विपरीतापि पुरुषानुवृत्तिः सर्वग्रहणेन विवक्षिता। भवतिः पुनरिति। भा। न हि भवति भविष्यति पक्ष्यति अभूद् अपाक्षीद् भवतः पचतः भवन्ति पचन्तीति। का तर्हीति। भा।

---

"विभज्यसेनां परमार्थकर्मा सेनापतींश्चापि पुरन्दरोऽथ।
नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून्" ॥

यद्यपि तावदिति। (भा)

उपसर्गव्यभिचारिधातुस्थले तत्त्वासम्भवादिति भावः ॥

यद्यप्यत्रेति। (भा)

धातोरुपसर्गाव्यभिचारेऽपि उपसर्गस्य धातुव्यभिचारात् अन्यत्र द्योत्यत्वेन निश्चितोऽर्थ एवेहाप्यधेरिति भावः ॥ नन्विदमयुक्तम् "अधीते" इत्यादावुपरिभावाप्रतीतेरत आह

ततश्चेति। (कै)

उत्कर्षलक्षण उपरिभावेऽधेरर्थ। स च विशिष्टार्थयुक्तत्वरूपो-विधिपूर्वकत्वरूपो वेति भावः॥ केचित्तु अवगमपर्य्यन्तत्वरूप उत्कर्षोऽधेरर्थ इत्याहुः॥

[1]विशिष्टस्मरणमिति। (कै)

निरन्तरत्वादिकं तत्रोत्कर्षः॥ भाष्ये

१ उपलब्धकैयटे तु "विशिष्टं स्मरणरूपम्" इत्यस्ति॥

तिष्ठतिरेव व्रजिक्रियाया निवृत्तिम्॥ अयं तर्हि दोषः। अस्ति भवति विद्यतीनां धातुत्वमिति॥ यदि पुनर्भाववचनो धातुरित्येवं लक्षणं क्रियते। कथं पुनर्ज्ञायते भाववचनाःपचादय इति। यदेषां भवतिना सामानाधि-

कथं सम्बन्ध इति प्रश्नः। एषैषेति। भा। या एषा त्वया दृष्टा सैषा वर्ण्यमान स्वरूप इत्यर्थः। पचादय इति। भा। साध्यसाधनभावः सम्बन्धो न तु सामान्यविशेषभाव इत्यर्थः। नन्वन्यत्रोक्तं तिङभिहितो भावः क्रियया

ननु क्रियाया धात्वर्थत्वे पचतीत्यादौ एककर्तृका वर्त्तमाना पचिक्रिया इति क्रियाविशेष्यको बोधो न स्यात्। प्रत्ययार्थं प्रति प्रकृत्यर्थस्य विशेषणतायाः औपगवादौ क्लृप्तत्वादिति चेन्न। प्रत्ययार्थः प्रधानमिति

**इह तर्हि व्यक्तमिति।** (भा)

तत्र प्रजिक्रियाया उपसर्गमात्रार्थत्वे तिष्ठतेर्धातुत्वानापत्तिः। तिष्ठतिमात्रस्य तु नार्थः। तस्य तन्निवृत्त्यर्थकत्वात्। विशिष्टस्य तदर्थकत्वे तु तस्यैव धातुत्वापत्तिरिति भावः॥ समाधत्ते

**प्रोयमिति।** (भा)

नन्वेवमपि गतिनिवृत्तिवाचिनस्तिष्ठतेः कथं गतिवाचित्वमत आह

**अनेकार्थत्वादिति।** (कै)

धातोः कश्चिदवश्यकल्पनानार्थत्वेनैव प्रकृतार्थनिर्वाहे प्रशब्दस्यार्थकल्पने मानाभाव इति भावः॥ लोकेऽपि प्रथमगमनकर्त्तर्य्येव प्रतिष्ठत इति प्रयुज्यत इति तात्पर्य्यम् तदाह भाष्ये

**न चेदं नास्तीति॥** (भा)

---

करणम्। भवति पचति। भवति पश्यति। भवत्यपाक्षीदिति॥ कः पुनर्भावः भवतेः स्वपदार्थो भवनं भाव इति। यदि भवतेः स्वपदार्थो भवनं भावो विप्रतिषिद्धानां धातुसंज्ञा न प्राप्नोति। भेदः छेदः। अन्यो हि भावोऽन्यो-

---

समवायं न गच्छति। नहि भवति पठति पचति इति। ततश्च तेनैतद्विरुध्येत। तत्राहुः। कर्तृकर्मभावेन क्रिया आख्यातवाच्यक्रियया सम्बध्यत एव। भवति पचति पश्य मृगो धावतीति। करणादिभावेन तु न सम्बध्यते। तथा प्रयोगादर्शनात्। भवेदपि भवेदिति। भा। एकस्याः क्रियायाः आत्मापेक्षः साध्यसाधनभावो विरुद्ध इति भावः। कालभेदादिति। भा। स्वाभाविकमन्यत्वं

---

ह्युत्सर्गः स चेह त्यज्यते। "क्रियाप्रधानमाख्यातम्" इति स्मरणात्। पाचिका इत्यादौ स्त्रीत्वस्य विशेषणत्वाभ्युपगमाच्च। प्रत्युततत्रैव पचतीत्यादावनुपपत्तिः। पचन्तं तं पश्य इत्यादौ शतृशानचोः कर्तृप्राधान्यस्य सर्वसम्म-

**प्रकिरणो इति।** (भा)

भाषाम्यपतीत्यादौ॥

**[1]दृष्टिमीट्टे इति।** (भा)

प्रेरयतीत्यर्थः॥ ननु "भाव वचन" इति न्यासे पचादिष्वव्याप्तिरत आह

**क्रियामात्रेति।** (कै)

धात्वर्थमात्रे इत्यर्थः। मात्रपदं कार्त्स्न्ये॥ नन्वेवमप्यस्त्यादिष्वव्याप्तिरत आह

**अस्ति भवति** (भा)

इत्यादि। तस्मिन् सत्यागतः भवनं भाव इत्यादि प्रयोगात्। अस्त्यादिक्रिया भावपदेन गृह्यत इति भावः॥ नन्वस्त्याद्यर्थस्यापि क्रियात्वे किमपराद्धं पूर्वलक्षणेनेत्यत आह

---

१ प्रतपथब्राह्मणे द्रष्टव्यम्॥

---

ऽभावः। आतस्त्वान्यो भावोऽन्योऽभाव इति यो हि यस्य भावमिच्छन्ति स न तस्याभावं यस्य चाभावं न तस्य भावम्। पचादीनां च धातुसंज्ञा न प्राप्नोति। यथा हि भवता क्रियावचने धातौ करोतिना पचादीनां सामा-

काललसाधनभेदेन व्यज्यते। एकस्येति। भा। अपि भवेदित्यत्र योभवतिस्तस्या-रोग्यादिविशिष्टदेवदत्तादिकर्तृका सत्ता वर्त्तमानार्थस्तथाभूता हि सत्ता प्रार्थ्यते इति वर्त्तमानकालः प्रत्ययः सा तु सत्ता भवेदित्यस्याः सत्तायाः कर्त्तृत्वेन

ततया तिङस्वपि तथात्वापत्तेः। प्रचादीनां तिङाञ्च लादेशत्वस्याविशिष्टत्वात्। आदेशानां च स्थानिस्मारकत्वे स्थान्यर्थाभिधायित्वे वार्थैक्यध्रौव्यात्।

भावरूपेति। (कै)

क्रियाशब्दः सपरिस्पन्दसाधनसाध्यार्थे रूढो भावशब्दस्य सपरिस्पन्दापरिस्पन्दान्यतरसाधनसाध्ये इति भावः॥ इतरे भवत्यर्थोऽस्य भावशब्देन विवक्षित इत्याशयेन पृच्छति भाष्ये

कथं पुनरिति॥ (भा)

ननु भवतिपचत्योर्नैकार्थबोधकत्वरूपं सामानाधिकरण्यम्। भावः सत्ता विक्लित्त्यनुकूलव्यापारस्य पाक इति तयोरत्यन्तवैलक्षण्यादत आह

---

नाधिकरण्यं निदर्शितं न तथा भाववचने धातौ निदर्श्यते। करोतिः पचादीनां सर्वान् कालान् सर्वान् पुरुषान् सर्वाणि वचनान्यनुवर्त्तते भवतिः पुनर्वर्त्तमानकालं चैकत्वं च॥ का तर्हीयं वाचो युक्तिर्भवति पचति भवति पक्ष्यति भवत्यपाक्षीदिति। एषैषा वाचो युक्तिः। पचादयः क्रिया भवति क्रियायाः कर्त्र्यो भवन्तीति। यद्यपि तावदत्रैतच्छक्यते। वक्तुं यत्रान्या चान्या

---

निर्दिश्येति भेदोऽस्त्येव। अस्त्वयमिति। भा। भेदादयोऽपि भवन्तीति तद्वचनानां सिध्यति धातुसंज्ञा। एतान्यपीति। भा। एतत्प्रतिपाद्यानि वस्तूनीत्यर्थः। भाव्यते यः स भाव इति। भा। तेन साध्यमानार्थवाचिनां धातुसंज्ञेत्यर्थः। स्वभावसिद्धमिति। भा। शब्दशक्त्यनुसारेणैतदुच्यते। कृतता क्रियमाणता कर्त्तव्यता युक्तान्यपि द्रव्याणि सिद्धरूपाण्येव प्राति-

---

अत एव हि "युष्मदि समानाधिकरणे मध्यमः" (१। ४। १०५) "अस्मद्युत्तमः" (१। ४। १०७) इत्यादिपुरुषव्यवस्था सङ्गच्छते। अभिहिते कर्त्तरि प्रथमा इत्यादि च। न च समानाधिकरण इत्यनेन स्वाभिधेयसङ्ख्यान्वयित्वमभिहितशब्देन चाभिहितसङ्ख्याकत्वं विवक्षितमिति वाच्यम्।

आत्मभरणेति। (कै)

आत्मभरणं चाषष्ठाद्भावविकारादनुस्यूतं सदिति प्रत्ययवेद्यं रूपं तच्च केवलान्वयित्वात् पदार्थमात्रसमानाधिकरणम् एवं चाश्रये पचि क्रियाबोधे तत्समानाधिकरणात्मभरणस्यापि तत्र सत्वेन तद्वाचकत्वं पचादीनां यथा शुक्ले गुणे रूपत्वसत्तामात्रेणारूपवचनत्व-शुक्लादीनाम्। तदुक्तं

पाचकत्वादिभिरिति। (कै)

"आदिना"कृत्वादि। "पाकत्वादिभिः" इति पाठान्तरम्॥ अत्र "आदिना" गमनत्वादि॥

विरुद्धेति। (कै)

परस्परमित्यादि। एवं च पचति भवतीत्यादेर्यत्कर्तृका पचि क्रिया तत्कर्तृका सत्तेति बोधः। एवं च भवत्यर्थपचत्यर्थयोरेकाधि-

---

च क्रिया यत्र खलु सैव क्रिया तत्र कथम्। भवेदपि भवेत्। स्यादपि स्यादिति। अत्राप्यन्यत्वमस्ति। कुतः। कालभेदात् साधनभेदाच्च। एकस्यात्र भवतेर्भवतिः साधनं सर्वकालस्य प्रत्ययः। अपरस्य वाह्यं साधनं वर्त्तमान-कालस्य प्रत्ययः॥ यावतात्राप्यन्यत्वमस्ति पचादयश्च क्रिया भवति क्रियायाः

---

पदिकेनाभिधीयन्ते। शब्दान्तरेण तु तेषामवस्थान्तरं प्रतिपाद्यते। 'मातेति। भा। मातृत्वं पुत्रजन्मना भाव्यते। सर्वस्वेति। भा। पाठाश्रये समानशब्दानां प्रसङ्गः कर्तृसाधने भावशब्दे वृत्त्यादीनां प्रसङ्गः। कर्मसाधने

---

सूत्रानुगुणत्वात्। कृत्तद्धितसमासैः सङ्ख्याया अनभिधानात् तदभिहिते-ऽपि तृतीयाप्रसङ्गाच्च। न च कृत्यनभिधानमेव कर्तुरनभिधानमिति वाच्यम्। भावार्थलकारेऽपि कर्तरि प्रथमापत्तेरिति दिक्। स्यादेतत्। अस्तिभवतिवि-

करणवृत्तित्वमेव भवति पचत्योः सामानाधिकरण्यमिति भावः ॥

ननूक्तेन सामानाधिकरण्येन भावपदार्थस्याप्युक्तप्रायत्वात्

**कः पुनरिति** (भा)

प्रश्नोऽनुपपन्नोऽत आह

**यदीति ॥** (भा)

भवतेरर्थं इत्येतावता सिद्धे स्वपदेति व्यर्थमत आह

**स्वेति ।** (भा)

न च धातूनामनेकार्थत्वात् धातुर्न क्वापि लाक्षणिक इति वाच्यम् । अनुपपत्तिप्रतिसन्धानापूर्वकप्रतीतिविषयार्थमादायैवाने-कार्थत्वस्वीकारात् । यस्तु अनुपपत्तिप्रतिसन्धानपूर्वकप्रतीतिविषयो यथा भूधातोर्गमनादिस्तत्र लक्षणैवेत्याशयात् । क्रियावाचकत्वं च क्रियाबोधकत्वमेवेति बोध्यम् ॥

---

कर्त्री भवन्तीत्यस्त्वयं कर्तृसाधनः । भवतीति भाव इति किं कृतं भवति । विप्रतिषिद्धानां धातुसंज्ञा सिद्धा भवति । भवेत् विप्रतिषिद्धानां धातुसंज्ञा सिद्धा स्यात् प्रातिपदिकानामपि प्राप्नोति । वृक्षः प्लक्ष इति किं कारणम् । एतान्यपि हि भवन्ति ॥ एवं तर्हि कर्मसाधनो भविष्यति । भाव्यते यः

---

मात्रादीनामित्यर्थः । इदानीं समाधानमाह "पठिष्यतीति" । भा । पठितानामेव भाववचनानां धातुसंज्ञा नान्येषामित्यर्थः । अस्त्वयमिति । भा । भवतीति भूरिति कर्तरि क्विबस्ति न तु कर्मणि । अर्थस्त्वभिन्न एव । यो हि भवति स एव भाव्यते नान्यः । नेदमिति । भा । वृद्धिशब्दस्य

---

धतिषु क्रियावाचित्वमव्याप्तम् । न हि तत्रोत्पादः प्रतीयते । एवं तिष्ठता-वपि तथा जायत उत्पद्यते इत्यत्राप्यव्याप्तिः । उत्पत्तिर्हि आद्यक्षणसम्बन्धः ।

प्रकरणादीति । (कै)

तेन तस्यापेक्षप्रतीतिकपराभवाद्यर्थनिरासः । भवनलक्षणभावस्य सत्तारूपत्वात् सत्तायाश्च केवलान्वयित्वेन सर्वसाधनाधिकरणतया "भाववचन" इति लक्षणं न क्वाप्यव्याप्तमिति उत्तरभाष्यतात्पर्य्यम् ॥ ननु अवयवविभागानुकूलव्यापारवाचिनां भिदादीनां कथमभाववचनतेत्यत आह

विनाश इति । (कै)

तत्र घटादेर्नाशो भेदपदेन रज्ज्वादेः सच्छेदपदेन इति शब्दशक्तिस्वभावादवगन्तव्यम् । विनाशकाले सत्ताया अभावान्न तेन तस्याः सामानाधिकरण्यमिति भावः ॥ दोषान्तरमाह

पचादीनां चेति ॥ (भा)

भाष्ये

---

स भाव इति । क्रिया चैव हि भाव्यते स्वभावसिद्धं तु द्रव्यम् । एवमपि भवेत् केषां चित् न स्याद्यानि न भाव्यन्ते । ये त्वेते सम्बन्धिशब्दास्तेषां प्राप्नोति । माता पिता भ्रातेति । सर्वथा वयं प्रातिपदिकपर्य्युदासान्नमुच्यामहे । पठिष्यति ह्याचार्यो भूवादिपाठः प्रातिपदिकाणपयत्यादिनिवृत्त्यर्थं

---

मङ्गलार्थस्य प्रयुक्तत्वादकारो मङ्गलार्थो नोपयुज्यते । भूवमिति । भा । जायमानमर्थं येऽभिदधति ते धातव इत्यर्थः । भवतिरत्र जन्मवाची गृह्यते न तु सत्ता वाचीति सिद्धार्थाभिधायिनां संज्ञा न भवति । शिष्ये इति ।

---

तदनुकूलव्यापारस्योत्पादना । तदनुभवस्यास्त्यादिभ्यो नास्त्येव । अत एव किं करोतीति प्रश्ने पचतीत्यादिवदस्तीति न प्रतिब्रुवत इति चेत् उच्यते । अस्तीत्यादेः स्वरूपधारणं करोतीत्यर्थः । धारणं चोत्तरकालसम्बन्धः । तथा

## क्रियावचने धाताविति । (भा)

१"क्रियावचनो धातुः"इति लक्षणनिरूपणावसरे यथा निदर्शितं न तथा "भाववचनो धातुरि"ति लक्षणावसरे पचादीनां भवतिना निदर्श्यत इत्यर्थः । तथा हि न सामान्यविशेषभावेन पचादेर्भवतिना सामानाधिकरण्यम् । किं करोति पचति । किमकार्षीदपाक्षीत् । किं करिष्यति पक्ष्यति । किं कुरुतः पचत इतिवत् । किं भवति पचति किं भविष्यति पक्ष्यति इत्यादेरप्यापत्तेः । यतस्तु न प्रश्नोत्तर-भावेन सामानाधिकरण्यम् । यतश्च पचतौ भिन्नभिन्नवचनाद्यन्तेऽपि भवतेरेकरूपत्वम् अतः पच्यर्थो भवतेः कर्त्तैव पचति यद्भवतीति वाक्यार्थात् । भवतिर्भूधात्वर्थः । करोतिः कृधात्वर्थः । धात्वर्थनिर्दे-शोऽपि यजतिषु ये (यजामहम् इ। क) यजामहे करोतीतिवत् श्तिप् वर्त्तमानकालं चैकत्वं चेति प्रश्नविषयत्वं विना चेत्यपि बोध्यम् ।

१ अत्रैवाग्रे उक्तं भगवता । तथाहि—
"अथ यद्येव क्रियावचनो धातुरित्येष पक्षः" ॥

इति । यावता पठिष्यति पचादयश्च क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ती-त्यस्त्वयं कर्तृसाधनः । भवतीति भाव इति । किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । एतेनैवाभिहितं सूत्रेण "भूवादयो धातव" इति ।

भा । भावार्थाभिधायित्वात् प्रत्ययस्य धातुसंज्ञा प्रसङ्गादात्वं प्राप्नोति । तद्धि अनैमित्तिकं श्निति तु प्रतिषिध्यते । एकारोच्चारणं तु यदा कर्त्तृ-कर्मणोर्लकारस्तदर्थम् । पाठस्तु न तावदस्य मनसि वर्त्तते । इतरेतराश्रयं

सत्यपि करोत्यर्थे धात्वर्थान्तर्गतेन धारणेनैव भाव्यकाङ्क्षायाः पूरणात् जीवति नृत्यत्यादिवदकर्मकता क्रिया हि व्यापारव्यधिकरणैवोत्पत्ति-

"भवतिरेकत्वमनुवर्त्तते" इत्युक्त्या क्रियायां सञ्ज्ञान्वयं दर्शयति। एवं "पचादीनां सर्वाणि वचनानि" इत्यनेनापि। तत्र वचनं सञ्ज्ञा। ननु एवं पश्यति भवति इति कथं प्रयोगः। भविष्यत् पाके वर्त्तमानसत्ताश्रयत्वासम्भवात् इति वाच्यम्। भूतभविष्यतोरपि सूक्ष्मावस्थामालम्ब्यसत्ताया वर्त्तमानत्वाचतेरिति भावः। करोतेः पचादिसर्वपुरुषानुवर्त्तकत्त्वं किं करोषि पचामीत्यादौ व्यभिचरितमत आह

## किं करोषीति। (कै)

करोतेः सामान्यविशेषभावेन पचादिष्वनुवृत्तिर्द्वेधा। पचादिसमानपुरुषान्ता अनुकूलतद्विपरीतपुरुषान्ता चेति। द्विविधापि सा सर्वपदेन संगृह्यतेत्यर्थः॥

## न हि भवतीति। (कै)

ननु यः पश्यति स भविष्यतीत्यभिप्रायेण भविष्यति पश्यतीति प्रयोगः कथं नेति चेत् न। आख्यातस्य क्रियाप्रधानत्वात्। उक्तं

---

कथम्। नेदमादिग्रहणम्। वदेरयमौणादिक इञ् कर्तृसाधनः। भुवं वदन्तीति भूवादय इति॥ भाववचने तदर्थप्रत्ययप्रतिषेधः। वा। भाववचने धातौ तदर्थस्य प्रत्ययस्य प्रतिषेधो वक्तव्यः। शिष्य इति। किञ्च स्यात्।

---

चेति। भा। प्राक् शास्त्रव्यापारात् समुदाय एव नास्ति कुतोऽन्वयव्यतिरेकाभ्यामर्थस्य प्रविभागस्तस्मिंश्चासति भाववचनापरिज्ञानात् धातुत्वं न व्यवतिष्ठते इत्यर्थः। सिद्धं त्विति। भा। व्यवस्थिता एव पचत्यादयः

---

उच्यते। अत एव तत्र घटादीनां कर्मता। परसमवेतव्यापारफलीभूतोत्पत्तिशालित्वात्। जनिप्रभृतिभिस्तु व्यापारसमानाधिकरणैवोच्यते। अत

[1]सामानाधिकरण्यमपि न भाववाचकतासाधकं यथा शुक्लादीनां रूपवाचकत्वेऽपि न रूपत्ववाचकता तद्वत् । एवं पाकत्वेन सत्तायाः सामानाधिकरण्येन पचेः तद्वाचकत्वेऽपि न सत्तावाचकत्वमिति बोध्यम् । किं च उक्तोऽर्थोऽपि न पचतीत्यनेनैव तत्कर्त्तुर्वर्त्तमानसत्तावगत्या भवतीत्यस्यानुपयोगात् तदाह्यति भाष्ये

पचादयः क्रिया (भा)

इत्यादि ॥

कथं सम्बन्ध इति । (कै)

किं सम्बन्धमूलिका इयं युक्तिर्वाक्प्रयोगोऽयमिति भाष्यार्थ इति भावः ॥

एषैवेति (भा)

दिरुक्तिः कथमत आह

---

१ सामानाधिकरण्यमपि च । इ ॥

---

अग्नितीत्यात्वं प्रसज्येत ( ६ । १ । ४५ ) । तद्धि धातोर्विहितम् ॥ इतरेतराश्रयं च प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः । वा । इतरेतराश्रयं च भवति । केतरेतराश्रयता । प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः । उत्पन्ने

---

समुदायाः संसृष्टार्थाभिधायिनः केवलं समुत्प्रेक्ष्योत्प्रेक्ष्य प्रक्रियायामर्थविभागः स शब्दविभागस्यापोद्ध्रियते इत्यर्थः । अनाश्रित्येति । भा । पारमार्थिकं नाश्रीयते परिकल्पितं त्वाश्रीयते एव । तत्त्वतो हि शब्दान्तराण्येवार्थान्तरेषु प्रयुज्यन्ते । प्रथमभावग्रहणं चेति । तदर्थप्रत्ययपरिहारो-

---

एवाकर्मकता तेषाम् । सोत्पत्त्यनुकूलव्यापारभाजामपि सूक्ष्मरूपापन्नघटादीनां परसमवेतत्वघटितकर्मताविरहात् । उक्तं च हरिणा,—

यैषेति ॥ (कै)

साध्यसाधनभावः । (कै)

क्रियाकारकभावः ॥

तथा प्रयोगदर्शनादिति । (कै)

ज्योतिष्टोमेन यजेत इत्यादावपि ज्योतिष्टोमेन इत्यस्यैव करणत्वेनान्वयो न तु धात्वर्थस्य इति मतं मञ्जूषायां विधिवादे निरूपितम् । यद्वा तस्य करणत्वेन न धात्वन्तरार्थेऽन्वय इति भावः ॥ यत्कर्त्तृका पचि क्रिया तत्कर्त्तृका सत्ता इति बोधे तु पचन्ति भवन्तीत्यादेरप्यापत्तिरिति बोध्यम् ॥

[1]यत्र खल्विति (भा)

भाष्ये । एकस्या एव कर्त्तृत्वं तन्निरूपकत्वं च न युक्तमिति भावः ॥

भवेदपि भवेदिति । (भा)

अपि भवेदिति यत्तद्भवत्वित्यर्थः ॥ नन्वन्यत्वस्य कालभेदजन्यत्वाभावादनुपपन्नमेतदत आह

१ "यत्र तु खल्विति" इति काशीस्थभाष्यपुस्तके ॥

हि प्रत्यये भाववचनत्वं गम्यते स च तावद्भाववचनादुत्पाद्यः । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ॥ सिद्धं तु नित्यशब्द-

ऽयम् । प्राथम्यस्यापेक्षिकत्वात् एच्छति । कुत इति । भा । पुत्रीयतीति । नात्र प्रथमोच्चार्यमाणः पुत्रशब्दो भावमाह "सनाद्यन्ता धातव" ( ३ । १ । ३२ ) इत्यस्य प्रत्याख्याने ऽयं दोषः । सिद्धेति । भा । प्रथम

"आत्मानमात्मना बिभ्रदस्तीतिव्यपदिश्यत" । इति ॥

अन्येप्याहुः,

**स्वाभाविकमिति।** (कै)

[१]ज्ञानहेतुत्वे तद्धेतुत्वोपचार इति भावः॥ ननु "भवेदपि भवेद्" इत्यस्य देवदत्तस्य सत्तासम्भाविता इति यत्तद्भवेद् भवत्वित्यर्थः॥ लिङा अपिना च सम्भावना प्रतिपाद्यते। अपरोक्षे लिङ् प्रार्थने। एवं च तयोः कालांशे उदासीनत्वाद्वर्त्तमानकाल इत्ययुक्तमत आह

**अपि भवेदिति।** (भा)

"सत्ता वर्त्तमाना" इत्यस्य सम्भावितेति शेषः। यद्यपि उदासीनकाले लिङ् तथापि क्रियानियमेन कालाकाङ्क्षासत्त्वात् प्रकरणादिवशेन तत्तत्कालविशिष्टक्रियावगतिः अत एव "माङि लुङ्" (३।३।१७५) आदेः सर्वलकारापवादत्वव्यवहारः। एवं च "न हि भूतभाविनोस्तादृशी प्रतीतिर्यादृशी वर्त्तमान" इति न्यायेन सम्भावना लिङन्तप्रतिपाद्यस्य वर्त्तमानत्वसिद्धिः। तदाह

**तथा भूता हीति॥** (कै)

१ तद्ज्ञानहेतुत्वे। क॥

त्वादनाश्रित्य भाववचनत्वं प्रत्ययः। वा। सिद्धमेतत्। कथम्। नित्याः शब्दाः। नित्येषु च शब्देष्वनाश्रित्य भाववचनत्वं प्रत्यय उत्पद्यते॥

प्रथमभावग्रहणं च। वा। प्रथमभावग्रहणं च कर्त्तव्यम्। प्रथमं यो

आद्यो भावो प्रथमेनापि क्वचाभिधीयते न तु द्वितीयः। अभिधानत इति। भा। अन्येनानभिहितं भावं य आह स धातुः। शिष्ये इत्यत्र तु प्रकृत्यभिहितं भावं प्रत्यय आहेति न तस्य धातुसंज्ञाप्रवृत्तिः। यथा

"अस्त्यादावपि धर्म्मांशे भाव्येऽस्त्येव हि भावना।
अन्यत्रांशेऽभावात्तु सा तथा न प्रकाशत"। इति॥

भवेदित्यस्याः सत्ताया इति। (कै)

प्रार्थनालिङन्तार्थाया इत्यर्थः। सम्भावनाविषयवर्त्तमानसत्ता कर्त्तृका प्रार्थ्यमाना सत्तेति बोधः॥ नन्वेवमपि प्रार्थना लिङन्तार्थस्य कथं सर्वकालत्वं प्रार्थनाया भविष्यद्विषयतया तद्विषयसत्तायां भविष्यत्वप्रतीतेरिति चेन्न। शान्तो रोगो इति प्रश्ने पुनरनुत्पत्तिध्वननार्थेकेन शमिष्यतीत्युक्ते संवादायापरेण शाम्यतीत्युक्तेऽनौत्तरापायशाम्यतु इति प्रयोगदर्शनेन प्रार्थनाविषये सर्वकालत्वाभिमानात् भाष्ये

स्यादपि स्यादिति। (भा)

अत्र सर्पिष इत्यध्याहारेण पदार्थद्योतकत्वाद् अपेः[१] कर्म्मप्रवचनीयत्वेन षत्वाभावः॥ तदेवमत्र लक्षणे भिदादिष्वव्याप्तिर्भवति सामानाधिकरण्याभावात् पचादाव्याप्तिश्च इति दूषणद्वयं स्थितम्॥

---

१ अ १। पा ४। सू ९६॥

---

भावमाहेति। कुतः पुनः प्राथम्यं किं शब्दत आहोस्विदर्थतः। किं चातः। यदि शब्दतः सन्नादीनां धातुसंज्ञा न प्राप्नोति। पुत्रीयति वस्त्रीयतीति। अथार्थतः सिद्धा सन्नादीनां धातुसंज्ञा स एव तु दोषो भाववचने तदर्थप्रत्य-

---

प्रथममयं राजानं पश्यतीत्यस्यायमर्थो यदन्येनादृष्टं पश्यतीति तथेहापि प्राथम्यमभिधानक्रियापेक्षमाश्रीयते अन्येभ्यो भावाभिधायिभ्यो यः प्रथमं भावमाहेति। सुमध्यम इति। भा। द्वौ शब्दार्थपक्षौ दुष्टत्वापरित्यज्योपादीयमानमभिधानं मध्यममिति व्यपदिश्यते। तदेव निर्दोषत्वाच्छोभनत्वेन

---

तथा पचौ विक्लित्तौ च विक्लित्तिर्यद्यपि साधारणी तथापि पचौ व्यापारव्यधिकरणा विक्लित्तौ तु तत्समानाधिकरणा सेति सकर्मकाकर्मक-

कर्त्री भवन्तीति (भा)

इत्यस्यानुपपन्नं "भाववचनो धातुः" इति लक्षणमिति शेषः । भवति सामानाधिकरण्याभावेन भाववचनलाभावादिति भावः ॥

अस्त्विति । (भा)

अथ तदुद्धरति

विप्रतिषिद्धानाम् (भा)

इत्युपलक्षणं पचादीनामपि ॥

भेदादयोऽपीति । (कै)

जन्मवाची भवति । तेन ध्वंसस्यापि जायमानत्वान्नाव्याप्तिरिति भावः । अन्योन्याभावोऽपि तत्तद्वस्तु जन्मना जन्य एवेति तद्वाचक-भेदशब्दसिद्धिर्बोध्या ॥

एतानि (भा)

इति नपुंसकमयुक्तम् उपक्रान्तानां पुंस्त्वादत आह

---

यप्रतिषेध इति । एवं तर्हि नैवार्थतो नापि शब्दतः। अभिधानतः। सुमध्यमे-ऽभिधाने यः प्रथमं भावमाह ॥ इह य एव भाववचने धातौ दोषास्त एव क्रियावचनेऽपि । तत्र त एव परिहाराः । तचेदमपरिहृतमस्तिभवतिविद्य-तीनां धातुत्वमिति । तस्य परिहारः । कां पुनः क्रियां भवान् मत्वाहास्ति-

---

विशेष्यते । चिकीर्षतीत्यत्र करोत्यर्थोपसर्जनामिच्छामन्येनानभिहितां सन् प्रत्यय आहेति प्रवर्त्तते धातुसंज्ञा । अत्र पक्षे यथा शिष्य इति प्रत्ययस्य धातुसंज्ञा न भवति तथा स्वार्थिकानामायादीनामपि न प्राप्नोति गोपायति

---

विभागः । न हि धात्वर्थभूतफलशालित्वमात्रं कर्मत्वं किन्तु व्यापारवैयधि-करण्यमपि फले पेक्ष्यते । यत्तूक्तं किं करोतीति प्रश्ने इत्यादि । तदसिद्धम् ।

एतदिति ॥ (कै)

ननु कर्मसाधनेऽपि वृक्षादिषु दोषोऽपरिहृत एव इत्यत आह

तेन साध्यमानेति । (कै)

साध्यावस्थापन्नार्थवाचिनामित्यर्थः ।

कृतता (कै)

घटमकार्षीद् इत्यादौ ॥

क्रियमाणता (कै)

घटं करोतीत्यादौ ।

कर्त्तव्यता (कै)

घटं करिष्यतीत्यादौ ॥

सिद्धरूपाण्येवेति । (कै)

स्वभावेन शब्दशक्तिस्वभावेन सिद्धं सूक्ष्मरूपेण सिद्धावस्थमेव द्रव्यं शब्दवाच्यमिति भाष्याक्षरार्थः । अत एव तस्य क्रियाकाङ्क्षा

---

भवति विद्यतीनां धातुसंज्ञा न प्राप्नोतीति । किं यत् तद्देवदत्तः कंसपात्र्यां पाणिनौदनं भुङ्क्ते इति न ब्रूमः कारकाणि क्रियेति । किं तर्हि । कारकाणां प्रवृत्तिविशेषः क्रिया । अन्यथा च कारकाणि शुष्कौदने प्रवर्त्तन्तेऽन्यथा च

---

कामयते इति । तदर्थं "सनाद्यन्ता धातव" (३ । १ । ३२) इति पठितव्यमेव इहेति । भा । तदर्थं प्रत्ययप्रतिषेध इतरेतराश्रयं च । प्रथमभावग्रहणं च सिद्धं तु नित्यशब्दत्वादिति च । केवलं प्रथमभावग्रहणमपनीय प्रथमक्रियाग्रहणं वेति क्रियाग्रहणं कर्त्तव्यम् । तत्रेदमिति । भा ।

---

आसन्नविनाशं कञ्चिदुद्दिश्य किं करोतीति प्रश्ने अस्तीत्युत्तरस्य सर्वसम्मतत्वात् । इतरत्र तु सुस्थतया निश्चिते किं करोतीति प्रश्नः पाकादिविशेषगोचर एव इत्यवधारणादस्तीति नोत्तरम् ।

यद्यपि क्रिया तथापि सा शब्दशक्तिस्वभावात् स्वरूपेण साध्यतयैव प्रतीयत इति बोध्यम् ॥

मातृत्वमिति। (कै)

मात्रादिशब्दजनकस्त्रीत्वादौ शब्दजनकत्वस्य च जन्यनिरूपितत्वमित्यभिमानः ॥ भाष्ये

पठिष्यति हि (भा)

इत्यस्य हि शब्दात् पूर्वोक्तशङ्कोपपादकत्वभ्रमं वारयति

इदानीमिति ॥ (कै)

समानशब्दातिप्रसङ्गवारणायाह

भाववचनानामिति ॥ (कै)

---

मांसौदने। यद्येवं सिद्धास्तिभवतिविद्यतीनां धातुसंज्ञा। अन्यथा हि कारकाण्यस्तौ प्रवर्त्तन्तेऽन्यथा हि भियतौ॥ *षड् भावविकारा इति ह

---

किं करोतीति प्रश्नेऽस्त्यादिभिः प्रतिवचनाभावादक्रियावचनत्वमेषामिति मन्यते। यच्चाप्युक्तमिह सर्वेषु साधनेषु सन्निहितेषु कदाचित् पचतीत्ये-

---

एतेन

"यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते

आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते"

इत्यपि व्याख्यातम्। पूर्वापरीभावापन्नानेकक्षणविश्लिष्टस्योत्पत्तिरा-

---

भावप्रधानमाख्यातं सत्वप्रधानानि नामानि तद्यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचति इत्युपक्रमप्रभृत्यपवर्गपर्य्यन्तं मूर्त्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरित्यद इति सत्त्वानामुपदेशः। निरु – नैघण्टुका मूर्वषट् — अ १ । पा १ । ख १ ॥

कर्त्र्यो भवन्ति (भा)

इत्यतः

अस्त्वयं कर्तृसाधनो भवतीति भाव इति (भा)

न कश्चिद्दोष इत्यर्थो भाष्यस्य सूत्राक्षरैरस्य सङ्ग्रहं दर्शयति

भूरिति कर्तरीति॥ (कै)

अर्थस्त्वभिन्न एवेति। (कै)

एवं च कर्तृसाधनकर्मसाधनयोरविशेषः फले दोषवारणमपि समं न्यायप्राप्तश्च "कर्तृसाधन" इति स एवास्त्वित्याशयः॥ भाष्ये

किं वक्तव्यमिति (भा)

भाववचनाः

भुवाद्यो धातव इति (भा)

किं वक्तव्यमित्यर्थः॥ भाष्ये

---

स्माह भगवान् वार्ष्यायणिः। जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति। सर्वथा स्थित इत्यत्र धातुसंज्ञा न प्राप्नोति।

---

तद्भवति कदाचिन्नेति तदस्त्यादिषु नास्ति। न ह्यस्तीति कदाचिद्भवत्यपि तु सर्वदेति पाकादिभिर्वैधर्म्यम्। यथा च पचतितराम् इति। प्रकर्षो भवति

---

त्वास्तीत्यादावपि सुलभैवेति भावः। पचत्यादावपि हि अधिश्रयणादिरधःश्रयणान्तो व्यापारकलापः क्रिया। अत एव तस्य युगपदसन्निकर्षान्न

---

षड्भावविकारा भवन्तीति वार्ष्यायणिः। जायते अस्ति विपरिणमते वर्द्धते अपक्षीयते विनश्यतीति। जायत इति पूर्वभावस्यादिमाचष्टे नापर-भावमाचष्टे न प्रतिषेधति अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं विपरिणमत

## औणादिक इति (भा)

बाहुलकादिति भावः॥

## इडि शब्दस्येति (कै)

मध्यमङ्गलस्य "शिवशमरिष्टस्य करे" (४। ४। १४३) इत्यादिरेव सिद्धत्वेनेदं नातीवोपयुज्य इति भावः॥

## जायमानमिति। (कै)

तत्त्वेन प्रतीयमानमित्यर्थः। एवं वदतानेन प्रातिपदिक-निमित्तार्थपाठो नाश्रितः। वृक्षादीनामुतत्वेनाभावात्तव व्यावृत्ति-सिद्धेरिति मन्वानः शङ्कते भाष्ये

## भाववचने (भा)

इत्यादि॥

---

वाह्यो ह्येतेभ्यस्तिष्ठतिः। एवं तर्हि क्रियायाः क्रियानिवर्त्तिका भवति द्रव्यं द्रव्यस्य निवर्त्तकम्। एवं हि कश्चित् कञ्चित् पृच्छति। किमवस्थो देवदत्तस्य

---

नैवमस्तितरामिति। किं यत्तद् इति। भा। यत्तच्छब्दाभ्यां कारकवैचित्र्यं निदर्श्यते। प्रवृत्तिविशेष इति। भा। सर्वा प्रवृत्तिः प्रवृत्त्यन्तराद्भिद्यते इत्यस्यैव

---

प्रत्यच्छता। किन्तु एकैकस्याधिश्रयणादिव्यापारस्य क्रमेणानुभवे सति मनसा सङ्कलना क्रियते। तदुक्तं भाष्ये। क्रिया नामेयमत्यन्तापरिदृष्टा

---

इत्यप्रच्यवमानस्य तत्त्वाद्विकारं वर्द्धते इति स्वाङ्गाभ्युच्चयं सांयोगिकानां वार्थानां वर्द्धते विजयेनेति वा वर्द्धते शरीरेणेति वा उपचीयत इत्येतेनैव व्याख्यातः प्रतिलोमं विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति। निरु-नैघ-पूर्वषट्-अ १। १ पा। ख ३॥

**प्रत्ययस्येति।** (कै)

प्रत्ययान्तस्य तूपदेशाभावाद् धातुत्वेऽप्यात्वाप्राप्तेरिति भावः॥ [१]"अशितीति" [२]पर्य्युदासेन अशित परत्वाभावादात्वाप्राप्तिरत आह

**तद्धीति॥** (कै)

भाष्ये

**तद्धि धातोरिति।** (भा)

"आदेच" (६। १। ४५) इत्यत्र [३]"धातोः" इति सम्बध्यते

---

१ आदेच उपदेशेऽशिति (६।१।४५) इति सूत्रे॥

२ "अथवा पुनरस्तु पर्य्युदासः" इत्यादिना तत्रैवोक्तं (६।१।४५) भगवता॥

३ धात्वधिकारात् प्रातिपदिकस्याप्राप्तिः। वा। धात्वधिकारात् प्रातिपदिकस्यात्वं न भविष्यति। धातोरिति वर्त्तते। इत्याद्युक्तं भगवता तत्रैव। ६।१।४५॥

---

व्याधिरिति। स आह। वर्धत इति। अपर आह। अपक्षीयत इति। अपर आह। स्थित इति। स्थित इत्युक्ते वर्धतेश्चापक्षीयतेश्च निवृत्ति-

---

सर्वस्याः क्रियात्वम्। अन्यथेति। भा। शुष्कौदने मन्दप्रयत्नः प्रवर्त्तते मांसौदने तु संवेगेन। यथा च भोजनक्रियायां परस्परवैलक्षण्यात् प्रवृत्तिविशेषत्वं

---

अशक्या पिण्डीभूता निदर्शयितुमिति। ऐक्यमपि पारिभाषिकम्। एकफलावच्छिन्नत्वात्। उक्तं च,—

"गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते" इति।

---

अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह ते यथा वचनमभ्यूहितव्याः। नि — नैघण्टु — पूर्वषट् — १। १। ख ४॥

इति वार्त्तिककृतोऽभिमान इति भावः। भाष्यकारस्तु उपदेशग्रहण-बलेन तत्र [1]"धातोः" इति असम्बन्धं वक्ष्यति॥ अत्र तु नालम्

[2]श्निति नेति (भा)

निषेधेन श्निप्रत्ययपरत्वयोग्य एवैजन्त आत्वप्रवृत्तेरिति बोध्यम्॥ यं विधिप्रतीतिन्यायेनैकारोच्चारणसामर्थ्यात् आत्वं न स्यादत आह

एकारोच्चारणं त्विति॥ (कै)

व्यवस्थिता इति। (कै)

साधुत्वान्वाख्यानमात्रे शास्त्रव्यापारात् प्रागुक्तप्रणाली सर्वापि सिद्धैवेति नान्योन्याश्रय इति भावः॥

---

१ अथापि निवृत्तम्। एवमप्यदोषः। उपदेश इत्युच्यत उद्देशश्च प्रातिपदिकानां नोपदेशः। ६। १। ४५॥

२ "श्निति नेति। श्निति प्रतिषेधे अजुकोक्षपसङ्ख्यानम्। रयीध्वम् चाध्वम् श्निशीते" इत्याद्युक्तं (६। १। ४५) तत्रैव॥

---

भवति॥ अथवा नान्तरेण क्रियां भूतभविष्यद्वर्त्तमानाः काला व्यज्यन्ते। अस्त्यादिभिश्चापि भूतभविष्यद्वर्त्तमानाः काला व्यज्यन्ते॥ अथवा नान्यत्

---

नैवमस्त्यादीनाम्। यद्येवमिति। भा। अत्रापि प्रवृत्यन्तरापेक्षयास्त्येव प्रवृत्तिविशेषरूपत्वमित्यर्थः। अन्यथेति। भा। अस्तावात्मभरणरूपा

---

तदेवं भवत्यादौ क्रियावाचकत्वं सुवचम्। अत एवाभूदस्ति भविष्यतीति कालयोगः। न हि क्रियात्वं विनासौ सम्भवति। तदुक्तम्,—

"क्रियाभेदाय कालस्तु सङ्ख्यासर्वस्य भेदिका"

इति॥

"कालानुपातियद्रूपन्तदस्तीति प्रतीयत"

संसृष्टार्थाभिधायिन इति। (कै)

संसृष्टोपस्थापका इत्यर्थः॥ धातुसंज्ञार्थं भाववचनत्वाश्रितत्वाद् "अनाश्रित्य" इत्यनुपपन्नमत आह

पारमार्थिकमिति। (कै)

तस्य व्यवहारेण समुदायवृत्तित्वादिति भावः। वार्त्तिककृता "अनाश्रित्य" इत्युक्तेरिति तात्पर्यम्॥

परिकल्पितं त्विति। (कै)

भाष्यकृता पूर्वमन्वयव्यतिरेकाभ्यां धातुरेव क्रियावाचीत्युक्तेरिति भावः॥ च श्रवणाद्दोषसमुच्चय इति भ्रमं प्राप्तं वारयति

तदर्थेति। (कै)

वार्त्तिककृता धातोरित्यस्यात्वे सम्बन्धाभ्युपगमात्तदुक्तोऽयं परिहार इत्यर्थः॥ ननु स्वभावादेव धातूनां प्रथमभाववाचित्वे "कुत" इति हेतुप्रश्नोऽसङ्गत इत्यत आह

प्राथम्यस्येति। (कै)

---

एकेनाप्यदाख्येयम्। तेन न भविष्यति किं करोति अस्तीति॥ अथ यद्येव क्रियावचनो धातुरित्येष पक्षोऽथापि भाववचनो धातुरिति किं गतमेत-

---

प्रवृत्तिर्म्रियतौ तत्यागरूपा। उत्पत्तिप्रभृत्याविनाशाच्च सत्तानुषङ्गादस्तीति प्रत्ययस्य सन्निहितेषु साधनेषूत्पत्तिरवश्यं भाविनीति कादाचित्कत्वा-

---

इति च॥ भाष्ये तूक्तार्थसाधनाय निवक्तकारवचनमुदाहृतम्। षड्भावविकारा इति ह स्माह भगवान् वार्ष्यायणिरिति। भावस्य क्रियायाः षट्

अवधिविषयप्रश्न इति भावः ॥ प्रथमस्यासौ भाववचनश्चेति विग्रहे प्रथममुच्चार्य्यमाणः सन्

भावमाहेति। (भा)

अर्थे शब्दतः प्राथम्यं प्रथमस्य भावस्य वचन इति विग्रहे "ऽर्थतः" द्वयोर्मध्ये प्रथमं पूर्व्वकालं भाववचन इति विग्रहे विस्पष्टः पटुवत् समासेऽभिधानतः स्वयं प्रथमोऽप्रथमो वा प्रथममप्रथमं वा भावमन्येभ्यः पूर्वमाह इत्यर्थादिति बोध्यम् ॥

नाचेति। (कै)

यद्यपि तिङपेक्षया [1]क्यजपि प्रथमस्तथापि तस्य गौणं प्राथम्यमिति भावः। न च क्यजन्तस्य तिङन्तपेक्षया मुख्यमेव प्राथम्यम्। पुत्र इच्छा आश्रय इति अर्थत्रयावभासमानखण्डत्रयस्यैव करणादिति तत्त्वम् ॥ ननु "सनाद्यन्ता" (३।१।३२) इति तस्य धातुत्वं सिद्धमत आह

सनाद्यन्ता इति ॥ (कै)

---

१ "क्यजपि" इत्यारभ्य "न च क्यजन्तस्य" इत्यन्तं नास्ति क पुस्तके ॥

---

दियता सूत्रेणाहोस्विदन्यतरस्मिन् पक्षे भूयः सूत्रं कर्त्तव्यम्। गतमित्याह। कथम्। अयमादिशब्दोऽस्त्येव व्यवस्थायां वर्त्तते। तद्यथा। देवदत्तादीन्

---

भावः। प्रकर्षप्रत्ययोऽपि दृश्यते विद्यतेतरामिह धान्यमिति। अत्रैवार्थे आगममाह "षड्भावविकारा" इति। भा। भावस्य क्रियाया षट्प्रकारा

---

प्रकारा इत्यर्थः। तेषु च जायतेऽस्तीति पाठात्सर्वक्रियान्वयः सिद्ध इत्यर्थः। कैयटस्तु प्रकारान्तरेणापि व्याचख्यौ। भावस्य सत्ताया एते प्रकाराः

भाववचनाः (भा)

इति लक्षणे सनाद्यन्तानामथनेनैव धातुत्वसिद्धौ तत्सूत्रमेव प्रत्याख्येयमिति भावः ॥

क्वचेति । (कै)

लक्षणे भाववचनस्तदन्तश्च गृह्यते इति तदन्तस्य धातुत्वसिद्धिरिति भावः ॥

प्रथममयं राजानमिति । (कै)

प्रथममयमेव राजानमित्यर्थः ॥ नन्वस्य पचस्यान्यत्वान्मध्यम इत्ययुक्तमत आह

द्वाविति । (कै)

उभयास्पृष्टे मध्यस्य इति व्यवहारात् प्रागुक्तदोषद्वयास्पर्शेनायम् मध्यम इति भावः ॥

---

समुपविष्टानाह देवदत्तादय आनीयन्तामिति । न उत्थाप्यानीयन्ते । अस्ति प्रकारे वर्त्तते । तद्यथा । देवदत्तादय आढ्या अभिरूपा दर्श-

---

इत्यर्थः । तेषु चास्तिः पठितः इति तस्यापि क्रियात्वमित्यर्थः । अथवा भावस्य सत्ताया एते प्रकाराः । सत्तैवानेकक्रियात्मिका साधनसम्बन्धात्

---

सत्तैवानेकक्रियात्मिका साधनसम्बन्धात् अवसीयमानसाध्यस्वरूपा जन्मादिरूपतयावभासत इति । तथा च । जाति समुद्देशेऽपि सम्बन्धिभेदात् सत्तैवेत्युपक्रम्योक्तम्,—

"प्राप्तक्रमविशेषेषु क्रिया सैवाभिधीयते
क्रमरूपस्य संहारे तत्सत्वमिति कथ्यत"

## इच्छामन्येनेति । (कै)

एवं प्रतीषीषतीत्यादावपि प्रकृत्यर्थातिरिक्तां तद्विषयामिच्छा-मन्येनाभिहितामेव सनाहेति बोध्यम् ॥

## आयादीनामिति । (कै)

तदन्तानामित्यर्थः ॥ क्रियावचनपक्षे प्रथमभावपदस्यानन्वयात्त एव परिहारा इत्यसङ्गतमत आह

## तदर्थं (कै)

इत्यादि ॥ भिदादीनामपि विभागफलकव्यापारवाचित्वात् क्रिया-वाचित्वमस्त्येव अभावोऽपि सूक्ष्मावस्थसत्तैवेत्यभाववाचिनामपि भाव-वचनत्वम् भावस्याक्षीकत्वाभ्युपगमादिति बोध्यम् ॥ भाष्ये

## तत्रेदमिति (भा)

तत्र

---

नीयाः पक्षवन्तः । देवदत्तप्रकारा इति गम्यते । प्रत्येकं चादिशब्दः परि-समाप्यते । भ्वादय इति च वादय इति च । तद्यदा तावत् क्रियावचनो

---

अवसीयमानसाध्यरूपा जन्मादिरूपतयावभासते । एते च भावविकारा निरुक्ते निपुणं व्याख्याताः । इह तु प्रकृतानुपयोगान्न व्याख्यायन्ते । सर्वथेति । भा । भावविकारपरिसंख्यानस्याव्यापकत्वमित्यर्थः । एवं तर्हीति ।

---

इति ॥ व्यापारविशेषाणां साध्यत्वात् क्रमिकत्वाच्च तदुपहितायास्ते भवत इत्यर्थः । पाक इत्यादौ तु प्रकृत्या साध्यावस्थाया असत्वरूपाया उपस्थितिः । घञा तु सिद्धरूपायाः । उक्तं च,—

क्रियायाःसिद्धतावस्था साध्यावस्था च कीर्त्तिता ।

**क्रियावचनो धातुः** (भा)

इतिलक्षणे क्रियावचनत्वाभावादप्राप्तं धातुत्वमस्त्यादीनामिति भावः ॥ कुतो क्रियात्वं तेषामत आह

**किं करोतीति ॥** (कै)

**नह्यस्तीति** (कै)

साधनसन्निधानेऽस्तीति कदाचिद् भवतीति नापि तु सर्वदा भवत्येवेत्यन्वयः ॥ क्रियास्वरूपं प्रश्नितैव वाचयितुं पृच्छति भाष्ये

**कां पुनरिति ॥** (भा)

तदाशयं स्वयमेवोन्नीयाह

**किं यदिति ।** भा

एवं हि भुजिकारकस्येवास्तिकारकस्यापि क्रियात्वमस्तु का क्षतिरिति भावः ॥ ननु

**भुङ्क्ते इति** (भा)

यत् सा क्रिया इत्यन्वये धात्वर्थक्रियावाद एवोपच्छिन्नः स्यादिति

---

धातुरित्येष पक्षस्तदा भू इत्यत्र य आदिशब्दः स व्यवस्थायां वर्त्तते वा इत्यत्र य आदिशब्दः स प्रकारे । भू इत्येवमादयो वा इत्येवं प्रकारा इति ।

---

भा । अनुमानेन स्थानस्य क्रियात्वं प्रतिपादयति । अन्यथा स्थित इत्युक्ते वृद्धिह्रासनिवृत्तिर्नप्रतीयेत । अथ वेति । भा । क्रियान्तरधर्मसमन्वयेनाख्या-

---

सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम् ॥
आख्यातशब्दे भागाभ्यां साध्यसाधनवर्णिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपिक्रमः ॥

न ब्रूमः (भा)

इत्यादिग्रन्थासङ्गतिः ॥

देवदत्त इति (भा)

यत् या क्रिया इत्याद्यन्वये यत्तदोः प्रधानपरामर्शित्वहानिरत आह

यत्तदिति । (कै)

क्रियांशस्य प्राधान्येऽपि न तात्पर्यविषयता सर्वनाम्नां गुणपरामर्शकता च दृष्टान्तस्तद्व्यापाराविष्टकारकाण्येव ताभ्यां परामृश्येत इत्यर्थः ॥

कारकवैचित्र्यम् (कै)

इत्यस्य विचित्राणि कारकाणि इत्यर्थः स्वार्थे ष्यञिति बोध्यम् ॥ वैचित्र्यं च तत्तद्व्यापाराविष्टत्वमेव भाष्ये शङ्कितात्

न ब्रूमः (भा)

इत्यादि ॥

---

यदा तु भाववचनो धातुरित्येष पक्षस्तदा वा इत्यत्र य आदिशब्दः स व्यवस्थायां भू इत्यत्र य आदिशब्दः स प्रकारे । वा इत्येवमादयो भू इत्येवं

---

दीनां क्रियात्वं प्रतिपाद्यते। घट इत्युक्ते कालविशेषावगतिर्नास्ति। अस्ति अभूद् भविष्यतीति कालविशेषावगमात् साध्यमानस्य चार्थस्य कालेन

---

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।

सत्वभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥

इति लिङ्गसङ्ख्याकारकाद्यन्वययोग्येनावस्थाविशेषेणाघञादिभ्य उपस्थितिरित्यर्थः। एतेन "कृदभिहितो भावो द्रव्यवत्प्रकाशते" ( उपपदमतिङ्। २।२।१९। इति सूत्रव्याख्यानावसरेऽप्युक्तं भगवता) इति तृतीयाध्याये

**प्रवृत्तिविशेष इति।** (भा)

स चाख्याद्यर्थे नास्तीति भावः। एतच्चोपलक्षणं प्रतिवचनादीनामिति तान्युक्तवानुपाध्यायः॥ ननु प्रवृत्तिविशेषस्य क्रियात्वे प्रवर्त्तते इत्यत्र क्रियात्वानापत्तिरत आह

**सर्वेति।** (कै)

पचाद्यपेक्षया सापि विशेष एवेति भावः॥ शङ्किताशयमुपसंहरति

**यथा चेति।** (कै)

एवं चास्त्यादौ धातुत्वासिद्धिरिति भावः॥ सिद्धान्त्याह भाष्ये

**यद्येवमिति॥** (भा)

**अन्यथा हीति।** (भा)

कारककर्त्तृकाऽस्तौ वाच्यत्वेन स्थिता प्रवृत्तिरन्यथा इत्यक्षरार्थः॥ तदेवाह

---

प्रकारा इति॥ यदि तर्हि लक्षणं क्रियते नेदानीं पाठ कर्त्तव्यः। कर्त्तव्यश्च किं प्रयोजनम्। भूवादिपाठः प्रातिपदिकाणपयत्यादिनिवृत्त्यर्थः। वा। भूवा-

---

योगात् क्रियात्वावसायः। अथ वेति। भा। निर्ज्ञातायां सत्तायां किं करोतीति प्रश्नासम्भवादस्तीति प्रतिवचनाभावः। न तु क्रियात्वाभावादित्यर्थः। यदा तु प्रत्यासन्नविनाशप्रशङ्कया देवदत्तः किं करोतीति प्रश्नः तदास्ति

---

भाष्यमपि व्याख्यातम्। "प्रकल्पित" इत्यनेन पदस्फोटस्यैव वास्तवतां ध्वनयति। साध्यत्वेनेति। अत एव तत्प्रतिकारकतया ओदनादेरन्वय इ भावः। अत एव भोक्तुं पाको भुक्त्वा गमनमित्यादौ तुमुनादयः सि

आत्मभरणरूपेति । (कै)

स्थूलरूपधारणानुकूलव्यापाररूपेत्यर्थः ॥

म्रियतौ (कै)

तत्त्यागानुकूलव्यापाररूपेति भावः ॥ एवं च म्रियत्यपेक्षया प्रवृत्ति-विशेषरूपतास्त्येवास्यार्थस्येति तात्पर्य्यम् ॥ पूर्वोक्तदूषणत्रये लक्ष्य-मुद्धरति

उत्पत्तीत्यादि ॥ (कै)

कादाचित्कत्वाभाव इति । (कै)

अयं चात्मभरणलक्षणसत्तावाच्येव । तदपि कर्त्तृरूपे वस्तुनि विद्यमाने एव वस्तु कादाचित्कताप्रयुक्ता तु साऽस्त्येव । अत एव भूतभविष्यत्प्रयोगाः सङ्गच्छन्ते । उत्पत्तिरूपसत्तावाचिनि तु का( दा । क )चित्कताप्यस्त्येव ॥

विद्यतेतराम् (कै)

---

दिपाठः कर्त्तव्यः । किं प्रयोजनम् । प्रातिपदिकाणपयत्यादिनिवृत्त्यर्थः । प्रातिपदिकनिवृत्त्यर्थं आणपयत्यादिनिवृत्त्यर्थश्च । के पुनराणपयत्यादयः ।

---

तावदिति प्रतिवचनं भवत्येव । अथ यद्येवेति । भा । परिस्पन्दापरिस्पन्दरूपतया क्रियाभावयोर्भेदेनोपन्यासः । तदा वेत्यत्रेति । भा । अदादीनामादौ वा गति गन्धनयोरिति पठितव्यम् ।

---

क्त्वोऽर्थास्त्वनभिधानान्नेत्येव परमम् । अत एव क्वचिद्दृश्यतेऽपि द्विर्वचनम् । द्विरभिवधिरिति सूत्रवार्त्तिकयोः प्रयोगात् । सत्त्वभावस्त्विति । अत एव [illegible]कां करोति इत्यादौ कारकत्वेन सान्वेतीत्यर्थः । नन्वेवं पश्य मृगो धावती-

इत्यपि कारकगतप्रकर्षारोपेणैव बोध्यम् ॥ भाष्येऽस्यादीनां [1]क्रिया-वाचकत्वे युक्त्यन्तरमाह

षड्भाव (भा)

इत्यादि ॥

क्रियाया इति । (भा)

भावो लीला क्रिया चेष्टा इति कोशादिति भावः ॥ विकार शब्दः प्रकारवाची ॥

अथवेति । (कै)

उत्पत्तिविनाशयोरपि सूक्ष्मरूपेण वस्तुनो भावात्तेषामपि सत्ता-त्मकत्वमिति बोध्यम् ॥

भावस्य सत्तायाः । (कै)

ब्रह्मसत्ताया या एते विकाराः क्रियाप्रकारा मायावशात् त इव भासमाना इति वार्ष्यायण्युक्तेरर्थः ॥

---

१ "क्रिया" इत्यारभ्य "इत्यादि" इत्यन्तं नास्ति क पुस्तके ॥

---

आज्ञापयति वट्टति वड्डतीति । स्वरानुबन्धज्ञापनाय च । वा । स्वरानुबन्धज्ञा-पनाय च पाठः कर्त्तव्यः । स्वराननुबन्धांश्च ज्ञास्यामीति । न ह्यन्तरेण पाठं

---

अदादिगणो गणानामादौ । तेन सर्वे धातुपाठसन्निविष्टा गृहीता भवन्ति । यदि तर्हीति । भा । क्रियावचनो धातुरिति वा भाववचनो धातुरिति वा लक्षणं क्रियते नार्थः पाठेन इत्यर्थः । भूवादिपाठ इति । भा ।

---

त्यादौ मृगकर्तृकशीघ्रगतेर्दर्शनम्प्रति कर्मता न स्यात् । न च संसर्गमर्या-दयेह कर्मताभावेऽपि प्रकारत्वेनाभानान्नोक्तदोष इति वाच्यम् । एवमपि पचति भवतीत्यादावसङ्गतेः । एककर्तृका वर्त्तमाना पचिक्रिया एककर्तृका

सत्तैव इत्यादि (कै)

ब्रह्मसत्तैवानेकक्रियाविवर्त्तात्मिका साधनैः कारकैः सम्बन्धात् अव-सीयमानसाध्यस्वरूपा जन्मादिरूपतया भासत इत्यर्थः। एतच्च निरुक्तभाष्ये (निरु-नैघण्टु-पूर्वषट्-१।१) स्पष्टम्॥

भावविकारेति। (कै)

एवं चाव्याप्तिदूषितं परिगणनं कथमस्मिन्नर्थे प्रमाणं भवेदिति भावः॥

अनुमानेनेति। (कै)

षड्भावविकारेष्वभावादक्रियात्वमेव मन्यमानं प्रति इत्यादि॥

अन्यथेति। (कै)

एवं च स्थितेरपि अस्थितायामन्तर्भावान्न परिगणनाव्याप्ति-रिति भावः॥ तिष्ठतेरेव क्रियात्वे युक्त्यन्तरमिति भ्रमं वारयति

क्रियान्तरेति। (कै)

एतन्मूलिकैव "क्रियाभेदाय कालास्त्वि"ति वाक्यपदीयोक्तिः कालस्य क्रियामात्रपरिच्छेदकत्वादिति भावः॥ ननु यद्यस्यादेः

---

स्वरा अनुबन्धा वा शक्या विज्ञातुम्॥ ये त्वेते न्याय्यविकरणा उदात्ता

---

यथा भोक्तुं पाक इति क्रियाश्रयाणि तुमुनादीनि भवन्ति तथा धातुसंज्ञापि स्यादिति पाकादीनां शयितव्यादीनां च प्रातिपदिकानां पाठेनासौ निवर्त्यते। तथा हिरुक् पृथग् इत्यादीनां च क्रियाप्रधानानामव्ययानाम्।

---

वर्त्तमाना भवन क्रियेति हि तत्र वाक्यार्थः। तत्र च भवतीति लकारार्थस्य कर्तुर्देवदत्तकर्तृकापचिक्रियां प्रत्यभेदेन संसर्गेण विशेष्यत्वस्यावश्यकत्वात्।

क्रियावाचित्वं तर्हि किं करोतीति पृष्टेऽस्तीत्याद्युत्तरं कुतो न इत्यतो भाष्ये

अथवा नान्यदिति । (भा)

अत्र "अथवा" इति यत इत्यर्थे ॥

प्रश्नासम्भवादिति । (कै)

निर्ज्ञातत्वेन सत्ताविषयप्रश्नासम्भवादित्यर्थः ॥ ननु क्रियाभावयोरेकार्थतया कथमिह भेदेनोपादानमत आह

परिस्पन्देति ॥ (कै)

आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः सादृश्यं चान्यानभिहितसाध्यावस्थापन्नार्थवाचित्वेनेति नाव्याप्तिः । तत्र वा प्रभृतयो भूप्रकारा इत्यर्थे वा धातोः प्राचीनानां न स्यादित्यत आह

अदादीनामिति । (कै)

"अदिप्रभृतिभ्य" (२।४।७२) इत्यस्य स्थाने "वा प्रभृतिभ्य" इत्येव पठनीयम् । "अदिप्रभृतिभ्य" इत्यत्र बहुव्रीहितत्पुरुषयोरेकशेषो वा बोध्यः ॥ ननु व्यवस्थावाच्यादिशब्दान्तर्भावेन पाठस्यापि लक्षणेनापेक्षणीयत्वान्नेदानीमित्ययुक्तमत आह

अनुनुबन्धकाः पठ्यन्त एतेषां पाठः शक्योऽकर्त्तुम् । एतेषामप्यवश्यमाशपय-

एतेषामपीति । भा । तेषामपाठे निवृत्तिरशावयत्यादिवत्स्यात् तस्मात् आशवयत्यादिष्वेषां निवृत्तिर्यथा स्यात् तन्मध्ये मा प्रविक्षन्नित्येवमर्थस्तेषा-

तथाच देवदत्तवत्पचिक्रियायाः सत्वधर्मो दुर्वारः । अन्याङ्कः । कर्त्तृत्वकर्मत्व-
योरनुभववलाद्भानं स्वीक्रियते । कारकान्तराभावमात्रे तु तात्पर्य्यमिति ।

## क्रियावचन इति। (कै)

व्यवस्थावाच्यादिशब्दस्य प्रयोजनप्रश्न इत्यर्थः॥ ननु भावक्रिया-पदयोः साध्यावस्थापन्नार्थाभिधायित्वात् प्रातिपदिकेषु कथमति-प्रसङ्गोऽत आह

## यथेति॥ (कै)

भोक्तुं भुक्त्वा इत्यादिप्रातिपदिकव्यावर्त्त्यं बोध्यम्। पाकपदेन सिद्धावस्थस्य भानात्। भोक्तुं पाक (कै) इति प्रयोगोऽपि चिन्त्य इति

## उपपदमतिङ् (पा)

(२।२।१९) इति सूत्रे वक्ष्यते। फलं तु पाकादिशब्दे इव अत्रापि हिरुगिति क्रियान्तराकाङ्क्षादर्शनेनैषां क्रियावाचित्वं चिन्त्यम्। अत एव "तद्धितश्चासर्वविभक्तिः" (१।१।३८) इति सूत्रे क्रियामात्र-विशेषणत्वात् क्रियाप्रधानत्वमेषां स्वयमुक्तम्। "ग्रिश्मे" इत्यादि-व्यावृत्तिस्तु अन्यानभिहितक्रियावाचकत्वेन सादृश्यग्रहणाद्बोध्या। वस्तुत एषां धातुत्वे फलाभावः। न च प्रातिपदिकत्वाभावः। फलं कृदन्तत्वेन तदभावस्य वक्तुमशक्यत्वात्। उभयोः सत्त्वेऽपि लिङि-

---

त्यादिनिवृत्त्यर्थः पाठः कर्त्तव्यः। न कर्त्तव्यः। शिष्टप्रयोगादनापयत्यादीनां

---

मपि पाठः कर्त्तव्यः इत्यर्थः। शिष्टप्रयोगादिति। भा। प्रयुक्तानामिदम-न्वाख्यानं न चाणवयत्यादयः शिष्टैः प्रयुज्यन्ते इति नास्ति तेषां शास्त्रेणा-

---

"आख्यातशब्दे भागाभ्याम्" इत्युदाहृत श्लोकोऽप्येतदभिप्रायक एव। तत्र यं प्रति इत्युत्तरश्लोकानुरोधादिति तृतीये स्फुटीकरिष्यामः। एतेन अपाक्षी-

त्यादाविव परत्वात् सुपामेवोत्पत्तिसिद्धे वार्त्तिके प्रातिपदिकग्रहणं तु प्रौढ्यैव अत एव तदुदाहरणानुक्तिर्भाष्ये ॥ ननु तेषां संज्ञार्थः पाठः कर्त्तव्य इति वक्तव्ये आणवयत्यादिनिवृत्त्यर्थमसङ्गतमत आह

तेषामिति । (कै)

पाठाभावे हि तेऽपि आणवयत्यादिवद् बहिर्भवेयुरिति । आणवयत्यादिभ्यो निवृत्त्यर्थो भेदार्थ इति भाष्यार्थ इति भावः ॥

प्रयुक्तानामिति । (कै)

प्रयुक्तानां च सम्प्रति अदृश्यमानपाठानामपि भविष्यतीत्यपि बोध्यम् ॥ नन्वेवमपि प्रातिपदिकनिवृत्त्यर्थः पाठः स्यादत आह

एतेनेति । (कै)

इदमुपलक्षणम् । स्वरानुबन्धकार्य्यमपि शिष्टप्रयोगादेवेति बोध्यम् ॥ ननु शिष्टप्रयोगालम्बनेन प्रत्याख्याने शास्त्रवैफल्यमत आह भाष्ये

---

निवृत्तिर्भविष्यति । स चावश्यं शिष्टप्रयोग उपास्यो येऽपि पठ्यन्ते तेषामपि विपर्य्यासनिवृत्त्यर्थः । लोके हि कथ्यर्थे कसिं प्रयुञ्जते दृश्यर्थे च दिशिम् ॥

---

सुविधानमिति भावः । एतेनैव न्यायेन प्रातिपदिकनिवृत्त्यर्थोऽपि पाठो नोपयुज्यते न हि पाकादयः शब्दाः धातुविहितप्रत्ययपरा लोके प्रयुज्यन्ते ॥

---

दपाक्षीः पचतः पचन्ति पक्ष्यति पक्ष्यतः इत्यादावपि भवतीत्यनेन कर्तृत्वेनान्वयो व्याख्यातः । भावी वर्त्तते भवतोऽस्तीत्यादाविव सूक्ष्मावस्थस्य वर्त्तमानः सत्तासम्भवात् ॥

स चावश्यमिति । (भा)

एवं चाकृतिगणेष्विव तदुपासनावश्यकत्वे किं पाठेनेति भावः । ननु तद्वदेव निदर्शनार्थं कतिपयपाठोऽप्यावश्यकता न इत्येव भाष्यतात्पर्य्यादिति दिक् ॥

---

# [1]उपदेशेऽजनुनासिक इत् । १ । ३ । २ ॥

ननूपसर्गभेदे ऽर्थभेदस्यावश्यकत्वात् प्रश्नानुपपत्तिरत आह

उपदेशेति । (भा)

उभावपि धात्वर्थानुवादकावेवेति भावः । येन निवृत्त्यादि-

---

क्रियासु वह्वीष्वभिसंश्रितो यः
पूर्वापरीभूत इवैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध
आख्यात शब्देन तमर्थमाहुः । १ ॥
क्रियाभिनिर्वृत्तिवशोपजातः
कृदन्त शब्दाभिहितो यदा स्यात् ।
संख्या विभक्त्यव्ययलिङ्गयुक्तो
भावस्तदाद्रव्यमिवोपलक्ष्ये । २ ॥

---

१ उपदेश इति किमर्थम् । अभ्र आँ (६ । १ । १२६) अपः । उद्देशे योऽनुनासिकस्तस्य मा भूदिति ॥ कः पुनरुद्देशोपदेशयोर्विशेषः । प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशः ॥ प्रत्यक्षं तावदाख्यानमुपदेशः ।

विहितानां सङ्ग्रहः । आङश्च व्यावृत्तिः स विशेषः क इति प्रश्नार्थ इत्यन्ये ॥ ननु "आङोऽनुना" ( ६।१।१२६ ) इत्यप्युपदेश एव इत्यत आह

अयमिति। (कै)

उच्चारणेन बोधनाभावादित्यर्थः ॥ ननु नास्योद्देश्यत्वमपि "अङ्गदी"त्यादिवत् बहुभिर्गुणैः प्रापणं हि तत् । नेह तथानुनासिकत्वेनैव प्रापणादत आह

अन्तरतम इति। (कै)

[1]तथा च कवन्त्वदीर्घत्वादिभिरपि प्रापणान्न दोषः ॥

गुणैः (भा)

इत्यत्र बहुत्वमविवक्षितमिति तत्त्वम् ॥ आख्याने प्रत्यक्षत्वमविशिष्टमत आह

इन्द्रियेति। (कै)

१ अत्र "तथाच इति" प्रतीकोऽस्ति ह पुस्तके । परम् उपलब्धभाष्ये कैयटे च तथाच इति पाठो नास्ति ॥

---

तद्यथा अगोज्ञाय कश्चिद् गां सक्थनि कर्णे वा गृहीत्वोपदिशति । अयं गौरिति । स प्रत्यक्षमाख्यातमाह । उपदिष्टो मे गौरिति ॥ गुणैः प्रापणमुद्देशः ॥ तद्यथा । कश्चित् कञ्चिदाह । देवदत्तं मे भवानुद्दिशत्विति । स इहस्थः पाटलिपुत्रस्थं देवदत्तमुद्दिशति । अङ्गदी कुण्डली किरीटी व्यूढोरस्को वृत्तबाहुर्लोहिताक्षस्तुङ्गनासो विचित्राभरण ईदृशो देवदत्त इति । स गुणैः प्राप्यमाणमाह । उद्दिष्टो मे देवदत्त इति ॥ इत् संज्ञायां सर्व-

यद्यप्यनुनासिकत्वमपि इन्द्रियग्राह्यं तथाप्यनुनासिकशब्दप्रतिपाद्यतावेलायामिन्द्रियागोचरमिति भावः ॥

प्रसिद्धेति । (कै)

प्रत्येकसाधारणेत्यपि बोध्यम् ॥ भाष्ये

आख्यातमाहेति । (भा)

कथितमित्यर्थः ॥ एकव्यक्तौ भेदाभावाद् "ईदृश" इत्यसङ्गतमत आह

एतैरिति ॥ (कै)

ग्राह्य इति । (कै)

लोके दृश्यमान इत्यर्थः ॥ एतेन बौद्धार्थस्यैव शाब्दबोधेनान्वयमिति दर्शितं भाष्ये

इत्संज्ञायामिति । (भा)

उक्तविशेषस्य निष्ठाद्यसङ्गेहेणाचाश्रयणमशक्यमिति भावः ॥ ननु ह्रस्वदक्षिणत्वादिकं नेतरभेदानुमायकं लक्षणमत आह

गुणस्तेनापीति ॥ (कै)

---

प्रसङ्गोऽविशेषात् । वा । इत्संज्ञायां सर्वप्रसङ्गः । सर्वस्यानुनासिकस्येत्संज्ञा प्राप्नोति । अस्यापि प्राप्नोति । अभ्र आँ अपः । किं कारणम् । अविशेषात् । न हि कश्चिद् विशेष उपादीयत एवं जातीयकस्यानुनासिकस्येत् संज्ञा भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ॥ किमुच्यते अनुपादीयमाने विशेष इति । कथं न नामोपादीयते यदोपदेश इत्युच्यते लक्ष्येन ह्युपदेशः । सङ्कीर्णाविद्वेशोपदेशौ । प्रत्यक्षमाख्यानमुद्देशो गुणैश्च प्रापणमुपदेशः ॥ प्रत्यक्षं तावदाख्यानमुद्देशः । तद्यथा । कश्चित् कं

भाष्ये "हि:" अप्यर्थे इति भावः॥ क्वचित्तु "लक्षणेनापि हि" इति पाठः। बहुलं चाविवक्षितमेव। प्रकृतसूत्रे चास्यापि ग्रहणमत एव "निष्ठे"त्यादिभिः संज्ञाविहितप्रत्ययावयवानामित्संज्ञासिद्धिरिति भावः। अत एवात्रैतत्कथनं सफलम् "आदेच" (६।१।४५) इत्यादौ तु व्याख्यानात् "प्रत्यक्षमाख्यानमुपदेश" इत्यस्यैव ग्रहणमिति बोध्यम्॥

उपदेश इति। (भा)

अज्ञातज्ञापनं भवतीत्यर्थः॥ "आचष्टे" इत्यस्य कर्माकाङ्क्षत्वादाह

पूर्वेणेति॥ (कै)

अध्ययनार्थमिति। (कै)

"इति हेतौ" फलं च हेतुरिति भावः॥

इषेत्वकमधीष्व (भा)

इत्यादि वाक्यम् "आचष्टे" इत्यन्वयः इत्यन्ये॥ नन्वित् कार्य्यं तदकार्य्यत्ववादो ऽयुक्तोऽत आह

---

चिदाह। अनुवाकं मे भवानुद्दिशतु इति। स तस्मा आचष्टे। *इषेत्वकमधीष्व। †शंनो देवीयमधीष्वेति। स प्रत्यक्षमाख्यात माह। तद्दिष्टो मे अनुवाकस्तमध्येष्य इति॥ गुणैश्च प्रापणमुपदेशः। तद्यथा। कश्चित् कंचिदाह। ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशत्विति। स तस्मा आचष्टे। अमुष्मिन् अवकाशे हस्तदक्षिणो ग्रहीतव्योऽमुष्मिन् हस्तवाम इति। स गुणैः प्राप्यमाणा आह। उपदिष्टो मे पन्था इति। एवमेतौ

---

* यजुर्वेदसंहिता-प्रथम॥ † अथर्ववेदसंहितायाम्॥

यदीति। (कै)

अभिमतकार्य्यत्वाभावपरो "ऽकार्य्य" शब्द इत्यर्थः॥ अस्मित् संज्ञाया आनन्तर्य्यनिमित्तकत्वाभावेनानन्तरलक्षणायामित्ययुक्तमत आह

यदेति॥ (कै)

अनन्तरलक्षणायाम् (भा)

इत्यस्य अनन्तरलक्षणकार्य्यायामित्यर्थः॥ 'ञिट्' इत्यादावनन्तरादिषु इत्त्वभावेऽपि सौत्रत्वादित्त्विरिति भावः॥ ननु तत्रेत्वे आङ् इदित्येवावचत् इति चेन्न। विधानसामर्थ्याल्लोपो माभूत् संज्ञा तु स्यादेवेति भाष्याशयः। एवं चात्रोपदेशग्रहणं प्रत्याख्यातम्। "अनुबन्धा एकान्ताः" इत्यस्यैव न्याय्यताया वक्ष्यमाणत्वात्॥ "अभ्र ऑ" इत्यस्यापि शास्त्रे विहितस्यानुनासिकत्वादाह

शास्त्रे य उच्चारित इति। (कै)

उच्चारित इत्यध्याहार इति भावः॥ भाष्ये

शास्त्रमिति (भा)

---

सङ्कीर्णावुद्देशोपदेशौ। एवं तर्हीत्कार्य्याभावात् अत्र इत्संज्ञा न भविष्यति। ननु च लोप एवेत्कार्य्यं स्यात् (१। ३। ९)। अकार्य्यं लोपः। इह हि शब्दस्य द्वयं उपदेशः। कार्य्यार्थो वा भवत्युपदेशः अवणार्थो वा। कार्य्यं चेह नास्ति। कार्य्ये चासति यदि श्रवणमपि न स्यादुपदेशोऽनर्थकः स्यात्॥ इदमस्तीत्कार्य्यम्। अभ्र ऑं अठितः। अनन्तरलक्षणायामित्संज्ञायां सत्याम् "आदितश्च" (७। २। १६) इतीट् प्रतिषेधः प्रसज्यते॥ सिद्धं तूपदेशनेऽनुनासिकवचनात्। वा। सिद्धमेतत्। कथम्। उपदेशने योऽनुनासिकः

तच्च धात्वादिरूपं बोध्यम्। [1]"आदेच उपदेश" इत्यादाविव भावसाधनस्याद्योच्चारणरूपार्थकस्य ग्रहणे तु "[2]लटः सद्वा" "[3]निष्ठा" इति विहितशत्राद्यवयवस्येत् संज्ञानापत्तिः। यथा कथं चिद्बोधनस्य उपदेशत्वे तु अभ्र आम् इत्यादौ दोष इति भावः॥ तदाह

घञयं करोति॥ (भा)

उत्सर्गापवादयोर्विप्रतिषेधायोगादाह

परत्वेनेति॥ (कै)

पशुः कर्त्ताभिधीयते इति। (कै)

यद्यपि कर्त्तृत्वेनैव कर्त्ता प्रत्ययार्थस्तथापि तत्त्वेनापि पशुरेवाभिधीयत इति स उपाधिरित्यर्थः॥

श्लाघेति। (कै)

गोचचरणाद् भावे वुञ् स चेत् श्लाघादिभिरन्वितः स्यादिति सूत्रार्थात् श्लाघादिकं न प्रत्ययेन स्पृश्यत इति भावः॥ ननु इगन्तोऽपि विधेयतया प्राधान्यात् कथं गुणत्वमत आह

१ अ ६। पा १। सू ४५॥ २ अ ३। पा ३। सू १४॥
३ अ २। पा २। सू ३६॥

स इत्संज्ञा भवतीति वक्तव्यम्। किं पुनरुपदेशग्रहणम्। शास्त्रम्। सिध्यति। सूत्रं तर्हि भिद्यते॥ यथा न्यासमेवास्तु। ननु चोक्तमित् संज्ञायां सर्वप्रसङ्गोऽविशेषादिति। नैष दोषः। उपदेश इति घञयं करणसाधनः। न सिध्यति। परत्वात् ल्युट् प्राप्नोति। (३। ३। ११७)। न ब्रूमो "ऽकर्त्तरि च कारके संज्ञायाम्" (३। ३। १९) इति। किं तर्हि। हलश्च (३। ३। १२१) इति। तत्रापि संज्ञायामिति वर्त्तते (३। ३। ११८) न चैषा संज्ञा।

प्रत्ययस्येति । (कै)

आर्थिकं गुणत्वमस्तीत्यभिमानः ॥ ननु प्रत्ययस्याभिधेयत्वाद् गुणत्वमित्ययुक्तम्, अनुवाद्यत्वस्य प्राधान्यनियतत्वाद्विधेयत्वस्य गुणनियतत्वादिति मीमांसक शङ्कां परिहरति.

अपूर्वेति ।. (कै)

न मीमांसकसंमते प्राधान्यगुणत्वे भगवतोऽभिमते किं तु शास्त्रसंरम्भगोचरत्वतदगोचरत्वे एवेति भावः ॥ ननु "[1]वाकिनादीनाम्" इत्यतश्चकारानुवृत्त्या तद्वदेवानेन प्रत्ययस्यापि विधेयत्वाद् गुणत्वमेव इत्यत आह

उदीचामिति । (कै)

नात्र चोऽनुवर्त्तते इति भावः ॥ ननु "गुणः कृतात्मसंस्कार" इति न्यायेन गुणस्यापि विशेषणसम्बन्धदर्शनादाह

गुणप्रधानसंनिधौ यत्रेति । (कै)

---

१ अ ४ । पा १ । सू १५१ ॥

---

प्रायवचनादसंज्ञायामपि भविष्यति । प्रायवचनात् संज्ञायामेव स्याद्वा न वा । न ह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम् । यदि नोपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम् "कल्याणादीनामिनङ् (४ । १ । १२६) "कुलटाया वा" (४ । १ । १२७) इनङ् विभाषा न प्राप्नोति । इनङेवात्र प्रधानम् । विहितः प्रत्ययः प्रकृतस्यानुवर्त्तते (४ । १ । १२०) इह तर्हि "वाकिनादीनां कुक् च" (४ । १ । १५८) "पुत्रान्तादन्यतरस्याम्" (४ । १ । १५९) इति कुग्विभाषा न प्राप्नोति । अत्रापि कुगेव प्रधानम् । विहितः प्रत्ययः प्रकृतस्यानुवर्त्तते (४ । १ । १५७) । एवं न चेदमकृतं

तद्भिन्नविषयः स न्याय इति भावः ॥ ननु कृत्वेति कृञर्थो विचारस्तत्र पुरुषः कर्त्ता प्राप्तौ घञ् इति असमानकर्तृकत्वात् क्त्वा न प्राप्नोतीत्यत आह

एवं स्थित्वेति ॥ (कै)

---

# १हलन्त्यम् । १ । ३ । ३ ॥

अन्तशब्दो नान्तावयववाची तद्धितवैयर्थ्यापत्तेः । नापि समीपपरः । अतिप्रसङ्गात् । अत आह

अवसाने इति ॥ (कै)

* ननु यदुच्चार्य्य विरम्यते तत्तमन्त्यत्वं न च तन्मध्यगतस्येति कथं सर्वप्रसङ्गोऽत आह

---

भवति नोपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम् इति न च कश्चिद्दोषो भवति। एवं च कृत्वा घञ् न प्राप्नोति। एवं तर्हि "कृत्यल्युटो बहुलम्" ( ३ । ३ । ११३ ) इत्येवमत्र घञ् भविष्यति ॥

---

१ हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वात् । वा । हलन्त्ये सर्वप्रसङ्गः । सर्वस्य हल इत् संज्ञा प्राप्नोति । किं कारणम् । सर्वान्त्यत्वात् । *सर्वो हि हल् तं तमवधिं प्रत्यन्त्यो भवति ॥ सिद्धं तु व्यवसितान्त्यत्वात् । वा । सिद्धमेतत् ।

---

* सर्वोऽपि हल् तं तमवधिं कृत्वान्त्यो भवति ।१। सर्वो हि हलन्त्यो भवति ।२। सर्वो हि हल् तं तमवधी कृत्वान्त्यो भवति ।३॥

सर्वस्येति। (कै)

सर्वमपि वर्णमुच्चार्य्य विरम्यत एव। स्पष्टं चेदं [1]"परः सन्निकर्ष" इति सूत्रे भाष्ये। न च ततः परमुच्चारणाभावोऽप्यपेक्षित इति भावः॥ भाष्ये "सर्वो हि हलन्त्यो भवति" इत्येव पाठः। "तमवधिं प्रति" इति पाठे [2]तत्तद्वर्णोच्चारणानन्तराभावादिरामरूपमवधिं प्रतीत्यर्थः। "तन्तमवधिकृत्येति" पाठान्तरम्॥ नन्वेवमन्त्यग्रहणं व्यर्थमत आह

आदिनिवृत्त्यर्थमिति। (कै)

उपक्रमाभावसूचकं तदिति भावः॥ न च पूर्वसूत्रे उपदेशशब्दस्य धात्वादिशास्त्रपरतया तस्यैव प्रकृतेऽनुवृत्त्या यत्किञ्चित् समुदायान्त्यकरणेन शङ्कैषानुपपन्नेति वाच्यम्। तस्य स्वरितत्वाभाव इत्याशयात्। व्यवसितपदस्य निश्चितपरत्वभ्रमं वारयति

व्यवसिता इति। (कै)

शास्त्रकृतापरिच्छिन्नत्वेन बोधिता इत्यर्थः॥

---

१ अ १। पा ४। सू १०९॥

२ तत्तद्वर्णोच्चारणानन्तरभावि विरामरूपम्। क॥

---

कथम्। व्यवसितान्त्यत्वात्॥ व्यवसितान्त्यो हलित् संज्ञो भवतीति वक्तव्यम्। के पुनर्व्यवसिताः। धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः॥

सिध्यति सूत्रं तर्हि भिद्यते॥ यथान्यासमेवास्तु। ननु चोक्तं हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वादिति। नैष दोषः। आचार्यं हलन्त्यमित्संज्ञं भवतीति सर्वस्य हल् तं तमवधिं प्रत्यन्त्यो भवति तत्र प्रकर्षगतिर्विज्ञास्यते। साधीयो

धातु- (कै)

इत्यादिवक्ष्यमाणेत्यादिः ॥ अवयवानां धातुत्वाभावे युक्तिमाह

अवयवा इति ॥ (कै)

समुदायतन्त्रत्वात् । (कै)

समुदायस्तन्त्रं प्रयोजनं येषां तत्त्वात् ॥ भाष्ये

धातुप्रातिपदिकेति । (भा)

इउण् नदट् इत्यादौ णटादीनामित्संज्ञाक्रमबोधकत्वेन स्वरूपबोधकत्वेन च प्रातिपदिकत्वात् श्रोत्रियनादेरपि तत्वादेव निपातोदाहरणमाङ्गादि ॥

सामर्थ्यादिति । (कै)

लक्षणां विनैवोपपत्तौ उपक्रमाभावलक्षकत्वमेव दोष इति भावः ॥

काल्पनिकमिति । (कै)

सर्वान्त्यस्य हि मुख्यं तत् यस्मात् परो नास्ति इत्यादिलक्षणाक्रान्तत्वादिति भावः ॥

अवयवानामसत्त्वादिति । (कै)

---

योऽन्त्य इति । कथं साधीयः । यो व्यवसितान्त्यः ॥ अथवा सापेक्षोऽयं निर्देशः क्रियते न चान्यत् किंचिदपेक्ष्यमस्ति तेन व्यवसितमेवापेक्षिष्यामहे ॥ लकारस्यानुबन्धत्वापितत्वाद् हल ग्रहणाप्रसिद्धिः । वा । लकारस्यानुबन्धत्वेनाज्ञापितत्वात् हल्ग्रहणस्याप्रसिद्धिः । हलन्त्यमित्संज्ञं भवति इत्युच्यते

तत्प्रतीतिस्तु भ्रम एव तन्मूलक एव च समुदायव्यवहार इति भावः ॥ ननु हलामित्संज्ञाविधाने लकारे तदप्राप्तिकथमत आह

इतरेतरेति ॥ (कै)

भाष्ये "हलन्त्यम्" इत्युत्तरम् "लश्च" इति वाक्यान्तरकरणात्तदर्थबोधात् पूर्व्वं कथं तस्य बोधोऽत आह

पूर्वमिति । (कै)

पाठक्रमादार्थक्रमो बलीयानिति भावः ॥ इतरेतरयोगे द्विवचनापत्तेराह

समाहारे इति । (कै)

एवं भाष्ये कर्त्तव्यपदं व्याख्येयपरमिति भावः । वस्तुतो भाष्ये कर्त्तव्यपदं यथाश्रुतमेव कैयटस्तु चिन्त्यः । यणः प्रतिषेधारम्भेण झल्ग्रहणापकर्षेण च संयोगान्तलोपाप्राप्तेः । वक्तॄणां सह बोधासम्भवं [1]"नाज्झलौ" इति सूत्रोक्तवाक्यापरिसमाप्तिन्यायेन भाविसंज्ञया पूर्वमाचार्य्यनामव्यवहारेण सहविवक्षाभावाद् द्वन्द्वाप्राप्तेश्चेति बोध्यम् । अत एव भाष्ये "निर्द्देशः कर्त्तव्यः" इत्युक्तम् । "निर्द्देशः" उच्चारणम् । न तु लुप्तनिर्दिष्ट इत्युक्तम् एतेन "हलन्त्यम् ल्" इति

---

१ अ १ । पा १ । सू १० ॥

---

लकारस्यैव तावदित्संज्ञा न प्राप्नोति ( १ । १ । ७१ ) ॥ सिद्धं तु लकारनिर्देशात् । वा । सिद्धमेतत् । कथम् । लकारनिर्देशः कर्त्तव्यः । हलन्त्यमित्संज्ञं भवति लकारश्चेति वक्तव्यम् ॥ एकशेषनिर्देशाद्वा । वा । अथवा एकशेषनिर्देशोऽयम् । हल् च हल् च हल् । हलन्त्यमित्संज्ञं भवतीति ॥

प्रश्लेषः सौत्रस्य [1]"तस्य लोप" इत्यपास्तम्। सौत्रत्वाल्लोपं त्वत्वा व्याख्यानमाश्रयणीयमिति गौरवेण भाष्यकृदुच्यमाणरीत्यैव प्रत्याख्यानस्य न्याय्यत्वात्॥

## हल्य त्विति। (कै)

सम्बन्धसामान्यषष्ठ्या समासे पर्य्यवसानगत्या सामीप्यलाभ इति भावः॥

## [2]इतरस्येति।

प्रकृतेऽन्यपदसामानाधिकरण्यादिति भावः। वस्तुत इदं चिन्त्यम्। एवमर्थस्येष्टत्वे तत्पुरुषेऽन्यपदासम्बन्धेन हलित्संज्ञं हलन्त्यं च इत्संज्ञमिति वदेत् पूर्ववत्। तस्माद् वाक्यद्वयमप्यन्यपदघटितं द्वन्द्वान्ते श्रूयमाणस्येव प्रत्येकं सम्बन्धात्। तयोश्च तन्त्रेणोच्चारणं भाष्ये इति हल् सूत्रान्त्यं अन्त्यं च हलिदित्येव भाष्यार्थः। एकशेषशब्देन च भाष्ये तन्त्रं लक्ष्यते। अन्यथा सह विवक्षाभावादेकशेषः शास्त्रीयो न स्यादिति बोध्यम्॥ भाष्ये एकदेशमाह

## अथवा (भा)

---

१ अ १। पा ३ सू ९॥

२ "इतरस्य" इति पाठ उपलब्ध भाष्ये कैयटे च नास्ति॥

---

अथवा लकारस्यैवेदं गुणभूतस्य ग्रहणं तत्रोपदेशेऽजनुनासिक इत् (१। ३। २।) इतीत् संज्ञा भविष्यति॥ अथवा आचार्य्यप्रवृत्तिर्ज्ञापयति भवति लकारस्येत् संज्ञेति यदयं ग्लं लितं करोति॥ प्रातिपदिक प्रतिषेधोऽतद्धित तद्धिते। वा। अतद्धित तद्धितान्तस्य प्रातिपदिकस्य प्रतिषेधो वक्तव्यः।

इत्यादि॥ ज्ञापकेन लकारस्थले "उपदेश" इति सूत्रोक्तोऽसङ्गत इत्यत आह

## लकारस्येत्संज्ञाकार्य्यमिति। (कै)

अच् पदघटितसूत्रस्य कार्य्यभूतेत्संज्ञेत्यर्थः॥

## हल्ग्रहणादिति। (कै)

न च ङानिवृत्त्यर्थं तत्। सुति सौति प्रत्ययैः प्रकृत्याक्षेपेण तद्व्यावृत्तिसिद्धिरित्यभिमानः। वस्तुतः १"तद्देद्" इत्यादिनिर्देशात्म श्रवणार्थो लकार इति भाष्यतात्पर्य्यम्। अनयोरेकदेशयुक्तित्वं तु लकारेत्संज्ञाया अपि हल् पदार्थसिद्धेः प्रागलाभात् "ऌदित" इति ज्ञापकमपि शिथिलं सर्वेषामचामित्संज्ञाकाले तस्यापीत्वलाभात्। एवं णलो शित्वस्यापि ज्ञापकतोक्तिः। णादीनामित्संज्ञाप्रवृत्तिकाले णलो णलोपस्यापि तत्प्रवृत्त्या ज्ञापकासम्भवात्। तस्मा"देकशेषनिर्देशाद्वा" इत्येव समाधानम्॥

## मञ्जकादिति। (कै)

---

१ अ ४। पा २। सू ५९॥

---

उदश्वित्। प्रकृदिति। अकृत् तद्धितान्तस्येति किमर्थम्। कुम्भकारः नगरकारः। औपगवः कापटव इति (३। २। १॥ ४। १। ८३–९२)॥ इदर्थाभावात् सिद्धम्। वा इत्कार्य्याभावादत्र इत्संज्ञा न भविष्यति। इदमस्ति इत्कार्य्यं तित्स्वरितम्। (६। १। १८५) इति स्वरितत्वं यथा स्यात्। नैतदस्ति। प्रत्ययग्रहणं तत्र चोदयिष्यति (६। १। १८५)॥ इदं तर्हि। राजा तक्षा। ञ्नितीत्याद्युदात्तं यथा स्यात् (६। १। १९७)।

मशकास्थाने इत्यर्थः । अयं पक्षः [1]पशपशाह्निकान्ते भाष्ये । इदं चिन्त्यम् । यद्युपदेशे अज्ञातज्ञापकमुच्चारणं तर्हि ढकि लोप इत्यनुमितढक उपदेशाभावादित्संज्ञानापत्तिः । मशकादौ मञ्जकादिभ्रमनिवृत्त्यर्थं तेषामप्यनुवादस्यैव सत्त्वेन उक्तोपदेशाभावाच्च । यथा कथञ्चिद् बोधनस्यैवोपदेश तदनुवृत्तिर्निष्फला । किञ्च पूर्वसूत्रे उपदेशशब्दस्य करणसाधनत्वपक्षेऽपि टितानामप्येषामुपदेशत्वमस्त्येव । व्यवसितान्त्यं हलिति न्यासं कुर्वता वार्त्तिककृता तदनुवृत्तेरफलत्वाच्च ॥ ननूपदेश एव णकारलोपे पश्चात् प्रातिपदिकत्वमिति कथमत्र निषेधप्रसक्तिरत आह

अपवादेति ॥ (कै)

ननु शकृति स्वतः प्रत्ययत्वात् तद्ग्रहणेऽपि दोषोऽत आह

उदश्विदिति । (कै)

उदकेन श्वयत इति व्युत्पत्तावपि अस्य तकारस्य तुका निष्पन्नत्वात् प्रत्ययावयवत्वाभावात् । तत्राव्युत्पन्नत्वकथनफलं चिन्त्यम् ।

---

१ प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते । यानि तद्ग्रहणानि प्रातिपदिकानि । एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्त्तव्यः । शशः । षष इति माभूत् । पलाशः । पलाष इति माभूत् ॥ मशकः । मञ्जक इति माभूत् ॥

---

अनितीत्युच्यते तत्र व्यपवर्गाभावान्न भविष्यति । इदं तर्हि । स्वर् । उपोत्तमं रिति ( ६ । १ । २१७ ) इत्येष स्वरो यथा स्यात् । स्वरितकरणसामर्थ्यान्न भविष्यति न्यङ् स्वरौ स्वरिताविति ॥ इह तर्हि । अन्तर् । उत्तमशब्दः स्व-

[1]"उपदेशेऽन्त्यो न भवतीति" इदमुक्तरीत्या चिन्त्यम् । भाष्यस्वरसस्तु अव्युत्पन्न एवेति बोध्यम् । किञ्चोपदेश इत्यनुवृत्तौ "प्रातिपदिकप्रतिषेध" इति वार्त्तिकानुत्थानमेव । "उद्देशस्तु प्रातिपदिकानां नोपदेश" इति [2]"आदे च" इत्यादिसूत्रभाष्योक्तेः । अत एव पस्पशाह्निकान्ते [3]"उपदेश" इत्यस्य अनुवाद इत्येवार्थं एतद्भाष्यैकवाक्यत्वादिति बोध्यम् ॥ ननु सम्बुद्धौ [4]"नङिसम्बुद्ध्योः" इति लोपनिषेधसामर्थ्यादित्वप्रयुक्तनलोपस्याप्यभावेन संज्ञापि नेति मन्दाशङ्कायामाह

नङीति ॥ (कै)

नित्परो नेति । (कै)

समुदायार्थत्वादुपदेशस्य स एव निव्यपदेश्ययोग्य (व्यपदेशयोग्यः । क) इति अनित्यवयवो नित्परोऽस्तीति न शङ्क्यम् ॥

न तु निदन्त इति । (कै)

व्यपदेशिभावस्त्वप्रातिपदिकेनेति निषिद्ध इत्यभिमानः ॥

---

१ "उपदेशे तकारान्त्यो न भवतीति" इति उपलब्धकैयटे कचिच्छिवविवरणपुस्तके च पाठोऽस्ति ॥

२ आदेच उपदेशेऽशिति (६ । १ । ४५) इति सूत्रव्याख्यावसरे उक्तं भगवता "उपदेश इत्युच्यते उद्देशस्तु प्रातिपदिकानां नोपदेशः" इति ॥

३ अ १ । पा १ । आ १ ॥ ४ अ ८ । पा २ । सू ८ ॥

---

प्रभृतिषु वर्त्तते न चात्र त्रि प्रभृतयः सन्ति ॥ इह तर्हि समुतर् उपोत्तमं रितीत्येष स्वरो यथा स्यात् । अन्तोदात्तनिपातनं करिष्यते । स निपातनस्वरो रितृस्वरस्य बाधको भविष्यति ॥ एतच्चात्र युक्तं यदित् कार्याभावात्

अच त्विति । (कै)

तथा चेदं भाष्यम् एकदेश्युक्तिः । व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधस्तु प्रत्ययविधिविषय इति भावः ॥

प्रत्ययस्येति । (कै)

प्रतिषेधारम्भेऽस्य चस्य इत्वं न स्यादिति तन्नकार्य्यमिति भावः अत्र हि चित्त्वेन अन्तोदात्तत्वमिष्यते प्रकृतिप्रत्ययान्यतरयित्वमादाय चिदवयवकप्रकृतिप्रत्ययसमुदायस्यान्तोदात्ततायास्तेन विधानात् ॥

---

# न विभक्तौ तुस्माः । १ । ३ । ४ ॥

ननु इत्संज्ञाव्यावर्त्तकोकारस्य कथं तत्परित्राणार्थत्वमत आह

इत्संज्ञाया इति । (कै)

[१]"इटोऽत्" इत्यादीनां मुखसुखार्थत्वप्रतिज्ञया श्रवणाभाव बोधितत्वात् तत्प्रतिज्ञयैव तेषु "न विभक्तौ" इत्यस्याप्रवृत्तिरि नतद्धिते इत्यसङ्गतम् ॥ [२]"इदानीम् अत्र प्राप्नोति" इति भाष्ये ज्ञापनकाले इत्यर्थः ॥ अत्रत्यम् "अत्र" इति व्याचष्टे

---

१ अ ३ । पा ४ । सू १०६ ॥

२ "इदानीमित्यत्र प्राप्नोति" इत्युपलब्धभाष्यपुस्तकेऽस्ति ॥

---

इत्संज्ञा न स्यात् । तत्रेत्कार्य्यं भवति भवति यत्रेत्संज्ञा । तद्यथा । आगस्त कौण्डिन्ययोरगस्तिकुण्डिनच् ( २ । ४ । ७० ) इति ( ६ । १ । १६३ ) ॥

इदानीमित्यचेति ॥ (कै)

भाष्ये

तावदिशभाव इति। (भा)

प्रत्ययोत्पत्तेः पूर्वं न प्राप्नोतीत्यर्थः ॥ ननु [1]"प्राग्दिश" इति शब्दावधित्वेनोपादानादवधिमानपि शब्द एवेत्याशङ्क्याह

यथेष्टमिति। (कै)

तस्यापि प्रकृतित्वेन सजातीयावधिमदसम्भव इति भावः ॥

अर्थ इति। (कै)

तत्तत्प्रकृत्यर्थरूपोऽर्थः ॥ ननु प्रत्ययादेशयोर्मध्ये कदाचित् प्रथमं प्रत्ययोत्पत्तौ इत् कार्यं स्यादित्याशङ्क्य प्रथममादेशोत्पत्तौ विनिगमकमाह

यदि त्विति ॥ (कै)

भाष्ये

किं तर्हि प्राग्दिशोऽर्थेष्विश् भावः (भा)

इत्युक्तेः। एवमपि परत्वात् प्रत्यय एव पूर्वमुचित इत्याशङ्क्योक्तं

[2]किं सर्वनामबहुभ्योऽद्व्यादिभ्यः प्रत्ययोत्पत्तिरिति। (भा)

एवं च द्व्यादिभेदज्ञानसापेक्षत्वेन बहिरङ्गप्रत्ययात् पूर्वमन्तरङ्गत्वादादेश एव। अत्रैवार्थे

---

१ अ ५। पा ३। सू १॥ २ अ ५। पा ३। सू २॥

दानीं (भा)

ग्रहणमपि ज्ञापकमिति तद्भावं केचित्। वस्तुतोऽयमपाठः। [1]"इदमोर्हिल्" इत्यत "इदम" इत्यनुवर्त्तमाने "दानीमो" विधानात्। कैयटस्वरसोऽप्येवमेव॥ अलप्रवृत्तिप्राथम्ये विनिगमकमाह

सप्तम्यामिति। (कै)

अन्तरङ्गानपीति न्यायमसौ न जानीते इति बोध्यम्॥

सप्तम्यर्थैति। (कै)

प्राग्दिश इतिवत् सप्तम्या इत्यप्यर्थपरमेव प्रातिपदिकाच्च तद्धितोत्पत्तिरिति भावः। अन्तरङ्गानपीति न्यायाच्च॥ ननु यकारसत्त्वेऽपि "दानीमि"त्यस्य सोऽन्य एव इत्यत आह

यकार इति॥ (कै)

[2]संयोगान्तस्य लोप इति। (कै)

चिन्त्यमिदं यणः प्रतिषेधात् तस्माच्च शब्दनिमित्तको [3]"लोपो व्योरि"ति लोप इति वक्तुमुचितम्॥

उपदेशेऽन्त्य इति। (कै)

व्यवसितस्यान्यः "श्रूयत" इति वक्तुमुचितम्॥

---

१ अ ५। पा ३। सू २। २ अ ८। पा २। सू २३॥
३ अ ६। पा १। सू ६६।

पूर्वश्चेति। (कै)

वस्तुतस्तु [1]"लोपो व्योः" इत्यस्य बहिरङ्गतयाऽसिद्धत्वमित्-संज्ञां प्रति इति बोध्यम्। न च मकारे कृतेऽपि नान्तस्य प्रत्यय-तया व्यवसितान्त्यत्वेन दुर्वारैवेत्संज्ञेति वाच्यं व्यवसितान्त्यशब्देन प्रत्यासत्त्या शास्त्रकृद्व्यवसितान्त्यस्यैव ग्रहणेनादोषात्। तद्व्यवसितस्य यान्त इति बोध्यम्। उत्तरसूत्रस्थस्य यकारादौ चुष्टुप् चणपाविति भाष्यस्य योजनार्थं मदुक्तप्रकार आवश्यक इति बोध्यम्॥

---

# चुटू। १। ३। ७॥

तुशस्य निर्देशायोग्यत्वादाह

पूर्वमिति॥ (कै)

[2]इति प्रतिज्ञात इति। (कै)

निर्दिष्टशब्दः प्रतिज्ञानार्थको मध्यमपदलोपी च समास इति भावः॥ ननु [3]हरित इत्यादौ हरौ हतौ यस्येति विग्रहात् हलन्त्य-सूपदेशे हल् इत्येव सिद्धे इदं व्यर्थमत आह

---

१ अ ६। पा १। सू ६६। २ "प्रति" इति नास्त्युपलब्धकैयटे।
३ अ ३। पा १। सू ५७॥

इरित इति ॥ (कै)

इराविताविति । (कै)

सख्यानुरोधाद्द्विवचनान्तेनापि विग्रह इति भावः । एवं चात्मनेपदार्थं सामर्थ्यं नाश्रयणीयमिति बोध्यम् ॥

यद्यपीति । (कै)

दानपाचतासिद्धये विशेषणकुम्भ्यामन्वितैवकारगर्भसमासे नान्ययोगव्यवच्छेदलाभेऽपि प्रकृते तदाश्रयणे प्रमाणाभावादिति भावः ॥ भाष्ये

इकार एवेदिति । (भा)

तत्पुरुषत्वमेवास्य न बहुव्रीहित्वमित्येतत् सूचनार्थैवकारः ॥ अङ्गाधिकारस्थत्वेन ( प्रथ । क । इ ) निमित्तत्वात्तदप्राप्तेराह

अनङ्गस्यापीति । (कै)

अधातोरित्यपि बोध्यम् ॥ १"न धातु" इति सूत्रस्थभाष्यकैयटरीत्या अनुबन्धविनिर्मुक्तस्यैव धातुत्वात् । अत एव भाष्ये सूत्रं नोपन्यस्तम् ॥ इत्संज्ञायाः परत्वादित्वे इष्टसिद्धिर्न स्यादत आह

तत्रेति । (कै)

निर्देशानुपपत्तिकल्पितमित्वं बहिरङ्गमिति भावः । निपातनादेवेत्वरपरत्वाभ्यां पूर्वं तस्य लोप इत्यपि नेति बोध्यम् ॥ तुमोभावादाह

१ अ १ । पा १ । सू ४ ॥

नुमेति। (कै)

एतद्भाष्यात् केषाञ्चिद् धातूनामर्थनिर्देशसहितोऽपि पाठ इति ज्ञायते ॥

किं तन्निषेधेनेति। (कै)

यद्यपि तेन उपदेश इगुपधत्वं विवक्ष्यते इत्यपि ज्ञापनं सम्भवति तथापि लक्ष्यानुरोधादिदमेव ज्ञाप्यते इत्यभिमानः ॥

गोः पादान्त इति। (कै)

समानयोगनिर्दिष्टानामेकदेशोऽपि स्वरितत्वप्रतिज्ञासामर्थ्यादनुवर्त्तत इति भावः। अन्तपदार्थस्य इकारविशेषणत्वेऽपि सौत्रत्वात् समास इति बोध्यम्। अत्र पृथग् इत्संज्ञा इदित इति कर्मधारयात् षष्ठीति युक्तः पक्षः ॥

---

# तस्य लोपः। १। ३। ९॥

अभावो लोप इति। (कै)

दर्शनाभावो लोप इत्यर्थः ॥

भावोपाधिरिति। (कै)

दर्शनस्य सविषयत्वाच्छब्दशास्त्रत्वाच्छब्दरूप एव सविषयः।

किं च भावविरोधी इत्यभावपदस्यार्थः । एवं च भावोपाधिरेव सभावप्रतियोगिक एव स इति भावः ॥ ननु प्रकृतस्यान्वययोग्यत्वेऽनुषङ्गः । अयोग्येऽध्याहार एवेति विपरिणामोऽसङ्गतोऽत आह

साहश्यादिति । (कै)

एवं चैकदेशसारूप्येण विपरिणामव्यवहार इति भावः ॥

आमन्त्रयस्व (भा)

इत्येतदुक्तमेव लौकिकं वाक्यं तत्र प्रकृतत्वाद् 'एनम्' इति गम्यत इत्यर्थः ॥ तद्व्याचष्टे

देवदत्तमिति ॥ (भा)

गम्यत इति । (भा).

एनमित्यस्य सामान्यशब्दत्वाद्विरोधस्याभावायेदमुक्तम् ॥

वैधवेयः । (भा)

मूर्खः ॥

[1]अलोऽन्त्यस्य इति । (भा)

[2]"नानर्थक" इति परिभाषा तु [3]"अलोऽन्त्यात्" सूत्रे प्रत्याख्यातैवेति भावः ॥ तस्य ग्रहणेन इत्संज्ञकपरामर्शिना अश्रुतत्वात् ग्रहणं कथं प्रतिषिध्यतेऽत आह

---

१ अ १ । पा १ । सू ५२ ॥

२ नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे । परिभा १०५ ॥

३ अ १ । पा १ । सू ६५ ॥

**[१]नैषामिति। (कै)**

णिदादिपदलक्षितनत्कार्य्याणां प्रतिषेध इति भावः॥ भाष्ये

**ग्रहणानि (भा)**

इत्यस्य णिदादिपदैर्ग्रहणप्रयुक्तानि कार्य्याणीत्यर्थः। अयेऽपि णित्-ग्रहणेन गृह्यते यत्कार्य्यं तत्कार्य्यं लभत इत्यादिक्रमेणार्थः। विक-ल्पेऽपि प्रतिषेधोऽस्तीति "प्रतिषिध्यन्ते" इत्युक्तम्॥

**निर्दिष्टेति। (कै)**

उच्चारितशब्दप्रतिपादितत्वमेवात्र निर्दिष्टत्वं [२]विवक्षितम् अत एव णादीनां निर्दिष्टत्वमिति भावः। अयं पक्ष एकदेशिनः सर्व-लोपासिद्धेः॥ [३]इत्संज्ञाद्वारा तत्कार्य्यार्थमुच्चारणमस्तु इत्यत आह

**इत्संज्ञाया इति॥ (कै)**

नन्वनुबन्धाः श्रूयन्ते इति वचनाभावात् कथं विरोधोऽत आह

**यथेति। (कै)**

अनुमितेन विरोध इति भावः॥ सामान्यविशेषभावात् कथ-मपवादन्यायोऽत आह

**यथाऽणमिति। (कै)**

विषयान्तरे चरितार्थमित्यर्थः॥

**कार्य्ये (कै)**

इत्वप्रयुक्ते॥ भाष्ये

---

१ उपलब्धकैयटे "नैतेषाम्" इति पाठोऽस्ति॥

२ विवक्षितम् इत्यारभ्य निर्दिष्टत्वम् इत्यन्तं नास्ति क पुस्तके॥

३ इत्संज्ञाद्वारा इत्यारभ्य आह इत्यन्तं नास्ति क पुस्तके।

## कार्य्यादन्यत् (भा)

अथवा सन्देहबीजं दर्शयति

## तत्रोपलभ्यमानस्येति ॥ (कै)

## शकुनिभाष्ये इति। (कै)

"यदि पुनरिमेवर्णाः शकुनिवत्स्युः। आन्यभाव्यं तु कालशब्द-व्यवायादि"त्यत्रेत्यर्थः। एक एव ककार इति पक्षेऽपि न दोषः। लोपशास्त्रज्ञानात्पूर्वं यस्तत्रोपलभ्यते एव सोऽवयव इत्यर्थात्। अन्यथा शाखाया अपि छेदनोत्तरमन्यत्रोपलम्भात् तत्रैवोपलम्भा-भावेनानवयवत्वं स्यादेवं चानुपलम्भकफलं विनापि तत्रान्यत्रोप-लभ्यमानोनवयवस्तं विना तत्रोपलभ्यमान एव यः सोऽवयव इति भाष्याशयः इत्यन्ये॥ भाष्ये "तत्र" इत्यस्य एकान्तपक्षे इत्यर्थः॥

## अनाकारान्तत्वादित्येतदिति। (कै)

[1]"असरूपसर्वादेश" (भा)तिपदे लुप्तसप्तमीके दोषपदाध्याहारेण

१ तत्रासरूपसर्वादेशदाप्प्रतिषेधे पृथक्निर्देशोऽनाकारान्तत्वात्। वा। तत्रासरूपविधौ दोषो भवति कर्मण्यण् (३। २। १) आतोऽनुपसर्गे कः (३) इति कविषयेऽणपि प्राप्नोति (३। १। ९४)॥ सर्वादेशे च दोषो भवति। दिव औत्सर्वादेशः प्राप्नोति (७। १। ८४॥ १। १। ५५॥) दाप्प्रतिषेधे पृथक्निर्देशः कर्त्तव्यः। अदाप् दैपाविति वक्तव्यम्। (१। १। २०)। किं पुनः कारणं न सिध्यति। अनाकारान्तत्वात्। ननु चात्वे कृते भविष्यति। तद्धि आत्त्वं न प्राप्नोति। किं कारणम्। अनेजन्तत्वात् (६। १। ४५)। अस्तु तर्ह्यनेकान्तः। अनेकान्ते वृत्तिविशेषः। वा। यद्यनेकान्तो वृत्तिविशेषो न सिध्यति। किति गितीति कार्य्याणि न

योज्ये इति भावः। एतेन द्वन्द्वे एकदेशान्वयः कथमित्यपास्तम्। अत एव "दाप्प्रतिषेधे" इति वार्त्तिके एकवचनम्॥ भाष्ये

दिव औत् इति। (पा)

यद्यप्ययमुच्चारणार्थस्तथापि समभिव्याहृतवर्णोच्चारणे सहाय-सम्पादकतया तस्य चारितार्थ्येन विधेयविषये विशिष्टस्यापि विधे-यत्वसम्भावना तस्मात् इत्संज्ञालोपयोः प्रवृत्तयोर्बाधे मानाभावा-दुच्चारणार्थानामपि इत्त्वमस्त्येव। किं च तदभावे उच्चारितस्य निवृत्तिः कथं स्यादिति भावः। एतेनोच्चारणार्थानामितसंज्ञानेति नव्योक्तिःपरास्ता। "स्तोर्षे वर्हिषि समिधानेऽग्नौ" इत्यादौ ङरौति स्वरितत्वाभावस्तु छान्दसत्वादिति बोध्यम्। ननूच्चारणार्थानामपि इत्वे "णौगमिः" (णौगमिरबोधने। २।४।४६) इत्याद्यादेशानां नुमा-पत्तिः। भाविधातुत्वमादाय तच्चेका निर्देशेनादोषात्। अत एव सुबुत्पत्तिः। अन्यथा "हनो वध लिङि" (२।४।४२) इतिवत् सा

---

सिध्यन्ति। किं हि स तस्येद् भवति येनेत्कृतं स्यात्॥ एवं तर्ह्यनन्तरः। अनन्तर इति चेत् पूर्वपरयोरित्कृत प्रसङ्गः। वा। अनन्तर इति चेत् पूर्वपरयोरित्कृतं प्राप्नोति। वुञ्छण् ( ४। २। ८० )। सिद्धं तु व्यवसित पाठात्। वा। सिद्धमेतत्। कथम्। व्यवसित पाठः कर्त्तव्यः। वुञ्छण्। स चावश्यं व्यवसितपाठः कर्त्तव्यः। इतरथा ह्येकान्तेऽपि सन्देहः। वा। अक्रियमाणे व्यवसितपाठ एकान्तेऽपि सन्देहः स्यात्। तत्र न ज्ञायते किमयं पूर्वस्य भवत्याहोस्वित् परस्येति॥ सन्देहमात्रमेतद् भवति सर्वसन्देहेषु चेदमुपतिष्ठते व्याख्यानतो विशेष प्रतिपत्तिर्न हि सन्देहादलक्षणमिति पूर्वस्येति व्याख्यास्यामः॥

न स्यात् । उच्चारणार्थानामपि इत्त्वं¹ "ञ्नुले: श्नित्" (३।१।४४) "वेरपृक्तस्य" (६।१।६७) इत्यादौ भाष्ये स्पष्टमुक्तम् । अनुवाद्यविषये तु उच्चारणार्थवर्णविशिष्टस्य तद्रहितलक्षणा बोध्या "न विधौ परः शब्दार्थः" इति विधेयबोधके लक्षणानौचित्यमिति दिक् ॥

उपदेशग्रहणाच्चेति । (कै)

यत्तु "आदेच" (६।१।४५) इति सूत्रे भाष्ये । "मीनाति मीनोति दीङाम्" (६।१।५०) इति सूत्रे एज्ग्रहणानुवृत्तिसामर्थ्यात् परनिमित्तकस्यैव आत्वं नेत्यर्थमाश्रित्योपदेशग्रहणं प्रत्याख्यातम् । तत्तु "मीनाति मीनोति" इति सूत्रस्थभाष्यविरोधादेकदेश्युक्तिः । तत्र स्यवदानसिद्धये एज्विषये आत्वमिति सिद्धान्तितम् । न हि तदोक्तार्थज्ञापकत्वं तस्येति भावः ॥ "अनेकान्तत्वे" उपदेशानर्थक्यमत आह

कार्य्यलक्षणायेति । (कै)

कार्य्यप्रवृत्तये इत्यर्थः ॥

सामर्थ्यादिति । (कै)

वैयर्थ्यादिति भावः ॥ अनन्तरेऽप्यवयवत्वारोपेणेति भाव इत्यन्ये ॥

---

१ चिक्षः कथम् । चिणोऽनित्त्वात् । चिणोऽनित्त्वात् सिद्धम् । किमिदमनित्त्वादिति । अन्यस्यायं स्थाने भवन्न प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न । असत्यामित्संज्ञायां लोपो न । असति लोपेऽनेकाल् । यदा ऽनेकाल् तदा सर्वादेशः । यदा सर्वादेशस्तदा प्रत्ययः । यदा प्रत्ययस्तदेत्संज्ञा ( १ । ३ । ७७ ) । यदा इत्संज्ञा तदा लोपः ( १ । ३ । ९ ) ॥

"हलन्त्य" (१।३।३।) सूत्र निर्णीतधातुत्वादिनापरिच्छिन्नत्व-रूपव्यवस्थितत्वस्याचासम्भवादाह

विच्छिन्नानामिति॥ (कै)

नन्वनेकान्तत्वेऽपि व्याख्यानानिर्णयोऽत आह

अनेकान्तत्वेत्विति॥ (कै)

विरोधाभावादिति। (कै)

एवं च सन्देहाभावान्न व्याख्यानप्रवृत्तिरिति भावः। विरुद्धा-नेककोटिविषयज्ञानस्यैव सन्देहत्वादिति तात्पर्य्यम्॥

व्याख्यानाद्वेदिति। (कै)

व्याख्यातारोऽत्र प्रत्ययादावीदृशः प्रयोग इति व्याख्यास्यन्ति। तत्र च तत्तत् कार्य्यं दृष्ट्वा तस्य तस्य तत्तदनुबन्धत्वं निर्णेष्यन्ती-त्यर्थः॥

पूर्वं हेत्वित्यादि। (कै)

अस्यायमनयव इत्यादिरूपम्॥

तस्मिन् इत्यादि। (कै)

वृत्तरूपे हेतौ गुरुमुखादवगते सति उक्तव्याख्यानविषयसाध्यं स्वयमेव जानातीत्यर्थः॥ नन्वेवं पूर्व्वोक्तसमर्थनरूपतया पक्षान्तरत्वा-भावेन वाग्वन्द्वासामंजस्यमत आह

भाष्येति। (कै)

वस्तुतस्तु विरम्यपाठे तस्य कर्त्तव्यता "वुञ्छण" (४।२। ८०) इतिसूत्रे द्वन्द्वानुपपत्तिर्बहुवचनानुपपत्तिश्चेत्यरुचेर्वार्त्तिककारस्य

[१]"वृत्ताद्वे"ति परिहारान्तरम्। तदेकान्तपक्षेऽसन्देहाय व्याख्यानं शरणमित्युक्तम् ॥

भाष्यकृतेति। (कै)

न पौनरुक्त्यशङ्केति ध्येयम् ॥ भाष्ये

[२]एकान्ता इत्येव न्याय्यमिति। (भा)

अनवयवत्वे णश्त्रानां णादेरित्वानापत्तिः प्रत्ययादित्वाभावात्। एवमन्त्यत्वाभावाद्गिशादेः शस्येत्वानापत्तिः। अन्त्यादिशब्दयोः

---

१ वृत्ताद्वा। वा। वृत्ताद्वा पुनः सिद्धमेतत्। वृद्धिमन्तमाद्युदात्तं वृद्वा ञिदिति व्यवसेयम्। अन्तोदात्तं वृद्वा कितिदिति ( ७।२।११७— ११८ ॥ ६।१।१९७—१९५ )॥ युक्तं पुनर्यद्वृत्तनिमित्तको नामानुबन्धः स्यान्नानुबन्धनिमित्तकेन नाम वृत्तेन भवितव्यम्। वृत्तनिमित्तक एवानुबन्धः। वृत्तज्ञो ह्याचार्योऽनुबन्धानासजति ॥

२ उभयमिदमनुबन्धेषु उक्तम् एकान्ता अनेकान्ता इति। किमत्र न्याय्यम्। एकान्ता इत्येव न्याय्यम्। कुत एतत्। अत्र हि हेतुर्व्यपदिष्टो यत्र नाम सहेतुकं तन्न्याय्यम्। ननु चोक्तं तत्रासरूपसर्वादेशदाप्प्रतिषेधे पृथक्निर्देशोऽनाकारन्तत्वादिति। असरूपविधौ तावन्न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति नानुबन्धकृतमसारूप्यम् भवतीति यदयं ददाति दधातोर्विभाषा ( ३।१।१३९ ) इति विभाषा णं शास्ति॥ यदप्युक्तं सर्वादेश इति। अत्राचार्यप्रवृत्तिर्ज्ञापयति नानुबन्धकृतमनेकाल्त्वं भवतीति यदयं शित् सर्वस्य ( १।१।५५ ) इत्याह॥ तदप्युक्तं दाप्प्रतिषेधे पृथक्निर्देशः कर्तव्य इति। न कर्तव्यः। आचार्यप्रवृत्तिर्ज्ञापयति नानुबन्धकृतमनेजन्तत्वं भवतीति यदयम् उदीचां माङो व्यतीहारे ( ३।४।१९ ) इति मेङः सानुबन्धकस्यात्वभूतस्य ग्रहणं करोति ॥

परपूर्वकसमीपबोधकत्वे लक्षणैव (न इ) दोषः। किञ्च "दम्न थः" वैयर्थ्यापत्तिः "वुञ्छण् कठज्" इति विहितवेऽपित्वप्रयुक्तवृद्ध्यापत्तिश्चेति भावः॥ "हेतुरहितत्वाद्" (क) इत्युपलक्षणम्॥

[1]प्रदेशान्तरेषु त्विति। (कै)

एवं च तत्रत्यैकदेशयुक्तिरिति भावः॥

---

## यथासंख्यमनुदेशः समानाम्। १। ३। १०॥

संख्याशब्दस्यैकत्वादिरूढस्य ग्रहणे वाक्यार्थानुपपत्तिरतो यौगिक इति व्याचष्टे

संख्यानमिति॥ (कै)

गणनम् (कै)

नत् क्रम इत्यर्थः॥ सूत्रे

---

१ उभयत्रकैयटे "प्रदेशान्तरे तु" इति पाठोऽस्ति॥

किमिहोदाहरणम्। इकोयणचि (६।१।७७) दध्यत्र। मध्वत्र। नैतदस्ति। स्थानेऽन्तरतमेनाप्येतत् सिद्धम् (१।१।५०) कुत आन्तर्यम्। तालुस्थानस्य तालुस्थान ओष्ठस्थानस्यौष्ठस्थान भविष्यतीति॥ इदं तर्हि तस्थस्थमिपां ताम् तम् तामः (१।४।१०१) इति। ननु चैतदपि स्थानेऽन्तरतमेनैव सिद्धम्। कुत आन्तर्यम्। एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थो भविष्यतीति॥ इदं तर्हि। तुदीशलातुरवर्मती कूचवाराड्ढक्छण्

**अनुदेशः** (भा)

पश्चादुच्चार्य्यमाणसम्बन्धः। अत्र उद्देश्यनुद्देशिन उच्चार्य्यमाणमुच्चार्यमाणशब्दप्रतिपाद्यास्य उद्देश्यनुदेशिशब्दौ पूर्वोच्चार्य्यमाणपश्चादुच्चार्यमाणपरौ न तूद्देश्यविधेयपरौ। "अमूर्य्यललाटयोः (३।२।३६) इत्यादौ यथासङ्ख्यानापत्तेः॥ "सम" शब्दो न सर्वपर्य्यायः। मुडापत्तेः किन्तु सङ्ख्यासाम्यपरः॥ ननु "इक्" शब्देन षट् षष्ठे 'यण्' शब्देन सप्तानां चोपस्थित्या सङ्ख्यासाम्याभावात् कथं यथासङ्ख्यमत आह

**इक् शब्देनेति॥** (कै)

**पश्चास्त्विति।** (कै)

इक्पदोपस्थितेकारादिभिर्गृहीतदीर्घादिघटितवाक्यार्थबोधे इत्यर्थः। वस्तुतस्तेषामनुच्चारितत्वेन न ग्राहकत्वं किन्त्विक्शब्दानेकत्वेन यण्त्वेन च "अ इ उण्" इत्यादौ तत्तद् व्यक्तिविशेषणतया गृहीतजातिचतुष्टयोपस्थितिरिति यथासङ्ख्यनिर्वाहः॥ "पश्चात्" "प्रथमत" इत्यादि तु चिन्त्यमेव। न च जातिपक्षे सावर्ण्येन ऋकारऌकारयोः परस्परजात्यतिदेश एव वाच्य इति ऋकारस्य लकारापत्तिः। ऋदित् ऌदिद् इति भेदेन निर्देशेन तदतिदेशानित्यत्वेनादोषादनभिधानाद्वा इति बोध्यम्॥ भाष्ये

---

ठन्नकः (४। ३। ९४) इति॥ किमर्थं पुनरिदमुच्यते। संज्ञासमासनिर्देशात् सर्वप्रसङ्गोऽनुदेशस्य तत्र यथासंख्यवचनं नियमार्थम्। वा। संज्ञय समासैश्च निर्देशाः क्रियन्ते। संज्ञया तावत्। परस्मैपदानां णलतुसुस् थल् अथुस् अ णल् वमाः (३। ४। ८२) इति॥ समासैः। तुदीशलातुरवर्मती-

स्थानेऽन्तरतमेनाप्नोति । (भा)

स्थानेऽन्तरतमपदघटितेन सूत्रेणेत्यर्थः ॥ नन्वत्रापि अर्थत आन्तर्यादेव सिद्धमत आह

नाप्नोति । (भा)

विशिष्यार्थापरिज्ञानादिति भावः ॥ लक्षणप्रणयनात् (लक्षणप्रणयनात् । इ । क) प्राक् शास्त्रात् प्रयोगाज्ज्ञानेनार्थविशेषनिर्णयो दुर्लभोऽत आह

[1]नित्यानामिति । (कै)

साधुत्वमात्रं शास्त्रैकगम्यं प्रयोगतदर्थज्ञानं तु प्राक् शास्त्रात् अप्यस्त्येव पाणिनेः । अन्येषां व्याख्यानाद्बोध इति भावः ॥

पाठेति । (कै)

लोकसिद्धस्थानाख्यप्रमाणेनैव "शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय" इति वत् सिद्धेरिति भावः ॥

युगपदिति । (कै)

परस्मैपदत्वेनेत्यर्थः । एवं च क्रमो नास्तीति भावः ॥ यद्यपि संज्ञा प्रत्येकं पर्य्याप्नोति न संज्ञाकृतं युगपत् प्रत्यायनं किन्तु एकशेषप्रभावलभ्यं तत् । ब्राह्मणानामर्घपाद्याचमनीयपाणीयेतिवत् । तत्र

१ नित्यानां शब्दानां प्रयोगादर्थकृतमान्तर्यमस्त्येवेति भावः ॥

कूचवाराड्ढक्छण्ढ्यः ढञ्यकः (४ । ३ । ९४) इति ॥ संज्ञासमासनिर्देशादेतस्मात् कारणात् सर्वप्रसङ्गः । सर्वस्योद्देशस्य सर्वोऽनुदेशः प्राप्नोति । इष्यते च समसंख्यं यथा स्यादिति तच्चान्तरेण यत्नं न सिध्यतीति तत्र यथासंख्यवचनं नियमार्थम् । एवमर्थमिदमुच्यते ॥ किं पुनः कारणं संज्ञया च समा-

ब्राह्मणचिलेऽपि न अर्घादीनां क्रमनियमः । तथापि संज्ञाया नवकसाधारणमेव तत्र मूलमिति संज्ञानिर्देशादित्युक्तम् ॥

[1]एकेनैवेति । (कै)

अवयवानां समुदायोपसर्जनतया समुदायस्यैव पदान्तरार्थेनान्वयादिति भावः । समासेनैकोपस्थितेः पृथगुपस्थित्यभावेन तथान्वयो वक्तुमशक्य इति तत्त्वम् ॥ भाष्ये

सर्वस्योद्देशस्येति । (भा)

सर्वस्योद्देशिन इत्यर्थः ॥

सर्वोऽनुदेश इति । (भा)

सर्वेऽनुदेशिन इत्यर्थः ॥

तिपो णल् इति । (कै)

यद्यप्येषापि "स्वं रूपम्" इति संज्ञा तथापि संज्ञाशब्दो बहूनां युगपत् प्रत्यायको यः शब्दस्तत्पर इति भावः ॥

---

१ द्वन्द्वेऽनेकावयवात्मकः समुदाय एवैकेन शब्देन प्रत्याय्यत इति कुतः क्रमनियमः स्यात् इति उपलब्धकैयटे 'एवैकेन' इति पाठो दृश्यते ॥

---

सैश्च निर्देशाः क्रियन्ते । संज्ञा समासनिर्देशः पृथग्विभक्तिसंज्ञ्यनुच्चारणार्थः । वा । संज्ञया च समासैश्च निर्देशाः क्रियन्ते पृथग्विभक्तीः संज्ञिनश्च मोच्चीचरमिति ॥ प्रकरणे च सर्वसंप्रत्ययार्थः । प्रकरणे च सर्वेषां संप्रत्ययो यथा स्यात् ॥ विदो लटो वा ( ३ । ४ । ८३ ) इति ॥ किं पुनः शब्दतः साम्ये संख्यातानुदेशो भवत्याहोस्विदर्थतः । कश्चात्र विशेषः ॥ संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्यायवायावः एच इत्यनिर्देशः ।

प्रतिपत्तीति । (कै)

स्वरितत्वस्य लक्ष्यसिद्ध्युपयेयतया विना शास्त्रमस्मदादिभिर्दुर्ज्ञेयत्वादिति भावः ॥ संज्ञया समासेन च निर्देशे सति तस्यैवोत्तरसूत्रेऽनुवृत्तेर्न दोष इति तात्पर्य्यम् । एवं चैतत्सूत्रारम्भसामर्थ्यात् सूत्रान्तरस्थमुपसर्जनावयवकृतं च क्रमं गृहीत्वा यथासङ्ख्यप्रवृत्तिरितितत्त्वम् । अत्र वदन्ति यद्यपि समासत उपस्थितिरेकैव तथाप्येतत् सूत्रारम्भसामर्थ्यात् पृथक् वाक्यकल्पनया बोधान्तरं कल्प्यते । एवं चेदं सूत्रं द्वन्द्वसमासनिर्दिष्टसम्बन्धिनोस्तथान्वयेऽपि द्वन्द्वस्य साधुत्वं बोधयति स्वशास्त्रे तेन लोके आद्यन्तौ वर्णानां विप्रशूद्रावित्यादेः साधुत्वं नेति ॥

शब्दधर्मेणापीति । (कै)

वाच्यवाचकयोरभेदोपचारादिति भावः ॥ ननु शब्दतः सङ्ख्यया समानां योऽनुदेशः पश्चादुच्चार्य्यमाणसम्बन्धः स यथासङ्ख्यमिति सूत्रार्थे "परस्मैपदानाम्" इत्यादौ तादृशानां पश्चादुच्चार्य्यमाणसम्बन्ध एव नेति क्व यथासङ्ख्यप्राप्तिरतो व्यत्ययेन पठति

णलादय इति । (भा)

---

वा । असमको निर्देशोऽनिर्देशः । परस्मैपदानां णलतुसुस् थलथुस णल्वमाः ( ३ । ४ । ८२ ) इति णलादयो बहवः परस्मैपदानामित्येकः शब्दः । वैषम्यात् संख्यातानुदेशो न प्राप्नोति । डारौरसः प्रथमस्य ( २ । ४ । ८५ ) । डारौरसः बहवः प्रथमस्येत्येकः शब्दः । वैषम्यात् संख्यातानुदेशो न प्राप्नोति ॥ एचोऽयवायावः ( ६। १। ७८ ) । अयवायावो बहव एच इत्येकः शब्दः । वैषम्यात् संख्यातानुदेशो न प्राप्नोति ॥ अस्तु तर्ह्यर्थतः । अर्थतश्चेत्

( यथासंख्यमनुदेशः समानाम् । १ । ३ । १० । ) ( अ. १। पा. ३। आ. १ )

[1]विधेयता प्रतीतौ तु न यथासंख्यनियामकं "ष्णोपोर्ण्योः" (६।१।६६) इत्यादौ व्यभिचारादिति भावः ॥

## न तु शतृक्वसोरिति । (कै)

व्याख्यानादिति भावः । अन्यथा शतृक्वसुभ्यामेकादशपरस्मैपद-शब्दार्था इत्यर्थतः साम्येऽपि न यथासंख्यं स्यादिति तात्पर्य्यम् ॥

## न तु शब्दत इति । (कै)

यद्यपि एक एव द्वन्द्वो युगपदेवानेकोपस्थितिजनक इत्यस्ति शब्दतः साम्यं तथापि प्रत्येकपदशक्तिज्ञानसहकारेणैव स तथेति नास्ति शब्दतः साम्यम् । "परस्मैपदानाम्" इत्यत्र तु एकशेषेऽपि श्रूयमाणैकपदशक्त्यैव नवकोपस्थितिरिति भावः ॥ ननु परस्मैप-दात्मनेपदभेदात् "प्रथमाः षडिति" अर्थपक्षेऽपि न साम्यमत आह

## यद्वेति ॥ (कै)

भाष्ये

---

१ 'विधेयता' इत्यारभ्य इति भावः इत्यन्तं नास्ति क पुस्तके ॥

---

ललुटोर्नन्द्यादीष्ट्यसिन्धुतक्षशिलादिषु दोषः । वा । अर्थतस्तेन् ललुटोर्नन्द्य-दीष्ट्यसिन्धुतक्षशिलादिषु दोषो भवति ॥ स्यतासी ललुटोः ( ३ । १ । ३३ ) स्यतासी द्वौ ललुटोरित्यस्य त्रयोऽर्थाः । वैषम्यात् संख्यातानुदेशो न प्राप्नोति ॥ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (३। १। १३४)। नन्द्यादयो बहवो ल्युणिन्यचस्त्रयः। वैषम्यात् संख्यातानुदेशो न प्राप्नोति ॥ अरीहणादयो बहवो वुञादयः सप्तदश ( ४ । २ । ८० )। वैषम्यात् संख्यातानुदेशो न प्राप्नोति । सिन्धुतक्षशिलादिभ्योऽणञौ (४। ३। ९३)। सिन्धुतक्षशिलादयो

अगमक इति। (भा)

"अनिर्देश" (भा) इत्यत्र मध्यपदलोपी समास इति भावः॥ ननु स्थान्यादेशभावावगतिरस्त्येवेत्यत आह

संख्येति॥ (कै)

सामान्यमिति। (कै)

स्थलजातिपरो निर्देशः। अत एव द्विवचनसङ्गतिरिति भावः॥

समुदाय इति। (कै)

समुदायत्रयमित्यर्थः। प्रत्ययोत्पत्तिस्तु समुदायस्याप्रयोगात् प्रत्यवयवं पर्य्यवस्यतीति भावः॥

तद्रूपापन्ना इति। (कै)

संज्ञाशब्दे स्वरूपस्यैव प्रवृत्तिनिमित्तभिन्नत्वात् (प्रवृत्तिनिमित्तत्वात्। क) एकतङ् शब्दरूपिततया तङ्त्वेनैवोपस्थितानां संज्ञेति संज्ञासूत्रस्थमर्थसाम्यमादाय स्यात् यथासङ्ख्यमिति भावः॥ क्वचित्तु

तङ्रूपापन्नाः (कै)

इत्येव पाठः॥ ननु यत्र द्वा उपादीयेते अमस्तीसार्वधातुकग्रहणं वास्ति तत्र न स्यादिति वक्तव्येऽगमकोऽयं निर्देशोऽत आह

---

बहवोऽशब्नौ द्वौ। वैषम्यात् सं।तानुदेशो न प्राप्नोति॥ आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु। वा। आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु च दोषो भवति॥ आत्मनेपदविधिस्त्र न सिध्यति। अनुदात्तङित आत्मनेपदम् (१। ३। १२)। अनुदात्तङितौ द्वावात्मनेपदमित्यस्य द्वावर्थौ (१। ४। १००)। तत्र संख्यातानुदेशः प्राप्नोति॥ निष्ठा। रदाभ्यां

द्वाविति। (कै)

अधिकरणसाधनग्रहणशब्देन द्विशब्दस्य षष्ठीसमासः ततः पुनः सार्वधातुकपदेन स इति भावः॥ सार्वधातुकपदेन षष्ठीसमासे षष्ठीप्रयोजकसम्बन्धं दर्शयति

सार्वधातुकमपीति॥ (कै)

अथ शब्दतः साम्ये उक्तदोषोद्धारमाह भाष्ये

अस्तु तर्हीति। (भा)

एकार्थस्येत्यादि प्रत्यक्तादिकमप्युपलक्ष्यतेऽनेनेति बोध्यम्॥

यद्यपीति। (कै)

एवं च संवृतावर्णस्येत्ययुक्तमिति भावः॥

लौकिकेति। (कै)

केचित्तु ए ओ इत्यनयोः संवृतावर्णत्वे मानाभावः। प्रक्रियाकाव्यतिरिक्तायां विवृतत्वस्यैव "अ इ उण्" सूत्रभाष्ये उक्तत्वात्। प्रत्यापत्तिशास्त्रस्यावयवे प्रवृत्तौ मानाभावाच्च शास्त्रदृष्ट्या तस्यासिद्धत्वाच्च। चिन्त्यमिदमित्याहुः॥ अन्ये तु एतद् भाष्यप्रामाण्यात्

---

निष्ठातो नः पूर्वस्य च दः (८। २। ४२) इति। रेफदकारौ द्वौ निष्ठेत्यस्य द्वावर्थौ (१। १। २६)। तत्र संख्यातानुदेशः प्राप्नोति॥ सार्वधातुकद्विग्रहणेषु च दोषो भवति। असोरल्लोपः (६। ४। १११)। अमस्तौ द्वौ सार्वधातुकमित्यस्य द्वावर्थौ (३। ४। ११३)। तत्र संख्यातानुदेशः प्राप्नोति॥ एङः पूर्वत्वे प्रतिषेधः। वा। एङः पूर्वत्वे प्रतिषेधो वक्तव्यः। "एङः पदान्तादति" "ङसिङसोश्च" (६। १। १०९। ११०) ङसि ङसौ

ए ओ इत्यनयोरकारांशे संवृतत्वमेव इतरांशे एव [1]विवृततरत्वं तदुपरागाच्च । न संवृतत्वस्य लोके प्रयोगे स्पष्टमवभासः । ऐ औ इत्यनयोस्तु अकारांशेऽपि विवृतत्वमेवेत्याहुः ॥ "अतिप्रसङ्ग" इत्यादिना वक्ष्यमाणदोषाणां साधारणत्वादाद्य दोषः । शब्दसाम्यपक्षे नारोहतीत्यतस्तं तत्रोपपादयति

## क्ङिच्छब्दस्येति ॥ (कै)

भाष्ये

## गकारोऽपीति । (भा)

स्थामूरित्यत्र इत्वाभावाय क्स्नोर्गित्वावश्यकत्वेन जिष्णुरित्यत्र गुणाभावाय तन्निर्देश इति भावः ॥ उत्कूले द्वे इति वाच्ये "उदि-कूले" इति इकारसहितपाठो व्याख्यानभाष्येऽयुक्तमित्यत आह

---

1 विवृतत्वम् । क ॥

---

द्वावेङित्यस्य द्वावर्थौ । तत्र संख्यातानुदेशः प्राप्नोति ॥ अस्तु तर्हि शब्दतः । ननु चोक्तं संख्यासाम्यं शब्दतस्तेसुलादयः परस्मैपदानां डारौरसः प्रथमस्यायवायावः एच इत्यनिर्देशः इति । नैष दोषः । स्थानेऽन्तरतमः ( १ । १ । ५० ) इत्यनेन व्यवस्था भविष्यति । कुत आन्तर्यम् । एकार्थस्यैकार्थौ द्व्यर्थस्य द्व्यर्थौ बह्वर्थस्य बह्वर्थः । संवृतावर्णस्य संवृतावर्णौ विवृतावर्णस्य विवृतावर्णः ॥ अतिप्रसक्तो गुणवृद्धिप्रतिषेधे क्ङिति । वा । अतिप्रसक्तो भवति गुणवृद्धिप्रतिषेधे क्ङिति ( १ । १ । ५ ) । गुणवृद्धी द्वे क्ङितौ द्वौ । तत्र संख्यातानुदेशः प्राप्नोति ॥ नैष दोषः । गकारोऽप्यत्र निर्दिश्यते । तद्द गकारग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते न्यास एव । ककारे गकारश्चर्त्वभूतो ( ८ । ४ । ५५ ) निर्दिश्यते । गिति किति ङितीति ॥ उदिकूले रुजिवहोः ( ३ । २ । ३१ ) । उदिकूले द्वे रुजिवहौ द्वौ । तत्र संख्यातानु-

आगन्तुनेति । (कै)

वस्तुत उदिकूले इति अनुकरणम् इति द्वे शब्दरूपे इत्यर्थ इति न दोषः ॥ सप्तमी विभक्तिपाक्षे अर्थवैरूप्यमनुपपन्नमत आह

उदीतीति ॥ (कै)

एवं "रुजिवहोः" इत्यपि पञ्चम्याख्याने षष्ठीति बोध्यम् ॥ भाष्ये

एवं तर्हि अकर्त्तरि चेति । (भा)

विशेषणविशेष्यभावापन्नार्थवाचकत्वाद् "अकर्त्तरिकारक" इति । [1]शब्दतः साम्ये एष दोषः । अर्थतः साम्ये तु न कारकाणां बहुत्वादिति बोध्यम् ॥ ननु भवतेरकर्मकत्वात् कर्त्तर्य्येव करोतेस्तु सकर्मकत्वात् कर्मण्येवेति यथासंख्यमिष्टमेवेति भ्रमं वारयति

भवतेरिति ॥ (कै)

१ एकः शब्दो भाव इत्यपर इति । क ॥

देशः प्राप्नोति ॥ नैष दोषः । नोदिरूपपदम् । किं तर्हि । विशेषणं रुजिवहोः । उत्पूर्वाभ्यां रुजिवहिभ्यां कूल उपपद इति ॥ तच्छीलादिषु धातुत्रिग्रहणेषु । वा । तच्छीलादिषु धातुत्रिग्रहणेषु दोषो भवति । विदिभिदिच्छिदेः कुरच् ( ३ । २ । १६२ ) । विदिभिदिच्छिदयस्त्रयस्तच्छीलादयस्त्रयः ( ३ । २ । १३४ ) । तत्र संख्यातानुदेशः प्राप्नोति ॥ घञादिषु द्विग्रहणेषु । वा । घञादिषु द्विग्रहणेषु दोषो भवति । निरभ्योः पूल्वोः (३ । ३ । २८) । निरभी द्वौ पूल्वौ द्वौ । तत्र संख्यातानुदेशः प्राप्नोति ॥ नैष दोषः । इष्यते चात्र संख्यातानुदेशः । निष्पावः अभिलाव इति ॥ एवं तर्ह्यकर्त्तरि च कारके भावे च इति ( ३ । ३ । १९,१८ ) द्वौ पूर्वौ च द्वौ । तत्र संख्यातानुदेशः प्राप्नोति ॥ अवे तॄस्त्रोः करणाधिकरणयोः । वा । तॄस्त्रौ द्वौ करणाधिकरणे

## अन्येत्विति । (कै)

अत एव "हृतदारतयातिकोपनः शरणं किं रघुपुङ्गवो भवेत्" इति । "रावण मा कृथा मतिं सकिलेशः शरणं भवो विभुः" इति तर्किता शरणताकः सुखेन शरणत्वेन प्राप्य इत्यर्थकमुपपन्नमिति भावः ॥

## गोवलीवर्दन्यायेनेति ॥ (कै)

ब्राह्मणवसिष्ठन्यायस्योपलक्षणं गोवलीवर्दयोः सामान्यविशेषभावाभावस्यैकशेषप्रकरणान्ते भाष्ये उक्तत्वात् ॥ तथा पृथक् ब्राह्मणग्रहणे फलमाह

## छन्द इति । (कै)

वस्तुतो गायत्र्यादिच्छन्दोवद्धेषु मन्त्रेषु एतच्छन्दस्त्वमिति बोधयितुं तत्र ब्राह्मणग्रहणम् ॥

---

द्वे ( ३ । ३ । १२०,११७ ) । तत्र संख्यातानुदेशः प्राप्नोति ॥ कर्तृकर्मणोश्च भूकृञोः ( ३ । ३ । १२७ ) वा । कर्तृकर्मणी द्वे भूकृञौ द्वौ । तत्र संख्यातानुदेशः प्राप्नोति ॥ अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ( ३ । ३ । १४५ ) । वा । अनवक्लृप्त्यमर्षौ द्वौ किं वृत्ताकिंवृत्ते द्वे । तत्र संख्यातानुदेशः प्राप्नोति ॥ कृभ्वोः क्त्वाणमुलौ । वा । कृभ्वौ द्वौ क्त्वाणमुलौ द्वौ ( ३ । ४ । ६१,५९ ) । तत्र संख्यातानुदेशः प्राप्नोति ॥ अधीयानविदुषोश्छन्दो ब्राह्मणानि । वा । छन्दो ब्राह्मणानीति द्वे अधीते वेदेति च द्वौ ( ४ । २ । ६६,५९ ) । तत्र संख्यातानुदेशः प्राप्नोति ॥ रोपधेतोः पथिदूतयोः । वा । रोपधेतोः प्राचाम् ( ४ । २ । १२३ ) । तद्गच्छति पथिदूतयोः ( ४ । ३ । ८५ ) रोपधेतौ द्वौ पथिदूतौ द्वौ । तत्र संख्यातानुदेशः प्राप्नोति ॥ तत्र भवतस्तस्य व्याख्यानः

गृष्टापित (कै)

इत्यत्र तु छन्दः पदस्य ब्राह्मणे लक्षणेति बोध्यम् ॥

याज्ञवल्क्यानि (कै)

इत्यर्थं तु

[1]याज्ञवल्क्यादिभ्यः प्रतिषेधः (वा)

इति वचनमेवकृतं भाष्ये ॥ भाष्ये

अधीयानविदुषोरिति । (भा)

तत्र विद्वत्पर्य्यायो विदुष् शब्दः । अन्यथा वसन्तस्यौचि-त्यपितमलाभ्यभावात्तदसिद्धिरिति बोध्यम् ॥

संघादिष्विति । (भा)

"संघाङ्कलक्षणेषु अञयञिञामण्" (४।३।१२७) इत्यत्र त्रिष्व-प्यर्थेषु त्रिभ्यः प्रत्यय इष्यते । तत्र संख्यातानुदेशेन त्रिष्वर्थेष्वञा-द्योऽणविशिष्टा न सिध्यन्तीत्यर्थः ॥

---

१ छन्दो ब्राह्मणानि च तद्विषयाणि । ४ । २ । ६६ ॥ इति सूत्रस्य-वार्त्तिकम् ॥

---

ऋतुयज्ञेभ्यश्च । वा । तत्र भवस्तस्य व्याख्यानौ द्वौ ऋतुयज्ञौ द्वौ ( ४ । ३ । ५३,६६,६८ ) । तत्र संख्यातानुदेशः प्राप्नोति । संघादिष्वञ् प्रभृतयः । वा । संघादिष्वञ् प्रभृतयः ( ४ । ३ । १२७ ) संख्यातानुदेशेन न सिध्यन्ति ॥ नष दोषः । योगविभागमपि तत्र कर्त्तव्यम् ॥ वेण्वोयणो आदेर्भगायण् खौ । वा । वेण्वो यण् आदौ द्वौ यल् खौ द्वौ ( ४ । ४ । १३१,१३२ ) । तत्र संख्यातानुदेशः प्राप्नोति ॥ ङसिङसोः ख्यत्यात् परस्य । वा । ङसिङसौ द्वौ ख्यत्यौ द्वौ ( ६ । १ । ११०, ११२ ) । तत्र संख्यातानुदेशः प्राप्नोति ॥

[1]वचनादिति (भा)

भाष्यस्य व्याख्यानादित्यर्थं इत्याह

अनुदेश इति ॥ (भा)

उच्चारणम् । (कै)

उच्चारितसम्बन्ध इत्यर्थः । वस्तुत उच्चारितस्यैव शब्दस्य बोधकत्वं नानुमितादेरिति "अणुदित्" सूत्रभाष्योक्तेरनुमानपूर्वकस्योच्चारणात् श्रोतुर्बोधः ॥

समानयोग (भा)

इत्यस्य च एकयोगे उच्चारितानामित्यर्थं इति वाचनिकमेवेदम् । एतेन [2]"निरभ्योः" [3]"अवे हृस्तोः" [4]"स्वाङ्गतस् प्रत्यये" [5]"रोपधेतोः [6]"क्रतुयज्ञेभ्यः" [7]"ख्यत्यात्" [8]"अनवक्लृप्त्यमर्षयोरि"-

---

१ न वा समानयोगवचनात् । वा ॥ २ निरभ्योः पूल्वोः । ३ । ३ । २८ ॥
३ अवे तृस्त्रोर्घञ् । ३ । ३ । १२० ॥
४ स्वाङ्गे तस् प्रत्यये कृभ्वोः । ३ । ४ । ६१ ॥
५ रोपधेतोः प्राचाम् । ४ । २ । १२३ ॥
६ क्रतु यज्ञे भ्यश्च । ४ । ३ । ६८ ॥ ७ ख्यत्यात्परस्य । ६ । १ । ११२ ॥
८ अनवक्लृप्त्यमर्षयोरकिं वृत्तेऽपि । ३ । ३ । १४५ ॥

---

न वा समानयोगवचनात् । वा । न वैष दोषः । किं कारणम् । समानयोगवचनात् । समानयोगे संख्यातानुदेशं वक्ष्यामि ॥ तस्य दोषो विदो लटो वा । वा । तस्यैतस्य लक्षणस्य दोषो विदो लटो वा ( ३ । ४ । ८३ ) इति संख्यातानुदेशो न प्राप्नोति ॥ ध्माधेटोः नाडीमुष्ट्योश्च । वा । ध्माधेटोर्नाडीमुष्ट्योश्च ( ३ । २ । २९, ३० ) संख्यातानुदेशो न प्राप्नोति । स्तनशोरयाव्

त्येतेषु परिहृतो दोषः । समानयोगे द्वयोरुच्चारणाभावात् [1]"छन्दो ब्राह्मणानि" इत्यत्रापि न दोषः । तत्पदोपस्थापितलिङ्ग्युच्चारणाभावात् अत्र पक्षे [2]"कर्तृकर्मणोश्च भूकृञोः" [3]"वेशो यश आदेः" इत्यपरिहृतेति च "युष्मदस्मदोश्चादेशा" इति चेन भाष्ये संग्राह्ये ॥ भाष्ये

तस्य दोष इति । (भा)

"समानयोगे" इत्यस्येत्यर्थः ॥

अत्र तु लब्धेति । (कै)

इदं चिन्त्यम् । तत्तद्योगे वक्रोच्चारितानामेव तथा सम्बन्ध इति पक्षमुपक्रम्य दोषोक्तेः ॥ भाष्ये

नाडीमुष्ट्योरिति । (भा)

इदं [4]तृतीयाध्यायस्थभाष्यविरोधादेकदेशिवचनः ॥

यस्मिन् पक्षे इति । (भा)

"समानयोगे" इत्येतत् करणाकरणपक्षयोर्मध्ये यत्र पक्षे इत्यर्थः ॥

---

१ अ ४ । पा २ । सू ६६ ॥ २ अ ३ । पा ३ । सू १२७ ॥

३ वेशो यश आदेर्भगाद्यल् । ४ । ४ । १३१ ॥

४ नासिकास्तनयोर्ध्माधेटोः । ३ । २ । २९ ।

---

इनित्रकट्यचश्च ( ४ । २ । ५०, ५१ ) । वा । संख्यातानुदेशो न प्राप्नोति ॥ सिनृध्वपकराभ्यां कन् अयञौ च ( ४ । ३ । ३२, ३३) । वा । संख्यातानुदेशो न प्राप्नोति ॥ युष्मदस्मदोश्चादेशाः । वा । युष्मदस्मदोश्चादेशाः ( ४ । ३ । १,३,८ ) संख्यातानुदेशेन न सिध्यन्ति ॥ तस्माद् यस्मिन् पक्षेऽल्पीयांसो दोषास्तमास्थाय प्रतिविधेयं दोषेषु ॥ अथ वा एवं वक्ष्यामि । यथासंख्यम-

इत्याहुरिति। (कै)

अत्रारुचिवीजं तु भक्तरीत्यार्थत इति पक्षेऽपि दोषोद्धारस्य सुकरत्वात् तदनाश्रयणं किमर्थमिति॥

क्वचिदिति। (कै)

युष्मदाद्यादेशविषये [1]"विदो लट" इत्यत्र च क्वचिदिति। [2]खल गो[3]सिन्ध्वादौ अत्र संख्यातानुदेशाभावेऽपि अभिधानात् प्रयोगानुसरणात् समासनिर्देशेऽपि क्रमेणान्वयः। [4]"कर्त्तृकर्मणोश्च भू" इत्यत्र [5]"वेशोयश" इत्यत्र च अनभिधानादेतत् सूत्राप्रवृत्तिरित्यर्थः॥ 'एकयोगे' इत्यस्यानाश्रयणपक्षे तु अनेकस्थले अनभिधानाश्रयणमिति तात्पर्य्यम्॥ अस्य दुर्ज्ञेयत्वादाह

अथवेति॥ (भा)

---

१ अ ३। पा ४। सू ८३॥

२ खलगोरथात्। इनित्रकट्यचश्च। ४। २। ५०-५१॥

३ सिन्ध्वपकराभ्यां कन्। अणञौ च। ४। ३। ३२-३३॥

४ अ ३। पा ३। सू १२७॥ ५ अ ४। पा ४। सू १३१॥

---

नुदेशः समानां स्वरितेन। ततोऽधिकारः। अधिकारश्च भवति स्वरितेनेति। एवमपि स्वरितं दृष्ट्वा सन्देहः स्यात्। न ज्ञायते किमयं समसंख्यार्थ आहो स्विदधिकारार्थ इति। सन्देहमात्रमेतद् भवति सर्वसन्देहेषु चेदमुपतिष्ठते। व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति समसंख्यार्थ इति व्याख्यास्यामः॥

# स्वरितेनाधिकारः ।१।३।११॥

नेयं हेतौ तृतीया । अधिकारस्य स्वरितजन्यत्वाभावादत आह

[1]इत्थं भूतेति ॥ (कै)

न त्विति । (कै)

स्वरितोच्चारणेऽस्याधिकारज्ञापनेन चारितार्थ्यात् प्रयोगे शास्त्रान्तरप्राप्तस्वरेण बाध्यत इति भावः ॥ न च स्वरितत्वस्यात् । धर्मत्वात् "समः सुटि" (८।३।५) इत्यादौ अग्रेऽनुवर्त्तमानत्वात् कथं तत्वम् । तत् समभिव्याहृताऽपि तत्करणेनादोषात् । स्पष्टं चेदं "समः सुटि" इत्यत्र कैयटे ॥ इहाधिकारो नेोपक्रम इत्याह

अधिकारेति । (कै)

प्रेरणं तद्विषयीभूतं कार्य्यं वा लौकिकोऽधिकारः । तत्र शब्दस्य द्विविधं कार्य्यं अर्थबोधः स्वरूपबोधो वा । तत्रार्थबोधस्य वचननिरपेक्षत्वात् द्वितीये पर्य्यवसानेन योगे योगे उपस्थानं फलति । तच्च प्राय उत्तरयोगेषु क्वचित् पूर्वत्रापि यथा [2]"संयोगान्तस्य लोपः" 'झलि' इत्यादाविति भावः ॥ उक्तार्थे सूत्रस्य समर्थत्वात् [3]"किं गतमिति" प्रश्नोऽयुक्तोऽत आह

१ स्वरितेनेति "इत्थं भूतलक्षणे" (२।३।२१) इत्यनेन तृतीया ॥
२ अ ८। पा २। सू २३॥ ३ किं गतमेतदियता सूत्रेण ॥

किमयमिति। (कै)

यद्यधिकारशब्देन प्रतियोगमुपस्थानमुच्येत तदा सूत्रं सफलं स्यात् तस्य तु अन्योर्थ इत्याक्षेप इति भावः॥

न ह्रीति। (कै)

अर्थबोधरूपो व्यापारस्तु न वचनसाध्य इति भावः। पारिशेष्यादुपस्थानलाभ इति बोध्यम्॥

वचनेति। (कै)

तथा च सूत्रमेवाक्षिप्यत इत्यर्थः॥

संनिहिता गोकर्मिकेति। (कै)

गौरिति गम्यते (भा)

इति भाष्यस्य

गौर्दीयताम् (भा)

इति गम्यते इत्यर्थः॥

श्रुतापेक्षणस्य (कै)

इति पाठः। श्रुतकल्पनस्य इत्यर्थः॥

लाघवात् (कै)

इत्यस्य न्याय्यत्वमिति शेषः॥ इत्नुण् विधौ घञो निवृत्तिरिष्टैवेत्यत आह

ततश्चेति॥ (कै)

[1]"अधिकारपरिमाण"शब्देन तत् प्रदेशपरिमाणं विवक्षितमित्याह

यथेति॥ (कै)

प्रकृतस्येति। (कै)

सूत्रे स्वरित इति सप्तमीति भावः॥ भाष्ये

केनेदानीमिति। (कै)

सूत्रं ह्यधिकारनिवृत्त्यर्थं न तु तद्बोधकमिति भावः॥

इकारोऽनुबन्ध इति। (कै)

प्रत्याहारसूत्रस्थक्रमेणेत्यर्थः॥ ननु द्वयोरप्ययोरयमल्पीयानिति भवति। नैवमत्रालामल्पत्वात् सूत्राणां बहुत्वादिति शङ्कते

कथमिति। (कै)

भिन्नजातीयत्वं बहुत्वेन सूत्राणां बोध्यम्॥ परिहरति

परमतेति। (कै)

[2]यावतिथोऽल् (भा)

---

१ अत्र "सत् सप्तमीति भावः" इति पाठोऽस्ति इ पुस्तके। "अधिकार" इत्यारभ्य "सप्तमीति भावः" इत्यन्तं नास्ति इ पुस्तके॥

२ यावतिथोऽलनुबन्धस्तावतो योगानिति वचनात् सिद्धम्। वा.। यावतिथोऽलनुबध्यते तावतो योगानधिकारोऽनुवर्त्तत इति वक्तव्यम्॥ अथेदानीं यत्राल्पीयांसोऽलो भूयसश्च योगानधिकारोऽनुवर्त्तते कथं तत्र कर्त्तव्यम्। भूयसि प्राग् वचनम्। वा॥ भूयसि प्राग् वचनं कर्त्तव्यम्। प्रागमुत इति वक्तव्यम्॥ तत्तर्हि वक्तव्यम्। न वक्तव्यम्। सन्देहमात्रमेतद्भवति सर्वसन्देहेषु चेदमुपतिष्ठते व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम् इति प्रागमुत इति व्याख्यास्यामः॥ यद्येवं नार्थोऽनेन।

इति वादी अल्पे योगा बहवोऽल्प इति मन्यते। आक्षेप्ता तु अल्पे-ऽल्पो बहवो योगा इति । एवं मतभेदेनाल्पानां योगानां च प्रत्येक-मल्पत्वं बहुत्वं च प्राप्तं तद्वचनव्याच प्रकर्षप्रत्यय इत्यर्थः ॥

प्राग्देरिति । (कै)

[1]"सर्वस्य द्वे" इति द्विशब्दात् प्रागित्यर्थः ॥

यावतिथ इति । (कै)

समुदायाभिप्रायं "तत्तर्हि" इत्येकवचनमिति भावः ॥

[2]घञिति । (भा)

आनन्तर्यादिनुवन्तु बहुषु सूत्रेषु उपस्थिततया संस्कार-दार्ढ्यात् घञपि झटित्युपस्थितिक इत्यस्ति संदेहनिमित्तम्। एवञ्च व्याख्यानादधिकारनिवृत्तिवदधिकारोऽपि सिद्ध इति सूत्रं व्यर्थ-मिति भावः ॥ भाष्ये

[2]अधिकारगतिः (भा)

इत्येकं फलमुक्त्वा फलान्तरमाह

---

१ अ ८ । पा १ । सू १ ॥  २ विवरणे "घञ इति" अस्ति ॥

२ न तर्हीदानीमयं योगो वक्तव्यः । वक्तव्यश्च किं प्रयोजनम् । स्वरिते-नाधिकारगतिर्यथा विज्ञायेत । अधिकं कार्यम् । अधिकः कारः ॥ अधि-कारगतिः । गोस्त्रियोरुपसर्जनस्य ( १ । २ । ४८ ) इत्यत्र गोटाङ्ग्रहणं चोदितं तन्न कर्त्तव्यं भवति । स्त्रीग्रहणं स्वरयिष्यते । स्वरितेनाधिकार-केनेदानीमधिकारो भविष्यति । लौकिकोऽधिकारः । ननु चोक्तं नाधिकार इति चेदुक्तं किमुक्तमन्यनिर्देशस्तु निवर्त्तकस्तस्मात् परिभाषा । सन्देह-मात्रमेतद्भवति सर्वसन्देहेषु चेदमुपतिष्ठते व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम् इत्युक्तम् । इतुणा घञितिसन्देहे घञिति व्याख्यास्यामः ॥

[1]अधिकः कार इति। (भा)

अधिकारशब्दोऽधिकव्यापारवाची। न्यायप्राप्तादधिकोऽपि व्यापारो ग्राह्य इति भावः॥

बुद्ध्येति। (कै)

बुद्धिकृतौ विभागसंयोगौ ग्राह्याविति भावः॥ अभिरूपत्वप्रकारैकबुद्ध्युपारोह एव संयोगः। अभिरूपत्वप्रकारेण साङ्काश्यकैरपि संदृश्यमाना बुद्धिरभिरूपतरत्वलक्षणप्रकर्षाश्रयेण साङ्काश्यकान् जहातीति बुद्धेर्विश्लेष एव तद्विषयस्यापि विश्लेष इति भावः॥

---

१ अधिकः कारः। पूर्वविप्रतिषेधा न पठितव्या भवन्ति। गुणवृद्ध्यौत्त्वतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषिद्धं नुमचि रतृज्वद्भावेभ्यो नुडिति (७। १। ९५)। नुम् नुटौ स्वरयिष्येते। तत्र स्वरितेनाधिकः कारो भवतीति नुम्-नुटौ भविष्यतः। कथं पुनरधिकः कारः इत्यनेन पूर्वविप्रतिषेधाः शक्या न पठितुम्। लोकतः। तद्यथा। लोके ऽधिकमयं कारं करोतीत्युच्यते योऽयं दुर्बलः सन् बलवद्भिः सह भारं वहति। एवमिहाप्यधिकमयं कारं करोतीत्युच्यते सोऽयं पूर्वः सन् परं बाधते॥

---

गतिर्भवतीति स्त्रियाम् (४। १। ३) इत्येवं प्रकृत्य ये प्रत्यया विहितास्तेषां ग्रहणं विज्ञास्यते। तत्र स्वरितेनाधिकारगतिर्भवति इति न दोषो भवति॥ अधिकं कार्य्यम्। अपादानमाचार्य्यः किं न्याय्यं मन्यते यत्र प्राप्यनिवृत्तिः। तेनेहैव स्यात्। ग्रामादागच्छति नगरादागच्छति। सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इत्यत्र न स्यात्। स्वरितेनाधिकं कार्य्यं भवतीत्यत्रापि सिद्धं भवति। तथाधिकरणमाचार्य्यः किं न्याय्यं मन्यते यत्र कृत्स्न आधारात्मा व्याप्तो भवति। तेनेहैव स्यात् तिलेषु तैलं दध्नि सर्पिरिति। गङ्गायां गावः कूपे गर्गकुलमित्यत्र न स्यात्। स्वरितेनाधिकं कार्य्यं भवतीत्यत्रापि सिद्धं भवति। अधिकं कार्य्यम्॥

## नद्यास्तु तत् सामीप्यादिति । (कै)

ननु कृत्स्नपदेन व्याप्यवृत्त्याधेय एव मुख्य आधारो विपरीतस्तु अन्याय्य इति प्रतिपादनेन प्रवाहैकदेशे तरन्तीष्वपि गोषु प्रवाहस्य न मुख्यमाधारत्वमिति किं सामीप्यपर्य्यन्तधावनेन इति चेत् न कृत्स्नपदं न तथा तात्पर्य्यकं कटे आस्ते इत्यादेर्मुख्यत्वानापत्तेः । तस्माद्व्याप्यवृत्त्यव्याप्यवृत्त्युभयसाधारणस्यैवाधारत्वम् । [1]कृत्स्नत्वं बह्ववयवाभिप्रायकम् । बह्ववयवसम्बन्धाधेयकत्वमेव विवक्षितं सर्वे इत्यपि तदभिप्रायकमेव इत्याशयात् । प्रकृतिः स्वार्थे सप्तम्येव गौणाधारत्वार्थिकेति भाव इति कैयटानुसारिणः । वस्तुतः कृत्स्नपदसंकोचे न मानं कटे आस्ते इत्यप्यमुख्यमेव । गङ्गापदस्य प्रवाहपरत्वे तीरपरत्वे चोक्तरीत्या न मुख्यमाधारत्वं गङ्गा सर्वावयवानामिव तत् समीपदेशसर्वावयवानामपि व्याप्त्यभावात् । किञ्चौपश्लेषिकमधिकरणत्वम् अत एव मासेऽतिक्रान्ते यद्दीयते तस्यापि मास औपश्लेषिकमधिकरणमिति [2]"तत्र च दीयते" इति सूत्रे भाष्ये उक्तम् । समीपेऽप्यौपश्लेषिकं तत्त्वम् । व्यापकाधारस्यैवाधिकरणता न्याय्येत्यत्र मानं तु प्रकृत्यर्थतावच्छेदकविशिष्टे विभक्त्यर्थान्वयो

---

१ कृत्स्नत्वं च । क ॥

२ किमिदं भवान् कार्य्यग्रहणमेव प्रत्याचष्टे न पुनर्दीयते ग्रहणमपि । यथैव हि यन्मासे कार्य्यं तन्मासे भवं भवत्येवं यदपि मासे दीयते तदपि मासे भवं भवति तत्र तत्र भव इत्येव सिद्धम् । न सिद्ध्यति । न तन्मासे दीयते । किं तर्हि । मासे गते । एवं तर्हि औपश्लेषिकमधिकरणं विज्ञास्यते । ५ । १ । ९६ ॥

चिन्त्यम् । न हि कटैकदेशे कटत्वमस्ति तस्मादेकदेशगताधारत्वस्य कटे आरोपेण बोध इति गौण एव स आधार इति तत्त्वम् ॥ ननु स्वरितत्वेन प्रबलः [1]पूर्वः परमिव नित्यादीनपि बाधेत इत्यत आह

तुल्यजातीयस्येति । (कै)

यादृशदौर्बल्ये प्रसक्ते प्राबल्याय स्वरितत्वं प्रतिज्ञायते तादृशमेव दौर्बल्यं तेनापनीयत इति भावः ॥ उक्तमर्थं गाथयासंगृह्णाति भाष्ये—

[2]अधिकारगतिस्त्रयर्थेति ॥ (भा)

द्वितीयफलम्

विशेषायेति । (भा)

गौणसंग्रहायेत्यर्थः ॥ तृतीयमाह

अथ योऽन्य इति ॥ (भा)

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते
महाभाष्यप्रदीपोद्द्योते प्रथमस्य तृतीये
पादे प्रथममाह्निकम् ॥

---

१ "पूर्वः" इति नास्ति ङ पुस्तके ॥

२ अधिकारगतिः त्र्यर्था विशेषायाधिकं कार्य्यम् ।
अथ योऽन्योऽधिकः कारः पूर्वविप्रतिषेधार्थः सः ॥

## महाभाष्यप्रदीपोद्द्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्यनिबन्धने ॥



# [1] अनुदात्तङित आत्मनेपदम् ।१।३।१२॥

ननु लादेशविधायकसूत्रैरेकवाक्यत्वान्नियमोत्तरमेव विकरणो-ऽत आह

### लादेशेष्विति । (कै)

एकवाक्यतापक्षस्तु भाविसंज्ञाश्रयणाक्लेशदुष्ट इति भावः । पच-प्राप्तपरस्मैपदनिवर्त्तकतया चास्य नियमत्वं स्पष्टाचेयं रीतिः "युष्मदु-पपदे" (१।४।१०५) इति सूत्रे कैयटे ॥

---

१ विकरणेभ्यः प्रतिषेधो वक्तव्यः । चिनुतः । सुनुतः । लुनीतः । पुनीतः । ङित आत्मनेपदं प्राप्नोति (सार्वधातुकमपित् ।१।२।४)॥ नैष दोषः । नैवं विज्ञायते ङकार इदस्य सोऽयं ङित् ङित इति । कथं तर्हि । ङकार एवेत् ङित् ङित इति॥ अथवा उपदेश इति वर्त्तते (उप-देशेऽजनुनासिक इत् ।१।३।२)। अथवा उक्तमेतत् सिद्धं तु कार्य्यातिदेशादिति (सिद्धं तु पूर्वस्य कार्य्यातिदेशात् । वा । गाङ् कुटादि-

केवलाच्चेति ।

तस्य लोपावश्यं भावादिति भावः ॥

सामर्थ्यादिति । (कै)

तेन च "येन विधिः" (१।१।५२) इति शास्त्रप्रवृत्त्यभावेऽपि तदन्तग्रहणमित्यर्थः ॥

तदन्तविधेर्वेति । (कै)

शब्दं विशेष्यीकृत्य तत्सामर्थ्यात् शास्त्रप्राप्तेर्वेत्यर्थः ॥

तेन ङिदन्तादिति । (कै)

इत्संज्ञकङकारान्तादित्यर्थः । अतिदेशे तु "ङित्" इति बहुव्रीहिरेव । "क्ङिति च" (१।१।५) इत्याद्यनुरोधादिति भावः ॥

तेनेति । (कै)

अत्र पक्षे ङिदिति बहुव्रीहिरेवेति भावः । बहिरङ्गोऽपि "क्ङिति च" (१।१।५) इत्याद्येकवाक्याय शास्त्रे आश्रीयते इति बोध्यम् ॥ भाष्ये

---

श्वोऽश्नियानिङवत् (१ । २ । १) इति सूत्रस्थवार्त्तिकम् ) ॥ सर्वथा बहुभ्यां प्राप्नोति । एवं तर्हि धातोरिति वर्तते । क्व प्रकृतम् । भूवादयो धातवः (१ । ३ । १ ) इति । तद्वै प्रथमानिर्दिष्टं पञ्चमीनिर्दिष्टेनचेहार्थः । अर्था-द्विभक्तिविपरिणामो भविष्यति । तद्यथा । उच्चानि देवदत्तस्य गृहाणि । आमन्त्रयस्वैनम् । देवदत्तमिति गम्यते । देवदत्तस्य गावोऽश्वा हिरण्यं च । आढ्यो वैधवेयः । देवदत्त इति गम्यते । पुरस्तात् षष्ठीनिर्दिष्टं सदर्थात्

सिद्धं तु पूर्वस्येति। (भा)

[1]पूर्वपदस्य परभिन्नपरत्वात् पचेत इत्यादौ "आतो ङित" (७।१।८१) इति भवत्येव ॥

अत्रापीति। (कै)

कुटेः सनो "गाङ् कुटादिभ्यः" (१।२।१) इति ङित्त्वात् सनन्तस्य ङिदन्तधातुत्वादिति भावः। [2]ग्लेत इत्यादौ तु व्यपदेशि-वद्भावात् सिद्धिरिति बोध्यम् ॥

इत्यपीति। (कै)

उपदेशपदानुवृत्तिर्वा कर्मधारयो वेत्यपि बोध्यम् ॥

वाक्यैकवाक्यतयेति। (कै)

आपाततोऽवान्तरवाक्यार्थबोधोत्तरं वाक्यैकवाक्यतया महावा-क्यार्थबोध इत्यर्थः ॥

एकवाक्यतायामिति। (कै)

---

१ 'पूर्वपदस्य" इत्यारभ्य "इति ङित्वाद्" इत्यन्तं नास्ति इ पुस्तके ॥
२ "ग्लेत इत्यादौ धातुत्वादिति भावः" इत्यधिकम् क पुस्तके ॥

---

प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति। एव मिहापि पुरस्तात् प्रथमा-निर्दिष्टं सदर्थात् पञ्चमीनिर्दिष्टं भविष्यति॥ किमर्थं पुनरिदमुच्यते। आत्मनेपदवचनं नियमार्थम्। वा। नियमार्थोऽयमारम्भः। किमुच्यते निय-मार्थोऽयमिति न पुनर्विध्यर्थोऽपि स्यात्। लविधानाद्विहितम्। वा। लविधा-नाद्धात्मनेपदं परस्मैपदं च विहितम् (३।४।७८)॥ अस्ति प्रयोजन-

आदेशाश्रयसंज्ञामूलविधानेऽन्योन्याश्रयापत्तेः "अनुदात्तङित" इत्यादौ भाविसंज्ञाश्रयणीया स्यात् । अनुदात्तङितो लस्य स्थाने तिबादयो भवन्ति येषां जातानामात्मनेपदसंज्ञा भविष्यतीत्यर्थादिति भावः ॥

वाक्यभेद एवेति । (कै)

वाक्यभेदेऽपि एतन्मुखनिरीक्षणेनैव लघुसंस्कारकं तिबादिसूत्रं न ततः स्वतन्त्रमिति बोध्यम् । नियमार्थत्वपक्षेऽन्येषां प्राप्तानामेतत् सामर्थ्यान्निवृत्तिः । एकवाक्यतापक्षे तु तेषामप्राप्तिरेवेति विशेषः ॥ भाष्ये तिप्तस् इत्यादिना सिद्धत्वान्नियमार्थत्वमित्यजानानः शङ्कते

किमुच्यते इति ॥ (भा)

लविधानादिति । (भा)

लपदं तदादेशवाचकमिति बोध्यम् ॥ अन्यतरस्यानवकाशत्वे विप्रतिषेधाऽयोगाद् द्वयोः सावकाशतां दर्शयति

विकरणानामिति । (कै)

---

मेतत् । किं तर्हीति । विकरणेषु व्यवहितत्वान्नियमो न प्राप्नोति । इदमिह संप्रधार्यम् । विकरणाः क्रियन्तां नियम इति किमत्र कर्तव्यम् । परत्वाद्विकरणाः (स्यतासी लृलुटोः । ३।१।३३) । नित्याः खल्वपि विकरणाः । कृतेऽपि नियमे प्राप्नुवन्त्यकृतेऽपि प्राप्नुवन्ति । नित्यत्वात् परत्वाच्च विकरणेषु कृतेषु विकरणैर्व्यवहितत्वान्नियमो न प्राप्नोति । नैष दोषः । अनवकाशो नियमः । सावकाशः । कोऽवकाशः । य एते लुग्विकरणाः लुविकरणा लिङ् लिटौ च ॥ यदि पुनरियं परिभाषा विज्ञायेत । किं कृतं भवति ।

यद्यपि नित्यानित्ययोरयुक्तः स तथापि पूर्वं नित्यत्वात् कृतेर्न दोष इति बोध्यम् ॥

परत्वादिति। (भा

यद्यपि प्राप्तस्यैव बाध इति सार्वधातुकपरत्वं दुरुपपादं तथापि शास्त्रतः प्राप्तिमात्रेण बोध्यम्। परत्वमादाय तत्प्रवृत्तिरिति भावः ॥

इति भाव इति। (कै)

इत्यभिमान इत्यर्थः ॥ परिभाषाया लिङ्गवत्त्वनियमात्तद्दर्शयति

आत्मनेपदेति। (कै)

यथोद्देशे वाक्यभेदस्यैव सत्त्वात् कार्य्यकालाश्रयणम्। उपस्थितस्य च वाक्यैकवाक्यतयान्वयः। स च इत्थं लस्य स्थाने तिबादयो भवन्ति। तेषानुदात्तङितः परस्य लस्य स्थाने तादृशा भवन्ति। येषां आतानामात्मनेपदसंज्ञा भवतीति। नचावान्तरवाक्यार्थबोधोत्तरं तेषां लस्थानिकत्वज्ञानादात्मनेपदादिसंज्ञोत्तरमेवैकवाक्यतास्तु किं भाविसंज्ञाश्रयणेनेति वाच्यम्। अस्य तत्रोपस्थितौ तावत्-

---

कार्य्यकालं संज्ञापरिभाषं यत्र कार्य्यं तत्र द्रष्टव्यम्। लस्य तिबादयो भवन्तीत्युपस्थितमिदं भव"त्यनुदात्तङित आत्मनेपदं" "शेषात् कर्त्तरिपरस्मैपदम्" (१। ३। ७८) इति ॥ एवमपीतरेतराश्रयं भवति। केतरेतराश्रयता। अभिनिर्वृत्तानां लस्य स्थाने तिबादीनामात्मनेपदपरस्मैपदसंज्ञया भवितव्यम् (लः परस्मैपदम्। १। ४। ९९, १००) संज्ञया च तिबादयो भाव्यन्ते। तदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते। परस्मैपदेषु

पर्य्यन्तं तेनासम्बद्धतयावस्थाने मानाभावात् । अन्तरङ्गतयानेन सम्ब-न्धानुभवोत्तरमेव तिबादिभिः संज्ञानुभवात् ।

तत्र महावाक्येनेति । (कै)

अत एव भाष्येऽपि

"लस्य तिबादयो भवन्तीत्युपस्थितमिदं भवति अनुदात्त (भा)

इत्याद्युक्तम् । अत्रेदं बोध्यम् । कार्य्यकालपक्षेऽपि इदमेव सूत्रं स्वाकाङ्क्षया तेनैकवाक्यतामनुभवति । परिभाषा इत्यस्य परि-भाषावदित्यर्थः । यथा परिभाषाकार्य्याकाङ्क्षावशात् तेनैकवाक्य-तापन्ना तथेदमपि स्वाकाङ्क्षावशात् आकाङ्क्षोत्थापके च लिङ्गव्यव-हारः । प्रकृते चास्य तदाकाङ्क्षोत्थापकात्मनेपदत्वादिना बोधका-वेतौ शब्दौ इति तत्र लिङ्गव्यवहारः । एतेन सर्वत्र परिभाषालिङ्ग विधेः परिभाषाकाङ्क्षोत्थापकं विधौ दृष्टं नचात्र तथा विधि-सूत्रे आत्मनेपदत्वादिनानुपस्थितेरिदमयुक्तमित्यपास्तमिति । एवं च धातोः इत्यनुवृत्त्यर्थं मण्डूकप्लुतिर्विभक्तिविपरिणामश्च नाश्रयणी-याविति बोध्यम् ॥

लकारविशेषेति । (कै)

अपरनिमित्तकत्वेन स्थादेशानामन्तरङ्गत्वं वक्तुं योग्यमीदृशान्त-

---

तावन्नेतरेतराश्रयं भवति । परस्मैपदानुक्रमणं न करिष्यते, अवश्यं कर्त्तव्यम् "अनुपराभ्यां कृञः" ( १ । ३ । ७९ ) इत्येवमर्थम् । ननु चैतदप्यात्मनेप-दानुक्रमणं एव करिष्यते । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" ( १ । ३ ।

ङ्त्वस्य भाष्ये कथ्यनाश्रयणादिति केचित् ॥ नन्वेवं परत्वाच्छवा-द्यः स्युरत आह

[1]येनेति ॥ (कै)

ननु भावकर्मणोऽस्य चारितार्थ्यात् कथमयं न्यायः । न च तत्रापि यका बाधः । एवं तर्हि "पुरस्तादपवादा" इति न्यायेन यक एव बाधः स्यान् न शबादेः । किं च श्यनादिभिः "येन नाप्राप्ति" न्यायाभावात्तद्विषये सावकाशाः । किं च लुग्विकरणा-दिषु शपो निवृत्तौ स्यादयः सावकाशा इत्यत आह

शबादीति । (कै)

आदेशेषु कृतेषु लावस्थाभावात् स्याद्यप्राप्तेश्चिन्त्यमिदं लाव-स्थायां स्यादय इत्यनाश्रित्येदमिति वक्तुं युक्तं तत्पक्षे तु "धातोः" इतिवद् "अनुदात्तङित" इत्यपि विहितविशेषणमिति बोध्यम् ॥

एकवाक्यतेति । (कै)

परिभाषात्वपक्ष इति भावः ॥

नन्वसतीति । (कै)

प्रत्ययनियमाश्रयणे अनुदात्तादिभ्य एवात्मनेपदम् । धातुमात्रात् परस्मैपदमिति पर्य्यवसानात् कादिविषये क्विविवेति भावः ॥

---

१ "येनेति" इत्यारभ्य "एवं तर्हि" इत्यन्तं नास्ति इ पुस्तके ॥

---

७२ ) आत्मनेपदं भवति कर्त्तर्यनुपराभ्यां कृञो नेति ॥ आत्मनेपदेषु चापि नेतरेतराश्रयं भवति । कथम् । भाविनी संज्ञाविज्ञास्यते सूत्र शाटकवत् ।

वाधनादिति । (कै)

प्रकृति ("प्रकृति" इति नास्ति । क) नियमाश्रयणेनेत्यर्थः । क्यप्क्विपोस्तु [1]"वासरूप" विधिना समावेश इति भावः ॥ भाष्ये

अथवा पुनरिति । (भा)

वाक्यभेदेनेत्यर्थः ॥

क्वतेति । (कै)

भिन्नवाक्यतायां तिबादिसूत्रेणासरूपतया प्रसक्तत्वेन प्रतिपन्नस्य न निमित्तत्वमिति भावः ॥ भाष्ये

अभिनिर्वृत्तानि (भा)

इत्यस्य प्राप्तानीत्यर्थः ॥

[2]स्वङ्ग इति । (कै)

अन्यथा विकरणव्यवधाने नियमाप्रवृत्तौ उभयोरपि पदयोः सामान्यशास्त्रेण सिद्धतया तद्विधानं विफलं सद् एतदर्थज्ञापकं "स्वे" इति तु एतत्पक्षे विषयसप्तमीति भावः ॥ विकरणव्यवधानेऽपि नियमप्रवृत्तिर्ज्ञाप्यते इति [3]"शदेः शित" इति सूत्रे भाष्ये ध्वनितमिति वक्ष्यते । अत एव तावस्थायां स्यादय इति पक्षेऽपि न दोषः । केचित्तु भाष्यप्रामाण्याद् [4]"अनुपसर्गाद्वा" इत्यस्य

---

१ अ ३ । पा १ । सू ९४ ॥ २ अ १ । पा ३ । सू ९२ ॥
३ अ १ । पा ३ । सू ६० ॥ ४ अ १ । पा ३ । सू ४३ ॥

---

तद्यथा । कश्चित् कंचित् तन्तुवायमाह । अस्य सूत्रस्य शाटकं वयेति । स पश्यति यदि शाटको न वातव्योऽथ वातव्यो न शाटकः शाटको वातव्यश्चेति

आशीर्लिङ् लिटोरप्रवृत्तिरित्याहुः॥ उभयनियमपक्षोऽपि न सम्भवति। किमिति नोक्तम् (उभयानियमपक्षोऽपि न सम्भवत् किमिति नोक्तः। इ। क) इत्यत आह

उभयेति॥ (कै)

एकस्येति। (कै)

सकृदुच्चरित इति न्यायादिति भावः॥

नन्विति। (कै)

"प्रधाने कार्य्यसंप्रत्ययाद्" इति न्यायादित्यर्थः॥

एवं तर्हीति।

न्यायद्वयस्यापि सत्त्वात् सन्देह इति प्रश्नः॥

प्रकृत्यर्थेति (कै)

द्वन्द्वः॥

नन्विति। (कै)

"अनुदात्तङित एव" इत्यत्रैवकारस्यान्ययोगव्यवच्छेदार्थकत्वात् प्रकृत्यन्तरात् कुत्राप्यर्थे तदप्राप्तौ विध्यर्थत्वमेव न्याय्यमिति भावः॥

नैष इति। (कै)

खले कपोतन्यायेन सम्पूर्णप्रकरणं युगपदेवप्रवृत्तमिति भावः॥

भाष्ये

---

विप्रतिषिद्धम्। भाविनी खल्वस्य संज्ञाभिप्रेता स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति। एव मिहापि स तस्य स्थाने कर्त्तव्यो यस्याभिनिर्वृत्तस्यात्मनेपदमित्येषा संज्ञाभविष्यति॥ अथ वा पुनरस्तु नियमः। ननु चोक्तम्। विकरणेष्वेवंविहितत्वान्नियमो न प्राप्नोतीति। नैष दोषः। आचार्य्य

**तच परस्मैपदमपीति ।** (भा)

अनुदात्तङिद्भ्य इत्यर्थः ॥ प्रत्ययनियमे दोषान्तरमाह भाष्ये

**क्यष आत्मनेपदं वक्तव्यमिति ।** (भा)

[१]"वा क्यष" इत्यादि चतुः सूत्री शेषादित्यतः प्राक् कार्य्येति भावः ॥

**लकारस्येति ।** (कै)

वाग्रहणादिति भावः ॥ आन्तस्यापि कृदन्तत्वात् प्रातिपदिकत्वे सुपि पदत्वाद् "अपदं न प्रयुञ्जीत" इत्यस्य न विषय इति बोध्यम् ॥ भाष्ये

**उच्यते** (भा)

इत्यस्य विकल्पद्वारात्मनेपदमिति शेषः ॥ [२]न च "प्राप्नोति" इत्यस्य आत्मनेपदमिति शेषः । [३]"तद्" आत्मने पदं "वचनाद्" "वा क्यष" इति वचनादित्यर्थः ॥ ननु वा वचनेन लकारस्यैव पाक्षिकत्वमुच्यते न त्वात्मनेपदस्य इत्यत आह

---

१ वा क्यषः । १ । ३ । ९० ॥ द्युद्भ्यो लुङि । १ । ३ । ९१ ॥ वृद्भ्यः स्यसनोः । १ । ३ । ९२ ॥ लुटि च क्लृपः । १ । ३ । ९३ ॥

२ 'च' इति नास्ति कपुस्तके ॥

३ "तद्" इत्यारभ्यः "इत्यत" इत्यन्तं नास्ति कपुस्तके ॥

---

प्रवृत्तिर्ज्ञापयति "विकरणेभ्यो नियमो बलीयान्" इति यदयं विकरणविधावात्मनेपदपरस्मैपदान्याश्रयति । "पुषादिद्युताद्य्लृदितः परस्मैपदेषु" ( ३ । १ । ५५ ) "आत्मनेपदेष्वन्यतरस्याम्" ( ३ । १ । ५४ ) इति । नैतदस्ति-

लकार इति। (कै)

भिन्नवाक्यतापक्षे सामान्यसूत्रप्रवृत्त्यनन्तरभावित्वादेतत् प्रकरणेन पूर्वनिवृत्तस्य प्रत्यायनमशक्यम् ॥ तिङ् विषयत्वाच्च तदन्तस्य त्वमप्यशक्यम् ॥ ननु केवलप्रकृतिप्रयोगस्तर्हि तेनोच्यतेऽत आह·

केवलाया इति ॥ (कै)

नन्वेवमपि प्रयोगविकल्पोऽस्त्वत आह

शब्दमिति। (कै)

साधुप्रयोगनिर्वाहप्रवृत्तशास्त्रेण क्यषन्तप्रयोगाभावस्य बोधयितुमयुक्तत्वादिति भावः। एवं च "क्यष आत्मनेपदवचनम्" इति द्वितीयदोष उद्धृतः ॥

शेषग्रहणं कर्त्तव्यम् (भा)

इति दोषस्त्वस्त्येव॥ ननु आपाततस्तिबादिसूत्रेण प्रपक्षमुभयपदित्वं यथा पाक्षात्यैर्नियमैरपोद्यते एवं प्रथमं नित्यवत्। अतं लकारनिवर्त्तनं पाक्षिकमितिकल्पयितुं युक्तम्। किं च दधि इत्यादिवत् केवलप्रकृतिप्रयोगोऽपि वक्तुं शक्य इति चेन्न। तिबादिसूत्रेण युगपदुभयप्रत्ययपरत्वासम्भवादर्थाक्षिप्तस्तयोर्विकल्पः स एव तन्नियमैरप्राप्तः पुनः "वा क्यष" इत्यनेन प्रतिप्रसूयते इति कल्पनाया एव युक्तत्वात् न दोषः। एकवाक्यतापक्षेऽपि यदीदं

---

ज्ञापकम्। अभिनिर्दिष्टानि हि लस्य स्थाने आत्मनेपदानि परस्मैपदानि च। यत्तर्हि "अनुसर्गाद्वा" (१।३।४३) इति विभाषां शास्ति॥ किं पुनरियं प्रत्ययनियमः। अनुदात्तङित एवात्मनेपदं भवति भावकर्मणोरेवात्मनेपदं

प्रकरणं न स्यात् स्यादेव विकल्प इति सम्भावितस्य तस्यैव प्रतिप्रसव इति न दोषः॥ ननु प्रत्ययनियमपक्षे "शेषादि"ति कृतेऽपि दोषः। "कर्त्तरि" इत्यस्य सत्त्वेन कर्त्तरि शेषादेवेत्यर्थेऽर्थान्तरे परस्मैपदस्य सर्वत आपत्तेरिति चेत्सत्यम्। [1]कर्त्तर्य्येव शेषादेव इति नियमद्वयाङ्गीकारेणादोषात्। न चैवमपि भावकर्मणोरेवेति धातुमात्रविषयनियमेन अनुदात्तङितोऽपि कर्त्तरि तङानानापत्तिः। न च अनुदात्तङित इत्यस्य वैयर्थ्यम्। शेषाद्भावकर्मणोस्तङ्व्यावृत्त्यर्थं चारितार्थ्यादिति चेन्न। योगविभागसामर्थ्येनास्य कर्त्रर्थत्वाद् अदोषः भाष्ये

**अस्तु तर्ह्यीति।** (भा)

शेषादिति कर्त्तव्यतारूपाद्दोषादित्यादिः॥

**परस्मैपदिनोऽवकाशः** (भा)

इति भाष्यादवकाशशब्दो नित्यैकवचनान्तः॥

**करणादीन्यवकाशः** (भा)

इति कैयटान्नित्यपुंलिङ्गः। "तिङन्तान्यवकाशः" इति "सरूप" (१।२।६४) सूत्रस्य भाष्याच्चेति बोध्यम्॥

**तत्रापि नियमान्नेति।** (भा)

---

[1] विनिगमकविरहेण। इ॥

---

(१।३।१२) भवतीति। आहोस्वित् प्रकृत्यर्थनियमः। अनुदात्तङित आत्मनेपदमेव भावकर्मणोरात्मनेपदमेवेति। कश्चात्रविशेषः। तत्र प्रत्ययनियमे शेष वचनं परस्मैपदस्यानिवृत्तत्वात्। वा। तत्र प्रत्ययनियमे शेषग्रहणं

तेषु परस्मैपदमेवेति नियमादित्यर्थः। एवं चानवकाशत्वाद्वचनसामर्थ्याद्भविष्यतीति प्रकृत्यर्थनियमे न दोष इति भावः॥

तथापि। (कै)

बहुलग्रहणोक्तीतविधेश्चारितार्थ्येऽपि॥

तयोरेवेति। (कै)

विधेश्चारितार्थ्यादिति भावः॥

सहाभिधानेति। (कै)

यद्यपि निर्दिष्टार्थानां स्वार्थिकत्वेन प्रकृत्यर्थकतैव न्याय्या तथापि व्याकरणान्तरेऽतिप्रत्ययादिकल्पनादर्शनादयं[1] पक्ष आश्रितः। सहाभिधानं द्योतकत्वेनोभयोरपि द्योतकत्वादिति तत्त्वम्॥

अकर्त्तरीति। (कै)

भावघञ् तु अनवकाशत्वात् सिद्ध इति भावः॥ ननु

---

१ सहाभिधानेऽपि द्वाविति वदर्थता प्रत्येकमेव पर्याप्तेति बोध्यम्। इ॥

---

कर्त्तव्यम् परस्मैपदनियमार्थम्। शेषात् कर्त्तरि परस्मैपदम् (१।३।७८) इति। किं कारणम्। परस्मैपदस्यानिवृत्तत्वात्। प्रत्यया नियताः प्रकृत्यर्था अनियता तत्र परस्मैपदमपि प्राप्नोति। तत्र शेषग्रहणं कर्त्तव्यम् परस्मैपदनियमार्थम्। शेषादेव परस्मैपदं भवति नान्यत इति॥ अथ आत्मनेपदवचनं तस्यान्यत्र नियमात्। वा। अथ आत्मनेपदं वक्तव्यम्। लोहितायति। लोहितायते (१।३।९०)। किं पुनः कारणं न सिध्यति। तस्यान्यत्र नियमात्। तद्ध्यन्यत्र नियम्यते॥ उच्यते च न च प्राप्नोति तद्वचनाद् भविष्यति॥ अस्तु तर्हि प्रकृत्यर्थनियमः।

उपपद इति (कै)

विशेष्याभावात् कथं कर्मणीत्यस्य तत् विशेषणत्वमत आह

सप्तमीति । (कै)

विशेषोपस्थापकमत्र विशेषणपदेन विवक्षितम् इति भावः । स्वघटित सूत्रे भावलक्षणसप्तम्यन्तम् अनुवृत्तिमात्रेण कथं विषयसप्तम्यन्तं स्यादिति शङ्का भाष्यार्थः । शब्दाधिकार एवाश्रित इति परिहारः॥ भाष्ये प्रत्ययनियमवादीमतपक्षे त्वयोद्भावितं गौरवमत्रापि समानमित्याह

शेषवचनं चेति । (भा)

अत्रापि पक्षे शेषग्रहणं कर्त्तव्यमित्यर्थः ॥ शेषग्रहणान्तरं च कर्त्तव्यमित्यधिकं गौरवं प्रत्ययनियमपक्षे इत्याह

कर्त्तरि चेति ॥ (भा)

आत्मनेपदविषयः । कर्त्ता कर्मकर्त्ता ॥ ननु स्वाश्रयकर्त्तृत्वप्रयुक्तं परस्मैपदं आतिदेशिकेन विरुद्धमिति कथं तत् स्यादत आह

---

प्रत्ययार्थनियमेऽन्याभावः । वा । प्रकृत्यर्थनियमे अन्येषां प्रत्ययानामभावः । अनुदात्तङितस्तृजादयो न प्राप्नुवन्ति। नैष दोषः । अनवकाशास्तृजादय उच्यन्ते (३ । १ । १३३ ) च ते वचनाद् भविष्यन्ति । सावकाशास्तृजादयः । कोऽवकाशः । परस्मैपदिनोऽवकाशः । तत्रापि नियमान्न प्राप्नुवन्ति ॥ तव्यदादयस्तर्हि भावकर्मणोर्नियमान्न प्राप्नुवन्ति । तव्यदादयोऽप्यनवकाशाः । ते वचनाद्भविष्यन्ति ( ३ । ४ । ७० )॥ चिण् तर्हि भावकर्मणोर्नियमान्न प्राप्नोति। चिणपि वचनाद्भविष्यति ( ३ । १ । ६६ ) । घञ् तर्हि कर्मणो नियमान्न प्राप्नोति ( ३ । ३ । १८ ) । तत्रापि प्रकृतं कर्मग्रहणमनुवर्त्तते । क्व प्रकृतम् ।

## यदेति ॥ (कै)

## परस्मैपदं प्राप्नोतीति । (कै)

द्वितीयशेषग्रहणे तु कर्मकर्त्तुः शेषत्वाभावान्नेति भावः ॥

## उभयोः (कै)

कर्मकर्त्त्राश्रयविध्योः । भावाभावकृतविरोधवदेव स्वाश्रयं निवर्त्त्येत इति भावः ॥ न चातिदेशोऽनवकाशः कार्य्यान्तरे सावकाशत्वाद् इति तात्पर्य्यम् ।

## कार्य्यातिदेशेत्विति । (कै)

केचित्तु एतद् भाष्यप्रामाण्यात् कार्य्यातिदेशेऽपि परत्वादिव्यवहारे उत्पत्तिदेश एव देशोऽतिदिश्यमानकार्य्याणामित्याहुः । वस्तुतः कार्य्यातिदेशः शास्त्रातिदेशद्वारैव इत्युक्तम् ॥ "कर्त्तरि च" इत्यादिचकारस्वारस्यात् प्रकृत्यर्थनियमपक्षे दोषान्तरमिति भाति तच्च न वक्ष्यमाणयुक्तेरित्याशयेन पृच्छति

---

"अण् कर्मणि च" (३।३।१२) इति ॥ तद्वै तत्रोपपदविशेषणमभिधेयविशेषणेन चेहार्थः । न चान्यार्थं प्रकृतमन्यार्थं भवति । न खल्वप्यन्यत् प्रकृतमनुवर्त्तनात् अन्यद्भवति न हि गोधा सर्पन्ती सर्पणादहिर्भवति ॥ यत्तावदुच्यते अन्यार्थं प्रकृतमन्यार्थं भवतीत्यन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा । शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते उपस्पृश्यते च शालयश्च भाव्यन्ते । यदप्युच्यते न खल्वप्यन्यत् प्रकृतमनुवर्त्तनादन्यद् भवति न हि गोधा सर्पन्ती सर्पणादहिर्भवतीति भवेद् द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येन येनाभिसंबध्यते तस्य तस्य विशेषको भवति ॥ शेषवचनं च । वा ।

**कतरस्मिन्निति ॥** (भा)

भाष्ये चकारस्थाने अस्थानेनाह द्वितीयः

**प्रकृत्यर्थेति ॥** (भा)

प्रकृत्यर्थनियमत्राद्याह

**तावन्न दोष इति ॥** (भा)

**अन्तरेणापीति।** (कै)

भावकर्मणोस्तङानयोर्नियतत्वेन कर्त्तर्य्येवोभयप्रसङ्गात्। उभयप्राप्तौ नियमार्थं शास्त्रं कर्त्तर्य्येव पर्य्यवस्यतीति भावः ॥ भाष्ये

**नार्थः कर्त्तृग्रहणेन।** (कै)

**कर्त्तृग्रहणाच्चैष दोष इति।** (भा)

यथा च प्रकृतत्यर्थनियमपक्षे तदभावान्नैष दोषः। अयं भावः। यदि कर्त्तृग्रहणं क्रियते तदा भिन्नविषयत्वाद् भावकर्मणोरिति परस्मैपदापवादो न भवतीति कर्मकर्त्तरि परस्मैपदं प्राप्नोतीति तन्निवृत्तये शेषग्रहणं कर्त्तव्यम्। यदा तु कर्त्तृग्रहणं न क्रियते तदा

---

शेषग्रहणं च कर्त्तव्यम्। "शेषात् कर्त्तरि परस्मैपदम्" (१।३।७८) इति। किं प्रयोजनम्। शेषनियमार्थम्। प्रकृत्यर्थौ नियतौ प्रत्यया अनियतास्ते शेषेऽपि प्राप्नुवन्ति। तत् शेषग्रहणं कर्त्तव्यम्। शेषात् कर्त्तरि परस्मैपदमेव यथा स्यादिति ॥ कर्त्तरि चात्मने पदविषये परस्मैपदप्रतिषेधार्थम्। वा। कर्त्तरि चात्मनेपदविषये परस्मैपदप्रतिषेधार्थं द्वितीयं शेषग्रहणं कर्त्तव्यम्। शेषाच्चेव इति वक्तव्यम्। इह मा भूत्। भिद्यते कुसूलः स्वयमेवेति (कर्मवत् कर्मणा तुल्यक्रियः। ३।१।८७) ॥ कतरस्मिन् पक्षेऽयं दोषः। प्रकृत्यर्थनियमे। प्रकृत्यर्थनियमे तावन्न दोषः। प्रकृत्यर्थौ नियतौ प्रत्यया

परस्मैपदे प्राप्ते भावकर्मणोरित्यारभ्यमाणं "येन नाप्राप्ति" न्यायेन शेषादित्यस्यापवाद इति भावकर्मणोरित्येतद्विषये शेषादिति न प्रवर्त्तते इति कर्मकर्त्तरि परस्मैपदनिवृत्तये शेषग्रहणं न कर्त्तव्यमिति दोषदः स्वाशयमाह

प्रत्ययनियमे तर्हीति ॥ (भा)

[1]द्वितीय "कर्त्तृग्रहणाच्च" इत्यनेन दोषवानेव प्रत्ययनियमस्तत् करणात् कर्मकर्त्तर्यतिव्याप्तेश्चेति सूचितं तचाह

पुरस्तादिति ॥ (कै)

इदानीं प्रकृत्यर्थनियमवादी स्वपक्षे आपादितशेषग्रहणकर्त्तव्यत्वनिराकरणद्वारा प्रत्ययनियमे तत्करणप्रयुक्तगौरवमाह

प्रकृत्यर्थनियमे (भा)

इत्यादिना । शेषादिति पञ्चम्यन्तमित्यर्थः ॥

सिद्ध इति । (कै)

तिबादिसूत्रेणेति शेषः ॥ एवं च प्रकृत्यर्थनियमपक्ष एव

---

१ द्वितीयकर्मकर्त्तृग्रहणाच्च । क ॥

---

अनियतात्त्वनगार्थः कर्त्तृग्रहणेन कर्त्तृग्रहणाच्चैव दोषः ॥ प्रत्ययनियमे तर्ह्ययं दोषः । प्रत्यया नियताः प्रकृत्यर्थावनियतौ तत्र कर्त्तृग्रहणं कर्त्तव्यम् भावकर्मणोर्निवृत्त्यर्थम् । कर्त्तृग्रहणाच्चैव दोषः ॥ प्रकृत्यर्थनियमे शेषग्रहणं प्रत्ययम् कर्त्तुम् । प्रकृत्यर्थौ नियतौ प्रत्यया अनियताः । ततो वक्ष्यामि परस्मैपदं भवतीति । तन्नियमार्थं भविष्यति । यत्र परस्मैपदं चान्यच्च प्राप्नोति तत्र परस्मैपदमेव भवतीति ॥ तत्तर्हि प्रत्ययनियमे द्वितीयं शेषग्रहणं कर्त्तव्यम् ।

न्यायात् इति खिलं कर्त्तृग्रहणं शेषग्रहणं च कुर्वतः पाणिनेः प्रत्ययनियमपक्षे एव तात्पर्य्यमिति तत्पक्षेऽपि कर्मकर्त्तर्य्यव्याप्तिनिरासाय पृच्छति भाष्ये

**तत्तर्हि प्रत्ययेति ।** (भा)

सप्तम्यन्तमित्यर्थः । ततः कर्त्तरीति वाक्ये भावकर्मणोरित्यनुवृत्तं कर्त्तृविशेषणमिति भावः ॥ ननु प्रत्यासत्त्या तद् धात्वर्थनिरूपितकर्मकर्त्तृत्ववत् तद् धात्वर्थभावकर्त्तृत्वमेव ग्राह्यम् एवं च

**एति जीवन्तमानन्द** (भा)

इत्यत्र कथं दोष इति चेन्न । भावांशे प्रत्यासत्त्याश्रयणस्य अशक्यत्वात्तदाह

**पीडारूपमिति ॥** (कै)

**प्रत्यासत्त्येति ।** (कै)

अत्र तु हन्ति भेद इत्यर्थः । तद्धात्वर्थनिरूपितकर्मत्वस्यैव कर्मवद्भावेनातिदेशादिति भावः ॥

**व्यवहित इति ।** (कै)

एवं चानन्तरस्येति न्यायेन कर्त्तरीति योगविभागः "शेषात्

---

न कर्त्तव्यम् । योगविभागः करिष्यते ( १ । ३ । १४ ) । "अनुदात्तङित आत्मनेपदम्" । ततो "भावकर्मणोः" । ततः "कर्त्तरि" । कर्त्तरि आत्मनेपदं भवति भावकर्मणोः । ततः "कर्मव्यतिहारे" । कर्त्तरीत्येव । भावकर्मणोरिति निवृत्तम् ॥ यथैव तर्हि कर्मणि कर्त्तरि भवत्येवं भावेऽपि कर्त्तरि प्राप्नोति । एति जीवन्तमानन्दः ( भावे । ३ । ३ । १८ ) । नास्य किं चिद्

कर्त्तरी"त्यस्यैव बाधको न तु "अनुपराभ्याम्" इत्यस्येति भावः॥ कर्त्तरीति योगविभागेन "अनुपराभ्याम्" इत्यस्याबाधे युक्त्यन्तरमप्याह

कक्ष्यान्तरेति। (कै)

प्रथमं सामान्यतस्तिबादिप्राप्तिः ततः कर्मवद्भावात् भावकर्मणोरिति ततः परत्वात् शेषादिति प्राप्तं कर्त्तृगामिक्रियाफलाभावेनाप्यस्यापि शेषत्वात् ततो योगविभागादात्मनेपदं प्राप्तं ततो "ऽनुपराभ्यम्" इति ततश्च उत्तरकक्षाभावत्वाद् योगविभागस्यापि तद् बाधकमिति न कर्त्तरीति योगविभागेन तद्बाधनमिति भावः॥

आत्मनेपदापवादत्वाच्चेति। (कै)

परत्वेन योगविभागबाधक "स्वरितञित" इति प्राप्ते इत्यर्थः। एवं बाधकापवादत्वात्तद्बाध्यत्वमिति भावः॥

प्राप्तिमात्रमिति। (कै)

बाध्यसामान्यचिन्तयेति भावः॥ भाष्ये

पराप्राप्तिरप्रतिषिद्धेति। (भा)

अबाधितेत्यर्थः॥ ननु "इयम्" इत्यनेन पूर्वप्रक्रान्तत्वाद् योगविभागरूपाया एव परामर्शः स्यात्। स [illegible]। उक्तरीत्या बाध्य-

---

शतीति (वचार्थानां भाववचनानामश्वरेः। ३। ३। ५४)। द्वितीयो योगविभागः करिष्यते (१। ३। १३)। 'अनुदात्तङित आत्मनेपदम्"। यतो "भावे"। ततः कर्मणि"। कर्मणि चात्मनेपदं भवति। ततः "कर्त्तरि"। कर्त्तरि चात्मनेपदं भवति। कर्मणीत्यनुवर्त्तते भाव इति निवृत्तम्। ततः

बाधकभावस्य वैपरीत्यापत्तेः। 'इयम्' इत्यनेन प्रेषादिति प्राप्ति-र्ग्राह्या। तत्र च बाधकत्वमनुपपन्नमत आह

पूर्वविप्रतिषेधेनेति॥ (कै)

तदेवाह

प्रेषादित्यस्यावकाश इति। (कै)

एवं तृतीयकक्षायामेव "प्रेषादिति"। अनेन "अनुपराभ्याम्" इत्यस्य पूर्वविप्रतिषेधेन बाधे चतुर्थकक्षायां योगविभागप्राप्ता प्रेषादिति बाध्यते न च पुनः "अनुपराभ्याम्" इत्यस्य प्राप्तिः सकृद्गतिन्यायादिति भावः॥ तदाह

सापि योगविभागेनेति॥ (कै)

प्रेषादितीति। (कै)

उत्सर्गापवादयोरेकवाक्यतया अपवादविषये उत्सर्गाप्रसक्तेरिति भावः॥

परां प्राप्तिमिति। (भा)

कर्मकर्तृविषयाम् "अनुपराभ्याम्" इति प्राप्तिम् इत्यर्थः॥ भाष्ये

प्रतिषिद्धा (भा)

इत्यस्य बाधिता इत्यर्थः। पूर्वविप्रतिषेधारम्भे गौरवात्॥ "इयम्" इत्यनेन योगविभागप्राप्तिरेवपरामृश्यत' इत्याह

---

"कर्मव्यतिहारे"। "कर्तरि" इत्येव। "कर्मणि" वेति निवृत्तम्। एवमपि "प्रेष" ग्रहणं कर्तव्यम् "अनुपराभ्यां कृञः" (१।३।७९) इत्येवमर्थम्। इह मा भूत्। अनुक्रियते स्वयमेव। पराक्रियते स्वयमेव। ननु चैतदपि

अथवेति । (कै)

बाध्यसामान्यचिन्तयेति भावः ॥

अपवादापवादत्वादिति । (कै)

पूर्वमपवादबाधकपरं तच्च योगविभागस्य परत्वाद्बाधकं "स्वरितञित" इति तदपवादत्वादित्यर्थः । क्वचित्त्वपवादत्वादित्येव पाठः। तदापि तद्बाधकत्वोपलक्षकं परत्वाद् हि योगविभागस्य "अनुपराभ्याम्" इति बाधकम् ॥ भाष्येऽपि

प्रतिषिद्धा (भा)

इत्यस्य परत्वाद् बाधिता इत्यर्थः ॥ भाष्ये

प्रत्याख्यायते इति । (भा)

वर्त्तमानसामीप्ये लट् कर्मकर्त्तरि वस्तुतः कर्मत्वाभावात् पुनः कर्त्तृग्रहणेऽपि नेष्टसिद्धिरत आह

---

योगविभागादेव सिद्धम् । न सिध्यति । अनन्तरा या प्राप्तिः योगविभागेन शक्या बाधितुम् । कुत एतत् । "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति" । परा प्राप्तिरप्रतिषिद्धा तया प्राप्नोति । ननु चेयं प्राप्तिः परां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥ एवं तर्हि "कर्त्तरि कर्मव्यतिहारे" ( १ । ३ । १४ ) इत्यत्र कर्तृग्रहणं प्रत्याख्यायते तत् प्रकृतमुत्तरत्रानुवर्त्तिष्यते । शेषात् कर्त्तरि ( १ ३ । ७८ ) कर्त्तरीति । किमर्थमिदं कर्त्तरि कर्त्तरीति । कर्त्तैव यः कर्त्ता तत्र यथा स्यात् । कर्त्ता चान्यस्य यः कर्त्ता तत्र मा भूदिति । ततो "अनुपराभ्यां कृञः" । कर्त्तरि कर्त्तरीत्येव ॥

व्यपदेशान्तरमिति॥ (कै)

भाष्ये

कर्त्ता चान्यश्चेति। (भा)

कर्तृव्यवहारवान् कर्मव्यवहारवांश्चेत्यर्थः॥

---

# [1]कर्तरि कर्मव्यतिहारे।१।३।१४॥

ननु क्रियावचनस्यैव कर्मशब्दस्य लोकप्रसिद्धत्वाद् धात्वन्वये साक्षात् सम्बन्धलाभाच्च तस्यैव ग्रहणं भविष्यतीत्याह

प्रत्यासन्नत्वादिति। (कै)

लोकप्रसिद्ध्यपेक्षया शास्त्रे शास्त्रप्रसिद्धिरेव बलवती प्रकरणादिति भावः॥

साधनकर्मणि (कै)

ईप्सिततमे॥

तद्विषयत्वमिति। (कै)

---

१ क्रियाव्यतिहार इति वक्तव्यम्। कर्मव्यतिहार इत्युच्यमान इह प्रसज्येत। देवदत्तस्य धान्यं व्यतिलुनन्तीति। इह च न स्यात्। व्यतिलुनते व्यतिलुनत इति॥ तत्तर्हि वक्तव्यं न वक्तव्यम्। क्रियां हि लोके कर्मेत्युपचरन्ति। कां क्रियां करिष्यसि। किं कर्म करिष्यसीति॥ एवमपि कर्तव्यम्। कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययो भवति॥ क्रियापि कृत्रिमं कर्म। न

कर्मव्यतिहारविषयार्थवाक्याद्धातोरित्यर्थ इति भावः ॥ ननु देवदत्तस्वामिकधान्यस्यान्येन लवणेऽपि तत् स्वत्वानुत्पत्त्वेर्विनिमयाभावात् कथमत्रप्राप्तिरत आह

## स्वीकुर्वन्तीत्यर्थ इति । (कै)

स्वीकारपर्य्यन्तं धातोर्लक्षणेति भावः । क्रियामात्रकर्मणः स्वत्वविनिमय एव कर्मविनिमय इति बोध्यम् ॥

## क्रियाणामिति । (कै)

स्थिरेषु द्रव्येषु अन्यसम्बन्धिनोऽन्यसम्बन्धरूपव्यतिहारसम्भवेऽपि क्षणस्थायिक्रियासु तदसम्भव इति भावः ॥

## योग्यतेति । (कै)

नान्यसम्बन्धिनोऽन्यसम्बन्धित्वं सः किन्तु अन्यदीयत्वेन प्रसक्तस्यान्यसम्बन्ध इति भावः । एवं च साधनव्यत्यास एव क्रियाव्यत्यास इति तत्पर्य्यम् ॥ नन्वेवं स्व स्व क्रिया एव स्वेनकरणात् "संप्रहरन्त" इत्यत्र व्यतिहाराभावेनात्मनेपदं नस्यादत आह

## परस्परेति । (कै)

परस्परसम्बन्धिकरणमित्यर्थः । सम्बन्धश्च कर्मकरणसम्प्रदानापा-

---

सिध्यति । "कर्तुरीप्सिततमं कर्म" ( १ । ४ । ४९ ) इत्युच्यते कथं च क्रिया नाम क्रियेप्सिततमा स्यात् । क्रियापि क्रियेप्सिततमा भवति । कया क्रियया । संपश्यति क्रियया प्रार्थयति क्रियया‌ध्यवस्यति क्रियया वा। इह च एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुद्ध्या तावत् कं चिदर्थं संपश्यति संदृष्टे प्रार्थना प्रार्थितेऽध्यवसायोऽध्यवसाय आरम्भ आरम्भे निर्वृत्तिर्निर्वृत्तौ फला-

दानादि लक्षणो बोध्यः । प्रायेण व्यती अस्य द्योतकौ । क्वचित् सम् अपि यथा "संप्रहरन्त" इत्यत्र । क्वचित्तु प्रकरणादिकमपि तथा बोध्यम् ॥ नन्वेवमपि एकक्रियानिरूपितकारकगक्रियव्यत्यासो नोपपादितः । प्रहाराणां भिन्नभिन्नत्वादित्यत आह

**अथेति । (कै)**

साधनभेदात् क्रियाभेदावश्यम्भावेन सर्वत्रजातिकृतमेवैक्यमपेक्षणीयमिति भावः । एकधातुवाच्यत्वेन च एकत्वम् ॥

**लौकिका इति । (कै)**

पशुरपत्यं देवतेतिवदिति भावः ॥ इह शास्त्रे तदुक्तगतिः[1]

**इहेति ॥ (कै)**

"कर्मणि द्वितीये"ति कृत्रिमम् । अत्र लौकिकं क्रियारूपं स्पष्टं चेदं संख्यासंज्ञासूत्रे भाष्ये । इह तु कृत्रिमाऽकृत्रिमन्यायमेवाभ्युपेत्या इत्याह

**क्रियापि कृत्रिममिति । (भा)**

ननु द्वयोरपि क्रिययोः "पश्य मृगो धावति" इत्यादौ सम्बन्धो दृश्यते इत्यत आह

---

वार्त्तिः । एवं क्रियापि कृत्रिमं कर्म ॥ एव मप्युभयोःकृत्रिमयोरुभयगतिः प्रसज्येत तस्मात् क्रिया व्यतिहार इति वक्तव्यम् ॥ न वक्तव्यम् । इह कर्त्तरि व्यतिहार इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यत् कर्मग्रहणं करोति तस्यैतत्प्रयोजनं क्रिया व्यतिहारे यथास्यात् कर्म व्यतिहारे मा भूदिति ॥

---

१ समत्र इत्यधिकम् । क ॥

**मत्वा प्रश्न इति ॥** (कै)

**भोक्तुमिच्छतीति ।** (कै)

अव्ययत्वादयमसत्त्वभूतो भाव इति भावः ॥ ननु क्रियाया अपि जन्यत्वेन किंचित् क्रियासाध्यत्वनिश्चये किमुच्यते कथा इत्यत आह

**क्रियान्तरेति ॥** (कै)

भाष्ये

**संपश्यति क्रियया** (भा)

इत्यादिदर्शनक्रियाजन्यं प्रार्थनं तज्जन्याध्यवसायजन्यारम्भेण इत्यर्थः ॥

**क्रियया** (भा)

इति च पाठो साम्प्रदायिकः ॥

**प्रेक्षापूर्वकारी ।** (भा)

विचारपूर्वक्रियाकर्त्ता ॥

**स बुद्ध्या ।** (भा)

बुद्धिवृत्त्या ॥

---

अथ कर्तृग्रहणं किमर्थम् । कर्मव्यतिहारादिषु कर्तृग्रहणं भावकर्म निवृत्त्यर्थम् । वा । कर्मव्यतिहारादिषु कर्तृग्रहणं क्रियते भावकर्मणोरप्यने-नात्मनेपदं ( १ । ३ । १३ ) मा भूदिति ॥ इतरथा हि तत्र प्रतिषेधे भाव-कर्मणोः प्रतिषेधः । वा । अक्रियमाणे कर्तृग्रहणे भावकर्मणोरप्यनेनात्मने-पदं प्रसज्येत । तत्र को दोषः । तत्र प्रतिषेधे भावकर्मणोः प्रतिषेधः ।

**तावत्** । (भा)

प्रथमम् ॥

**कंचिदर्थम्** । (भा)

फलरूपम् ॥

**पश्यति** । (भा)

फलविषयसंकल्पोऽत्र दर्शनम् ॥ तज्जन्यः फलोपायविषयोऽभि-

लाषः

**प्रार्थना** ॥ (भा)

तज्जन्यः क्रियाविशेषस्य फलसाधनत्वनिश्चयः

**अध्यवसायः** ॥ (भा)

अभिलाषे सति तन्निश्चयकरणात् ॥ तज्जन्यमानसीप्रवृत्तिः

**आरम्भः** । (भा)

तज्जन्याक्रिया

**निर्वृत्तिः** । (भा)

ततः

**फलावाप्तिः** (भा)

---

तत्र प्रतिषेधे ( १ । ३ । १५ ) भावकर्मणोरप्यनेनात्मनेपदस्य प्रतिषेधः प्रसज्येत । व्यतिगम्यन्ते ग्रामाः । व्यतिहन्यन्ते दस्यव इति ॥ न वानन्तरस्य प्रतिषेधात् । वा । न वैष दोषः । किं कारणम् । अनन्तरस्य प्रतिषेधात् । अनन्तरं यदात्मनेपदविधानं तस्य प्रतिषेधात् । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥ उत्तरार्थं तर्हि कर्तृग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते तत्रैव "शेषात्

इत्यर्थः ॥ "फलावाप्तिः" इत्यनेन दर्शनं फलविषयकमिति सूचितम् । सप्तमीभिस्तृतीयाभिश्च पूर्वपूर्वस्योत्तरकारणता बोधिता । तत्रारभ्यमाणत्वेन प्रकृतक्रियायाः कर्मत्वम् ॥

अव्यभिचारादिति । (कै)

स च उक्तविभक्तिभिर्भाष्ये दर्शितः ॥ ननु कर्मग्रहणाभावे करणादिव्यतिहारोऽपि गृह्येतेत्यत आह

क्रियाया इति । (कै)

साध्यत्वेन प्रतीयमानत्वात् शब्दं प्राधान्यम् । क्रियायाः क्रियो-द्देश्यत्वलक्षणमार्थं प्राधान्यं च कर्मकारकस्यैव इति तयोरेवग्रहणं न करणादेरिति भावः ॥ कर्मग्रहणेन क्रियामात्रग्रहणे उपायमाह

क्रियाया इति ॥ (कै)

कारकपरत्वे

कर्मेति । (कै)

कर्मणि प्रत्ययः कार्य्यः ॥ क्रियापरत्वे तु भावे भावस्यान्तरङ्गा इति भावः ॥ भाष्ये

कर्मव्यतिहारादिष्विति । (भा)

आदिग्रहणात् "शेषात् कर्त्तरि" इत्यतः प्रागनुवृत्तावपि फलाभावप्रतिपादनार्थं भावकर्मणोरित्यनेनेति विहितस्येति शेषः ॥

---

कर्त्तरि परस्मैपदम्" ( १ । ३ । ७८ ) इति । द्वितीयं कर्तृग्रहणं कर्त्तव्यम् । किं प्रयोजनम् । कर्त्तैव यः कर्त्ता तत्र यथा स्यात् । कर्त्ता चान्यस्य यः कर्त्ता तत्र मा भूदिति ॥

# [1]न गति हिंसार्थेभ्यः।१।३।१५॥



हसादीनाम् (भा)

इत्यादिशब्दस्य व्यवस्थार्थत्वे हसेरुत्तरेषां धातुपाठपठितानां ग्रहणं स्यादत आह

हसीति ॥ (कै)

पठन्तीति (भा)

भाष्योदाहरणाह

शब्दक्रियाणामिति । (कै)

अशब्दत्वासे भवति (न चेति । द) बहुदर्शिनो विचारयन्तु॥

हवह्योरिति (भा)

इत्येव पाठः ॥

हरिवह्योः (भा)

इति पाठे इत एव निर्देशादिकः कित्त्वेऽपि गुणः । कृतगुणानुकरणाद्वा इगिति कल्प्यम् ॥

---

१ प्रतिषेधे हसादीनामुपसंख्यानम् । वा । प्रतिषेधे हसादीनामुपसंख्यानं कर्त्तव्यम् । व्यतिहसन्ति व्यतिजल्पन्ति व्यति पठन्ति ॥ हरिवह्योरप्रतिषेधः । वा । हरिवह्योरप्रतिषेधो भवतीति वक्तव्यम् । संप्रहरन्ते राजानः । संविवहन्ते गर्गैरिति ॥ न वहिर्गत्यर्थः । देशान्तरप्रापणक्रियो वहिः ॥

## योत्स्येति। (कै)

संप्रहारशब्दस्य युद्धेऽपि रूढत्वादिति भावः॥ वार्त्तिकस्य वहि-ग्रहणं प्रत्याचष्टे भाष्ये

## न वहिः (भा)

इत्यादिना॥

## नान्तरीयकत्वादिति। (कै)

ग्रामं प्राप्त इत्यादौ देशान्तरप्राप्तेर्गतिं विनानुपपत्तेरिति भावः। प्राप्तिस्तु सम्बन्धमात्रं न संयोग एव देशान्तरस्थेपि भूरणेन प्राप्तेति व्यवहारात्। ग्रामं प्राप्तवान् इत्यादौ संयोगमूलकाधारधेयभावः प्राप्तिः। क्वचित् तत्र स्थितिरेव प्राप्तिः। [1]"द्वितीयाश्रित" इत्युदा-हरणे "सुखप्राप्त" इत्यादौ[2] "आदिकर्मणि क्तः कर्त्तरि च" कर्त्तरि क्तो बोध्यः। नान्तरीयकतया प्रतीयमानस्यापि तदर्थत्वाभिमानेन वार्त्तिकारम्भः। तत्रैव मानमाह

## अस्यैवेति। (कै)

अन्यथा न गतिहिंसयोरित्येव वदेत्। गतिहिंसयोर्वर्त्तमानेभ्यो धातुभ्य इत्यर्थं इति भावः॥ भाष्ये उक्तोदाहरणेऽपि गत्यर्थत्वाभावं दर्शयति

## गर्गाणां चेति॥ (कै)

## प्रापणम्। (कै)

सम्बन्धः॥

---

१ द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः। २। १। २४॥

२ अ ३। पा ४। सू ७१॥

कन्याद्वारकमिति। (कै)

कन्याप्राप्तिफलकपाणिग्रहणद्वारकसम्बन्धो विवाह इत्यर्थः॥

गर्गैः (भा)

इति तृतीया तु सहार्थे बोध्या॥ गर्गैः सह कन्याद्वारकसम्बन्धं प्राप्नुवन्तीत्यर्थः॥ देशान्तरग्रहणमुपलक्षणमिति तात्पर्य्यम्॥

---

# [1]इतरेतरान्योऽन्योपपदाच्च।१।३।१६॥

नन्वितरेतरशब्देनैव कर्मप्रवचनीयस्य द्योतितत्वात् उक्तार्थानामिति न्यायेनात्मनेपदाप्रसक्तिरत आह

लौकिक इति। (कै)

लाघवादनयोः प्रयोगानुसार एव बीजमिति भावः॥ "उपपद"शब्दश्चात्र यौगिको न तु रूढः॥

---

१ परस्परोपपदाच्च। वा। परस्परोपपदाच्चेति वक्तव्यम्। परस्परस्य व्यतिलुनन्ति। परस्परस्य व्यतिपुनन्ति॥

# १विपराभ्यां जेः। १। ३। १९

**दृष्टापचार इति।** (भा)

दृष्टव्यभिचारो दृष्टोपसर्गत्वाभाववान् इति यावत् ॥ पक्षि-वाचकविशब्दस्यानुपसर्गस्यापि सत्त्वादाह

**पक्षीति॥** (कै)

**इह चेति।** (कै)

उपसर्गस्तु द्योत्यार्थेनार्थवानेवेति भावः। इदं चिन्त्यम्। तत् पक्षे भौतपूर्विकार्थवत्त्वस्यैव ग्रहणात्। शुद्धरूढातिरिक्ते जहत्स्वार्थ-त्वाभावाच्च ॥

**विभक्त्यन्तस्येति।** (कै)

सम्बुद्धिगुणस्य विभक्त्युत्पत्त्यनन्तरं प्रवृत्तेरित्यभिमानः ॥

ननु विभक्त्युत्पत्त्यनन्तरं गुणप्रवृत्तावपि विशब्दावयववर्णविच्छेदेन विकारसत्त्वात् तस्याप्येकदेशविकृतत्वमस्त्येवेति चेत् चिन्त्यमेवैतत् ॥

**पूर्वस्य कार्य्यं इति।** (कै)

चिन्त्यमिदम्। हे शान इत्यादौ सम्बुद्धिहल् लोपे "अभि

---

१ उपसर्गग्रहणं कर्त्तव्यम्। इह मा भूत्। पराजयतिसेना॥ तत्तर्हि वक्तव्यम्। न वक्तव्यम्। यद्यपि तावदयं पराशब्दो दृष्टापचार उपसर्गश्चा-नुपसर्गश्च अयं खलु विशब्दोऽदृष्टापचार उपसर्ग एव। तस्यास्यकोऽन्यो द्वितीयः सहायो भवितुमर्हत्यन्यदत उपसर्गात्। तद्यथा। कस्य गोर्द्वितीये-नार्थ इति गौरेवोपादीयते नाश्वो न गर्दभ इति॥

पूर्वस्य" अन्यवद्भावानापत्तेः सर्वासाम् इत्यत्र सुडनापत्तेश्च। भाष्यन्तु इत्थं व्याख्येयम्। विशब्द इत्यस्य जयतिसम्बद्ध इत्यादिः। तेन जयति सम्बद्धो विशब्दोऽदृष्टापचारो दृष्टान्यार्थक इत्यर्थः॥ ईदृश-प्रयोगाणां क्वाप्यदर्शनादिति कुतोऽन्यत्वम् तदाह

अन्यदत इति। (भा)

अत उपसर्गादन्यत्वमित्यर्थः॥ ननु पूरणप्रत्ययान्तस्य सजातीय-विषयत्वेऽपि प्रकृते किमायातमत आह

द्वितीयेति। (कै)

दृष्टान्तार्थं स इति भावः॥

यदपेक्षं द्वितीयत्वमिति। (कै)

यदीयं सहायत्वमित्यर्थः। द्वितीयशब्दः सहायवाची। एवं च यथा लोकः स्वसजातीयमेव सहायमुपादत्ते एवं शब्दोऽपि प्रयोगे सहायं सजातीयमेवोपादत्ते न विजातीयमेतन्मुलिकैव सहचरिता-सहचरितयोः सहचरिते सम्प्रत्यय इति परिभाषा। तत्र सहचरि-तत्वं सदृशत्वमेवेति दिक्॥

सम्भवेत्विति। (कै)

वीजयतः वेजयतीत्यादौ। अत्र तुनापूर्वोक्तप्रयोगाभावरूपस्तद-संभवो ध्वनितः॥

परस्परेति। (कै)

विशब्दसाहचर्य्यात् पराशब्दोऽयवन्तः प्रसिद्धो गृह्यते। तत्

माहचर्य्याच्च विरूपसर्ग एवेति भावः। प्रकृतिवदनुकरणमित्यस्या-
नित्यत्वाज्ञेरित्यत्र इयङभावः॥

---

## [1]आङो दोऽनास्यविहरणे। १। ३। २०॥

विभाग इति। (कै)

व्यसनशब्दस्य पीड़ायां रूढत्वेऽपि ददातेः पीड़ार्थकत्वासम्भवेन निषेधवैयर्थ्यात् स न गृह्यते इत्यर्थः॥ विभागशब्देन तदनुकूलव्यापारो गृह्यते तदाह

विकासनमिति॥ (कै)

पादविहरणमिति। (कै)

इदमुपलक्षणम्। "अग्नीन् विहर" इत्यादौ प्रज्वलनस्य विहारशय्यासनभोजनेष्वित्यादौ लीलायाश्च प्रतीतिः। अत एव "वेः पादविहरणे" इत्यत्र पादग्रहणं चरितार्थम्॥

---

१ आङो दोऽव्यसनक्रियस्य। वा। आङो दोऽव्यसनक्रियस्येति वक्तव्यम्। इहापि यथा स्यात्। विपादिकां व्याददाति। कूलं व्याददातीति॥ तत्तर्हि वक्तव्यम्। न वक्तव्यम्। इहाङो दोऽनास्य इतीयता सिद्धम्। सोऽयमेवं सिद्धे सति यद्विहरणग्रहणं करोति तस्यैतत् प्रयोजनमास्यविहरणसमानक्रियादपि यथास्यात्। यथा जातीयका चास्यविहरणक्रिया तथा जातीयकाऽन्यापि॥ स्वाङ्गकर्मकाच्च। वा। स्वाङ्गकर्मकाच्चेति वक्तव्यम्। इह माभूत्। व्याददते पिपीलिकाः पतङ्गस्य मुखमिति॥

दुःखादिष्विति । (कै)

"व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इति कोशात् दुःखादिसम्बन्धिक्रियावृत्तेरपि प्रतीतिप्रसङ्ग इति भावः । क्रियाग्रहणे तु व्यसनरूपक्रियावाचकस्यैव ग्रहणाद्विभागार्थकलाभः । स्वरूपतो दुःखादिकं तु न क्रिया नापि धातुवाच्यमिति बोध्यम् ॥

विपादिकां व्याददातीति । (भा)

विपादिका वृत्तिविभागानुकूलो व्यापार एककर्तृक इति बोधः ॥ आस्यस्य द्रव्यत्वात् कथं तत्र धातोर्वृत्तिरत आह

आस्येति । (भा)

आस्यवृत्तिविभानुकूलव्यापारे इत्यर्थः ॥ नन्वेवमास्यसमवेतक्रियेतरार्थवृत्तेर्दाधातोरित्यर्थे "गामादाग्रहणेष्वविशेषात्" सर्वदाशब्दानां ग्रहणं स्यादत आह

ददातेरेवेति । (कै)

आङ्पूर्वस्येति शेषः ॥

नान्येषामिति । (कै)

अनभिधानादिति भावः । एतेन शोधनखण्डनादिनामप्यास्यसमवेतक्रियात्वाविशेषादन्येषामपि दारूपाणां ग्रहणं प्राप्नोतीति परास्तम् ॥

आस्यसमवेतैवेति । (कै)

आस्यमात्रसमवेतफलजनकक्रियावृत्तेर्नेत्यर्थः । आस्यमात्रसमवेतफलजनकक्रियालक्षकास्य शब्देन च समासः । एवंच स्वमुखमित्यादौ

न दोषः। तदर्थफलस्य संयोगस्य कर्तृकर्मोभयसमवेतत्वात् न्याय्य-
त्वाद्याह

पर्य्युदास इति। (कै)

तेन मुखव्यापादिके व्याद्त्ते इत्येव। वस्तुतः प्रसज्यप्रतिषेध एव
स्वाङ्गकर्मकादित्यस्यान्यथासम्भवात् प्रत्युदाहरणभाष्येण तस्य तत्स-
म्बन्धस्यैव बोधनात्। न हि विधिशेषत्वे तत् प्रत्युदाहरणं सम्भव-
तीतिपरे॥

विहरणविशेषेति। (कै)

विकासरूपेत्यर्थः। आस्ये दृष्टं विहरणमित्यर्थाद् इति भावः॥
अत एव

यथाजातीयका (भा)

इत्यादिभाष्यं सङ्गच्छते॥

न तु पारिभाषिकमिति। (कै)

कृत्रिमत्वाद्रूढत्वाच्च। यद्यपि तस्यैवग्रहणं न्याय्यं तथापि व्याख्या-
नात्सूत्रानुसाराच्चेदमेव गृह्यत इति भावः॥

स्वाङ्गकर्मकाद् (भा)

इति पञ्चमीनिर्देशात्।

अव्यसनक्रियस्य (भा)

इति षष्ठीनिर्देशाच्च सूत्रस्थ "द" इति पदं पञ्चम्यन्तं षष्ठ्यन्तं
वाऽस्तु इति वार्त्तिककारो मन्यते॥

---

# १ क्रीडोऽनुसंपरिभ्यश्च । १ । ३ । २१ ॥

कर्मप्रवचनीयेति । (कै)

धात्वर्थविशेषकत्वे तु धातोरकर्मकत्वान्माणवकमिति द्वितीयानापत्तिरिति भावः ॥

आगमेः (वा)

इति वार्त्तिके गमेर्ण्यन्तस्य निर्देश इति बोध्यम् ॥

---

१ उपसर्गग्रहणं कर्त्तव्यम् । इह मा भूत् । अनु ( १ । ४ । ८५ ) क्रीडतिमाणवकमिति ॥ समोऽकूजने । वा । समोऽकूजन इति वक्तव्यम् । इह मा भूत् । संक्रीडन्ति शकटानि ॥ आगमेः क्षमायाम् । वा । आगमेः क्षमायामुपसंख्यानं कर्त्तव्यम् । आगमयस्व तावन्माणवक ॥ शिक्षेर्जिज्ञासायाम् । वा । शिक्षेर्जिज्ञासायामुपसंख्यानं कर्त्तव्यम् । विद्यासु शिक्षते । धनुषि शिक्षते ॥ किरतेर्हर्षजीविकाकुलायकरणेषु । वा । किरतेर्हर्षजीविकाकुलायकरणेषूपसंख्यानं कर्त्तव्यम् । अपस्किरते वृषो हृष्टः । अपस्किरते कुक्कुटो भक्ष्यार्थी । अपस्किरते श्वाश्रयार्थी ॥ हरतेर्गतताच्छील्ये । वा ॥ हरतेर्गतताच्छील्य उपसंख्यानं कर्त्तव्यम् । पैतृकमश्वा अनुहरन्ते । मातृकं गावोऽनुहरन्ते ॥ आङिनुप्रच्छ्योः । वा । आङिनुप्रच्छ्योरुपसंख्यानं कर्त्तव्यम् । आनुते शृगालः । आपृच्छते गुरुमिति ॥ आशिषिनाथः । वा । आशिषि नाथ उपसंख्यानं कर्त्तव्यम् । सर्पिषो नाथते । मधुनो नाथते ॥ शप उपलम्भने । वा । शप उपलम्भन उपसंख्यानं कर्त्तव्यम् । देवदत्ताय शपते । यज्ञदत्ताय शपते ॥

**मात्वरिष्टा इति ।** (कै)

अध्ययनार्थं कंचित्कालं चमस्व मा त्वरां कुर्वित्यर्थः ॥

**शिक्षेरिति ।** (वा)

सनि "सनिमीमा" इति इस्भावे अभ्यासलोपे "स्कोः" इति लोपे षत्वे इक् प्रत्यये शिक्षेरिति निर्देशः ॥ नन्वेवं जिज्ञासाया-मित्यसङ्गतम् । ज्ञानेच्छा हि तदर्थः । लक्ष्ये तु ज्ञानं शक्तौ विषयः शक्तिः । समर्थेच्छायामिति चेन्न । ज्ञानविशिष्टायाः शक्तेरिच्छा-विषयतया ज्ञानस्यापि तत्त्वानपायात् । इयांस्तु विशेषः । इच्छा सनर्थः शक्तिः प्रकृत्यर्थः । [1]तस्य ज्ञानविषयत्वमात्मनेपदद्योत्यमिति तदाह

**केचिदिति ॥** (कै)

ननु प्रतिपदोक्तशिक्षेरेवग्रहणं युक्तमत आह

**विध्यर्थमिति ।** (कै)

एवं च विधित्वानुरोधेनैव परिभाषात्याग इति भावः ॥ नन्वेवं शक्तीच्छा वाचकस्य शिक्षेः कथं जिज्ञासायां वृत्तिरत आह

**क्रियाविषयश्चेति ।** (कै)

एवं च जिज्ञासाविशेषणीभूतज्ञानविषयकत्वेन जिज्ञासाविषय-कत्वं तस्य जिज्ञासायामिति च विषयसप्तमीति भावः । तदाह

---

१ तस्य ज्ञानविषयत्वभावे पदे द्योत्यमिति तत्त्वानपायादाह । इ ॥

इहेति ॥ (कै)

जिज्ञासितुमिति । (कै)

जिज्ञासाविषयत्वे ज्ञानार्थशक्तौ जिज्ञासार्थत्वारोपः। वार्त्तिककृता शिक्षेः सनन्तस्य ग्रहणमिति ज्ञापयितुं जिज्ञासाया विषयत्वेन निर्देशः कृत इति बोध्यम् । विद्याविषयज्ञानफलकं शक्तीच्छेति बोधः। आत्मनेपदसमभिव्याहारे सन् प्रकृतेः शकेर्ज्ञानविषयशक्तिबोधकत्वमिति तात्पर्य्यम् ॥

जिज्ञासायाः । (कै)

इच्छाविशेषणीभूतज्ञानस्याः ॥

विधेरेवत्विति । (कै)

शिक्षेरनुदात्तत्वेनात्मनेपदस्य सिद्धत्वादित्यर्थः ॥

विषयत्वेनेति । (कै)

तत्र हर्षः कारणं जीविकाकुलायकरणे फल इति विवेकः ॥ हृष्टा बाला धूलिमवकिरतीत्यत्रापि स्यादत आह

हर्षादिष्वेवेति । (कै)

हर्षादिपूर्वकाऽऽलेखन एवेत्यर्थः। इहाऽऽलेखनाभावान्नसुट् शब्दशक्तिस्वभावात् । सुट्विषय एवात्मनेपदमिति भावः ॥ ताच्छील्यम् अविच्छेदेन शीलनं तदाह

सततमिति ॥ (कै)

पैतृकम् (भा)

इत्यत्र [1]"तत आगतम्" इत्यधिकारे [2]"हृतश्च"। तान्छील्ये किं रावणमनुहरति नटः । नाथतेरनुदात्तेत्वाद्वचनानर्थक्यमत आह

**आशिष्येवेति ।**

इदं भूयाद् इति इच्छा आशीः तत् प्रयुक्तः परदित्सानुकूलो व्यापारो याचना इति आशीर्याचनयोर्भेदः । अस्यानुदात्तेत्वं तु युजर्थमिति बोध्यम् ॥

**शब्दं करोतीति । (कै)**

स्तुत्यर्थकोऽपि "नुः" आङ्पूर्वोत्कण्ठापूर्वकशब्दमात्रे रूढ इति भावः ॥ शपतिर्नानार्थः । अस्त्याक्रोशे । देवदत्तं शपतीति । निन्दतीत्यर्थः । अस्तितत्त्वावेदनपूर्वकं तत्प्रत्यायनाय ब्राह्मणादेः क्वचिद् हस्तादिना साक्षात् स्पर्शरूपे मानसस्पर्शरूपे वा शपथे । यथा विप्रैः शपे चात्रधर्मेण शपे इत्यादौ । तृतीया तु कर्मणोऽपि करणत्वविवक्षया । अस्ति प्रकाशने देवदत्ताय शपते कथयतीत्यर्थः । तत्र स्वरितत्वात् सिद्धेऽकर्त्रभिप्रायार्थमिदम् । तदपि प्रकाशनार्थ एव तदाह

**उपलम्भनं प्रकाशनमिति ॥ (कै)**

यद्येवं शपतेर्ज्ञान्तजानात्यर्थत्वेन द्विकर्मकत्वे देवदत्तं शपत इत्यापत्तिरत आह

**[3]श्लाघह्नुङिति ॥ (कै)**

---

[1] अ ४ । पा ३ । सू ७४ ॥     [2] अ ४ । पा ३ । सू ७८ ॥
[3] अ १ । पा ४ । सू ३४ ॥

ननु ज्ञापयितुमिष्टस्य सम्प्रदानत्वं ज्ञापयितुमिष्टं वा णौ कर्मत्याशंक्याह,

केचिदिति । (कै).

प्रधानभूतप्रत्ययार्थकर्मण एव ग्राह्यत्वादिति भावः ॥

य इति । (कै)

प्रथमोपस्थितत्वात् प्रकृत्यर्थकर्मैव ग्राह्यमिति भावः । प्रकृते देवदत्तस्तादृश एवेत्याशयः । अत्राद्यं मतं न युक्तं तथाहि सति ज्ञाप्यमान इत्येव सिद्धे तदुपादानवैयर्थ्यापत्तेः । सत्यः शपामि यदि किंचिदपि स्मरामि इत्यादौ तु शपनार्थकत्वादात्मनेपदम् । काशिकादौ तु उपलम्भनं शपथ इति व्याख्यातं तच्चिन्त्यम् । उपलम्भनशब्दस्य तु योगेन प्रकाशनार्थकत्वात् । शपथे रूढिकल्पने न मानम् । अत एव हरिणैतदुदाहरणे शपिर्द्विकर्मक इति व्याख्यातम् ॥

---

# [१]समवप्रविभ्यः स्थः । १ । ३ । २२ ॥

अस्तिमिति । (भा)

केचित् सकारमात्रं धातुं पठित्वा पिति सार्वधातुकेऽडाटौ गुणवृद्धिरूपौ आगमावित्याहुः ॥

विकाराविति । (भा)

सस्थानेऽस्ति मा सिंच इत्यर्थः ॥

---

१ आङः स्थः प्रतिज्ञाने । वा । आङः स्थः प्रतिज्ञान इति वक्तव्यम् । अस्तिं सकारमातिष्ठते । आगमौ गुणवृद्धी आतिष्ठते । विकारो गुणवृद्धी आतिष्ठते ।

# [1]उदो ऽनूर्ध्वकर्मणि । १ । ३ । २४ ॥



सर्वस्यापि धात्वर्थस्येहानुविद्धत्वादिविशिष्टोपादानं व्यर्थमत आह

ईहेति ॥ (भा)

प्रत्युदाहरणे तादृशव्यापाराभावं दर्शयति

उत्पद्यत इति ॥ (कै)

---

# [2]उपान्मन्त्रकरणे । १ । ३ । २५ ॥



ननु देवपूजायां मन्त्रकरणकत्वात् सूत्रेणैव सिद्धमत आह

---

१ उद ईहायाम् । वा । उद ईहायामिति वक्तव्यम् इह मा भूत् । उत्तिष्ठति सेनेति ।

२ उपाद्देवपूजासंगतकरणयोः । वा । उपाद्देवपूजासंगतकरणयोरिति वक्तव्यम् । आदित्यमुपतिष्ठते । चन्द्रमसमुपतिष्ठते ॥ संगतकरणे । रथिकानुपतिष्ठते । अश्वारोहानुपतिष्ठते ॥

बहूनामप्यचित्तानामेको भवति चित्तवान् ।
पश्य वानरसैन्येऽस्मिन् यदर्कमुपतिष्ठते ॥
मैवं मंस्थाः स चित्तोऽयमेषोऽपि हि यथा वयम् ।
एतदप्यस्य कापेयं यदर्कमुपतिष्ठति ॥

अमन्त्रेति । (कै)

अमन्त्रकरणकेऽर्थे वर्त्तमानात् स्थ इत्यर्थ इति भावः ॥

मैत्री सम्बन्धः । (कै)

प्रीतिरूपः ॥ ननु पथ्यपि संगतकरणमस्तीति पृथग् ग्रहणं व्यर्थमत आह

प्राप्नोतीति । (कै)

प्राप्यप्रापकव्यापारपूर्वकसम्बन्धो हि तत् । न चेह तदस्ति यतः पथः स्रुघ्नस्य च बुद्धिकल्पितप्राप्तिक्रियापेक्षं कारकत्वं न तु वस्तुत इति भावः ॥

लिप्सयेति । (कै)

लिप्साकारणके उपगमने गमेर्वृत्तिरिति भावः ॥

---

अपर आह । उपाद्देवपूजासंगतकरणमित्रकरणपथिष्विति वक्तव्यम् । संगतकरण उदाहृतम् ॥ मित्रकरणे । रथिकानुपतिष्ठते । अश्वारोहानुपतिष्ठते । पथि । अयं पन्थाः स्रुघ्नमुपतिष्ठते । अयं पन्थाः साकेतमुपतिष्ठते । वा लिप्सायाम् । वा । वा लिप्सायामिति वक्तव्यम् । भिक्षुको ब्राह्मणकुलमुपतिष्ठते । भिक्षुको ब्राह्मणकुलमुपतिष्ठतीति वा ॥

# [१]उद्विभ्यां तपः । १ । ३ । २७ ॥

उत् तपति सुवर्णम् इत्यादिप्रयोगादकर्मकत्वं तपेर्विशेषणं न सम्भवतीत्यत आह

भासने इति । (कै)

उत्तपते वितपते सूर्य्य इत्युदाहरणम् । भासत इत्यर्थः ॥

स्वमङ्गमिति । (कै)

न तु [२]"अद्रवं मूर्त्तिमद्" इति भावः ॥ प्रत्युदाहरणविशेषप्रश्ने तात्पर्य्यमाह

किमयमिति । (कै)

---

१ अकर्मकादित्येव ( १ । ३ । २६ ) । उत्तपति सुवर्णं सुवर्णकारः ॥ स्वाङ्गकर्मकाच्च । वा । स्वाङ्गकर्मकाच्चेति वक्तव्यम् । उत्तपते पाणी । वितपते पाणी । उत्तपते पृष्ठम् । वितपते पृष्ठम् ॥ अथोद्विभ्यामित्यत्र किं प्रत्युदाह्रियते । निष्टप्यत इति । किं पुनः कारणमात्मनेपदमेवोदाह्रियते न परस्मैपदं प्रत्युदाहार्य्यं स्यात् । तपिरयमकर्मकः । अकर्मकाश्चापि सोपसर्गाः सकर्मका भवन्ति । न चान्तरेण कर्मकर्त्तारं सकर्मका अकर्मका भवन्ति । यदुच्यते न चान्तरेण कर्मकर्त्तारं सकर्मका अकर्मका भवन्तीत्यन्तरेणापि कर्मकर्त्तारं सकर्मका अकर्मका भवन्ति । तद्यथा । नदी वहति इत्यकर्मकः । भारं वहतीति सकर्मकः । तस्मान्निष्टपतीति प्रत्युदाहार्य्यम् ॥

२ अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टञ्च तस्य चेत्तत् तथायुतम् ॥ ४ । १ । ५४ ॥

यदि कर्मकर्तृत्वं विनाप्यकर्मकत्वमुपपतेस्तदा विध्यर्थम् । अथ कर्मकर्त्तर्येवाकर्मकत्वं ततो नियमार्थमिति भावः ॥ नियम पक्षे यगादिनिवृत्तिः फलमिति यगादिमत्प्रत्युदाहार्य्यम् इत्याह

उद्विभ्यामिति ॥ (कै)

भाष्ये

तपिरयमकर्मक इति । (भा)

तपिरयमकर्मकः । सूत्रे गृहीतोऽकर्मकाद् इत्यधिकारादित्यर्थः ॥ अकर्मकत्वं चास्य कर्मकर्त्तर्य्येवेति न परस्मैपदं प्रत्युदाहर्त्तुं शक्य-मिति भावस्तदाह

भासत इति । (कै)

इत्यत्र अर्थे शुद्धस्तपिरकर्मक उदादिपूर्वस्तु अन्तर्भावितण्यर्थत्वात् सकर्मक एव । तस्य च न कर्मकर्तृत्वं विना ऽकर्मकत्वमिति विधित्वासम्भव इति भावः ॥

अनेकार्थत्वादिति । (कै)

उदिद्रूपोपसर्गस्तु अन्तर्भावितण्यर्थत्वस्यैव द्योतक इति भावः ॥

तपिः सकर्मक इति । (कै)

उदादिपूर्वकः सकर्मक एवेति भावः ॥

अन्यत्रापीति । (कै)

उद्विभ्यामन्यत्रापीत्यर्थः । “अत्रापीति” पाठे निष्टप्यत इत्य-त्रापीत्यर्थः ॥

इदानीमिति। (कै)

अकर्मकाणामुपसर्गसम्बन्धेऽपि प्रकाशत इतिवत् सकर्मकत्व-नियमाभावाद्विधिरेव सिद्धान्त इत्याशयः॥

नदी वहति (भा)

इत्यस्य स्यन्दत इत्यर्थः॥

तद्देवमिति। (कै)

उपसर्गसम्बन्धेऽपि इत्यर्थः। एवं च कर्मकर्त्तारं विनाप्युदाहरण-सम्भव इति भावः॥ तत् किं कर्मकर्त्तर्य्युत्तपत इत्यस्माद् यगिष्टः। नेष्टः प्रकारान्तरेण तद्व्यावृत्तेरित्याशयेनाह

कर्मकर्त्तरि त्विति। (कै)

आत्मनेपदविधावकर्मकाद्यकृ(ञ्चि)णोः प्रतिषेधेनोपसर्गान्तरसम्बन्धे तत्र यकृ(ञ्चि)णौ भवत एवेति बोध्यम्॥

---

# [1]आङो यमहनः।१।३।२८॥

भाष्ये

आयच्छतीति। (कै)

आकर्षतीत्यर्थः॥

---

१ अकर्मकादित्येव। आयच्छति रज्जुं कूपात्। आहन्ति वृषलं पादेन॥ स्वाङ्गकर्मकाच्च। वा।-स्वाङ्गकर्मकाच्चेति वक्तव्यम्। आयच्छते पाणी। आहते उदरमिति॥

१ आङ्पूर्वाभ्यामकर्मकाभ्यां स्वाङ्गकर्मकाभ्यां च यमि हनिभ्यामात्मनेपदं

# १समो गम्यृच्छिभ्याम् । १ । ३ । २९ ॥

विद्यादीनामपि सूत्र एव वृत्तिकारैः पाठाद्वार्त्तिकं व्यर्थमत आह

समो गमिति ॥ (कै)

प्रामादिकः स पाठ इति भावः ॥ भाष्ये

गमादिष्विति । (भा)

बहुवचनं प्रयोगबाहुल्याभिप्रायेण ॥ भाष्ये

---

१ समोगमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम् । वा । समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानं कर्त्तव्यम् । सं वित्ते । सं पृच्छते । सं स्वरते । अर्त्तिश्रुदृशिभ्यश्च । वा । अर्त्तिश्रुदृशिभ्यश्चेति वक्तव्यम् । मासमृत । मासमृषाताम् । मासमृषत । अर्त्ति । श्रु । सं शृणुते । दृशि । सं पश्यते ॥ उपसर्गादस्यत्यूह्योर्वावचनम् । वा । उपसर्गादस्यत्यूह्योर्वेति वक्तव्यम् । निरस्यति । निरस्यते । समूहति । समूहते ॥

---

स्यात् । आयच्छते । आहते । आयच्छते पाणिम् । आहते शिरः । नेह । परस्य शिर आहन्ति । कथं तर्हि "आजघ्ने विषमविलोचनस्य वक्षः" इति भारविः । अत्र केचित् । आजेति पदं छित्वा घ्न इति भावे क्विपि चतुर्थ्येकवचनान्तमुक्त्वा घ्ने हन्तुम् आज जगाम इति व्याचख्युः । तन्न । आजेर्लिटि वीभावेन विवायेति सिद्धान्तात् । अन्ये तु विषमविलोचनस्य समीपमेत्य स्वं वक्षमाच्छाजितवान् इत्यर्थः । भागवृत्तौ तु प्रमाद एवायम् इत्युक्तम् । एवं च मोहाद् आहध्वं मा रघूत्तमम् इति भट्टिप्रयोगोऽपि चिन्त्यः ॥

मासमृतेति । (भा)

अङ् विधौ लुग्विकरणसाहचर्याद् जुहोत्यादेरेव ग्रहणमिति भ्वादेरिदम् । तस्य तु मासमरतेत्यादि । परस्मैपदेष्विति तु अङ् विधौ न सम्बध्यते योगविभागसामर्थ्यादिति वृत्तिः । भाष्योदाहरणबलात् सम्बध्यत एव योगविभागो वैचित्र्यार्थः । यद्वा वार्त्तिके अदृशि साहचर्यात् भ्वादेरेव ग्रहणमिति इयर्त्तेर्नात्मनेपदमित्यन्ये । निरस्यति समूहत्योः सकर्मकत्वादाह

अर्त्तेति ॥ (कै)

---

## [1]आङ उद्गमने । १ । ३ । ४० ॥

---

ननु "ज्योतिषामुद्गमने" (वा) इत्यस्य ज्योतिः सम्बन्ध्युद्गमने इत्यर्थः । एवं च पक्षी सूर्य्यमाक्रामतीत्यत्रापि प्रसङ्गः । यद्वा कर्त्तरि कर्मणि वा षष्ठीत्यत्र विनिगमनाविरहात्तत्रापि प्रवृत्तिः । न च[2] "उभयप्राप्तौ" इति कर्मण्येवैषा षष्ठी तथा सति

ज्योतिरुद्गमने (भा)

इति भाष्यकृत्कृतसमस्तप्रयोगानुपपत्तिरित्युभयोपादान एव तत्प्रवृत्तिरत आह

---

१ ज्योतिषामुद्गमने । वा । ज्योतिरुद्गमने इति वक्तव्यम् । इह मा भूद् आक्रामति धूमो हर्म्यतलादिति ॥

२ उभयप्राप्तौ कर्मणि । २ । ३ । ६६ ॥

उद्गमने इति। (भा)

प्रत्युदाहरणभाष्ये "ह्यर्थंतवाद्" इत्येव पाठः सांप्रदायिक इति भावः। एवं चोद्गमनमत्रोदय एवेति बोध्यम् ॥

---

## ¹व्यक्तवाचां समुच्चारणे।१।३।४८॥

मनुष्यादिवत्तिरश्चां व्यक्तवाक्त्वाभावात् सर्वे व्यक्तवाच इत्यसंगतमत आह

ये इति ॥ (कै)

भाष्ये

येषां वाच्यकारादय इति। (भा)

---

१ व्यक्तवाचामिति किमर्थम्। *वरतनु संप्रवदन्ति कुक्कुटाः। व्यक्तवाचामित्युच्यमानेऽप्यत्र प्राप्नोति। एतेऽपि हि व्यक्तवाचः। आतश्च व्यक्तवाचः कुक्कुटेनोदित उच्यते कुक्कुटो वदतीति। एवं तर्हि व्यक्तवाचामित्युच्यते सर्व एव हि व्यक्तवाचस्तत्र प्रकर्षगतिर्विज्ञास्यते। साधीयो ये व्यक्तवाच इति। के च साधीयः। येषां वाच्यकारादयो वर्णा व्यज्यन्ते।

---

* इह तनु शब्दस्य कृत्सान्तत्वे "सम्बुद्धौ च" ( ७ । ३ । १०६ ) इति गुणेन भाव्यम्। दीर्घान्तत्वे नदी वच्छ्रयाः कप् प्राप्नोति। सत्यम्। तनु शब्दः स्त्रीजातौ कविभिः प्रयुज्यते। तस्माद् "ऊङ् उतः" ( ४ । १ । ६६ ) इत्यूङि कृते कर्मधारयोऽयम् इति ॥ "वरतनु सम्प्रवदन्ति कुक्कुटाः" इति वृत्तान्ततयाचोक्तम् भगवता ॥

येषां वाचि [1]वैखरीरूपायामकारादयो वर्णा व्यज्यन्ते व्यक्ता भवन्तीत्यर्थः ॥

कुक्कुटाः कुक्कुडिति (भा)

भाष्यस्य वदन्तीति शेषः । एवं जना "आहुः" इत्यन्वयः ॥ वाचि शब्दे [2]"निष्ठा" इति पूर्वनिपातः ॥

---

१ चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ भा ॥
वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥ हरिः ॥

२ अ २ । पा २ । सू ३६ ॥

---

न चैतेषां वाच्यकारादयो वर्णा व्यज्यन्ते । अतश्च व्यज्यन्त एवं ह्याहुः कुक्कुटाः कुक्कुड् इति । नैवं त आहुः । अनुकरणमेतत् तेषाम् ॥ अथवा नैवं विज्ञायते व्यक्ता वाग् येषां त इमे व्यक्तवाच इति । कथं तर्हि । व्यक्ता वाचि वर्णा येषां त इमे व्यक्तवाच इति ॥

---

एतदेवाश्रित्य उक्तं कविना । यथा,—

अपनय पादसरोजमञ्जुतः
शिथिलय बाहुलतां गलावृताम् ।
ह्य च वदनेन्दुकमाकुलीकृतम्
वरतनु सम्प्रवदन्ति कुक्कुटाः ॥

एतत् सूत्र व्याख्यानावसरे पदमञ्जर्यामुक्तं हरदत्तेन ॥

## [१]अवाद्ग्रः । १ । ३ । ५१ ॥



अनुग्रणातीतिवत् अवग्रणातीति प्रयोगं को वारयेद् अत आह

नियतेति ॥ (कै)

क्रियाविशेषणानाम् । (कै)

तद्विशेषणार्थद्योतकानाम् ॥

---

## समस्तृतीयायुक्तात् । १ । ३ । ५४ ॥



तृतीयायोगाभावे आत्मने पदनिवृत्त्या तस्य चारितार्थ्यात् प्रश्नानुपपत्तिमाशङ्क्याह

---

१ अवाद् ग्रो गिरतेः । वा । अवाद् ग्र इत्यत्र गिरतेरिति वक्तव्यम् । ग्रणातेर्मा भूत् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । प्रयोगाभावात् । अवाद्ग्र इत्युच्यते न चावपूर्वस्य ग्रणातेः प्रयोगोऽस्ति ॥

---

अपर आह,—

अयि विजहीहि दृढोपगूहनं
त्यज नवसङ्गमभीरु वल्लभम् ।
अरुणकरोद्गम एष वर्त्तते
वरतनु सम्प्रवदन्ति कुक्कुटाः ॥

कुमारदासकृतोऽयमिति कश्चित् ॥

धातोरिति ॥ (कै)

तदर्थेन । (कै)

करणेन ॥

[1]केचिदिति । (कै)

"सर्वत्रे"ति सामान्योक्तेरिति भावः ॥

यत्रापीति । (कै)

अस्ति स्रेते इत्यादौ ॥

अन्ये त्विति । (कै)

प्रकरणादिति भावः ॥

अन्तरङ्गत्वम् (कै)

सैप्रमेव ॥

---

## [2]दाणश्च साचेच्चतुर्थ्यर्थे १।३।५५॥

अशिष्टो ऽविहितो व्यवहार इत्यर्थे दास्ये संयच्छति वास इत्यत्रापि स्यादत आह

---

१ "केचिद्" इत्यारभ्य "अन्तरङ्गत्वम्" इत्यन्तं नास्ति इ पुस्तके ॥

२ सा चेत् तृतीया चतुर्थ्यर्थे इत्युच्यते । कथं नाम तृतीया चतुर्थ्यर्थे स्यात् । एवं तर्ह्यशिष्टव्यवहारेऽनेन तृतीया च विधीयत आत्मनेपदं च । दास्या संप्रयच्छते । वृषल्या संप्रयच्छते । यो हि शिष्टव्यवहारो ब्राह्मणेभ्यः संप्रयच्छतीत्येव तत्र भवितव्यम् । यद्येवं नार्थोऽनेन योगेन । केनेदानीं तृतीया भविष्यत्यात्मनेपदञ्च ।

अशिष्टानामिति । (कै)

अशिष्टशब्दः प्रतिषिद्धकर्त्तृषु रूढ इति भावः ॥ भाष्ये "अनेन" इति नास्तीति कैयटस्वरसः ॥

अशिष्टव्यवहार इति (भा)

तु कर्त्तव्यमेव ॥

दास्यै इति । (कै)

दास्यभिलषितं धूर्त्तः करोति दासी च धूर्त्ताभिलषितमिति व्यतिहारसिद्धिः । दानपूर्वकोपभोगे च संप्रयच्छतिरिति भावः । अत्र वदन्ति । यदि "अनेन" इत्यादि पूर्वपक्ष्युक्तिरित्युक्तिप्रत्युक्तिस्वारस्येन प्रतीयते । तथा सहोपभुङ्क्ते इत्येतन्मात्रेण व्यतिहाराप्रतीतेः । विश्राणनमादाय तु न सः । अन्ययोग्यैकजातीयक्रियाणामन्येन करणे हि सः । तस्यै विश्राण्यतामुपभुङ्क्ते इत्यर्थे कर्मव्यतिहाराप्रतीतावप्यशिष्टत्वप्रतीत्या तचेष्टात्मनेपदासिद्धेश्च । उपपदविभक्तेरिति न्यायेन विश्राणननिरूपितचतुर्थ्या एवापत्तेश्च । धातोर्व्यतिहारे वृत्तावपि "कर्त्तरि" इति सूत्रे तद्धात्वर्थकर्त्तृमात्रे तङो विधानौचित्येन तिङोक्तत्वात्तेनैव न्यायेन प्रथमापत्तेश्च । अत एव क्रियायोगे कर्त्तरीत्येव तृतीयायां सिद्धायामक्रियायोगार्थं सूत्रमिति[१] "तेन सह" इति सूत्रे भाष्यकृद्वक्ष्यति इत्यलम् ॥

---

१ अ २ । पा २ । सू २८ ॥

---

सह युक्ते तृतीयास्त्वाद् व्यतिहारे तङो विधिः ।

सह युक्ते ऽप्रधाने ( २ । ३ । १९ ) इत्येव तृतीया भविष्यति कर्त्तरि कर्मव्यतिहारे ( १ । ३ । १४ ) इत्यात्मनेपदम् ॥

# [1]उपाद्यमः स्वकरणे।१।३।५६॥

स्वस्य मतः प्राटकान्तस्याभूतप्रादुर्भावलक्षणकरणायोगात् [1]प्रश्नानुपपत्तिरत [3]आह

स्वस्येति ॥ (कै)

करणं (कै)

क्रिया । ग्रहणादिरूपेत्यर्थः ॥

अन्तरङ्गत्वादिति । (कै)

निष्पन्नस्य हि ग्रहणम् । निष्पत्तिश्च निष्पादनाधीनेत्यन्तरङ्गता । किंचायमर्थः प्रकरणाद्यनपेक्षः । अर्थान्तरे तु तदपेक्षेत्यन्तरङ्गत्वं केचिदाहुरिति । तदा हि अस्वं स्वं करोतीति वाक्येन भवितव्यमित्यरुचिः ॥

प्रकृतेरिति । (कै)

स्वकरण इत्यस्य स्वत्ववतो निष्पादने इत्यर्थ इति भावः ॥ चिन्त्यं न वास्तवे तथा भवने किन्त्वारोपित एव स्वभावादिति तात्पर्य्यम् । इदमेव वैचित्र्यम् ॥

---

.१ इह कस्मान्न भवति । स्वं प्राटकान्तमुपयच्छतीति । अस्वं यदा स्वं करोति तदा भवितव्यम् । यद्येवं स्वीकरणे इति प्राप्नोति (५ । ४ । ५७) । विचित्रास्तद्धितवृत्तयः । नातस्तद्धित उत्पद्यते ॥

२ प्रश्नानुपपत्तिश्च । इ ॥

३ "अत आह" इत्यारभ्य "निष्पत्तिश्च" इत्यन्तं नास्ति इ पुस्तके ॥

# [1]नानोर्ज्ञः । १ । ३ । ५८ ॥



औषधेनेति । (कै)

"[2]ज्ञो ऽविदर्थस्य" इति करणे शेषषष्ठीति भावः ॥ भाष्ये

अकर्मकाज्जानातेः (भा)

इत्यस्य सनन्तादिति शेषः ॥

पूर्ववत्सन इत्यनेनेति । (कै)

"[3]अकर्मकाच्च" इति सूत्रेण केवलाज्जानातेस्तङ्विधानादिति भावः ॥

---

१ अनोर्ज्ञः प्रतिषेधे सकर्मक वचनम् । वा । अनोर्ज्ञः प्रतिषेधे सकर्मकवचनं कर्त्तव्यम् । इह माभूत् । औषधस्यानुजिज्ञासत इति ॥ न वाऽकर्मकस्योत्तरेण विधानात् । वा । न वा कर्त्तव्यम् । किं कारणम् । अकर्मकस्योत्तरेण विधानात् । अकर्मकाज्जानातेरुत्तरेण योगेनात्मनेपदं विधीयते पूर्ववत् सनः ( १ । ३ । ६२ ) इति ( १ । ३ । ४५ ) ॥ प्रतिषेधः पूर्वस्य च । वा । पूर्वस्य ( १ । ३ । ५७ ) अयं प्रतिषेधः । स च सकर्मकार्थ आरम्भः । कथं पुनर्ज्ञायते पूर्वस्यायं प्रतिषेध इति । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । कथं पुनर्ज्ञायते सकर्मकार्थ आरम्भ इति । अकर्मकाज्जानातेः सन आत्मनेपदवचने प्रयोजनं नास्तीति कृत्वा सकर्मकार्थो विज्ञायते ॥

२ अ २ । पा ३ । सू ५१ ॥ ३ अ १ । पा ३ । सू ५७ ॥

# शदेः शितः। १। ३। ६०॥

---:o:---

शदेः परो यः शित् प्रत्ययस्ततः परस्य लस्य स्थाने आत्मनेपदमेवेति मत्वा वार्त्तिकावतार इत्याशयेनाह

शिदिति॥ (कै)

ननु विकरणात् पूर्वमात्मनेपदनिमित्ताभावेऽपि लादेशवाक्येन सामान्यतः प्राप्तं सार्वधातुकमाश्रित्य सार्वधातुकविषये विधीयमाने विकरणे कृते नियमः स्यादत आह

शेषत्वादिति। (कै)

[1]"अनुदात्तङितः" [2]"भावकर्मणोः" इति सूत्रद्वयापेक्षशेषस्यैव तत्र ग्रहणादित्यर्थः। विकरणेभ्यो नियमस्य बलवत्त्वादिति भावः॥

निवर्त्तयितुं शक्यत इति। (कै)

---

१ अ १। पा ३। सू १२॥ २ अ १। पा ३। सू १३॥

---

शदेः शितः। १। ३। ६०॥ शदेः शितः परस्मैपदाश्रयत्वादात्मनेपदाभावः। वा। शदेः शितः परस्मैपदाश्रयत्वात् आत्मनेपदस्याभावः। शीयते। शीयेते। शीयन्ते॥ किं च भोः शदेः शित् परस्मैपदेषु इत्युच्यते। न खलु

---

शदेः शितः। १। ३। ६०॥ शदेरिति। भा। शिद्विकरणोत्पत्तेः पूर्वमात्मनेपदनिमित्ताभावाच्छेषत्वात् परस्मैपदेन भाव्यम्। तत्र कृते शित् प्रत्यये मानेन विहितं परस्मैपदं निवर्त्तयितुं शक्यत इत्यप्रतिपादकत्वलक्षणा-

भुक्तवन्तं प्रतीतिन्यायेनेति भावः। शास्त्रान्तरेण कृतनियमस्य निवृत्तिरशक्या। तेन निवर्त्तिततत्त्वां प्रतिपत्तिश्चाशक्येति तात्पर्य्यम्॥

सामर्थ्यादिति। (कै)

वक्ष्यमाणरीत्या इत्यर्थः॥ यद्येतत् सूत्रद्वयोत्तरं शेषादित्युच्येत तर्हि निविशत इत्यादौ परस्मैपदस्यापत्तिरित्याशयेनाह

समस्तमेवेति। (कै)

एवं च तदपेक्ष एव शेषः "[१]शेषाद्" इति सूत्रे। एवं च तस्याप्राप्त्यानियमेनैव लादेशा इति भावः। भाष्यात्मनेपदनियम-विषयोऽप्यशेष एवेति तात्पर्य्यम्। एवं च न परस्मैपदाश्रयत्वमिति बोध्यम्॥

लादेशेषु कृतेष्विति। (कै)

प्रसक्तेष्वित्यर्थः॥

---

१ अ १। पा ३। सू ७८॥

---

परस्मैपदेषु इत्युच्यते परस्मैपदेषु तु विज्ञायते। कथम् "अनुदात्तङित आत्मनेपदम्" "भावकर्मणोरात्मनेपदम्" *इत्येतौ द्वौ योगावुक्त्वा "शेषात् कर्त्तरि परस्मैपदम्" †उच्यते। एवं न च परस्मैदेषूच्यते परस्मैपदेषु च

---

मप्रामाण्यमस्य सूत्रस्य प्राप्तम्॥ किं च भो इति। भा। सार्वधातुकसंशब्दनेन शितो विधानं न परस्मैपदसंशब्दनेन॥ न खल्विति। भा। सामर्थ्यादिति भावः॥ कः पुनरिति। भा। समस्तमेवात्मनेपदप्रकरणं महावाक्यं निय-

---

* अ १। पा ३। सू १२-१३॥ † अ १। पा ३। सू ७८॥

विकरणे इति । (कै)

"विकरणेभ्यो नियमो बलवान्" इति तु शित इत्येतत् सामर्थ्यादेतद्विषये नाश्रीयते इति भावः ॥ नन्वेवं शदेः शेषलाभावे शत्स्यतीत्यादावपि परस्मैपदनियमो न स्यादत आह

शदेः शित एवेति । (कै)

तादृशशदि विषय एव नियम इत्यतादृशः शेष एवेति भावः ॥ विकरणेभ्यो नियमो बलवत्तानाश्रयणमजानानः शङ्कते भाष्ये

एवमपीति ॥ (भा)

नन्वेतदनुक्तौ महावाक्यस्यासमाप्ततया शेषपदार्थानिर्णयेन शेषादित्यस्याप्रवृत्तेर्यदीदमित्यादि कथमत आह

यद्यपीति । (कै)

अयं भावः । "[१]अनुदात्तङितः" "[२]भाव कर्मणोः" इत्येतद्द्वयं नियमार्थं शेषादिति च । तत्र "शेषाद्" ( १। ३। ७८) इति

१ अ १ । पा ३ । सू १२ ॥ २ अ १ । पा ३ । सू १३ ॥

विज्ञायते । कः पुनरर्हत्येतौ योगावुक्त्वा शेषात् कर्त्तरि परस्मैपदं वक्तुम् । किं तर्हि । अविशेषेण सर्वमात्मनेपदप्रकरणमनुक्रम्य शेषात् कर्त्तरि परस्मैपदमित्युच्यते । एवमपि परस्मैपदाश्रयो भवति । कथम् । इदं तावदयं

मार्थम् । तत्रानियमेन लादेशेषु कृतेषु शिति विकरणे कृते नियमोऽयं प्रवर्त्तते । शदेः शित एव न तु शत्स्यतीत्यादाविति भावः ॥ एवमपीति । भा । यद्यपि तात्पर्य्यपर्य्यालोचनेन प्रकरणस्य नियमार्थत्वं तथाप्येकैकसूत्रार्थ-

सूत्रे शेषस्य तद्द्वयापेक्ष एव। इतरसूत्राणि तु शेषादिति प्राप्तपरस्मैपदबाधनेनात्मनेपदविधायकानि तत्र शितः पूर्वमस्या प्राप्तेर्बाधकाभावात् परस्मैपदे जाते पश्चाज्जातनिवृत्त्ययोगेनाप्रामाण्यमस्यापद्यते इति भावः॥

यदीदं नोच्येत (भा)

इति भाष्येण बाधकत्वमेषामिति दर्शितम्॥

अनारम्भे इति। (कै)

बाधकशास्त्राभावेन शेषपक्षनिपातः। एवं च परस्मैपदोत्पत्तिर्निर्बाधैवेति भावः॥

आरम्भ इति। (कै)

स्वरूपकथनमिदम्॥

ततः। (कै)

शेष पक्षात्॥

उद्धारात्। (कै)

बहिर्भावात्॥ नन्वेवं लडादिष्वतिप्रसङ्गोऽत आह

---

प्रदीपः। यदीदं नोच्येत किमिह स्यादिति। परस्मैपदमित्याह। परस्मैपदमिति चेत् परस्मैपदाश्रयो भवति॥ सिद्धन्तु लडादीनामात्मनेपदवचनात्। वा। सिद्धमेतत्। कथम्। शदेर्लडादीनामात्मनेपदं भवतीति वक्तव्यम्॥

---

पर्य्यालोचनकालेऽवान्तरव्यापारसम्भवाद्विध्यर्थता सम्भवत्येव। अनारम्भे शेषपक्षे निक्षेपादारम्भे तत उद्धारात्॥ लडादीनामिति। भा। आदि शब्दः प्रकारे येषु शिता भाव्यन्ते लडादयः॥ शित् प्रकृतेरिति। भा। योग्यतय

आदिशब्द इति॥ (कै)

णिदुत्पत्तेः प्राक् णिच्प्रकृतित्वमत आह

योग्यतयेति॥ (कै)

णादिरेवेति। (कै)

"णादेः णित" इति समानाधिकरणे इति भावः॥ नन्वनुदात्तङितौ भावकर्मणी च विहाय परिशिष्टस्यात्मनेपदवाक्यस्यावान्तरव्यापारापेक्षया विधित्वसम्भवस्योक्तत्वात् कथमेतदत आह

प्रकरणमिति॥ (कै)

प्रवृत्तानि। (कै)

प्रसक्तानि॥ नन्वेवमपि णिदुत्पत्तेः प्राक् शेषत्वस्यैव सत्त्वेन विकरणेभ्यो नियमस्य बलवत्वात् परस्मैपदनियमो दुर्वारोऽत आह

तत्रैतदिति। (कै)

[1]"अनुपसर्गाद्वा" [2]"वृद्भ्यः स्यसनोः" इत्येतत् सामर्थ्यान्नियमस्य

---

१ अ १। पा ३। सू ४३॥ २ अ १। पा ३। सू ९२॥

---

सिध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु॥ ननु चोक्तं णादेः णितः परस्मैपदाश्रयत्वादात्मनेपदाभाव इति। नैष दोषः। णित इति नैषा पञ्चमी। का तर्हि। सम्बन्धे षष्ठी। णितो यः णादिः। कस्य णितः णादिः।

---

णिच्प्रकृतित्वमाश्रित्य प्रागेव णिदुत्पत्तेरात्मनेपदं विधीयते॥ णिद्विषयादिति। भा। णिद्विषयत्वाच्छदिरेः णिच्छब्देनाभिधीयते॥ अथवेति। भा। प्रकरणं नियमार्थम्। तत्र नियमात् पूर्वमात्मनेपदपरस्मैपदान्यनियमेन प्रवृत्तानि

बलीयस्त्ववत् एतत् सूत्रसामर्थ्यादेतद्विषये विकरणस्यैव बलवत्त्वं ज्ञाप्यत इत्यर्थः ॥

## पूर्वं विकरणा इति । (कै)

सार्वधातुकप्रसक्तिमात्रेणेति भावः ॥

## अनाश्रित्येति । (कै)

कृतोऽपि विकरणो न व्यवधायक इत्येवमपि ज्ञापकस्य नेतुं शक्यत्वात्तदनाश्रयणमिति भावः ॥ एवं लावस्थायामङिति पञ्चमात्मनेपदप्रकरणस्य "[१]तिप्तस" दि सूत्रेणैकवाक्यतेति पक्षं चानाश्रित्येदमित्यपि बोध्यम् ॥

## नानित्या इति । (कै)

अस्येति मन्यत इति शेषः । तदेवं स्थितमेतत् । विकरणेषु कृतेषु भवत्यङ्विकरणान्तभक्तो [२]धातुव्यवधायक इत्युपसंख्या कार्य्यमिति ॥ तत्र भाष्यकृत् विकरणोत्पत्तेः प्राक् नियमस्य "अटश्च" संप्रधारणं करोति

१ अ ३ । पा ४ । सू ७८ ॥ २ धातुव्यवधायकम् इत्युपसंख्यानम् । क ॥

प्रकृतिः । शदेः शित् प्रकृतेरिति ॥ अथवा ह्ययं शदेः शित इति न च शदिः शिदस्ति त एवं विज्ञास्यामः शदेः शिद्विषयादिति ॥ अथवा यद्यपि तावदेतदन्यत्र भवति विकरणेभ्यो नियमो बलीयान् इतीहैतन्नास्ति । विकरणो

तस्यैतत्सूत्रारम्भसामर्थ्यात् पूर्वं विकरणः प्रवर्त्तते पश्चाच्छित एव शदेरात्मनेपदमिति नियमः ॥ न्यविशतेति । भा । ननु विकरणेभ्यो नियमो बलीयानिति प्रागेव विकरणोत्पत्तेर्नियमेन भाव्यं ततो नित्यत्वात् पूर्वं विक-

**एवं तर्हीति।** (भा)

लादेश इत्यनेन नियमो विवक्षितः॥ ननु नियमोऽटि कृते न प्राप्नोति अटा व्यवधानादत आह

**धातुभक्तत्वादिति॥** (कै)

अटोऽपि कृताकृतप्रसङ्गत्वेन नित्यत्वमाशङ्क्याह

**अडागम इति॥** (कै)

अटो विकरणापेक्षया कथमनित्यत्वमत आह

**विकरणेष्विति।** (कै)

भाष्ये "आत्मनेपद एवे"ति नित्यत्वादटः पूर्वं नियमप्राप्तिरिति भावः॥

**अडागमो भविष्यतीति** (भा)

फलितनिर्देशः। तथाचोपसंख्यानं न कार्य्यमिति भावः॥ पुनरुपसंख्यानवाद्याह

---

हि इहाशीयते शित इति॥ उपसर्गपूर्वनियमेऽडुपवाय उपसंख्यानम्। वा। उपसर्गपूर्वस्य नियमे अडुपवाय उपसंख्यानं कर्त्तव्यम्। न्यविशत व्यक्री-णीत*। किं पुनः कारणं न सिध्यति। अटा व्यवहितत्वात्। ननु चायड् धातुग्रहणेन ग्रहीष्यते। न सिध्यति। अङ्गस्य हि अडुच्यते†। विकरणान्तं

---

रणाः ततोऽडागम इति किं वार्त्तिकेन। उच्यते। एतदनाश्रित्यैतदुक्तम्॥ शब्दान्तरस्येति। भा। विकरणास्तु शब्दान्तरादपि प्राप्नुवन्तो नानित्याः॥ कृतेऽप्यटीति। भा। धातुभक्तत्वादटस्तद्ग्रहणेन ग्रहणाद् व्यवधानाभावात्। अडागमस्त्वनित्यः। स हि लादेशेषु कृतेषु विकरणैर्नित्यत्वात् प्रतिबध्यते।

---

* अ १। पा ३। सू १७–१८॥ † अ ६। पा ४। सू ७१॥

नित्यत्वाल्लादेशस्य (भा)

इत्यादि ॥

इति चेदिति । (भा)

अऽपि नित्य इति वक्तव्ये निमित्तग्रहणं किमर्थमत आह

कृतेऽपीति । (भा)

अन्यथा लादेशेषु कृतेषु लङादिपरत्वाभावादडाद्यभावशङ्का स्यादिति भावः ॥

[1]तस्य तु धातु भक्तत्वादिति । (कै)

लादेशेभ्यः परत्वादडागमे विकरणाभावात् स धातुभक्त इत्यर्थः ॥

सिध्यतीति । (कै)

आत्मनेपदनियमः सिध्यतीत्यर्थः ॥

लादेशेषु । (कै)

"तिप् तस्" ( ३। ४। ७८ ) इति विहितेषु ॥

---

१ "तस्य धातु भक्तत्वादिति" इति उपलब्धविवरणेऽस्ति । उपलब्धकैयटे "तु" शब्दघटितः पाठो दृश्यते ॥

---

वाङ्गम् । सोऽसौ सङ्घातभक्तो न शक्यो धातुग्रहणेन ग्रहीतुम् ॥ एवं तर्हीदमिह सम्प्रधार्यम् । अट् क्रियतां विकरण इति किमत्र कर्त्तव्यम् ।

---

विकरणेषु कृतेषु शब्दान्तरप्राप्त्या अनित्यः ॥ नित्यनिमित्तत्वादिति । भा । कृतेऽपि लादेशे स्थानिवद्भावाल्लुङादिव्यपदेशोऽस्तीति प्रदर्शनार्थं निमित्तग्रहणमुपात्तम् । यद्यपि लादेशे कृते विकरणेन नित्यत्वादड् बाध्यते तथापि यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । तत्रोभयोर्नित्ययोः

नियमात् पूर्वं नित्यत्वादिति। (कै)

[1]"वृद्भ्यः स्यसनोः" इति तु विकरणाव्यवधानेऽपि नियमप्रवृत्ति-
रित्यर्थस्यैव ज्ञापकमिति भावः॥

आत्मनेपदाप्रसङ्ग इति। (कै)

नियमाप्रसङ्ग इत्यर्थः॥

चोद्यम्। (कै)

उपसंख्यानम्॥

अटो नित्यनिमित्तत्वाद् (भा)

इत्युत्तरमुभयोर्नित्ययोर्नियमात् परत्वादटि प्राप्ते तं बाधित्वा विकरणे ततोऽटीति शेषपूरणेनेति भावः॥ उभयोर्लाश्रययोः कथमन्तरङ्गत्वबहिरङ्गत्वेऽत आह

लकारेति। (कै)

परनिमित्तकत्वादडागमो बहिरङ्ग इति वक्तुं युक्तं [2]"तस्मि-

---

१ अ १। पा ३। पा ९२॥ २ अ ६। पा १। सू १३५॥

---

परत्वादडागमः। नित्या विकरणाः*। कृतेऽप्यटि प्राप्नुवन्त्यकृतेऽपि प्राप्नु-
वन्ति। अडपि नित्यः। कृतेष्वपि विकरणेषु प्राप्नोत्यकृतेष्वपि प्राप्नोति।
अनित्योऽट्। अन्यस्य कृतेषु विकरणेषु प्राप्नोत्यन्यस्याकृतेषु शब्दान्तरस्य च

---

परत्वादट् प्राप्नोति। ननु भवति परत्वादडागमः तस्य तु धातुभक्तत्वादव्यव-
धायकत्वात् सिध्यत्यात्मनेपदम्। नैष दोषः। तत्र ह्यन्तरङ्गत्वाल्लादेशेषु कृतेषु
नियमात् पूर्वं नित्यत्वाद्विकरणेषु कृतेषु अडागमो विकरणान्तभक्तत्वा-

---

* अ ३। पा १। सू ७७-८१॥

मिति" परिभाषापेक्षत्वात् तस्य विशेषापेक्षत्वेऽपि न बहिरङ्गत्व-मिति प्रागुक्तम् । [1]प्रत्याख्यात्रष्टसिद्धान्तिनो"ऽन्तरङ्गस्तर्ही"त्युक्ति-र्भाष्ये । विधिवाक्येनैषामेकवाक्यताश्रयणान्नियमोऽन्तरङ्ग इत्यर्थः ॥ उपसर्गकार्य्यं चान्तरङ्गमिति "[2]सुड्कात्" इति सूत्रे भाष्ये स्पष्टम् ॥ एतदुत्तरग्रन्थस्त्वेकदेशिनः "अथवा नेः" (भा) इत्येतत् पर्य्यन्तम् । तदाशयस्य पूर्वपक्षमुखेन मयोच्यते । नन्वन्तरङ्गस्तर्हि लादेशशब्देन नियमो विवक्षित उत तिप्तम् इति विधिः । नाद्यः । "नेर्विशः" (१। ३। १७) इत्यादेः पदान्तरापेक्षत्वेन बहिरङ्गत्वात् द्वितीयो ग्राह्यस्तत्राह

नैतदिति । (भा)

अयमित् तिप्तसिति विधिः । न तु तेन सह सम्प्रधारणेति भावः ॥ केन तर्हि सम्प्रधारणेत्यत्राह

अत्र खल्विति ॥ (भा)

---

१ प्रत्याख्यनात् । इ । क ॥ २ अ १ । पा १ । सू ६६ ॥

---

प्राप्नुवन् विधिरनित्यो भवति ॥ एवं तर्हीदमिह सम्प्रधार्य्यम् । अट् क्रियतां लादेश इति किमत्र कर्त्तव्यम् । परत्वादडागमः नित्यो लादेशः* । कृतेऽप्यटि प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वाल्लादेशस्तस्यात्मनेपद एवाडागमो भवि-

---

द्धातोर्व्यवधायक इति न्यादिभ्यः परे विशादयो निरन्तरा न सम्भवन्तीत्या-त्मनेपदाप्रसङ्गः इत्येवं भाष्यं चोद्यं व्यवस्थाप्यते ॥ अन्तरङ्गस्तर्हीति । भा । लकारमात्रापेक्षत्वात् । अडागमस्तु लकारविशेषापेक्षत्वाद् बहिरङ्गः ॥

---

* अ ३ । पा ४ । सू ७८ ॥ अ १ । पा ३ । सू १७-१८ ॥

लादेशे कृते इति। (भा)

जातस्यापि लुकेव निवृत्तिः प्रसक्ते इति वार्थः॥

सर्वत इति। (भा)

विकरणादडागमाच्चेत्यर्थः॥

तत्तु न लभ्यमिति। (भा)

नियमात् पूर्वं नित्यत्वात् विकरणप्रवृत्तेस्तच कृतेऽपि तत एव नियमात् पूर्वमडागमस्य च प्रवृत्तेरिति भावः॥ तच शङ्कते

ननु पूर्वमेवेति॥ (कै)

यच्चेति। (कै)

तथा च नियमो न नित्य इति भावः॥ ननु विकरणात् पूर्वमडागमो न लभ्य इत्यर्थकं तत्तु न लभ्यमित्ययुक्तं विकरणस्यापि शब्दान्तरात् प्राप्त्याऽनित्यत्वात् न च शब्दान्तरस्येति वाचनिकं किन्तु न्यायः। यच्छक्तिसम्बन्धितया पूर्वं प्राप्नोति तच्छक्तिसम्बन्धित्वेनाप्राप्त्या कृताकृतप्रसङ्गित्वाभाव इति स च शब्दान्तरात् प्राप्तावपि तुल्य इति विकरणात् पूर्वमटि विकरणोत्तरं ततः पूर्वं वा नियमो भविष्यतीति नार्थः उपसंख्यानेनेत्याशयेन पृच्छति

---

ष्यति॥ नित्यत्वाल्लादेशस्यात्मनेपदेऽडागम इति चेत् अटोऽपि नित्यनिमित्तत्वादात्मनेपदाभावः। वा। नित्यत्वाल्लादेशस्यात्मनेपद एवाडागम इति चेदेवमुच्यते। अडपि नित्यनिमित्तः। कृतेऽपि लादेशे प्राप्नोत्यकृतेऽपि

---

नैतदिति। भा। न लादेशेन सह संप्रधारणा किन्तु नियमेन सह इति भावः॥ तत्तु न लभ्यमिति। भा। ननु पूर्वमेव ज्ञापकादिकरणेभ्यो नियमस्य बलीयस्त्वं प्रतिपादितं तत् किमुच्यते "तत्तु न लभ्यमिति"। उच्यतेऽन्यथापि

किं कारणमिति ॥ (भा)

उपसंख्यान वाद्याह

आङ्गादिति । (भा)

आगमवृत्त्युत्तरं विकरणे "तरत" इत्यत्रानिष्टमाह

अत्रेति । (कै)

आडाटोर्बाधकस्याङ्गस्य बाधको विकरणः सुतरामडाटोर्बाधक इति (कै-सुतिक)न्यायं वक्तुं भाष्ये

अडाड्भ्यामपीति ॥ (भा)

ननु [1]"वर्णादाङ्गमि"त्येकादेशात् पूर्वम् त्वच्छिभावे[2]निर्दिश्यमानपरिभाषया न दोषः किं चाटः श्नवन्ताङ्गभक्तत्वेनाच्छिशिष्टस्यार्त्तित्वाभावाच्च दोषोऽत आह

आटश्चेति वृद्धिरिति ॥ (कै)

---

१ वार्णादाङ्गं बलीयो भवति । परिभा-५६ ॥

२ निर्दिश्यमानस्यादेशा भवन्ति । परिभा-१२ ॥

---

प्राप्नोति । अटो नित्यनिमित्तत्वादात्मनेपदस्याभावः ॥ तस्मादुपसंख्यानम् । वा । तस्मादुपसंख्यानं कर्त्तव्यम् ॥ न कर्त्तव्यम् । अन्तरङ्गत्वर्हि लादेशः । नैतद्विवदामहेऽन्तरङ्गो नान्तरङ्ग इति । अस्त्वयं नित्यस्वान्तरङ्गस्य । यत्र खलु

---

तज्ज्ञापकं समर्थयितुं शक्यते । ज्ञतोऽपि विकरणो न व्यवधायक इति । यद्येवं नित्य एव नियमः । नैतदस्ति । यत्र केवलो विकरणो व्यवधायकस्तत्र भवतु नित्यो नियमो यथा निवेक्ष्यते निविशत इति । यत्र तु विकरणे कृतेऽडागमस्तत्राटो व्यवधायकत्वान्नियमो न प्राप्नोति ॥ तरत इति । भा ।

नानाश्रयत्वादिति । (कै)

वस्तुतस्तदनाश्रित्येदम् ॥

तस्यादिवद्भावादिति । (कै)

एवं चातिदेशविषये न निर्दिश्यमानपरिभाषाप्रवृत्तिः । शबन्ताङ्गभक्तत्वेऽपि आड्विशिष्टस्यान्तित्वं च सुलभमिति भावः ॥ भाष्योक्तस्य "उपार्च्छंद्" इत्यस्य "[1]उपसर्गादृति" इति वृद्ध्यापि सिद्धिरत आह

नत्वार्च्छंदितीति ॥ (कै)

भाष्ये [2]"लक्ष्ये लक्षणस्य" इति न्यायाविषयं बोधयितुं

शब्दान्तरस्येति (भा)

न्यायेन पुनर्वृद्धिवारणं सप्तमे कैयटेन वक्ष्यमाणं विरुध्येत ततो हि विकारकृतं न शब्दान्तरत्वमिति चेन्न । अचत्वस्यैकदेशयुक्तत्वेना-दोषात् तदाह

१ अ ६ । पा १ । सू ९१ ॥

२ लक्ष्येलक्षणं सकृदेव प्रवर्त्त । परिभा-१२१ ॥

---

लादेशे कृते चीणि कार्य्याणि युगपत् प्राप्नुवन्ति विकरणा अडागमो नियम* इति । तद्यदि सर्वतो नियमो लभ्येत कृतं स्यात् । तत्तु न लभ्यम् । अथापि विकरणादडित्यड् लभ्येतैवमपि कृतं स्यात् । तत्तु न लभ्यम् । किं कारणम् ।

---

अत्र पूर्वमित्वे सति रूपं न सिध्यति ॥ आटि कृत इति । भा । "आटश्च" इति वृद्धिरेकादेशः प्राप्नोति ऋच्छिभावश्च । तत्र वर्णमात्राश्रयत्वादेका-देशोऽन्तरङ्गः । नानाश्रयत्वाच्च वार्णादाङ्गं बलीय इति नास्ति । ततश्चैकादेशे

---

* अ १ । पा ३ । सू १७-१८ ॥

वत्सवदिति। (कै)

स न्यायोऽनित्य इति भावः॥ गविस्थितदुग्धशेषपयसो ग्रहणाय यथा वत्सः प्रवर्त्तते तद्वदिति तात्पर्य्यम्॥ क्वचित्तु[1]पर्जन्यवद् इति पाठः। तत्रायमर्थः। यथा पर्जन्यः स्वयं पूर्णे कृतेऽपि क्षेत्रे पुनः पुनर्वर्षतीति॥ भाष्ये

पुनर्ऋच्छिभाव इति। (भा)

विकारान्यानुपूर्व्यैक्येऽपि यदि पुनराट् तत एव तुल्यन्यायात् पुनर्ऋच्छिभावाद्यपि स्यादित्यभिमानः॥

यत्र खलूभयमिति। (भा)

एवं च तुल्यन्यायाद् द्वयोरनित्ययोरपि परत्वादटि सति न दोष इत्युपसंख्यानं न कार्य्यम्। विकरणाटोर्द्वयोरप्यनित्यत्वं तु दर्शितमेव [2]"शब्दान्तरप्राप्तस्य" इत्यनाश्रयणे तूभयोर्नित्यत्वं बोध्यम्॥

१ पर्जन्यवल्लक्षणप्रवृत्तिः। परिभा-१२०॥

२ शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति। परिभाषेन्दु-४४॥

---

अङ्गात् पूर्वं विकरणा रक्षितव्यास्ततः तरन्तीत्येवमर्थम्*। अडाङ्भ्यामप्यन्यदाङ्गं पूर्वमेषितव्यमुपार्च्छदित्येवमर्थम्। तत्र च्लादि कृते साटकस्य ऋच्छिभावः† प्राप्नोति। ननु च ऋच्छिभावे कृते शब्दान्तरस्याकृत आडिति

कृते तस्यादिवद्भावादृच्छिभावः प्राप्नोति। तत ऋच्छदिति स्यान्न तु आर्च्छद इति॥ ननु चेति। भा। वत्सवत्प्रवृत्त्या कार्य्यमिह शास्त्रे सम्भवतीति भावः॥ यत्तावदिति। भा। तरत इत्यत्रानित्यमित्वं विकरणास्तु नित्य इति स एवं

* अ ७। पा १। सू १००॥ † अ ७। पा ३। सू ७८॥

परत्वादिति । (कै)

अङि लकारे ऋच्छिः सावकाशः । आटोऽन्येऽजादयः ॥

अभ्युपगमवादेन त्विति । (कै)

एवं "लक्ष्ये लक्षणस्ये"ति न्यायानाश्रयणेन चक्रकापादानमपि तथैवेति ध्वनितम् । एकदेश्युक्तित्वं च ध्वनितम् ॥

चक्रकेष्विष्टतो व्यवस्थेति (भा)

अशास्त्रीयो न्याय इत्याह

व्यवस्थेति । (कै)

अन्यथाव्याख्यानपर्य्यवसानं स्यादिति भावः ॥ नन्वत्र न्यायात् सिद्धावपि उपसर्गनियमे न्यायाभावादुपसंख्यानमावश्यकमत आह

तदेवमिति ॥ (कै)

लादेशेषु । (कै)

"[1]तिप् तस्" इति सूत्रेण ॥

---

१ अ ३ । पा ४ । सू ७८ ॥

---

कृत्वा पुनराड् भविष्यति । पुनरृच्छिभावः पुनराडिति चक्रकमव्यवस्था प्राप्नोति ॥ नैष दोषः । यत्तावदुच्यते आङ्गात् पूर्वं विकरणा इति तथा लस्तरतः तरन्तीत्येवमर्थमिति । भवेत् सिद्धं यत्र विकरणा नित्या आङ्गमनित्यं

---

प्रवर्त्तते ॥ यत्र त्विति । भा । यथा "तरतीति" ॥ अस्तु अत्राडिति । भा । परत्वादृच्छिना भाव्यम् । अभ्युपगम्यवादेन त्वेतदुच्यते ॥ चक्रकेष्विति । भा ॥ व्यवस्थाकारिणा शास्त्रेण भाव्यमित्यव्यवस्था हेतुः पुनः प्रवृत्तिर्न भविष्यतीत्यर्थः । तदेवं स्थितमेतदन्तरङ्गत्वाल्लादेशेषु कृतेषु परत्वादडागमः । नचायं नियमः ।

## परत्वादडागम इति । (कै)

परत्वाद् विकरणात् पूर्वं तत्र कृते तस्य धातुभक्तत्वादव्यवधायकत्वेन नियमसिद्धिरित्यर्थः ॥ "न चायं नियम" इति पाठः॥ तदाह

## नात्वित्यादि । (कै)

न्याय इति पाठे ऽयमेव ग्राह्योऽयं नेति। न्यायो न युक्तमित्यर्थः ॥

## सम्बन्धीति । (कै)

स्वघोत्यार्थनिरूपितविशेष्यतावदर्थवत्वं सम्बन्धो बोध्यः॥ "[1]परिव्यवेभ्य" इत्यादावपि षष्ठ्यर्थे पञ्चमी बोध्या। पञ्चमी पक्षेऽपि (वा। क) नेः परत्वयोग्यस्येत्यादिक्रमेणाऽर्थः ॥

## अयमर्थ इति । (कै)

पदसंस्कारप्रस्तावात्तात्पर्य्यवृत्त्याऽयं सूत्रार्थ इति भावः॥ अथ विशिः कथं पदमत आह

---

१ अ १ । पा ३ । सू १८ ॥

---

तत्राङ्गात् पूर्वं विकरणाः स्युः। यत्र तु खलूभयं नित्यं परत्वात् तत्राङ्गं तावद् भवति॥ यदप्युच्यतेऽडाड्भ्यामप्यन्यदाङ्गं पूर्वमेवितव्यमुपार्च्छदित्येवमर्थमिति। अस्वचाट्। आठिकृते साट् कस्य ऋच्छिभाव ऋच्छिभावे कृते

---

शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति न तु शब्दान्तरादिति। यतोऽडागमस्यानित्यत्वं स्याद् विकरणस्य नित्यत्वम्। कृताकृतप्रसङ्गित्वात्तु द्वयोरपि नित्यत्वम्। अङ्गत्वाश्रयत्वाश्रयणाद्वा नास्ति शब्दान्तरप्राप्तिरदः॥ नेर्थ्यो विशिरिति। भा। व्यवहितस्याप्यर्थद्वारेण विशेष्यत्वात् सम्बन्धी भवतीत्यर्थः॥

विशीति ॥ (कै)

न्यायेति। (कै)

नेः सकाशादर्थविशेषप्राप्तो यो विशिरित्यर्थं तात्पर्यं दर्शयितुं

समर्थानाम् (भा)

इत्युक्तम्। नत्वत्र तत् परिभाषोपस्थितिः सुबन्तत्वेन पदत्वेन वा निमित्तकोटावप्रवेशात्। अत एव समर्थसूत्रे (२।१।१) भाष्यकारो वक्ष्यति

एकार्थीभावः सामर्थ्यं विभक्तिविधौ च नोपस्थितिरिति (भा)

इति दिक् ॥ नचात्र पक्षद्वयेऽपि उपसर्गान्तरव्यवधानेऽपि प्रवृत्त्यापत्तिरिति वाच्यम्। तेषामनभिधानात् ॥

---

शब्दान्तरस्याकृत आडिति कृत्वा पुनराड् भविष्यति। ननु चोक्तं पुनरर्थच्छिभावः पुनराडिति। चक्रकामव्यवस्था प्राप्नोति। नैष दोषः। चक्रकेऽप्यिष्टतो व्यवस्था। अथवा* नेरिति नैषा पञ्चमी। का तर्हि। विशेषणषष्ठी। नेर्यो विशिः। कस्य नेर्विशिः। विशेष्यः। व्यवहितस्यापि शक्यते विशेषयितुम् ॥ अथवा निरपि पदं विशिरपि पदम्। पदविधिश्च समर्थानाम्। व्यवहितेऽपि सामर्थ्यं भवति ॥

---

अथवेति। भा। "नेर्विशः" इत्यस्यायमर्थः। निशब्दात्परमात्मनेपदान्तं विशवयवपदं साधु भवतीति सत्यप्यडागमे नेः पदमनन्तरमेवेति दोषाभावः ॥ विशिरपीति। भा। विशि शब्देन विशवयवः समुदाय उपचारादभिधीयते ॥ पदविधिश्चेति। भा। न्यायप्राप्तार्थानुवादोयं नत्वेतत्प्रकृते उपयुज्यते इत्याहुः ॥

---

* अ १। पा ३। सू १७ ॥

# पूर्ववत्सनः।१।३।६२॥

धातुभ्यः परस्य सस्य विधीयमानमात्मनेपदं कथं योगेभ्यः स्यादत आह

योगस्थेभ्य इति। (कै)

मत्वाः क्रोशन्तीतिवदिति भावः॥ भाष्ये "येभ्यः" इति निर्देशात् पञ्चम्यन्तादितिरितिभ्रमं वारयति

पक्षद्वयेऽपीति॥ (कै)

---

पूर्ववत्सनः।१।३।६२॥ किमिदं पूर्वग्रहणं सन्नपेक्षम्। प्राक् सनो येभ्य आत्मनेपदमुक्तं तेभ्यः सन्नन्तेभ्योऽपि भवतीति। आहोस्विद्योगापेक्षम्। प्रागेतस्माद्योगाद्येभ्य आत्मनेपदमुक्तं तेभ्यः सन्नन्तेभ्य आत्मनेपदं भवतीति। किं चातः। यदि सन्नपेक्षं निमित्तमविशेषितं भवति। पूर्ववत्सनो न ज्ञायते किमन्ताद् भवितव्यमिति। अथ योगापेक्षमुत्तरत्र विधिर्न प्रकल्पेत। बुभुक्षते उपयुयुक्षत इति (१।३।६६, ६४)॥ यथेच्छसि तथास्तु। अस्तु तावत् सन्नपेक्षम्। ननु चोक्तं निमित्तमविशेषितं भवतीति। निमित्तं च विशेषितम्। कथम्। सनमेवात्र निमित्तत्वेनापेक्षिष्यामहे। पूर्ववत्सन आत्मनेपदं भवति। कुतः। सन इति॥ अथवा पुनरस्तु योगापेक्षम्। ननु चोक्तमुत्तरत्र विधिर्न प्रकल्पेतेति। विधिश्च प्रक्लृप्तः। कथम् उत्तरत्रापि पूर्ववत्सन इत्येवानुवर्तिष्यते॥ किमर्थं पुनरिदमुच्यते।

---

पूर्ववत्सनः।१।३।६२। पूर्वशब्दः सम्बन्धिशब्दत्वादवधिमपेक्षते तत्र कोऽत्रावधिरभिप्रेत इति पृच्छति। किमिदमिति। भा॥ येभ्य इति। भा। योगस्थेभ्यो धातुभ्यो विधानाद् योगेभ्यो विहितमित्युच्यते। पक्षद्वयेऽपि,

तर्हि पञ्चम्यन्तप्रयोगस्य का गतिरत आह

**तुल्यार्थैरिति ॥ (कै)**

नन्वात्मनेपदेन स्वयोग्यप्रकृतेराक्षेपाद्दोषाभावोऽत आह

**ततश्चेति ॥ (कै)**

तामुपपादयति

---

पूर्ववत्सन इति ज्ञादिम्रियत्यर्थम् । वा । ज्ञादिम्रियत्यर्थोऽयमारम्भः ( १ । ३ । ६०, ६१ ) । ज्ञादिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं माभूदिति ॥ इतरथा हि ताभ्यां सन्नन्ताभ्यामात्मनेपदप्रतिषेधः । वा । इतरथा हि अनुच्यमानेऽस्मिन् ज्ञादिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदस्य प्रतिषेधो वक्तव्यः स्यात् । शिशत्स्यति । मुमूर्षति ॥ कथं पुनः पूर्ववत्सन इत्यनेन ज्ञादिम्रियतिभ्यामात्मनेपदस्य प्रतिषेधः शक्यो विज्ञातुम् । वतिनिर्देशोऽयं कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा । उशीनरवन्मद्रेषु यवाः । सन्ति न सन्तीति । मातृवदस्याः कलाः। सन्ति न सन्तीति । एवमिहापि पूर्ववद्भवति न भवतीति । न भवतीत्येवं वाक्यशेषं समर्थयिष्यामहे । यथा पूर्वयोर्योगयोः ( १ । ३ । ५८, ५९ ) सन्नन्ताभ्यामात्मनेपदं न भवत्येवमिहापि ज्ञादिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं न भवतीति ॥ यदि तर्हि ज्ञादिम्रियत्यर्थोऽयमारम्भो विधिर्न प्रकल्पते । आशिशिषते शिशयिषते । अथ विध्यर्थः ज्ञादिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं प्राप्नोति ॥ यथेच्छसि तथास्तु । अस्तु तावत्प्रतिषेधार्थः । ननु चोक्तं विधिर्नप्रकल्पत इति । विधिश्च प्रकृप्तः । कथम् । एतदेव ज्ञापयति सन्नन्तादात्मनेपदं भवतीति यदयं ज्ञादिम्रियतिभ्यां सन्नन्ताभ्यामात्मने-

---

"तेन तुल्यम्" इति तृतीयान्ताद् वतिः । न तु पञ्चम्यन्तात् । तत्तुल्याभावात् । तुल्यार्थैरिति विहिता तृतीया सर्वविभक्त्यर्थानन्तर्भावयतीति पञ्चम्यर्थस्यापि ग्रहणमुपपन्नमेव । यथा ब्राह्मणवद् वैश्यादधीत इति ब्राह्मणादिव

यदीति (कै)

यदि नामात्मनेपदनियमविधानसामर्थ्यात् प्रतिपत्तिः स्यात् तर्हीति शेषः । तच्छब्देनेनेत्यन्वयः । अनुवृत्तस्यैकवाक्यतया सम्बन्धे केवलेभ्य आत्मनेपदं न स्यादत आह

वाक्यभेदेनेति । (कै)

पूर्ववत् ग्रहणानुवृत्तिसामर्थ्याद् अन्यथा "सन" इत्येवानुवर्त्तये-दिति भावः ॥ सूत्रस्यावश्यारभ्यत्वात् प्रयोजनप्रश्नोऽनुपपन्नोऽत आह

विधीति । (कै)

अभिधेयप्रश्नोऽयमिति भावः ॥ भाष्ये

---

पदस्य प्रतिषेधं शास्ति ॥ अथवा पुनरस्तु विध्यर्थः । ननु चोक्तं शदिम्रिय-तिभ्यां सन्नन्ताभ्यामात्मनेपदं प्राप्नोतीति । नैष दोषः । प्रकृतं सनो न इत्यनुवर्तिष्यते । क्व प्रकृतम् । ज्ञाश्रुस्मृदृशां सनः ( १ । ३ । ५७ ) नानोर्ज्ञः ( १ । ३ । ५८ ) सकर्मकात्सनो न । प्रत्याङ्भ्यां श्रुवः ( १ । ३ । ५९ ) सनो न । शदेः शितः ( १ । ३ । ६० ) सनो न । म्रियतेर्लुङ्लिङोश्च ( १ । ३ । ६१ ) सनो नेति । इहेदानीं "पूर्ववत्सन" इति सन इत्यनुवर्त्तते नेति निवृत्तम् । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं निमित्तमविशेषितं भवतीति ॥ नैव वा पुनरत्र शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं प्राप्नोति । किं कारणम् । शदेः शितः ( १ । ३ । ६० ) इत्युच्यते न च शदिरेवात्मने-

---

वैश्यादधीत इत्यर्थः । वैश्यापादानकस्याध्ययनस्य ब्राह्मणापादानकमध्ययन-मुपमानम् । तत्र च ब्राह्मणशब्दो वर्त्तते तेन ब्राह्मणेन तुल्यं वैश्यादधीत इति तृतीयान्तादतिरेवमिहापि पूर्ववदिति द्रष्टव्यम् ॥ किमन्तादिति । भा । ततश्चाप्रतिपत्तिः स्यात् । यदि नामात्मनेपदनियमविधानसामर्थ्यादनेन

इतरथा हि (भा)

इत्यस्य व्याख्या

अनुच्यमाने इति ॥ (भा)

यदि म्रियतिपरतयाऽव्याख्याने ऽन्यथा व्याख्याने इति भावः । विधायकतया व्याख्यातेनानेनैव प्राप्तस्य प्रतिषेधो वाच्य इति तात्पर्य्यम् ॥ ननु "पूर्ववद्" इत्युक्त्या [1]"नानोर्ज्ञः" [2]"प्रत्याङ्भ्याम्" इत्येतौ कथं प्रतिपत्तुं शक्यौ इत्यचाह

इह चेति । (कै)

एवं च यदिम्रियत्यपेक्षया पूर्वस्य परिग्रहान्न दोष इति भावः ॥

---

१ अ १ । पा ३ । सू ५८ ॥ २ अ १ । पा ३ । ५९ ॥

---

पदस्य निमित्तम् । न चायं सन्परः म्रियतिपरो भवति । यत्र तर्हि म्रियतिराश्रीयते 'म्रियतेर्लुङ्लिङोश्च" ( १ । ३ । ६१ ) इति । अत्रापि न म्रियतिरेवात्मनेपदस्य निमित्तम् । किं तर्हि । लुङ्लिङावपि निमित्तम् । अथापि म्रियतिरेव लुङ्लिङ्परस्तु निमित्तम् । न चायं सन्परः लुङ्लिङ्परो भवति ॥ किं पुनः पूर्वस्य यदात्मनेपददर्शनं तत्सन्नन्तस्याप्यतिदिश्यते । एवं भवितुमर्हति । पूर्वस्यात्मनेपददर्शनात्'सन्नन्तादात्मनेपदभाव इति चेद्गुपादिष्वप्रसिद्धिः । वा । पूर्वस्यात्मनेपददर्शनात् सन्नन्तादात्मनेपदं भवतीति चेद्गुपादिष्वप्रसिद्धिः । गुपादीनां न प्राप्नोति । जुगुप्सते मीमांसत इति ( ३ । १ । ५, ६ ) । न

---

सर्वधातुभ्य आत्मनेपदं भवतीत्येतल्लभ्येत विषयविभागस्तु न ज्ञायतेति भावः ॥ सनमेवेति । भा । प्रत्यासत्त्येति भावः ॥ उत्तरत्रापीति । भा उत्तरेषु योगेषु वाक्यभेदेन पूर्ववत्सन इत्येतत् सम्बध्यते । प्रोपाभ्यां युजेरात्मनेपदं भवति । ततः "पूर्ववत् सन" इति ॥ किमर्थमिति । भा । विभि-

पूर्ववद्विधिरिति । (कै)

पूर्ववदिति तु ज्ञापकसिद्धस्याप्यसार्वत्रिकत्वाद्वा दृष्टानुरोधाद्वा लब्धं द्वितीयस्येति। एवं च सनपेक्षेऽपि पूर्वत्वे विज्ञायमाने न कश्चिद्दोष इति स एव सिद्धान्तो विधिपक्षस्येति भावः ॥

सामग्र्या इति । (कै)

म्रदेः श्नितस्य पृथग् निमित्तत्वमिति भ्रमो न कार्य्य इति भावः ॥

म्रदेः श्नितोऽभावादिति । (कै)

म्रदिप्रकृतिकश्नितो ऽभावादित्यर्थः ॥ पूर्वस्माद् भेदमाह

श्नितेति ॥ (कै)

म्रियतिमात्रस्यात्मनेपदनिमित्तत्वाभावादाह

म्रियतेरिति ॥ (कै)

---

भ्योतेभ्यः प्राक् सन आत्मनेपदं नापि परस्मैपदं पश्यामः ॥ सिद्धं तु पूर्वस्य लिङ्गातिदेशात् । वा । सिद्धमेतत् । कथम् । पूर्वस्य यदात्मनेपदलिं तत्सन्नन्तस्याप्यतिदिश्यते ॥ ज्ञादिषु तु लिङ्गप्रतिषेधः । वा । ज्ञादिषु । लिङ्गस्य प्रतिषेधो वक्तव्यः । अनुचिकीर्षते पराचिकीर्षतीति ( १ । ३ । ने-

---

नियमोभयपक्षासम्भवात् प्रश्नः ॥ यथा पूर्वयोरिति । भा । "नानो "प्रत्याङ्भ्यां श्रुवः" (१।३।५९) इत्येतयोः । इह च म्रदि (१।३।५८) अनुवर्त्तते इति भावः ॥ यथेच्छसीति । भा । निषे सन्नन्तात् पूर्ववद्विधिरनुमीयते । विधिपक्षे म्रदिम्रियत

पयु- नियतो निषेधादेः मयोः सनो न इत्यनुवृत्त

प्राप्नोतीति । (कै)

लुङ्लिङोरिति शेषः ॥

नियमार्थमिति । (कै)

ङित्वादेव सिद्ध इति भावः ॥ भाष्ये

लुङ्लिङ्पर इति (भा)

सियतिपरलुङ्लिङ्रूपस्येत्यर्थे तथा फलतीति भावः । एवं च
ईसियतिभ्यां सन्नन्ताभ्यां न भवतीत्यर्थस्य वक्तुमयोग्यतया गुरु-
। भावे तात्पर्य्यं तन्मूलविधिकल्पनं च इति गौरवभिया विधित्व-
युक्तमिति तात्पर्य्यम् ॥ प्राधान्येन कार्य्यातिदेशस्यैवौचित्यात्
नुपपत्तिरत आह

---

) ॥ अस्तु तर्हि प्राक्सनो येभ्य आत्मनेपदं दृष्टं तेभ्यः सन्नन्तेभ्योऽपि
ीति । ननु चोक्तं पूर्वस्यात्मनेपददर्शनात् सन्नन्तादात्मनेपदभाव इति
पादिष्वप्रसिद्धिरिति । नैष दोषः । अनुबन्धकरणसामर्थ्याद्भविष्यति ॥
ा अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तद्यथा । गोः
नि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकं भवति ॥ यद्यवयवे कृतं
समुदायस्य विशेषकं भवति जुगुप्सयति मीमांसयतीत्यत्रापि प्राप्नोति ।
पूर्व दोषः । अवयवे कृतं लिङ्गं कस्य समुदायस्य विशेषकं भवति । यं
गुपा

---

ष्यति ॥ एवं च कृत्वेति । भा । द्वितीयसन् ग्रहणस्येहानुवृत्त्येति
॥ न च शब्दिरेवेति । भा । सामग्र्याः कारणत्वं न केवलस्य शब्देः ।
पेह सामग्री नास्ति । सनः पूर्वस्य शब्देः स्थितोऽभावात् ॥ अथापीति ।
। स्थिता विशेष्यमाणत्वाच्छब्देरेव प्राधान्यात् ॥ यत्र तर्हीति । भा ।
तेर्ङित्वात् पूर्ववत्सन इति सन्नन्तात्प्राप्नोत्येवेति भावः ॥ अथापीति ।

किमर्थमिति । (कै)

कार्य्यातिदेशेऽव्याप्ते निमित्तातिदेशोऽपि शंकित इति भावः ॥

भाष्ये

लिङ्गातिदेशादिति । (भा)

पूर्वस्य यल्लिङ्गं ङित्त्वादि तदतिदिश्यते इत्यर्थः ॥ ननु कर्त्रभिप्राये क्रियाफले सर्वथा तङा न निवृत्तये १"अनुपराभ्याम्" इत्यनेन ङित्त्वस्यैव बाधोऽत आह

अनुपराभ्याम् इति । (कै)

परस्मैपदनियमेनैवेष्टसिद्धेर्निमित्तनिवर्त्तनमयुक्तमिति भावः ॥

१ अ १ । पा । ३ । सू ७२ ॥

समुदायं योऽवयवो न व्यभिचरति । सनं न व्यभिचरति णिचं पुनर्व्यभिचरति । तद्यथा ; गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति । न गोमण्डलस्य ॥ प्रत्ययग्रहणं णियगर्थम् । वा । प्रत्ययस्य ग्रहणं कर्त्तव्यम् । पूर्ववत्प्रत्ययादिति वक्तव्यम् । किम्प्रयोजनम् । णियगर्थम् । णियगन्तादपि यथा स्यादिति । आकुस्मयते विकुस्मयते । हृणीयते महीयत इति ( ३ । १ । २५, २७ ) ॥ तत्र को दोषः । तत्र हेतुमण्णिचः प्रतिषेधः । वा । तत्र

भा । "म्रियतेर्लुङ्लिङोश्च" इति नियमार्थमारब्धमिति भावः ॥ किं पुनरिति । भा । किमयं कार्य्यातिदेशः । यथा पूर्वस्मादात्मनेपदं विधीयते तथा सन्नन्तादपीति । आहोस्विन्निमित्तातिदेशः । पूर्वस्य यन्निमित्तं ङित्वाद्य तत् सन्नन्तस्यातिदिश्यते निमित्ते चातिदिष्टे तत् प्रयुक्तत्वादेव कार्य्यं भवतीति प्रश्नः ॥ गन्धनेभ्य इति । भा । नित्यसन् विषयत्वात् ॥ क्रमादिष्विति । भा । "अनुपराभ्यां कृञः" (१।३।७९) इत्यनेन परस्मैपदमेव विधी-

तत्सामर्थ्यादिति। (कै)

नित्यसन्नन्तत्वात् न किंचित्प्रयोजनसंभव इति भावः ॥
रिभाषाया अवाधेनोपपत्तौ वाधो न न्याय्योऽतः पक्षान्तरमित्याह

समुदाये इति। (कै)

सामर्थ्यात्परिभाषावाधो वा सामर्थ्यात्समुदायोपकारकत्वं वेति पक्षयोर्भेदः ॥

[1]भाष्यं वार्त्तिकं च इति (कै)

"प्रत्ययग्रहणमिति" वार्त्तिकं "पूर्ववत्प्रत्ययादिति वक्तव्यमिति" भाष्यं चासङ्गतं स्यादिति भावः। "आकुस्मादात्मनेपदिनः" इति गणसूत्रात् कुस्म आत्मनेपदी "हृणीङ् महीङौ" कण्ड्वादी ङित्तौ ॥ भाष्ये

[1] उपलब्धविवरणे "वार्त्तिकं भाष्यं च" इति पाठोऽस्ति कैयटे तु "भाष्यं वार्त्तिकं च" इत्येव ॥

हेतुमण्णिचः प्रतिषेधो वक्तव्यः ( ३। १। २६ )। आसयति शाययतीति। सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु। कथम् आकुस्मयते विकुस्मयते हृणीयते महीयते इति। अनुबन्धकरणसामर्थ्याद्भविष्यति ॥ अथवावयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति ॥ यद्यवयवे कृतं लिङ्गं समुदायस्य विशेषकं

यते न तु ञित्त्वं निवर्त्यते। पूर्वकार्य्येऽतिदिश्यमाने अत्र दोषाभावः। परस्मैपदेनात्मनेपदस्य वाधितत्वात्। पूर्वस्यात्मनेपदकार्य्यादर्शनात् सन्नन्तस्याप्रसङ्गात् ॥ अनुवन्धस्येति। भा। तत् सामर्थ्यात् सन्नन्तवधायकः ॥ अथवेति। भा। समुदाये लिङ्गासङ्गस्य उपायोऽवयवे लिङ्गासङ्गः ॥ प्रत्ययग्रहणमिति। भा। यद्येवमति प्रसङ्गः पणायति पनायतीति। तत्र केचि-

अनुबन्धकरणसामर्थ्यादिति । (भा)

आकुस्मादात्मनेपदित्वोक्तिसामर्थ्यादित्यपि बोध्यम् । यद्वा तस्या-
त्मनेपदविकल्पो बोध्य इत्यर्थ इति भावः ॥ इतरत् स्पष्टम् ॥

---

# आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ।

## १ । ३ । ६३ ॥



ननु तदभावेऽस्तिभूभ्यामपि स्यादत आह

कृञ एवेति । (कै)

कृञो ञित्वादिति भावः ॥ भाष्ये

---

भवति कुमारीयति मह्यीयति अत्रापि प्राप्नोति : अवयवे कृतं लिङ्गं कस्य
समुदायस्य विशेषकं भवति यं समुदायं योऽवयवो न व्यभिचरति । यत्कं च
न व्यभिचरति शिचं तु व्यभिचरति । तद्यथा । गोः सक्थनि कर्णे वा कृतं
लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य ॥

---

दाङः । पूर्ववद् णियक्सन इति प्रत्ययविशेषा एव निर्देष्टव्याः । अन्ये त्वाहुः ।
एवं पाठे भाष्यं वार्त्तिकं च न व्याख्यातं भवतीति हेतुमण्णिचः प्रतिषेध
इत्यतिप्रसक्तविषयोपलक्षणार्थं हेतुमण्णिज् ग्रहणम् ।

आम्प्रत्ययादिति (भा)

बहुव्रीहिणा आम्प्रत्ययप्रकृतेरित्यर्थः॥ सन्निधानं प्रयोजकव्यापारः क्रियाफलस्य कर्तृगामित्वं वा॥

यथेति। (कै)

वक्ष्यमाणं [1]"स्वरितञित" इत्येतत्प्रत्याख्यानमभिप्रेत्येदम् उपपादयिष्यते चेदं "स्वरितञित" इति सूत्रे॥

न वर्त्तते इति। (कै)

अनभिधानादिति भावः॥ सूत्रारम्भरीत्या समाधत्ते

नैष दोष इति॥ (भा)

तदा (कै)

तदर्थाभियुक्तये इत्यन्वयः॥ अनुवृत्तावपि कथमेकेन वाक्येनार्थद्वयावगतिरत आह

वाक्यभेदेनेति। (कै)

आद्यस्य विधित्वम्। द्वितीयस्य पूर्ववदेवात्मनेपदं नलन्यथेति नियमार्थत्वमित्यर्थः॥

ईहां चक्रे (भा)

इत्यत्राकर्तृगेऽपि क्रियाफले आत्मनेपदसिद्धिर्विधेः फलं बोध्यम्॥

---

१ अ १। पा ३ सू ७२।

# प्रोपाभ्यां युजेरयज्ञपात्रेषु । १ । ३ । ६४ ॥



स्वराद्यन्तोपसृष्टादित्युक्ता प्रविनय उदाहृतास्तत्कथमत आह

[1]सम्निस् दुरिति ॥ (कै)

स्वरादेः

स्वरान्ताद्येत्यर्थ इति भावः ॥

# भुजोऽनवने । १ । ३ । ६६ ॥



भाष्ये

निभुजति जानुशिरसी इति । (भा)

प्रतिमाया इतिशेष । अतः प्राप्त्यङ्गत्वाभावान्नैकवत्त्वम् ॥ अनवननिषेधेनाभ्यवहारवृत्तेरेवेति कथं लभ्यमत आह

संसर्गवदिति ॥ (कै)

सवर्करेति । (कै)

धेनुशब्दस्य धानकर्मत्वमेव प्रवृत्तिनिमित्तं न तु गोत्वसमानाधिकरणमेव तदितिभावः ॥

---

१ सम् निस् दुर् इत्येतान् निरस्य सर्वे उपसर्गाः संगृहीताः ॥

# णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने । १ । ३ । ६७ ॥

अणौ कर्मणः कर्तृत्वस्य सूत्रकृतोक्तत्वात् कर्मान्तरनिवृत्तिपरत्वे वार्त्तिकतात्पर्य्यमाह

एकस्मिन्निति ॥ (कै)

अत एव वार्त्तिकव्याख्यानभाष्ये

णेरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने । १ । ३ । ६७ । णेरात्मनेपदविधाने ऽण्यन्तस्य कर्मत्वात्तत्रोपलब्धिः । वा । णेरात्मनेपदविधानेऽण्यन्तस्य यत्कर्म यदा ण्यन्ते तदेव कर्म भवति तदात्मनेपदं भवतीति वक्तव्यम् ॥ इतरथा हि सर्वप्रसङ्गः । वा । इतरथा हि सर्वत्र प्रसङ्गः स्यात् । इहापि

---

एकस्मिन् वाक्ये कर्मान्तरनिवृत्तिरलभ्येति णेरिति वार्त्तिकारम्भः । एकवाक्यतायां ह्ययमर्थः । ण्यन्तादात्मनेपदं भवति अण्यन्तावस्थायां यत्कर्म ण्यन्तावस्थायां यदि स कर्त्ता भवत्याध्यानादन्यत्रेति । भवति च कर्मान्तरसद्भावेऽप्यणौ कर्म णौ कर्त्ता । भाष्यकारस्तु वाक्यभेदाश्रयेणैतमर्थं साधयति । णेरात्मनेपदं भवति इत्येकं वाक्यम् । ततो ऽणौ यत्कर्म णौ चेदिति द्वितीयम् । अत्र वाक्ये यत्तदोर्नित्यसम्बन्धाद् यच्छब्देन तच्छब्द आक्षिप्यते । धर्मान्तरस्य चानिर्देशात् कर्मत्वमेव संनिधानात् प्रतिनिर्दिश्यते । अणौ

---

णेरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने । १ । ३ । ६७ । ण्यन्तादात्मनेपदं स्यादनाध्याने । अणौ यत्कर्म णौ चेदिति द्वितीयं वाक्यम् । कर्मेह क्रिया विषयप्रकृत्यर्थप्राप्ता या सैव चेण्यन्तेनोच्यतेत्यर्थः । स कर्त्तेति

तदेव (भा)

इति प्रयुक्तम् ॥ यत्त्वेतद् वार्त्तिकस्य कर्मपदं क्रियापरत्वेन व्याचष्टे तन्न "कर्त्तरि कर्मव्यतिहारे" ( १ । ३ । १४ ) इति सूत्रे "क्रियाग्रहणं कर्त्तव्यम्" इति सूत्रकारं शिक्षयतो वार्त्तिककारस्य कर्मशब्दः क्रियापर इत्यर्थाज्ञानेन तद्वाक्यस्थकर्मपदानां क्रियापरत्वेन व्याख्यानस्यात्यन्तमनौचित्यात् । एवं च सूत्राचार्यैस्तदर्थसाधनपाठभाष्यस्थकर्मपदानामपि तथा व्याख्यानमुक्तमेवेति ध्येयम् ॥ भाष्ये

आरोहन्ति हस्तिनमिति । (भा)

---

प्रसज्येत । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान् ॥ तर्हि वक्तव्यम् । न वक्तव्यम् । कस्मान्न भवति । आरोहन्ति हस्तिनं हस्तिपकाः आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान् इति । एवं वक्ष्यामि णेरात्मनेपदं भवति । ततोऽणौ यत्कर्म णौ

---

यत्कर्म णौ चेत् तत्कर्म इति प्रतिनिर्देशेन च कर्मान्तरव्यावृत्तिः क्रियते न त्वणौ कर्मणो णौ कर्मत्वसद्भावः प्रतिपाद्यते । स कर्त्तेति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात् युगपदेकक्रियापेक्षया कर्मत्वकर्तृत्वविरोधात् एकस्य । यथेष्टं वाक्यशेषपरिकल्पनादणौ यत्कर्म णौ चेत् तदेव कर्म इत्येवकाराध्याहारात् कर्मान्तरनिवृत्तिलाभः । ततः स कर्त्तेति तृतीयं वाक्यं णौ कर्मणो णौ कर्तृत्वप्रतिपादनपरम् । एवमेषां वाक्यानामेकवाक्यत्वे

---

तृतीयं वाक्यम् । अणावित्याद्यनुवर्त्तते कर्मेह कारकं शब्दाधिकाराश्रयणात् । णिच् प्रकृतेरर्थं प्रति यत्कर्मकारकं स चेद्यन्ते कर्त्तव्यर्थः । "णिचश्च" ( १ । ३ । ७४ ) इत्यात्मने पदे सिद्धेऽपि अकर्त्रभिप्रायार्थमिदं सूत्रम् । कर्त्रभिप्रायेऽपि "विभाषोपपदेन प्रतीयमान" इति विकल्पबाधनार्थं च ।

आरोहन्ति हस्तिनं हस्तिपका आरोह्यमाणो हस्तीत्यत्रैव
स्थलमारोहयति मनुष्यान् इत्यत्रापि स्यादित्यर्थः ॥ मनुष्या हस्ति-
नमारोहन्तीत्यण्यन्तावस्था स्थलमिति चातिरिक्तं कर्मेतिभावः ॥
सौकर्य्यातिशयप्रतिपादनाय प्रेरणा वृद्धिवत्तत्प्रतिपादनायैव स्थल-
निष्ठन्यग्भवनरूपकर्त्तांशवृद्ध्या द्विकर्मकत्वकरणम्। एवं च न्यगभव-
नारोहणोभयानुकूलव्यापारो धात्वर्थः। स्थलं न्यग्भावयन् मनुष्यान्
आरोहयतीत्यर्थः। स्थलशब्देन च गजपृष्ठस्थं काष्ठमयमुपवेशनस्था-
नमुच्यते। हस्तीति मध्यमणिन्यायेनोभयान्वयि ॥

## प्रतिनिर्दिश्यत इति। (कै)

विधीयत इत्यर्थः। कर्मशब्दश्चात्रोत्तरवाक्यवत्कारकपर एवे-
तिभावः ॥ एवमपि कर्मान्तरनिवृत्तिः कथमित्यत आह

---

चेत्। अण्यन्ते यत्कर्म णौ चेत्सौ यदि तदेव कर्म भवति। ततः स कर्त्ता।

---

महावाक्यं वाक्यसंस्कारकं सम्पद्यते ॥ यद्येवमिति। भा। यथा लुनाति
केदारं देवदत्तः लूयते केदारः स्वयमेवेति। केदारः कर्मकर्त्ता तथाण्यन्तेऽपि
भवति लावयते केदारः स्वयमेवेति। कथमिति चेत्। उच्यते। लुनातिस्ता-

---

"अणावकर्मकाद्" (१।३।८८) इति परस्मैपदबाधनार्थं च। न चाकर्त्रभिप्राये
चरितार्थस्यास्य विकल्पपरस्मैपदाभ्यां पराभ्यां बाधः स्यादिति वाच्यम्।
पूर्वविप्रतिषेधाश्रयणात्। अत्र च प्रमाणं दर्शयते राजेति भाष्योदाहरण-
मिति दिक्। उदाहरणन्तु कर्तृस्थभावकाः कर्तृस्थक्रियाश्च। तत्र हि कर्म-
वद्भावो नास्तीति वक्ष्यते। प्रकृतसूत्रेणैव त्वात्मनेपदम्। तथाहि। विषय-
त्वापत्त्युपसर्जनविषयत्वापादानवचनो दृशिः सकर्मकाणामशब्दाभिप्रायिता-
नियमात्। तत्र धातूपात्तव्यापाराश्रयः कर्त्ता धात्वर्थभूतव्यापारव्यधिकरण-

स कर्त्तेति ॥ (कै)

कर्तृत्वं प्रतिकर्मत्वं किं न स्यादत आह

युगपदिति । (कै)

न चैकस्यैकदैव व्यापारव्यधिकरणफलाश्रयत्वं व्यापाराश्रयत्वं च सम्भवतीति भावः ॥

यथेष्टमिति । (कै)

प्राक्तन संस्कारकत्वानुरोधेनेत्यर्थः । एतेन अणौ द्विकर्मका एवास्योदाहरणमित्यपास्तम् । अण्यन्तावस्थाकर्मत्वावच्छेदेन कर्तृत्वप्रतिपादनात् । इदमेव ध्वनयितुं भाष्ये दृष्टान्त-सूत्रोदाहरणं दर्शितम् एवं चाकर्मकाणामेतत्सूत्रोदाहरणत्वं शूल-तम् ॥ तद्ध्वनयन्नाह भाष्ये

कर्त्ता चेत् स भवति याविति । यद्येवं कर्मकर्तारं भवति तत्र कर्मकर्तृत्वात्

बहिधाभवनोपसर्जने द्विधाभवने वर्त्तते । लुनाति केदारं देवदत्तः । द्विधा-भवन्तं द्विधाभावयतीत्यर्थः । यदा तु केदारस्य सौकर्यातिशयविवक्षायां देवदत्तस्य व्यापारो न विवक्ष्यते यदा द्विधाभवनमात्रे लुनातिर्वर्तते अनेक

कलाप्राप्तिकर्म तथा च पश्यन्ति भवं भक्ताः इति प्रयोगः । चाक्षुषज्ञा-विषयीकुर्वन्तीत्यर्थः । यदा तु सौकर्यातिशयविवक्षया प्रेरणाप्रकरणं तदा पश्यति भव इति प्रयोगः । विषयो भवतीत्यर्थः ॥ उक्तञ्च

"निवृत्तप्रेषणं कर्म स्वक्रियावयवैः स्थितम्
निवर्त्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते"

इति । ततः पश्यन्तं प्रेरयन्तीति णिचि दर्शयन्ति भवं भक्ता इति प्रयो-पयन्तीत्यर्थः ॥ उक्तञ्च

यद्येवमिति (भा)

कर्मकर्तृत्वात् सिद्धम् (भा)

च॥ नन्विदमनुपपन्नं समानधातौ कर्मस्थक्रियया तुल्यक्रिय-
कर्मवद्भावः। न चात्र तथा। तथा हि लावयतीत्यत्र किं
ाति कर्मणा समानक्रियत्वम् उत लावयति कर्मणा। नाद्यः।
ाण्यन्तत्वेन धातुभेदात्। नान्त्यः। लुनातेर्णिचि लावयति केदारं
हत्तेन यज्ञदत्त इत्यत्र केदारस्य प्रकृत्यंशकर्मत्वेन तथैव धातु-
ात्॥ लवनकर्तुस्तु गत्यादिनियमात् कर्मत्वमेव न इत्यत आह

यथा लुनातीति॥ (कै)

दृष्टान्तमुपपादयति

---

सिद्धम् (३। १। ८७॥ १। ३। १३)। कर्मकर्तृत्वात् सिद्धमिति चेद् यक्
चिणोर्निषेधार्थं वचनम्। वा। कर्मकर्तृत्वात् सिद्धमिति चेद् यक् चिणोर्नि-

---

वाद्धातूनाम्। भिन्ना एव वा धातवो भिन्नार्थाः साहचर्यात्तु तत्त्वाध्यव-
ायः। तत्र द्विधाभवने केदारस्य कर्तुः कर्मवत् कर्मणा तुल्य क्रियत इति
कर्मकार्याण्यति दिश्यन्ते। तेन लूयते केदारः स्वयमेव इत्यादयः प्रयोगा

---

"निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते"

इति॥ ततः पुनर्णिजर्थस्य सौकर्यद्योतनार्थमविवक्षायां दर्शयते भवः विषयी-
भवतीत्यर्थः। तदिह पश्यति दर्शयत्योः समानार्थतया कर्तृस्थभावकत्वाच्च
कर्मवद्भावविरहे प्राप्तसूत्रेणात्मनेपदम्। इह हि णिच् प्रकृतिभूतेन दृशिना
य एवार्थो द्वितीयकक्षायामुपात्तः स एव चतुर्थ्यामिति समानक्रियत्वमस्ति
णौ यत्कर्म प्रथमकक्षायां तदेव कर्तृ। एवम् आरोहयते हस्तीत्यप्युदाहर-
ाम्। आरोहन्ति हस्तिनं हस्तिपकाः। न्यग्भावयन्तीत्यर्थः। आरोहति

लुनातिस्तावदिति । (कै)

सौकर्य्यातिशयोनायासेन द्विधाभवनाश्रयत्वं तच्च कर्त्तृव्यापारस्य दृष्टत्वेन कर्त्तृव्यापारविवक्षायामपि अनुदराकन्येतिवत् तत्र पर्य्यवसानम् दृष्टत्वादेव तस्य स्वातन्त्र्येण धातुवाच्यतेति द्विधाभवनमात्र वृत्तित्वं लुनातेर्बोध्यम् । क्वचित् फलव्यापारयोः शक्तिः क्वचित् फले इति कथमत आह

अनेकार्थत्वादिति । (कै)

---

इत्यर्थमिदं वक्तव्यम् । कर्मापदिष्टौ यक् चिणौ ( ३ । १ । ६७–६६ ) मा भूतामिति ॥ न वा यक् चिणोः प्रतिषेधात् । वा । न वैष दोषः । किं कार-

---

उपपद्यन्ते । अत्रापि स्वयमित्यस्य यदा आत्मनेत्यर्थस्तदा आत्मापेक्षया कर्मत्वमस्त्येवेति लूयते केदार इत्येतावदुदाहार्य्यम् । वृत्तिकाराणां तु स्वयमिति वचनं कर्त्रन्तरव्युदासपरं विज्ञेयम् । अथवा स्वयमित्यनेन करणत्वमात्मनः प्रतिपाद्यते न तु कर्तृत्वम् । ततो यदा द्विधाभवन वृत्तेर्लुनातेर्देवदत्तादिप्रयोजकव्यापारे णिजुत्पद्यते तदा य एवार्थो लुनाति केदारं

---

इत्तो न्यग्भवतीत्यर्थः । ततो निवृत्तप्रेषणास्विधि आरोहयन्ति । आरोहन्तीत्यर्थः । ततः पुनरण्यर्थत्यागे आरोहयते । न्यग्भवतीत्यर्थः । इहापि प्राग्वत् प्रथमतृतीययोर्द्वितीयचतुर्थ्योश्चार्थसाम्यात् चतुर्थी कक्षा उदाहरणम् । सोऽयं निवृत्तप्रेषणापक्षः । आह च

"न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते
न्यग्भावनं न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते"
"अवस्थां पञ्चमीमाह ण्यन्तानां कर्मकर्तरि
निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते" ॥

तदुक्तम्,—

"एकदेशे समूहे च व्यापाराणां पचादयः

स्वभावतः प्रवर्त्तन्ते तुल्यरूपसमन्विता" इति ॥

केचिदर्थभेदाच्छब्दभेदमिच्छन्ति तन्मतेऽप्याह

भिन्ना एवेति ॥ (कै)

नन्वेवं धातुभेदात् कर्मवद्भावो न स्यादत आह

सारूप्यादिति ॥ (कै)

तदुक्तम्,—

"तानि धात्वन्तराण्येव पचिं सिध्यति वद्विदुः

भेदेऽपि तुल्यरूपत्वादेकत्वपरिकल्पना"

इति ॥ नन्वेवं केदारः कर्त्तैव इति कथमयं कर्मकर्त्तेत्यत आह

---

याम्। यक् चिणोः प्रतिषेधात्। प्रतिषिध्येते अत्र यक् चिणौ। यक् चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानमिति (३।१। ८९)॥ यत्तर्हि न

---

देवदत्त इति स एवार्थो लावयति केदारं देवदत्त इति। पुनः केदारस्य सौकर्यातिशयविवक्षायामविवक्षिते देवदत्तस्य व्यापारे द्विधाभवनभाव-शक्तिर्लावयतिः सम्पद्यते। ततश्च य एवार्थो लूयते केदारः स्वयमेवेति

---

इति॥ इह विशिष्टवाचकयोः शुद्धण्यन्तयोर्वाच्यावंशौ वाचकभेदाद् द्वेधा गणयित्वा पूर्वोक्तप्रथमतृतीयकक्षायामवस्थाचतुष्टयं चतुर्थकक्षायां तु पञ्चमी अवस्थेति श्लोकार्थोऽभिप्रेतः। यद्वा। पश्यन्ति भवं भक्ताः। आरोहन्ति हस्तिनं हस्तिपका इति प्रागवदेव प्रथमकक्षा। ततः सौकर्यद्योतनार्थं कर्मण एव प्रेषणमध्यारोप्य णिच् क्रियते। दर्शयति भवः। आरोहयति हस्तीति पश्यत आरोहतश्च प्रेरयतीत्यर्थः। ततो णिच् प्रकृतिभ्यां णिजभ्यां

तच्चेति । (कै)

आतिदेशिकस्तथा व्यवहार इति भावः । इयं च द्वितीयावस्था । यावतीषु सोपानस्थानीया स्वार्थविभागभूमिषु पदं विन्यस्य इयं प्रायोगिकी पर्य्यन्तभूमिः प्राप्यते ता अन्तरालभाविन्यो गम्यमाना भूमयोऽवस्थाशब्देनोच्यन्ते । तत्र प्रथमं द्विधाभवनं बुद्धिरवगाहते । द्विधा भवनेऽस्य स्वरूपयोग्यतां ज्ञात्वैव कर्त्तुर्द्विधा भवने प्रवृत्तेः । अन्यथा शिलायामङ्कुरोत्पादनायेवाप्रवृत्तिप्रसङ्गात् । ततो द्विधा भवने कर्मतापत्त्यवगाहनं ततोऽत्यन्तसौकर्य्याय नानेन प्रयुक्तः सन् द्विधा भवति किन्तु स्वत एवेति । (ख) प्रेरणाऽसंवलितद्विधाभवनलक्षणस्वातन्त्र्यावगाहनमिति द्विधाभवनमात्रवृत्तित्वे कर्मवद्भावः स्पष्टं चेदं हेलाराजीयादौ । विशिष्टवाचको धातुर्विशेषणे पर्य्यवसन्न इति । इमां द्वितीयकक्षालेन व्यवहरन्ति ॥ दृष्टान्तमुपपाद्य दार्ष्टान्ते उपपादयति

---

हेतुमणिच् तदर्थमिदं वक्तव्यम् । तस्य कर्मापदिष्टौ यक्चिणौ मा भूता-

---

स एव लावयते केदारः स्वयमेवेति । न च प्रयोज्यप्रयोजकभावनिवृत्तौ णिचो निवृत्तिः । उपायनिवृत्तावपि उपेयानिवर्त्तनात् । सिद्धशब्दव्युत्प-

---

त्त्योपात्तयोर्द्वयोरपि प्रेषणयोर्युगपत् त्यागे दर्शयते आरोहयते इत्युदाहरणम् । विषयीभवति व्यग्रम्भवति इति च पूर्ववदेवार्थः । सोऽयमध्यापितप्रेषणमध्ये दर्शयति नव आरोहयति हस्तीति द्वितीयकक्षायामतिव्याप्तिं वारयितुं समानाश्रयत्वपरं द्वितीयं वाक्यम् । तेन प्रेषणाधिक्यान्नातिव्याप्तिः । निवृत्तप्रेषणपक्षे दर्शयन्ति भवमारोहन्ति हस्तिनमित्येवं रूपं तृतीयकक्षायामतिव्याप्तिं वारयितुमणौ यत् कर्म स चेत्सौ कर्तेत्येवं रूपं

तत्तो यदेति। (कै)

तत्र लुनाति केदारमिति कक्षापेक्षयाऽस्यां कक्षायां णिच् विशेषः। तस्यां द्विधाभवनस्वरूपयोग्यतामात्रनिश्चयेन द्विधा-भावनारूपे तत्प्रयोजकव्यापारे प्रवृत्तिः। अस्यां तु द्विधाभवने स्वत एव प्रवृत्तं दृष्ट्वा तत् क्षेमाय कर्तॄणां प्रवृत्तिरिति वक्ष्यमाणसौकर्य्य-प्रतीतिलक्षणविच्छित्तिविशेषलिप्सया णिजुपादानम्॥

सौकर्य्यातिशयेति। (कै)

अस्यान्तु कक्षायां स्वतः प्रवृत्तस्तत् क्षेमायामपि न प्रयोजक-व्यापारमपेक्षत इति सौकर्य्यातिशयविवक्षया प्रयोक्तृव्यापाराविव-क्षेतिभावः। इयं प्रायोगिकी पञ्चमी पर्य्यन्तभूमिः॥ तदुक्तम्—

"अवस्थां पञ्चमीमाहुर्ण्यन्तानां कर्मकर्त्तरि" इति॥

---

मिति। उत्पुच्छयते पुच्छं स्वयमेव। अत्रापि यथा भारद्वाजीयाः पठन्ति तथा भवितव्यं प्रतिषेधेन। यक् चिणोः प्रतिषेधे णिश्रिग्रन्थिग्रन्थिब्रूञात्मने-

---

पदे हि प्रकृतिप्रत्ययविभागकल्पना आश्रीयते। अर्थस्योपादानं त्याग-श्च क्रियते। लौकिके तु व्यवहारे सौकर्य्यमात्रविवक्षायां लावयते केदार इति प्रयुज्यते। एवं तावत् णिवृत्तप्रेषणाद्धातोः प्रकृतेऽर्थे णिजुच्यते

---

इतीयं वाक्यम्। इह तु अणौ कर्मणोर्भवे हस्तिनोः कर्मत्वमेव न तु कर्तृ-तेति कातिव्याप्तिः। अत्र प्राहुः। अणौ यत्कर्मेति वाक्यं कर्मान्तरनिवृत्ति-परम्। तथा हि। यत्तदोर्नित्यसम्बन्धाद् इह यच्छब्देन तच्छब्द आक्षिप्यते धर्मान्तरस्य चानिर्देशात् उद्देश्यतयापि श्रुतं कर्मत्वमेव विधीयते। तच्च विधीयमानं सामर्थ्यात्सेरितस्य सन्निहितत्वाच्च ण्यन्तावस्थायामेव विधीयते। न त्वणौ तद्विधानं सम्भवति अणौ यत्कर्म इत्यनुवादसामर्थ्यादेव तत् सिद्धेः॥

तस्याः पञ्चमीत्वं चैवम्॥ तत्र द्वितीयकक्षायां फलसमानाधिकरणो व्यापारोऽर्थः। ततो णिचि तृतीयकक्षा। ततो णिजर्थव्यापारस्य प्रकृत्यर्थस्य फलसमानाधिकरणव्यापारस्य च त्यागे चतुर्थी कक्षा। ततः फलसमानाधिकरणे व्यापारे प्रवर्त्तनात्वेन विवक्षिते णिचि उदाहरणभूतायाः पञ्चमीत्वम्॥ उभयत्रापि णिज् निर्वाहाय सर्वान्ते हरिणा "निवृत्तप्रेषणादि"त्युक्तम्। तदाह

## उपायनिवृत्तावपीति। (कै)

मुख्यप्रयोजकव्यापारनिवृत्तावपि स्वव्यापारे एव तत्त्वारोपात्तद्-निवृत्तिरिति भावः॥ एतच्च "शब्देन्दुशेखरे" विस्तरेण निरूपितम्। तदाह

---

पदाकर्मकाणामुपसंख्यानमिति (३।१।८९)॥ स चावश्यं प्रतिषेध आश्रयितव्यः। इतरथा हि यत्र नियमस्ततोऽन्यत्र प्रतिषेधः। वा। अनुच्य-

---

इत्येतद् पक्षाश्रयेण कर्मकर्त्ता व्याख्यातः। अपरकल्पः। लुनाति केदारं देवदत्तः। लुनन्तं देवदत्तं सौकर्यातिशयात् केदारः प्रयुङ्क्ते इति केदारव्यापारे णिजुत्पद्यते लावयति केदारो देवदत्तेनेति। पुनः प्रयोज्यप्रयोजकभावाविवक्षायां लावयते केदारः स्वयमेवेति प्रयुज्यते। तत्र पूर्वप्रक्रियाश्रयणे

---

तदेवमणौ यत्कर्मइत्येतावत एवाणौ यत्कर्म णौचेत् तत्कर्म इत्यर्थः फलितः। अनेन च कार्यान्तरनिवृत्तिः क्रियते। न त्वणौ कर्मणो णौ कर्मत्वं प्रतिपाद्यते। स कर्म इत्युत्तरवाक्येन तस्य कर्तृत्वप्रतिपादना। एकस्य युगपदेकस्यां क्रियायां कर्मकर्तृत्वयोरसम्भवात् तस्मात्

"उद्देश्यप्रतिनिर्देश्यात्स्वभ्ये यत् संग्रहे पुनः
तद्ग्रहो वाक्यभेदेन कर्मान्तरनिवृत्तये"

सिद्ध शब्देति। (कै)

ननु लूयते केदार इति प्रयोगे सति किमर्थं णिच् प्रत्ययघटितप्रयोगादरोऽत आह

स्वौकर्येति। (कै)

लूयते केदार इति कक्षायां स्वत एव प्रयोज्यस्य स्वव्यापारे प्रवृत्तिरिति सौकर्यप्रतीतिमात्रं पञ्चम्यास्तु क्षेमार्थमपि प्रयोजकव्यापारो नापेक्षित इति तदतिशयस्य लाभादेतदादर इति भावः॥ प्रकृते प्रयोगान्तरे प्रकृतिवाच्ये व्यापारे अध्यारोपितप्रेषणपक्षमाह

अपर इति॥ (कै)

लुनन्तमिति। (कै)

स्वयं द्विधाभवने प्रवृत्तं केदारं लविता क्षेमाय प्रयुङ्क्ते इति निवृत्तप्रेषणे चतुर्थी कक्षा। इह तु स्वत एव द्विधाभवने प्रवृत्त इत्येतावदेव न किन्तु प्रत्युत स एव लवितारं प्रयुङ्क्ते इति प्रयोज्यत्वाभिमतस्य प्रयोजकत्वेनाधिकः सौकर्यातिशय इति भावः॥

---

मानेष्वेतस्मिन्यत्र नियमस्ततोऽन्यत्र तेन यक् चिणोः प्रतिषेधो वक्तव्यः "कर्मवत्कर्मणातुल्यक्रिय" (३।१।८७) इति सिद्धमात्मनेपदम्। तथा हि। लावयति केदारं देवदत्त इत्यत्र यस्मिंल् लावयतौ धातौ तादृशी कर्मावस्थायां केदारस्य द्विधाभवनलक्षणा क्रिया तस्मिन्नेव धातौ तादृशी

---

ततो णौ चेदिति वाक्यान्तरम् अणौ यदित्येव। अणौ यत्प्रतिपाद्यं तच्चु तेदेव णौ प्रतिपाद्यं चेदित्यर्थः इति व्याचख्युः। अत्रेदं चिन्त्यम्। कर्मान्तरनिवृत्तिपरं व्याख्यानं यद्यपि कर्तुं शक्यं तथापि तस्य फलं दुर्लभम्। आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान् इत्यस्य व्यावृत्तिः फल-

लावयते केदारो देवदत्तेनेति। (कै)

अत्र [1]"लावयति" इति पाठस्तु लेखकप्रमादात्। ग्रन्थकृद्वक्ष्यमाणसिद्धान्तरीत्यानेनात्मनेपदप्राप्तेः। यद्वा कर्मकाण्येवोदाहरणानीतिमन्यमानस्याचत्य पूर्वपक्षिणो मतेऽनुपदवक्ष्यमाणरीत्या कर्मवद्भावाप्राप्त्या तथोक्तिः॥ नन्वेवमत्रैव कर्मवद्भावाप्राप्तिविषये सूत्रस्यावश्यकत्वेन कथं कर्मवद्भावात् सिद्धमित्युक्तिरिति चे अचत्य कर्मपदस्य कर्मसंज्ञायोग्यार्थपरत्वेन तदतिरिक्तस्य देवदत्तरूपस्य फलाश्रयस्य सत्वेनैतदप्राप्तेः। कर्मसंज्ञा तु [2]"गति बुद्धि" इति नियमान्न इत्यन्यत्। "कर्तृकर्मेतरकर्माभाव" इति वक्ष्यमाणसिद्धान्तरीत्या त्वात्मनेपदं भवत्येवेति दिक्॥

---

१ उपलब्धकैयटे "लावयति" इति प्राठोऽस्ति॥

२ अ १। पा ४। सू ५२॥

---

स्यात्। गवायति गवां गोपालकः। गवायति गवाः स्वयमेव॥ आत्मनेपदं

---

कर्मवस्थायामिति सिद्धं लावयते केदारः स्वयमेवेति। द्वितीया तु प्रक्रिया सूत्रे एतस्मिन् आरब्धे सम्भवतीति प्रदर्शिता न तु तस्यां कर्मवद्भावः

---

मिति चेन्न। तत्र समानक्रियत्वाभावात्सौ चेदिति वाक्यं हि प्रतिपाद्यसाम्यार्थमिति वृत्तिपदमञ्जर्योः स्थितम्। न चेह तदस्ति। न चास्तु वृत्त्यादिमते दोषोऽयं भाष्यकैयटयोस्तु समानक्रियत्वस्यानुक्तत्वात् कर्मान्तरव्यावृत्तिपरकं वाक्यं सार्थकमेवेति चेत्। न। भाष्यमतेऽसमानक्रियत्वस्य व्याख्येयत्वात्। तस्यानुक्तत्वेप्यप्रत्याख्याततया सम्मतत्वात्। अन्यथा अध्यारोपितप्रेषणे द्वितीयकक्षायामतिप्रसङ्गात्। भाष्यवार्त्तिकयोः कर्मशब्दस्य क्रियापरतयैव व्याख्यातुं शक्यत्वाच्च। अभ्युपेत्यापि ब्रूमः मास्तु भाष्यमते समान-

## पुनरिति । (कै)

देवदत्ते प्रयोज्यत्वस्याविवक्षायां केदारे तन्निरूपितप्रयोजकत्वस्याप्यप्रतीतौ देवदत्तव्यापारस्याप्यप्रतीतेर्द्विधा भवनमात्रे लावयतिरिति भावः ॥ स्थलमारोहयति मनुष्यान् इति प्रत्युदाहरणे मपि प्रकरणे भाष्यकृद्ध्वनितः ॥

प्रद

## प्रदर्शितेति । (कै)

या हर्य्यादिभिरिति शेषः ॥ ननु तत्रापि कर्मवद्भावविषयत्वे तत्

प्र पर्य्यमिति भावः । एवं चाध्यारोपितप्रेषणपक्षाश्रयणेनात्रायं पूर्व-

इति ध्वनितम् ॥ वस्तुतो निवृत्तप्रेषणहृतीयकक्षामादाय

सम्भवः ॥ द्विधाभवनानुकूलव्यापाररूपार्थोपस्थितौ तत्प्रतिपाद-

ण्यन्ताण्यन्तयोर्द्वयोरपि शब्दयोरुपस्थित्यविशेषात् समानधातौ

---

।। वा । आत्मनेपदस्य च प्रतिषेधो वक्तव्यः । गणयति गणः स्वयमेव ॥

आत्मनेपदप्रतिषेधार्थं तु । वा । आत्मनेपदप्रतिषेधार्थमिदं वक्तव्यम् ।

---

प्नोति । लावयतौ केदारस्य कर्मत्वाभावात् कर्मणा समानधातौ तुल्यक्रिय-त्वाभावात् ॥ यक् चिणोर्निवृत्त्यर्थमिति । भा । अणौ यत्कर्म णौ चेत्स कर्त्ता तदा णेरात्मनेपदमेव नान्यदिति नियमार्थमेतदित्यर्थः ॥ उदगुपुच्छते पुच्छ-

---

क्रियत्वं तथापि दर्शयते भृत्यान् राजा इत्युदाहरणं व्याचक्षाणेन कैयटेन अणौ ये कर्तृकर्मणी तद्भिन्नं कर्म व्यावर्त्यते इति तावत् स्पष्टीकृतम् । तथा च मनुष्यान् इत्यस्याणौ कर्तृतया गत्यर्थादकुहेर्णौ कर्मत्वेऽपि दुर्वार-मात्मनेपदम् । मनुष्यस्थलयोरणौ कर्तृकर्मणोरेवेह कर्मतया तदितरकर्मा-भावात् । अपि च । सकर्त्ता इत्यंशोऽपीह नास्ति । हस्तिन एव कर्तृत्वात् । स्यादेतत् । आरोहयमाण इत्यत्राणौ कर्मणो हस्तिन एव कर्तृत्वं स एव

कर्मणा तुल्यक्रियत्वस्य ज्ञानसत्त्वात्। न चैवं लावयति केदारो देवदत्तेनेति द्वितीयकक्षायामपि कर्मवद् भावापत्तिः। व्यापार व्यधिकरणफलवाचकानां नेत्यर्थकसकर्मकानां प्रतिषेध इति वचनेन तदप्राप्तेरिति दिक्॥ परेतु तत्र पर्णे द्वितीयकक्षैवोदाहरणं वक्ष्यमाणसिद्धान्तरीत्या। तद्ध्वनयन् आह तु

न तु तस्यामिति (ग्रन्थे)

इत्याहुः॥ भाष्ये

यक्चिणोर्निवृत्त्यर्थमिति (भा)

[1]समानधातौ कर्मणा तुल्यक्रियात्व॥ नसत्त्वात्। नियमस्य सजातीयापेक्षत्वेन प्रत्ययान्तरस्यैव वारणात्तत्॥ यदिविनिवृत्त्यर्थमिति नोक्तम्॥

१ "समानधातौ" इत्यारभ्य "ज्ञानसत्त्वात्" इत्यन्तं नास्ति क पुस्तके॥

गमयति गम्यः स्वयमेव॥ इष्यत एवात्रात्मनेपदम्। किमिष्यत एवारोहितमिति। भा। कथं पुनरण्यौ कर्म विद्यते यावता पुष्कशब्दो द्रव्यवचनः अत्राहुः। अस्मिन्नेव विषये पुष्कशब्दः पुष्ककर्मिकायामुदसनक्रियाम वर्तते। तस्मात् स्वार्थे णिच्प्रत्ययः। ततो यदा आप्यमानां पुष्कं संस्कारवशा

च स्वयमारोहयतीत्यत्रापि कर्त्तेति। तदपि न। प्रत्यासत्तिवलेनैवाति प्रसङ्गभङ्गात्। तथा हि। ण्यन्तादात्मनेपदं स्यादणौ यत्कर्म स चेत् कर्त्ता इत्युक्ते प्रत्यासत्तेरेतद्गम्यते। येन णिचा ण्यन्तादात्मनेपदं विधित्सितं तत्प्रकृतौ यत्कर्म स चेत् कर्त्तेति। इह तु यत्रायमुपाधिः कृतमेव तत्रात्मनेपदम्। आरोहयमाणा इति यत्र तु न कृतं स्वयमारोहयतीति न तत्रायमुपाधिरस्ति। येनातिव्याप्तिः स्यात्। यत्तु हरदत्तेनोक्तम्। हस्तिपकानारोहयति

## एष दोष इति । (भा)

यद्दोषपरिहाराय त्वया नियमार्थत्वं व्याख्यायते स यक् चिण् प्राप्तिरूपो दोषो नेत्यर्थः । एवं चायुक्तं नियमार्थत्वमिति भावः ॥

## यावतेति । (कै)

एवं चाण्यन्तपुच्छशब्दस्य क्रियावचनत्वाभावेन तत्र कर्माभाव इति । क्रियमाणेऽपि सूत्रे यगादिनिवृत्तिर्न प्राप्नोति अनेन नियमस्य प्राप्त्यभावादिति भावः ॥

## उदसन क्रियायामिति । (कै)

यद्यपि णिङुपसंदान एव पुच्छपदं तत्समवेतक्रियापरं न केवलमित्यण्यन्तप्रयोगो दुर्लभस्तथापि शास्त्रदृष्ट्या कर्मवानण्यन्तोऽस्तीत्यभिमानः ॥

## भूतायाम् (कै)

इत्यनेन लुङ्विषयप्रदर्शनम् । केचित्तु णिजन्ताच्चिणि इदमुदाहरणमित्याहुस्तन्न ।

---

त्विन्न प्राप्नोत्यपि । इष्यते च प्राप्नोति च । कथम् । अथाविति कस्येदं

---

चक्रमिव भ्रमणक्रियायां भूतायां स्वातन्त्र्येण विवक्ष्यते तदा उदपुपुच्छते इत्यात्मनेपदमेव णिङन्तात् यथा स्यादित्येवमर्थमिदं सूत्रं सम्पद्यते ॥ गज-

---

हस्तीत्यत्र माभूदिति । तत्रेदं वक्तव्यम् । किमिदमध्यारोपितप्रेषणपक्षे द्वितीयकक्ष्यायामुदाहरणं किं वा निवृत्तप्रेषणपक्ष इति । नाद्यः । णिच्-वाच्यव्यापारभेदेन समानक्रियत्वाभावात् । न द्वितीयः । तत्राद्ययोः कक्ष्ययोरण्यन्तत्वात् । तृतीयस्यान्तु हस्तिनः कर्तृत्वायोगात् । हस्तिपकानां कर्मत्वा-

**यस्तर्हि न हेतुमण्णिच्** (भा)

इति भाष्यासङ्गतेः ॥ भाष्ये

**अत्रापि यथा भारद्वाजीया इति ।** (भा)

एवं च तेनैव नियमफलसिद्धेरनर्थकं सूत्रमिति भावः ॥ ननु सूत्रेणैव सिद्धे वार्त्तिके णिग्रहणमेव न कार्य्यमित्यत आह भाष्ये

**स चावश्यमिति ॥** (भा)

**अनुच्यमाने इति ।** (भा)

णिग्रहण इति शेषः ॥

---

गोर्ग्रहणम् । यस्मात्सेः प्राक्कर्मकर्त्ता वा विद्यते न चैतस्मात्सेः प्राक्कर्मकर्त्ता विद्यते ॥ इदं तर्हि प्रयोजनमनाध्यान इति वक्ष्यामीति । इह

---

यति गण इति । भा । गणोर्णामेव कर्मणावेव कर्तव्यस्य नियमस्याव्यापाराय् "णिश्रिद्रुस्रुभ्यः" इति वक्तव्य एव प्रतिषेधः । तस्यैव च व्यापकत्वान्नार्थोऽनेन सूत्रेणेत्यर्थः । कथं पुनरत्र कर्मवद्भावप्राप्तिः । यावताकर्मस्वभावकानां कर्मस्थक्रियायां च कर्मवद्भावो विधीयते । गणनं च संख्यानिमित्तकः परिच्छेदो

---

सम्भवाच । तस्माच्चतुर्थी परिच्छिद्यते । तत्रापि न्यग्भवतीत्यर्थीपर्य्यवसानेन 'कर्मणो नान्वयः स्पष्ट एव । स्यादेतत् । दर्श्यते भवान् राजेति तावद्भाष्ये सोक्तं तत्समर्थनाय यौ ये कर्तृकर्मणौ तदितरकर्मव्यवच्छेदोऽभिप्रेत इत्याह कैयटः । तस्याप्ययमाशयः । अणौ यत्कर्म इत्यत्र कर्त्तरिकर्म इत्ततोऽनुवृत्तं कर्त्तरीत्येतत् प्रथमया विपरिणम्यते । यत्र यत्र यदिति "नपुंसकमनपुंसकेन" (१।२।६९) इत्येकशेषः । तेन कर्मकर्त्रोर्यौ कर्मत्वेऽप्यदोषः । एवं च "करेणुरारोह्यते निषादिनम्" इति माघप्रयोगोपपद्यते इति । एवं स्थिते णिजन्तप्रेषणाध्यारोपितप्रेषणपक्षयोर्द्वयोरपि चरमकक्षायाम-

यच्च नियमः। (भा)

अण्यन्तादण्यन्तस्थले॥

ततोऽन्यच्चेति॥ (भा)

ण्यन्तैकविषये।

गणयति गण (भा)

इत्यादौ॥

प्रतिषेध इति। (भा)

सूत्रेणासिद्धेर्वार्त्तिके णिग्रहणाभावाच्चान्यदेव किञ्चिद्वचनं तेन वादिना कार्य्यं ततो वरं वार्त्तिक एव णिग्रहणमिति भावः॥ "गणयति" इत्यत्र सकर्मकाकर्मकावस्थयोरुभयत्रापि स्वार्थणिजेवेति बोध्यम्॥

---

मा भूत्। स्मरतिवनगुल्मस्य कोकिलः। स्मरयत्येनं वनगुल्मः स्वयमेवेति॥ एतदपि नास्ति प्रयोजनम्। कर्मापदिष्टाविधयः कर्मस्थभावकानां कर्मस्थ-

---

क्रियाणां वा भवन्ति। आध्याने च। कर्मस्थाया अपि नाध्यानं तदायत्त-

---

स्थानविशेषः कर्त्तरि वर्त्तते। नैष दोषः। भागशो व्यवस्थापनेऽपि गणिर्वर्त्तते। भागशोवतिष्ठमानं गणं गोपालकोऽवस्थापयति। तत्रानुकूलत्वाद् गणस्यैव कर्त्तृत्वविवक्षायामस्ति कर्मस्थभावकत्वात् कर्मवद्भावः॥ आत्मनेपदप्रतिषेधा-

---

कर्मकतया भाष्यकैयटादिग्रन्थाः सर्वे एवानन्विताः स्युः। तत् किं हरदत्तं प्रत्येव पर्य्यनुयोगेन। एतावानेव हि भेदः। भाष्यमतेऽणौ ये कर्त्तृकर्मणोरिति व्याख्यानादुदाहरणमिदं हस्तिकारहरदत्तादिमते तु प्रत्युदाहरणम्। अणौ यत्कर्म इत्येव व्याख्यानादिति। अत्रोच्यते। अनन्वयस्तावदुरुद्धरः। "बाधे वृद्धेऽन्यसाम्यात् किं वृद्धेऽन्यदपि बाध्यताम्" इति न्यायात्। गम्भीरायां नद्यां घोष इत्यत्र गम्भीरनदीपदार्थयोरभेदबोधानन्तरं तीरलक्षणायामपि

कथं पुनरिति । (कै)

एवं च यक्चिणोः प्राप्त्यभावात् प्रतिषेधो व्यर्थ इति भावः ॥

भागश्च इति । (कै)

भागशोऽवस्थानं च कर्मस्थमिति भावः ॥ भाष्ये

आत्मनेपदस्य चेति । (भा)

न केवलं यक्चिणोरेवात्मनेपदस्यापीत्यर्थः ॥ तर्हि तदर्थमेवेदं सूत्रमस्त्वित्याह

आत्मनेपदप्रतिषेधार्थं त्विति । (भा)

कर्मवद्भावेन सर्वत्रात्मनेपदे सिद्धे इदं सूत्रं ण्यन्तानामण्यन्तकर्मतुल्यक्रिये कर्त्तर्य्येवात्मनेपदं न तु कर्मतुल्यक्रिय इति नित्यण्यन्तेभ्यः कर्मकर्त्तरि तन्निवृत्त्यर्थमित्यर्थः ॥ ननु सिद्धस्य पुनर्वचनमन्यनिवृत्त्यर्थं स्यात्तत्प्रतिषेधार्थमत आह

---

क्रियायां वा भवन्ति कर्तृस्थभावकत्वायम् । एवं तर्हि सिद्धे सति यदनाध्यान

---

र्थमिति । भा । अणौ कर्मणो णौ कर्तृत्वे आत्मनेपदं यथा स्यात् णौ तु कर्मणो णौ कर्तृत्वे माभूदित्येवमर्थमिदमित्यर्थः ॥ न चैतस्मादिति । भा । 'नित्यत्वात्स्विचः केवलानां चुरादीनां प्रयोगाभावादणौ कर्मणोऽसम्भवात्'

---

प्राथमिकबोधमादाय गम्भीरपदसार्थक्यवदिच्छाप्यध्यारोपितप्रेषणपक्षे द्वितीयकक्षायां कर्मण्यन्विते ततो णिजर्थस्येव कर्मणोऽपि त्यागे णिचः कर्मपदस्य च प्राथमिकबोधमादाय कथञ्चित् सार्थक्यम् । लक्ष्याप्यसम्बन्धो लक्षणा इत्यभ्युपगमात् । एवैवार्थवादैः प्राप्तस्यलक्षणायां गतिरिति कैयटस्योक्तिसम्भवो बोध्यः । णिच्कर्मस्तु कर्मत्वव्यवच्छेदवाक्यार्थौ भाष्यवार्त्तिकयोरनभिमत एव । उक्तरीत्या प्रयोजनाभावात् । ग्रन्थस्तु कर्मपदस्य क्रियापरतायां

अणौ कर्मणा इति। (कै)

सिद्धकार्य्यायाः प्रकृतेरुपादानं प्रकृत्यन्तरनिवृत्त्यर्थमिति भावः। विशेषणान्तरस्य त्वेतद्व्याप्तिमात्रफलकत्वेनोपयोग इति तत्रोक्तम् उपलक्षणत्वं वा बोध्यम्॥ भाष्ये

दृश्यत एवेति। (भा)

कर्मत्वभावेनेत्यर्थः। एवं चेष्ट्याावर्त्तकता सूत्रस्य नोचितेति भावः॥ एवं च गणयते गण इत्येव रूपं तत्रेति तात्पर्य्यम्॥ ननु "णेरणौ" इति नियमसूत्रादप्राप्तौ निर्णीतायां कथमिष्यत इत्युक्तिरिति शङ्कते

किमिष्यत एवेति॥ (भा)

सूत्रकारस्यापि इदमिष्टमित्याह

---

इति प्रतिषेधं प्राप्ति तज्ज्ञापयत्याचार्यो भवत्येवं जातीयकानामात्मनेपद-

---

इति हेतुमण्णिचो ग्रहणम्। प्रतिषेधोऽप्यणाविति तस्यैव प्रत्यासत्त्या-न्याय्य इत्यहेतुमण्णौ गणस्य कर्मत्वं हेतुमण्णौ कर्तृत्वमिति सूत्रास्यायं विषयो भवत्येवेति कथमत्रानेनात्मनेपदं निवार्यतेत्यर्थः॥ इदं तद्धीति।

---

मुख्य एव। उदाहरणेषु तु भृत्यान् इत्यादेरविवक्षायां कर्मव्यापारमात्रे विवक्षिते सिद्धं भवति इत्येवाशयो बोध्यः। स्मरयत्येनं वनगुल्मः स्वयमेवेति भाष्यकृतोर्व्याख्यावसरे एनमिति कर्मणो विवक्षायाः कैयटहरदत्ताभ्या-मुभाभ्यामपि स्वरणीकृतत्वाच्च। यत्तु सूत्रशेषे कैयटेन एनमित्यस्य विव-क्षेति पुनः प्रतिपादितं तदेव त्वापातत इति दिक्॥ तस्मात्

"भृत्यादीनां परित्यागाच्छब्दभेदात् परिग्रहात्।
कर्मवाक्ये च तादर्थ्यवर्णनात् सर्वमुज्ज्वलम्"॥

**दृश्यते च** (भा)

इत्यादि॥ नियमसत्त्वात् कथं प्राप्तिरिति प्रश्नः

**कथमिति।** (भा)

नियमस्यैवाप्राप्तिरित्युत्तरम्॥

**न चैतस्मादिति।** (भा)

चुरादिणिच इत्यर्थः॥ ननु णिजुत्पत्तेः पूर्वं धातोर्वर्त्तमानत्वे कर्मणोऽपि सम्भवादाह

**नित्येति।** (कै)

एवं च ततः प्रागवस्थायां प्रयोगस्यैवाभावेन कर्त्ता च कर्मचास्य नासीत्यर्थः॥ कर्त्तेति दृष्टान्तार्थं फलान्तरमप्यस्य वक्ष्यते तदाह

---

मिति। किमेतस्य ज्ञापने प्रयोजनम्। पश्यन्ति भृत्या राजानम् दर्शयते

---

भा। न चानिर्दिष्टविषयः प्रतिषेधः शक्यते विधातुमिति सर्वमेव सूत्रं क्रियते॥ वनगुल्मस्येति। भा। कर्मोपलक्षणमेतत्। अत्र हि वनगुल्मस्य

---

स्यादेतत्। सकर्मकाणां सर्वेषामंशद्वयाभिधायितया कर्मकर्त्तरि कर्मवद्भावातिदेशादेव सिद्धानीह मूलोदाहरणानि। न चाध्यारोपित-प्रेषणापत्ते आरोहयतो हस्तिनः कर्मत्वाभावात् समानधातौ च कर्मत्वाभा-वेन पचत्योदनं देवदत्तो राध्यत्योदनः स्वयमेवेति कर्मवद्भावो न प्राप्नोतीति वाच्यम्। निवृत्तप्रेषणप्रक्रिययैव सकललक्ष्यसंग्रहात्। न च दृशेः कर्तृस्थ-भावकतया वहेश्च कर्तृस्थक्रियतया कर्मवद्भावो न प्राप्नोतीति वाच्यम्। पचिभिद्यादिभ्यो वैलक्षण्यस्य दुरुपपादत्वात्। विक्लेदनद्विधाभवनयोरपि कर्त्तृस्थतापत्तौ कर्मवद्भावातिदेशस्य निर्विषयतापत्तेः। तत्र व्यापारांशस्य कर्तृस्थत्वेऽपि विक्लित्तिद्विधाभवनरूपे फले कर्मस्थे इति। यदि तर्हि दृशि-

अणौ कर्मणोऽसम्भवादिति। (कै)

अस्य "कथमत्रात्मनेपदं वार्य्यते"त्यनेनान्वयः॥ नियमप्राप्तेः गणयति गण इत्युदाहरणस्यावस्थाद्वयेपि चुरादिण्यन्तस्यैव प्रक्रमात्। चुरादिण्यन्तप्रकृतिकहेतुमण्यन्तत्वे तत् सूत्रविषयतया पूर्वपक्षिणोपि तत्रात्मनेपदस्यैवेष्टतया तत्रानेन तन्निवारणमशक्यमिति स्वयमाह

णेरिति (भा)

इत्यादि। परं लेखोक्तिर्विफला। भाष्ये तत्प्रक्रमाभावात्। [1]"चिति स्मृत्याम्" इत्यादि (इत्यादेः) इदित् करणात् अनित्यण्यन्तत्वस्य चुरादीनां ज्ञापनेऽपि तद्विशेषविषयमिति बोध्यम्। वस्तुतस्तु ज्ञापकमेव चिन्त्यम्। [2]टुडुप्रभृतीनामिव तस्यापीदित्वस्योच्चारण-

---

१ चुरादि–गण–१५३३॥ २ कुन्द्रि-।इ।क।

---

भृत्यान् राजा। दर्शयते भृत्यै राजा। अत्रात्मनेपदं सिद्धं भवति॥

---

शेषत्वेन विवक्षितत्वात् कर्मत्वाभावः। तस्मात् स्मरति वनगुल्ममिति प्रदर्शनीयम्॥ स्मारयत्येनमिति। भा। एतदप्युपलक्षणम्। अत्र ह्वेनमिति कर्मणः सद्भावात् कर्मवदकर्मकाणामिति वचनात् कर्मवद्भावप्राप्तिर्नास्ति।

---

द्वयोरपि विषयत्वव्यभावौ कर्मणाविति तुल्यम्। तस्मादिह वैषम्ये बीजं वक्तव्यमिति चेत्। अत्राऽऽहुर्भर्तृहरिः—

"विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता
क्रियाव्यवस्थात्वन्येषां शब्दैरेव प्रकल्पिता"

इति॥ अस्यार्थः। यत्र क्रियाप्रयुक्तो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु। तत्र क्रियास्थिता। तेन पच्यते ओदनः छिद्यते काष्ठमिति कर्मवद्भावः सिद्धः। अन्येषां मते अन्येषां धातूनां वा शब्दैरेव

(णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने । १। ३। ६७।) (अ. १। पा. ३। आ. २)

माचार्थत्वात् । केवलं "१घुषिरविशब्दने" (चुरादिग-१७२७) इति लिङ्गादनित्यण्यन्तत्वं भाष्यकृद्वक्ष्यति । यच्च "आधृषाद्वा" इति विकल्पितणिचोऽपि चुरादौ सन्ति तथापि २"अणावकर्मकाद्" इत्यत्र हेतुमण्णिच एव ग्रहणसम्भवादिहापि साजात्यात् साहचर्य्याच्च तथैवोचितमिति तत्त्वम् ॥ ननु शेषवैयर्थ्यम् अत आह

## न चानिर्दिष्टेति । (कै)

यद्यपि प्रतियोगिभूतात्मनेपदनिर्देशेनापि प्रतिषेधः शक्यस्तथाप्यन्यांशानुक्तौ आध्यानार्थात् कदापि तङ् नस्याद् इति विषयविशेषनिर्देशार्थं कृत्स्नं सूत्रमपेक्षितमिति भावः ॥ ननु ३"अधीगर्थेति" कर्मणि शेषे "वनगुल्मस्येति" षष्ठीसत्वात् कर्मणोऽभावेन नेदमुदाहरणमत आह

---

१ अ ७ । पा २ । सू २३ ॥　　२ अ १ । पा ३ । सू ८८ ॥

३ अ २ । पा ३ । सू ५२ ॥

---

आत्मनः कर्मत्वे प्रतिषेधः । वा । आत्मनः कर्मत्वे प्रतिषेधो वक्तव्यः ।

---

नाप्यनेनात्मनेपदस्य कर्मान्तरसम्भवात् । तस्मात् स्मरयति वनगुल्मः स्वयमेवेति प्रदर्शनीयम् ॥ भवत्येवं जातीयकानामिति । भा । येषामण्यन्तानां

---

क्रियाव्यवस्था । शब्देन कर्तृव्यापारस्यैव प्राधान्येनावगमात् कर्तृस्थतेत्यर्थः । उद्देश्यापि क्वचित्कर्मस्थांशस्य क्वचित्तु व्यापारांशस्य इति । उत्सर्गिकं नियामकं बोध्यम् । तदिह दर्शनारोहणाभ्यां विषये न्यग्भूते च विशेषानुपलम्भात् कर्तृस्थ एवेह भावः क्रिया च । उद्देश्यानुरोधाच्च । अहं पश्येयम् इति उद्देशः, न तु अयं विषयो भवतु इत्येवमहमुपरि गच्छेयमित्युद्देशो न तु

कर्मोपलक्षणमिति। (कै)

अन्ये तु एतद्भाष्यबलात् सूत्रस्थकर्मपदमाश्रयपरं न तु कर्मसंज्ञकमित्याहुः॥

एतदपि। (कै)

एनमित्येतद्घटितमुदाहरणमपि। उपलक्षणं तद्रहितोदाहरणस्येत्यर्थः। अकर्मकाण्येवोदाहरणानीति मत्वैव कर्मवद्भावात् सिद्धमिति भाष्यस्य प्रवृत्तेरिति भावः। यद्यपि [1]"गतिबुद्धि" इति सूत्रे ज्ञानसामान्यार्थकानामेव ग्रहणमिति स्मरयतियोगेऽण्यन्तकर्त्तुः कर्मत्वप्राप्तिस्तथापि तद्भाष्यप्रामाण्यादाध्यानार्थकस्मरतेरपि तत्र ग्रहणं बोध्यमिति तात्पर्य्यम्॥

एतदपीति (भा)

भाष्ये। अध्यानार्थानां कर्तृस्थक्रियत्वेन कर्मवद्भावाविषयत्वादिति भावः॥

---

१ अ १। पा ४। सू ५२।

---

हन्त्यात्मानम्। घातयत्यात्मेति॥ स तर्हि वक्तव्यः। न वा ण्यन्तेऽन्यस्य कर्तृ-

---

यत्कर्म तेषां ण्यन्तानां यदा स कर्त्ता तदा कर्तृस्थभावक्रियत्वेप्यात्मनेपदं भवतीत्यर्थः। एवं च ब्रुवता भाष्यकारेण सूत्रमेतद्विध्यर्थमित्यर्थादुक्तं भवति।

---

हस्तिनो न तु न्यग्भावो भवत्विति। उपरिगमनरूप एव च व्यापारविशेषो वहेरर्थः न तु न्यग्भावनमात्रम्। भूमिष्ठे हस्त्यस्य शाखां हस्ताभ्यामवनमयत्यपि आरोहतीत्यप्रयोगात्। अत एव "यद्धि तु परं छन्दसि" (८।१।५६) इत्यत्र भाष्यं वहिर्गत्यर्थ इति। अत एव वाहौ कर्तुर्णौ कर्मत्वम्। पश्चिद्धि-

तज्ज्ञापयतीति । (भा)

प्रतिषेधप्रतियोगिसमर्थकं सूत्रं बोधयतीत्यर्थः ॥

एवं जातीयकानाम् (भा)

इत्यस्य कर्तृस्थभावकानामित्यर्थं पश्यति राजा स्वयमेव इत्यत्रापि स्यादत आह

येषामण्यन्तानामिति ॥ (कै)

कर्तृस्थभावक्रियत्वेऽपीति । (कै)

अपिना सकर्मकत्वे ऽपीत्यर्थः । अत एव भाष्ये

एवं जातीयकानाम् (भा)

इति चरितार्थमन्यथा भवत्येषामित्येव वदेत् । साजात्यञ्च कर्मवद्भावाप्राप्तियोग्यत्वेनेति बोध्यम् । तदाह

---

त्वात् । वा । न वा वक्तव्यः । किं कारणम् । ण्यन्तेऽन्यस्य कर्तृत्वात् । अन्यथ-

---

तेनारोहयते हस्तीत्यादावनेनैवात्मनेपदं सिद्धं भवति । तथा हि । बहि-र्गतिविशेषवचन इति "यद्धि तु परं छन्दसी"त्यत्र भाष्यकारो वक्ष्यति । एवं च कर्तृस्थक्रियत्वान्नास्त्यत्र कर्मवद्भावः । एवं चारोह्यते हस्ती स्वयमेवेति ये कर्मवद्भावं प्रदर्शयन्ति ते न्यायं भाष्यं च बाधमाना अवधीरणीयाः । तथा हि ।

---

योऽसु विक्लित्तिद्विधाभवनरूपो विशेषः कर्मणि वृष्टः तदुद्देशेनैव च कारकव्यापार इति महदैन्यम् । एवं चारोह्यते हस्तीति कर्मवद्भावं प्रदर्शयन्तो भाष्यन्यायविरोधादुपेक्ष्या इति कैयटः ॥ एतेन—

"अधिगच्छति शास्त्रार्थं स्मरति श्रद्दधाति च
यद् कृपावशतस्तस्मै नमोऽस्तु गुरवे सदा"

एवं चेति । (कै)

स्वातन्त्र्ये सम्भवति विध्यन्तरशेषत्वकल्पनाऽयुक्तेति भावः ॥

प्रदर्शयन्त इति । (कै)

भागवृत्तिकाराः ॥

न्यायम् । (कै)

"विशेषदर्शनं यत्रे"ति । वक्ष्यमाणभाष्यम् [१]"यद्धि तु परम्" इति सूत्रस्थं तमेव न्यायमाह

विशेषेति । (कै)

यत्र कर्मभेदेन क्रियाजन्यफले विशेषदर्शनं रूपभेददर्शनं तत्र कर्मस्थां यथा पचेः । अन्यत्र कर्त्तृस्थेत्यर्थः । यद्वा । क्रियाकृतविशेषस्य यत्र कर्त्तरि प्रत्यक्षेणावरणं तत्र कर्त्तृस्था यत्र कर्मणि तत्र कर्मस्थेत्यर्थः । इदं केषाञ्चिन्मते । अन्येस्त्वेवं सति क्रियाजन्यश्रमादिकृतवैलक्षण्यं प्रायेण सर्वत्र कर्त्तर्यस्तीति पचादेरपि कर्त्तृस्थ-

---

१ अ ८ । पा १ । सू ५६ ॥

---

चाख्यन्ते कर्मान्यो ह्यन्तस्य कर्त्ता । कथम् । द्वावात्मानावन्तरात्मा शरीरा-

---

"विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता
क्रियाव्यवस्थात्वन्येषां शब्दैरेव प्रकल्पिता"

---

इति प्रयोगो व्याख्यातः । न चैवं क्रियते इति न स्यादिति वाच्यम् । यत्नार्थतावादिनामेतद्दोषप्रसक्तेऽपि भूवादिसूत्रस्थभाष्यानुसारेण करोतेरभूतप्रादुर्भावार्थतामभ्युपगच्छतामस्माकं सर्वत्वामप्रसक्त्यात् । एवं च कर्त्तृस्थभावक्रियेषु कर्मवद्भावाप्राप्तेर्विध्यर्थमिदं सूत्रमिति स्थितं भाष्ये । लावयते

भावकतापत्तिः । तस्माद्यद्धातुवाच्या फलांशरूपा क्रिया कर्त्तृगतापि सम्बन्धविशेषेण शब्देन बुध्यते स कर्त्तृस्थक्रियः । यद्धातुवाच्यः सोऽंशः कर्मस्थ एव न कथमपि कर्त्तृस्थः । सकर्मस्थक्रियो यथा यदादौ इति वदन्ति । तदाह

अन्येषामिति ॥ (कै)

ननु अत्र पक्षे दृशेः कर्मस्थक्रियत्वापत्तिः । विषयत्वापत्तिरूपस्यावरणभङ्गरूपस्य वा फलस्य कर्मण्येव सत्त्वादिति चेत् सत्यं ज्ञानानुकूलव्यापार एव तदर्थ इत्याशयात् । विशेषदर्शनमित्यस्य दर्शिता (उ)व्याख्यारीत्याह

---

त्मा च । अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति । शरीरात्मातत् कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवतीति ॥

---

इति । विशेषदर्शनेन शब्दार्थानुसारेण वा तात्स्थ्यं कथ्यते क्रियायाः । एतच्च कारणद्वयमारोहणस्य कर्तृस्थतां प्रतिपादयति न कर्मस्थताम् । तथाहि हस्तिनमारोहति वृक्षमारोहति पर्वतमारोहतीत्यादौ कर्मभेदेऽपि नारोहणस्य रूपभेदः प्रतीयते न चैतेषु प्रयोगेषु क्रियाकृतः कर्मणि कश्चि-

---

स्वयमेव इत्यादौ तु कार्यातिदेशपक्षे परत्वात् "कर्मवत् कर्मणा" ( ३। १। ८७ ) इत्येवात्मने पदम् । शास्त्रातिदेशे तु भावकर्मणोरित्येतदपेक्षया परत्वात् "णेरणा" दिसूत्रेणेत्यवधेयम् । यदि तु अणौ ये कर्तृकर्मणी तद्भिन्नकर्मनिवृत्तिर्भाष्यकृतोऽभिप्रेता स्यात्तर्हि सकर्मकाणां मध्ये तत्सूत्रोदाहरणताऽपत्तौ कर्मस्थक्रिया अप्युदाहरणं स्युः । न हि तत्रातिदेशः सुलभः । कर्मवत्कर्मकाणामिति वक्ष्यमाणत्वात् । तथा नियमार्थत्वपराणां यक्चिणोः

कर्मभेदेऽपीति ॥ (कै)

नारोहणस्य । (कै)

न तज्जन्यफलस्य ॥ द्वितीयव्याख्यायामाह

नचैतेष्विति । (कै)

एवं निर्वर्त्त्यं विकार्य्यं कर्मणि निर्वृत्तिविकारलक्षणः कर्मणि विशेष[1] ॥ प्राप्ये तु न ।

"क्रियाकृतविशेषाणां सिद्धिर्यत्र न लभ्यते
दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते"

इति लक्षणादिति भावः ॥ अन्येषां मतेऽपि कर्मस्थक्रियत्वं निराकरोति

धातुना चेति ॥ (कै)

नन्वेवं सति धात्वर्थतावच्छेदकफलाश्रयत्वाभावाद् हस्तिनं कर्मत्वानापत्तिरत आह

---

[1] विशेषो दृश्यते । धातुना च कर्तृगतैव क्रियाप्रतिपाद्यते न कर्मगता । केवलं कर्मणः कारकत्वादवश्यं क्रियया भाव्यमिति क्रियानुमीयते । सर्वाणि हि

---

प्रतिषेधार्थं तु इत्यादि भाष्यवार्त्तिकग्रन्थनामप्यसामञ्जस्यं स्यादिति दिक् । तस्मादिह अस्मदुक्तमेव वाक्यार्थत्रयं मुनित्रयसम्मतम् । जयादित्यन्यासकारहरदत्तकैयटादिसकलग्रन्थकाराणामिह महानेव पूर्वापरविरोधो विपश्चिद्भिरवधेयः । अस्मदुक्तिस्तु मात्सर्य्यमुत्सार्य्य परिभावनीयेत्यलं बहुना । यत्तु "करेणुरारोह्यते निषादिनम्" इति माघे प्रयुक्तं तत् "णिचश्च" (१।३।७४) इति सिद्धम् । एतेन

"स सन्ततं दर्शयते गतस्मयः
कृताधिपत्यामिव साधु बन्धुताम्"

वक्तव्य इति । (कै)

अयं भावः । न्यग्भवनानुकूलव्यापारस्य ह्यर्थत्वे तदनुकूलतया- ङ्कुशेन गजं ताडयत्यप्यारोहतीति प्रयोगापत्तिः । उपरिगमनमपि धात्वर्थश्चेत् तदेवास्तु तावतैव हस्तिनः कर्मत्वोपपत्तिः। किं न्यग्- भवनेनेति उपरिगमनस्य सम्बन्धिविशेषेण कर्त्तर्यपि सत्त्वान्न कर्मस्थ- क्रियत्वमिति भावः ॥

कर्त्तृगतैव (कै)

इत्यस्य कर्त्तृगतापीत्यर्थः ॥

न कर्मगता (कै)

इत्यस्य न कर्मगतैवेत्यर्थः॥ ननु तन्न्यग्भवनं विनोपरिगमनमसम्भवि इत्यत उक्तम्

केवलम् (कै)

इत्यादि ॥ अत एव हरिणापि

"न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते"

इत्येवोक्तम् न तु रुहिणा ॥

---

कारकाणि स्वं स्वं व्यापारमनुतिष्ठन्ति प्रधानक्रियां सम्पादयन्ति । बहुवक्त- व्यश्चायमर्थः किंचित्तु प्रकृतोपयोगादुक्तमिति प्रकृतमनुसरामः ॥ दर्शयते भवान् राजेति । भा । ननु कर्मान्तरसद्भावादत्रात्मनेपदेन न भाव्यम् ।

---

इति व्याख्यातम् । बन्धुता तं पश्यति तां दर्शयते । यद्वा । बन्धुतां छत्राधिपत्यामिव लोकः पश्यति तां दर्शयते इत्यर्थः । आद्ये बन्धुता अण्यौ कर्त्री । द्वितीये तु अण्यौ सा कर्म । उभयथापि ण्यौ कर्मत्वं निर्विवादमेवेति दिक् । गोरिति किम् । आरोहतीति वाच्यम् । निष्फलत्वेऽपि प्रयोज्याभावान्माभूत् । न च णौचेदिति वाक्यशेषे श्रुतत्वात्सिद्धेरेव । भविष्यतीति वाच्यम् अण्यावित्यस्यापि

**प्रतिपाद्यते इति । (कै)**

**नन्विति । (कै)**

उपक्रमस्थकर्मान्तरनिवृत्तिपरवाक्येनाकर्मकाणामेवैतदुदाहरणत्वा.गतेरिति भावः ॥

**अस्मादेवोदाहरणादिति । (कै)**

**एवं जातीयकानाम् (भा)**

इत्युक्तिपराच्च ।

**यस्मात्सः प्राक् कर्मकर्त्ता वा (भा)**

इति भाष्याच्चेत्यपि बोध्यम् ॥

**प्राक् कर्मकर्त्ता वा (भा)**

इत्यनेन प्राक्स्थितकर्मकर्त्रैरेतदात्मनेपदोपयोगित्वं बोध्यते तच्च कर्तृकर्मातिरिक्तकर्माभावबोधने एवेत्याहुः ॥

**कर्त्तृकर्मणी इति । (कै)**

"कर्त्तरि कर्म" इत्यतः कर्त्तृग्रहणमनुवर्त्त्य प्रथमया विपरिणमय्य यच्च यस्य यदित्येकशेषेणायमर्थो लब्धः ॥

---

उच्यते । अस्मादेवोदाहरणाद्भाष्यकारस्यायमभिप्राय उन्नीतेऽण्यन्तावस्थाया ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावे आत्मनेपदं न भवति यथा स्थल-

---

श्रुतत्वात् । किं चोत्तरार्थमवश्यं णेरिति वाच्यमेव । तदिहैव स्पष्टार्थमुक्तम् । हेतुमत्सिण्णिग्रहणार्थं च । भौवादिकस्यैव सम्भवात् । तेन गणयते गणः स्वयमेवेति सिद्धम् । गणयतिर्हि विभज्य भागशोऽवस्थापने वर्त्तते । तथाच कर्मस्थभावकत्वादस्मान्निवृत्तप्रेषणाद्धेतुमत्सौ पुनः प्रेषणांशत्यागे सत्यामात्मनेपदमिष्टम् णेरिति हेतुमत्सिच्चा सन्निधानादणावित्यत्रापि तस्यैव ग्रहणा-

प्रत्युदाहरणं युज्यते इति। (कै)

सिद्धान्त इति शेषः॥

स्थलमारोहयति (भा)

इत्यत्रापि स्थलस्य कर्तृकर्मातिरिक्तकर्मणः सत्त्वात्॥ भाष्ये

आत्मनः कर्मत्वे प्रतिषेध इति। (भा)

अण्यन्ते कर्मण आत्मनो ण्यन्ते कर्तृत्वेनाण्यन्तावस्थास्थकर्तृकर्मातिरिक्तकर्माभावेन चात्मनेपदस्यैतत्प्राप्तस्य प्रतिषेधो वक्तव्य इत्यर्थः॥ भाष्योदाहरणे आत्मा कर्म। अहं काण इत्यादि व्यवहारेण शरीरेऽपि लोकानामात्मत्वप्रत्ययात् शरीरात्मा इति न विरुद्धम्। अन्तरात्मा कर्त्ता शरीरात्मनि कर्तृत्वस्य लौकिकैरप्यनुभ्युपगमादिति भावः॥ नन्वन्तरात्मा पुरुषः सोऽप्यकर्त्तैव साङ्ख्यादिमतेऽत आह

---

मारोहयति मनुष्यान् इति। इह त्वण्यन्तावस्थायां कर्तृणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदम्। एवं च स्मरत्येनं वनगुल्मः स्वयमेवेति कोकिलस्य कर्मत्वेऽपि प्रत्युदाहरणं युज्यते॥ आत्मनः कर्मत्वे इति। भा। यदैकमेव वस्तु बुद्ध्या विभज्यकर्मत्वेन कर्तृत्वेन च विवक्ष्यते तदा प्रतिषेधः

---

चुरादिणौ यत्कर्म तत्कर्तृकाद्धेतुमण्यन्तादपि सिध्यतीति। यत्तु वृत्तिकृता गणयतीत्येव रूपमवस्थाचतुष्टयेऽप्युदाह्रियते। तत्र संख्यानिमित्तस्य परिच्छेदस्य ज्ञानविशेषात्मतया कर्तृस्थस्य धातुवाच्यतामाश्रित्य कर्मवद्भावाप्रवृत्त्या द्वितीयावस्थायां परस्मैपदमुपपादनीयम्। चतुर्थावस्थायां तु परस्मैपदमयुक्तमेव। "णेरणौ" इत्यत्रापि "सकर्मकात्" (१। ३। ८८) इत्यनेव हेतुमणिच एव ग्रहणस्य न्याय्यत्वात्। तथैव भाष्ये स्थितत्वाच्च। भागशोऽवस्थापन परत्वे तु द्वितीयावस्थायामप्यात्मनेपदमिति विशेषः। कर्मवद्भावस्य दुर्वारत्वात् यक् चिणौ तु णिश्रन्थीत्यादि निषेधान्नेति दिक्। णौ चेदिति किम्। निष्कप्रेषयासौ आरोहयन्ति हस्तिपका इति द्वितीय-

**साक्षीति ॥ (कै)**

**तस्यैवेति । (कै)**

तन्मते पुरुषस्य पुष्करपलाशवन्निर्लिप्तत्वेन कर्तृत्वाद्यनाश्रयत्वादिति भावः ।

**पुरुषस्य । (कै)**

जीवस्य ॥ भाष्ये आत्मद्वयसत्त्वेमानमाह

**अन्तरात्मा (भा)**

इत्यादिना ॥

**तत्कर्मेति । (भा)**

धर्माधर्मरूपं यत् पूर्वसञ्चितकर्म तत्फलं पादादिसौष्ठवाद्यनुभवतीति लौकिकव्यवहारात् पूर्वकृतं कर्मनामाधिरूपेण बाधते इति व्यवहाराच्चेति भावः । शरीरात्मनः कर्म चेष्टादिरूपं सुखदुःखजनकम् एकस्यैवात्मनः कक्षान्तरे कर्तृत्वं त्वनभिधानान्नेति सिद्धान्ताशयः ॥

---

इत्यर्थः ॥ न वेति। भा। वस्तुत एवात्र आत्मभेदो न त्वेकस्यैव कर्मत्वं कर्तृत्वं चेत्यर्थः ॥ अन्तरात्मेति । भा। सांख्यपक्षेऽन्तःकरणमन्तरात्मा तस्यैव कर्तृत्वासद्भावात् पुरुषस्याकर्तृत्वात् ॥ नैयायिकादीनां तु मते पुरुषस्य कर्तृत्वात् स एवान्तरात्मा विवक्षितः ॥ शरीरात्मा सुखदुःखे इति । भा। शरीरस्याचेतनत्वात् सुखदुःखहेतुभ्यां शरीरं संबध्यत इति व्याख्येयम् ॥

---

कक्षायां मा भूत्। असति हि णौ चेद् ग्रहणे श्रुतत्वादणामेव कर्मत्वं कर्तृत्वं च लभ्येत। न चैकस्योभयरूपता बाधिता इति वाच्यम्। प्रथमावस्थायां कर्मणो द्वितीयावस्थायां कर्तृत्वस्य निर्विवादत्वात्। अनाध्याने किम्। स्मरति वनगुल्मं कोकिलः। ततश्चतुर्थावस्थायां स्मरयति वनगुल्मः। उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः। स्मृ आध्याने। घटादिः ॥

# [1]स्वरितञितः कर्त्रभिप्राये क्रियाफले। १। ३। ७२॥



ननु राजा प्रयाति[2] प्रजाप्रयातीत्यादौ क्रियाफलस्य जयस्य कर्त्तृगामित्वतदभावयोर्दर्शनेन यात्यादिव्यावृत्तये "स्वरितञित" इत्यस्यावश्यकत्वेन भाष्यमनुपपन्नमत आह

---

२ सेनाप्रयाति । इ ॥

---

१ स्वरितञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२ ॥ स्वरितञित इतिकिमर्थम् । याति वाति द्राति प्साति । स्वरितञित इति शक्यमकर्त्तुम् । इह कस्मान्न भवति याति वाति द्राति प्साति इति । कर्त्रभिप्राये

---

स्वरितञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२ ॥ इदमात्मनेपदं संविधानवृत्तिभ्यो धातुभ्यो भवतीति केचिद्व्याचक्ष्यते । पचते पाचयतीत्यर्थः । यजते याजयतीत्यर्थः । अनेकार्थत्वाद्धातूनां प्रकृतिरेव यदा संविधाने वर्त्तते

---

स्वरितञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२ ॥ स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् क्रियाफले कर्तृगामिनि सति । यजते । सुनुते ।

---

स्वरितञितः कर्त्रभिप्राये क्रियाकाले । १ । ३ । ७२ ॥ यत् क्रियाफलं कर्त्तृगामि तद्वृत्तिधातोरात्मनेपदमिति सूत्रार्थः ॥ स क्रियाभेदः स्व यज्ञं यजते यजतीत्यादौ वाक्यं स्वादिपदेनापि गम्यते । "विभाषोपपदेनेति" (१ । ३ । ७७) तत्र पदद्वयमित्यर्थं हेलाराजः । अत एवोक्तं "स्वरितञित" इत्यत्र भाष्ये "स्वरितञित इति शक्यमकर्त्तुम् । यात्यादिषु कस्मान्न भवति

इदमिति । (कै)

अत्र केचित् । क्रिया कृत्स्नधात्वर्थः तत्फलके कर्त्तुः प्रयोजककर्त्तुरभिप्राये अभिधायमूलके प्रयोजककर्तृव्यापारे आत्मनेपदमित्यर्थादिति भावः ॥ "संविधानं" कृत्स्नधात्वर्थप्रवृत्त्यनुकूलः प्रवर्त्तनाख्यो व्यापारः । "यजेते" त्यादौ च ऋत्विक्प्रवृत्त्यनुकूलो यजमानव्यापार एव धात्वर्थः । सर्वावयवकक्रियाप्रवृत्त्यनुकूलव्यापार एव संविधानशब्दवाच्यः । तेन यजेत पशुकाम इत्यादौ यजनान्तर्गतस्तोत्रशंसनरूपहोतृव्यापारप्रयोजकव्यापारकर्त्तुरध्वर्योरपि पशुनासम्बन्धः स्यादित्यपास्तम् । तद्व्यापारस्य यजमानव्यापारवत् यावद्यज्यर्थप्रवृत्त्यनुकूलत्वाभावेन संविधानत्वाभावादित्याहुः ॥

---

क्रियाफले इत्युच्यते । सर्वेषां च कर्त्रभिप्रायं क्रियाफलमस्ति । त एवं विज्ञास्यामः । येषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्ति तेभ्य आत्मनेपदं भवतीति । न चैतेषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति ।

---

तदा तस्य द्योतकमात्मनेपदं भवतीति । यदा तु प्रकृत्यानभिहितं संविधानं तदा तदभिधानाय णिजुत्पद्यते पाचयतीति । यदा "णिचश्च" ( १। ३। ७४ ) इति ण्यन्तादात्मनेपदं भवति तदा द्वितीये संविधाने ण्यन्तस्य वृत्तिः परिकल्प-

---

कर्त्रभिप्राये किम् । यजन्ति याजकाः । वृण्वन्ति । दक्षिणादि तु न फलम् ॥

उक्तं हि हरिणा—

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत्प्रधानफलं तेषां न लाभादिप्रयोजनम्" इति ॥

---

कर्त्रभिप्रायक्रियाफल इत्युच्यते सर्वेषां च कर्त्रभिप्रायं क्रियाफलमस्ति त एवं विज्ञास्यामः । एषां कर्त्रभिप्रायसकर्त्रभिप्रायं च क्रियाफलमस्ति तेभ्य आत्म-

परे तु संविधानं सामग्रीसङ्घटनरूपमित्याहुः ॥ ननु विक्लित्त्याद्यनुकूलव्यापार एव पचत्याद्यर्थो न तु तन्निमित्तं संविधानमपीत्यत आह

**अनेकार्थत्वादिति ॥ (कै)**

**तस्य द्योतकमिति। (कै)**

अनेन तस्य विशेषणत्वं सूचयति। संविधानविषय एककर्तृकः पाक इत्यर्थः ॥ परेत्वनेकार्थस्य धातोरयमेवार्थ इति बोधनमेव द्योतकत्वं तेन विशेष्यत्वेऽपि न क्षतिरित्याहुस्तदाह

**यदात्विति ॥ (कै)**

"हेतुमतीति" ( ३। १। २६। ) प्रत्ययार्थनिर्देश इत्येव सिद्धान्तोऽत एव तदाश्रयस्यैव तत्र कर्तृत्वं तदाह

---

तथा जातीयकाः खल्वाचार्येण स्वरितञितः पठिता ये उभयवन्तः येषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति। तथाभिप्रग्रहणं किमर्थम्। स्वरितञितः कर्त्रा ये क्रियाफल इतीयत्युच्यमाने यमेव सम्प्रत्येति क्रियाफलं

---

गौणा यदा राजा पाचयते इति। कर्त्रभिप्रायक्रियाफल इत्यनेन संविधानलक्षण एव क्रियाविशेष उपलक्ष्यते। क्रीणीष्व वपते धत्ते चिनुत इति च

---

पचा। पाकः। खित्वादङ्। केचित्तु प्रयोजकव्यापारवृत्तिभ्यो धातुभ्यस्तद्द्योतकमात्मनेपदमनेन विधीयते। कुरुते। कारयतीत्यर्थः। कारयत

---

नेपदं भवतीति। न चैषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्ति। तथा जातीयकाः खल्वप्याचार्येण स्वरितञित इति पठिताः। ये उभयवन्तः। येषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्तीति"। अनेन च भाष्येणाकर्त्रभिप्रायक्रियाफलाभावप्रयुक्तो यात्यादिभूयाभावो लभ्यते। ननु यात्या-

## तदभिधानायेति । (कै)

किं च यात्यादीनां सविधाने कृत्यभावत्रादिनां तत्र णिजना-पत्त्या णिज्विधायके वाचकता पत्र एवावश्यक इत्याशयः ( इत्या-शयः । इ ) ॥ नन्वेवं ण्यन्तादात्मनेपदं न स्याद् णिचा संविधानस्य बोधितत्वादत आह

## यदेति ॥ (कै)

## तस्य । (कै)

ण्यन्तस्य ॥ नन्वयमर्थः सूत्रानारूढोऽत आह

---

तत्रैव स्यात् । लूञ् । लुनीते । पूञ् । पुनीते । इह न स्यात् । यज् यजते । वप् वपते । अभिप्रग्रहणे पुनः क्रियमाणे न दोषो भवति । अभिराभिमुख्ये

---

शिष्टप्रयोगेषु ण्यर्थोऽवगम्यते । स्वारितञित एव संविधाने शब्दशक्तिस्वाभा-व्यादवर्त्तन्ते नान्ये धातव इति स्वरितञिद्ग्रहणं भाष्ये प्रत्याख्यातम् । अन्ये-त्वाहुः । स्वार्थं यः क्रियामारभते तत्रात्मनेपदं परार्थारम्भे तु परस्मैपदम् ।

---

इत्यत्र तु प्रयोजकव्यापारद्वयमेवार्थः । णिजन्तास्विपि यथा कर्त्रभिप्राय इति सूत्रांशेऽपि कर्तृपदस्या हेतुकर्तृपरत्वादुक्तार्थतात्पर्यक एवेत्याहुः । उक्तञ्च हरिणा—

"क्रियाप्रवृत्तावाख्याता कैश्चित् स्वार्थपरार्थता ।
असती वा सती वापि विवक्षितनिबन्धना" ॥

---

दिष्वपि सेना प्रयाति पित्रर्थं तीर्थानि गच्छति इत्यादौ पराभिप्रेतं जय-धर्मादिफलमस्तीति चेन्न । भाष्ये 'च' श्रवणात् कर्त्रभिप्रायमेवाकर्त्रभिप्राय-मेव च क्रियाफलमस्तीत्यर्थात् । इदं चोभयाभिप्रेतमिति न तथेत्यभिप्रायः । तत्र यजेर्ऋत्विग्व्यापारवचनत्वे कर्त्रभिप्रेतफलाभावः । यजमानस्य तदा

कर्त्रभिप्राये (कै)

इत्यादि ॥ तदुक्तम्—

"कर्त्रभिप्रायता सूत्रे क्रियाभेदोपलक्षणम्।

तथा भूता क्रिया सा हि तत्कर्त्ता फलभाग्यतः" इति ॥ (हरिः)

"क्रियाभेदः"। संविधानलक्षणः ॥ "तत्कर्त्ता"। संविधानकर्त्ता ॥

"केषां चित् कर्त्रभिप्राये णिचा सह विकल्पते।

आत्मनेपदमन्येषां तदर्था प्रकृतिर्यथा" ॥

इति च केषां चिद् धातूनां स्वरितञिताम्। केषां चिदादिनामिति च। एवमन्येषामित्यपि बोध्यम् ॥ विकल्पाङ्गीकारे शिष्टप्रयोगान् प्रमाणत्वेन दर्शयति

क्रोशोषेति। (कै)

"वपते" (कै) इति पाठः ॥ अत्र पक्षे प्रत्याख्यानभाष्यं योजयति

---

वर्त्तते। प्र आदिकर्मणि। तेन यं चाभिप्रैति यं चाभिप्रैष्यति यं चाभिप्रागात्तत्र सर्वत्राभिमुख्यमात्रे सिद्धं भवति। कर्त्रभिप्राये क्रियाफले इति

---

सा च स्वार्थपरार्थता विवक्षा निमित्ता लौकिके त्वयोगे स्वरितञिद्विषयैव न यात्यादिविषयेत्यत्रापि पक्षे स्वरितञिद्ग्रहणस्य प्रत्याख्यानम्। एवं पक्ष-

---

केषांचित् कर्त्रभिप्राये णिचा सह विकल्पते।
आत्मनेपदमन्येषां तदर्था प्रकृतिर्यथा ॥

---

कर्तृत्वाभावात्। यजमानव्यापारवचनत्वे तद्वत्वम्। उभयवचनत्वे स्वामिदासाविति वक्ष्यमाणवत्प्रयोग इति तदाशयः। ननु पचादीनां विक्लित्त्यादिवचनत्वात् कथं प्रतिविधानमर्थः। किञ्च तदर्थत्वाभावे कर्त्रभिप्रेतक्रियाफलाप्रसिद्धिरत आह

## स्वरितञित एवेति ॥ (कै)

नन्वयं पक्षो न भाष्यसम्मतः प्रत्याख्यानभाष्ये सर्वेषां च कर्त्रभिप्रायं क्रियाफलमस्ति तस्मादुभयवद् (ज्ञ) आत्मनेपदं नचैतेषामुभयमस्तीत्युक्तेः। तत्र सर्वेषां कर्त्रभिप्रायं क्रियाफलमस्तीत्युपक्रमादुभयाभावोऽकर्त्रभिप्रायत्वाभावप्रयुक्तो लभ्यते। असंविधाने एषां वृत्तिर्नास्तीति वक्तुमशक्यं देवदत्तो गच्छतीत्याद्यनापत्तेः। तस्मादुत्तरव्याख्यैव युक्ता। तत्र हि यात्यादौ तत्फलस्य सर्वदा कर्तृगामित्वमेव विवक्षितं न तु परगामित्वमित्यस्य सुवचत्वात् प्रतीयते च तथैव यात्यादौ। एवं च "न चैतेषां कर्त्रभिप्रायं च" (भा) इत्यादिप्रतीकस्थकैयटोऽपि चिन्त्य एव॥ "चिनुते" इत्यादिप्रयोगास्त्वान्तर्भावितण्यर्थतयोपपाद्याः। प्रकरणादिकं च तात्पर्य्यग्राहकम्। कदाचित् परस्मैपदेऽपि तत्प्रतीत्या तस्यावश्यकत्वाच्च। न

---

किमर्थम्। पचन्ति भक्तकराः। कुर्वन्ति कर्मकराः। यजन्ति याजकाः। कर्त्र-

---

भिप्रायैः स्यतीति "विभाषोपपदेन प्रतीयमान" (१।३।७७) इति पक्षे आत्मनेपदाभावः। स्वामिदासौ पचत इति क्रियामात्र विवक्षायां परस्मैपदम्।

---

क्रीणीष्व पचते धत्ते चिनोति चिनुतेऽपि च।
आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थोऽभिधीयत" इति॥

---

"संविधानं पचादीनां क्वचिदर्थः प्रतीयते।
तन्निमित्तं यथान्यापि क्रियाधिश्रयणादिका"॥

क्तः पचेः प्रधानार्थो यासौ तण्डुलानां विक्लित्तिः। अथेदानीं तदभिसन्धिपूर्वकमधिश्रयणं वा प्रेषणं वा युक्तं यत्सर्वं पच्यर्थः स्यात्। वाढं युक्तम् इति

च सेना प्रयातीत्यादौ यात्यादीनामपि पराभिप्रेतफलत्वमस्त्येवेति वाच्यम्। भाष्ये "च" श्रवणेन कर्त्रभिप्रायमेवाकर्त्रभिप्रायमेव च क्रियाफलमस्तीत्यर्थात्। अन्यत्र जयादिफलमुभयाभिप्रायमिति न तथेति भावात् इत्यरुचेराह

अन्येत्वाहुरिति॥ (कै)

स्वार्थं य इति। (कै)

यः स्वार्थं क्रियामारभते तस्य तद्विषये प्रयोगे इत्यर्थः। सूत्रे "कर्तृगामित्वं" कर्त्रुपकारकत्वं न तु संयोगः समवायो वा। विवक्षया

---

भिप्राये क्रियाफल इत्युच्यमानेऽपि अत्र प्राप्नोति। अत्रापि क्रियाफलं कर्तारमभिप्रैति। याजका यजन्ति गा लप्स्यामह इति। कर्मकराः कुर्वन्ति पादिक-

---

यदा तु स्वामिगतो धर्मो दास आरोप्यते तदा स्वामिदासौ पचेते इति आत्मनेपदं भवत्येव॥ सर्वेषां चेति। भा। सर्वत्र संविधानस्य संभवात्सर्वत्र च

---

अस्तौ च इत्यनेन कमलवनोद्घाटनं कुर्वते य इत्यादयः प्रयोगाः समर्थिताः। तत्रापि स्वार्थता विवक्षायाः सम्भवात्। ण्यर्थस्य वाचकं

---

"हेतुमति च" ( ३। १। २६ ) इति सूत्रभाष्योक्तेः। संविधानमपि सामग्रीसङ्घटनरूप पच्याद्यर्थः। यथा विक्लित्त्यर्थस्यापि पचेरधिश्रयणादिः कर्तृव्यापारोऽर्थो देवदत्तः पचतीति। अन्यथा देवदत्तस्य कर्तृत्वानापत्तिः णिच् तु न। नहि संविधानमेव णिजर्थः। अपि तु तत्पूर्वकं प्रेरणम्। यत्र सति प्रयोजक इत्युच्यते संविधानं कुर्वन्नपि न यावत् प्रेरयति न तावत् प्रयोजक इत्युच्यते इति हेलाराजः। भिक्षा वासयति कारीषोऽग्निरध्यापयति इत्यादावपि प्रयोजकत्वारोपो बोध्यः। तूष्णीमासीनो यस्तत्समर्थान्याचरति

यजेत पशुकाम इत्यादौ तदभावात् । एवं च फलद्वारा क्रियैव कर्त्रर्थेति फलितम् । अत्र पक्षे क्रियाफलं "श्रुत्या" "लोकतो" वा यदुद्देशेन क्रियाप्रवृत्तिरवगता तत् । यथा पचादौ भोजनादि- 'लोकतो'ऽवगतम् । यज्यादौ च स्वर्गादि "श्रुत्या" ऽवगतमिति बोध्यम् ॥

## परार्थेति । (कै)

यात्यादिषु तु परार्थत्वविवक्षैव नास्ति इत्यतो न दोषः । स्वार्थत्वपरार्थत्वोभयविवक्षावतां धातूनां स्वार्थत्वविवक्षायां तङानौ इति सूत्रार्थः । उभयं च स्वरितञित्त्वेनेति न दोषः । विवक्षा- निमित्तस्वार्थपरार्थतेत्यन्वयः । "विवक्षा" इत्यनेन "कमलवनोद्

---

महर्षंप्सामह इति । एवं तर्हि कर्त्रभिप्राये क्रियाफले इत्युच्यते सर्वत्र च कर्तारं क्रियाफलमभिप्रैति । न चान्तरेण यजिं यजिफलं वपिं वा वपि फलं

---

स्वार्थानुष्ठान संभवादितिभावः ॥ येषामिति । भा । संभवे व्यभिचारे च सति प्रकारान्तरव्यवच्छेदेन विशिष्टे कार्य्यविधानाय विशेषनिर्देशः क्रियते इति भावः ॥ न चैतेषामिति । भा । यात्यादयः संविधाने वर्त्तितुं न प्रभवन्तीत्यर्थः ।

---

द्योतकं वा आत्मनेपदमिति मतद्वयं संगृहीतं केषां चिदित्यादिना श्लोकेन ॥ चिनोति चिनुत इति । चिनोति चाययति चेति क्रमेणार्थः ॥ इति कौस्तुभः ॥

---

वोऽपि वासादिप्रयोजक इति भाष्यात् तत्समर्थाचरणमात्रेण तत्प्रयोजकत्वा- रोपः इति तदर्थः । अत एवायं यज्ञसम्भारान् सङ्घटयति कं वा प्रेरयिष्य- त्यार्त्विज्यायेति न जानीम इति व्यवहारः ॥ ननु "स्वरितञित" इति सूत्राद् अयमर्थः कथं लभ्यते । तत्राह

घाटनं कुर्वते ये" इति सिद्धम् ॥ अत एव स्वामिदासौ पचत इत्यत्र क्रियामात्रविवक्षायां परस्मैपदमिति वक्ष्यते कैयटेन । तेन चैतस्य शाब्दबोधे भानमिति लभ्यते । कर्तृगामित्वविवक्षाभावमात्रं परस्मैपदनिमित्तमिति च आत्मनेपदादिसमभिव्याहृतधातोः स्वरितञितः कर्तृगतफलजनकक्रियादौ लक्षणेति बोध्यम् । केचित्तु नेदं शाब्दबोधविषयः अपि तु पश्चात्तन्मानसबोधविषयः । तथैवानुभवात् । किमर्था क्रिया इति विचारे क्वचित् परार्थफलकत्वं मनसा बुध्यते । एवं चैषु परार्थत्वमेव परस्मैपदनिमित्तं कोटिद्वयातिरेकेण तृतीयकोटेरभावात् । अत एव भाष्येऽकर्त्रभिप्रायमित्युक्तम् । न तु कर्त्रनभिप्रायमिति । स्वामिदासौ पचत इति तु दासधर्मस्य स्वामिन्यारोपात् साध्यम् । स्वामिगतस्य धर्मस्य दासे आरोपेणात्मनेपदवत्

---

लभन्ते । याजकाः पुनरन्तरेणापि यजिं गा लभन्ते भृतकास्त्र पादिकमिति ॥ इति महाभाष्यम् ॥

---

अथवा स्वाभिधेयभावव्रत्तयो यात्यादयो नैषां स्वार्थताविशिष्टक्रियावाचित्वसंभवः ॥ तथा जातीयका इति । भा । प्रकारमात्रे फलं विधाय प्रकारवती अतीयर् विहितः ॥ अथेति । भा । कर्त्तारमेति प्राप्नोतीति कर्त्रायमिति

---

"कर्त्रभिप्रायता सूत्रे क्रियाभेदोपलक्षणम् ।
तथा भूता क्रिया सा हि तत्कर्त्रीफलभाग् यतः" ॥

कर्त्रभिप्रायक्रियाफलग्रहणेन संविधानक्रियानिर्दिश्यते । नक्षत्रं दृष्ट्वा वाचं विसृजेदित्यत्र नक्षत्र दर्शनेन कालविशेषनिर्देशवत् । यत एवं स्वपक्रियायाः कर्त्राफलेन युज्यते । न ह्यसंविदध्यागादि तत्फलं स्वर्गाद्यश्नुते ।

कर्त्रभिप्रेतत्वादिकं चारोपितानारोपितसाधारणं मानसबोधविषयत्वङादिहेतुरत एव परार्थारम्भे तु परस्मैपदमित्युपक्रमे कैयटेनोक्तम्। वस्तुत: "कर्त्रभिप्रायक्रियाफले" इत्यनेन संविधानमुपलक्ष्यते तद्वाचकाद्धातोरात्मनेपदम् । विक्लित्त्यनुकूलसाधनविनियोगार्थत्वे तु परस्मैपदम्। एतच्च हरिग्रन्थे स्पष्टमितिमञ्जूषायां निरूपितम्। भाष्यस्वारस्यमप्येवमेव तात्पर्य्यमित्याहुः ॥ नन्वेवं विवक्षातिप्रसक्तेत्यत आह

स्वरितञिद्विषयैवेति ॥ (कै)

ननु "एवं पञ्चभिर्हलैः कृषति" इत्यत्र संविधानप्रतीतेरात्मनेपदं स्यादत आह

पञ्चभिरिति । (कै)

पञ्चभिर्हलैरित्युपपदगम्यत्वात् तस्येति भावः ॥ ननु स्वामिदासयोर्युगपत् कर्तृत्वविवक्षायां स्वार्थवृत्तिताप्रयुक्तात्मनेपदस्य दासेनान्वयाभावात् परार्थत्वप्रयुक्तपरस्मैपदस्य स्वामिनान्वयात्। अप्राप्त्या ईदृशे विषये पचेस्तिङन्तस्य प्रयोग एव न स्यादत आह

---

सिध्यत्येव विवक्षितोऽर्थ इति प्रश्नः । यमेवेति । भा ॥ केचिदाहुः। वर्त्तमानकालविवक्षा स्यादिति । तदयुक्तम् । कालसामान्ये अस्य विधानात् । तस्मादयमर्थः। द्विविधं यागादिफलं दृष्टमदृष्टञ्च। दृष्टमत्र पुत्रवृष्टिग्रामपुत्रवधा-

---

ततश्च कार्य्यभूतफलसम्बन्धेन कारणभूतक्रियाविशेष उपलक्ष्यते । तद्वाचकाद्धातोरात्मनेपदमित्युक्तं भवति । संविधानोपलक्षणं च क्रियाफलं किं तत्राह

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम्" ॥

स्वामिदासाविति॥ (कै)

क्रियामात्रेति। (कै)

वस्तुत उपपत्त्यन्तरमत्रोक्तम्॥

सर्वत्रेति। (कै)

सर्वधातुष्वित्यर्थः॥ भाष्ये

सर्वेषाम् (भा)

इत्यस्यापि सर्वधातूनामित्यर्थः॥

सम्भवे (कै)

इत्यादि। एवं च यत्र धातौ "कर्त्रभिप्राय" इत्यस्य व्यावर्त्य-संभवस्तत्रैवास्य प्रवृत्तिरिति भावः॥ "अकर्त्रभिप्रायम्" इत्यस्य कर्त्तृभिन्नाभिप्रायमित्यर्थः। एवं च यात्यादीनां सर्वथा कर्त्रभिप्रेत-मेवेतिव्यावर्त्याभावात् तेषां नोदाहरणत्वमितिभावः॥

---

दिकम्। अदृष्टं स्वर्गादि। तत्रापूर्वं प्रत्यासन्नमवश्यं भावीतिप्रधानम्। इत-रत्तु विधुरप्रत्ययोपनिपातसम्भवे व्यभिचारसम्भवादिप्रकृष्टत्वाचाप्रधानमिति तस्येहग्रहणं न स्यात्। अभिप्रग्रहणात्तु तस्यापि ग्रहणम्। आभिमुख्यं प्रधानस्य यदा कर्त्ता बुध्याध्यवस्यति क्रियारम्भे तदा आत्मनेपदमित्ययमर्थोऽभिप्रग्र-

---

तदेव सूत्रे क्रियाफलशब्देन गृह्यते इति भावः। तत्र पाकस्य भोजनं लोकतोऽवगतम्। यागस्य स्वर्गो वेदतः। तदुक्तं भाष्ये। "साधीयो यत्र कर्तारं क्रियाफलमभिप्रैति। न चान्तरेणापि यजिं यजिफलं वर्षिं च वर्षिफलं लभन्ते। याजकाः पुनरन्तरेणापि यजिं ग्रामलभन्ते ग्रतकाश्च वेतनमिति"। यत्र यस्यां क्रियायां सत्वामित्यर्थः। साधीयः क्रियाफलं

[1]नैतेषां स्वार्थताविशिष्टेति । (कै)

क्रियामात्रवृत्तित्वादितिभावः ॥ एतदुक्तरीत्या भाष्यस्वरसवि-रुद्धम् । अकर्त्रभिप्रेतक्रियाफलाभावस्यैव भाष्यतो लाभात् प्रत्यययोः पौनरुक्त्यं परिहरति ।

प्रकारमात्रे इति ॥ (कै)

केचित्तु "तथा जातिः" इति वक्ष्यमाणैः "जात्यन्ताच्छ बन्धुनि" (५। ४। ९ ) इति क्रमाङ्कः ॥ नन्वभिप्रपूर्वकैः तैरिच्छायां रूढत्वेन कथं तदाक्षेपोऽत आह

कर्त्तारमेति । (कै)

स तु न तत्र विवक्षित इतिभावः ॥

---

१ उपलब्धकैयटे "नैषाम्" इत्यस्ति ॥

---

हृयो सति लभ्यते ॥ वपत इति । भा । केशश्मश्रु वपत इत्यत्रैवासन्ने फले स्यात् । धान्यं वपत इत्यत्र तु विप्रकृष्टे फले न स्यादित्यर्थः ॥ यं चाभिप्रागा-

---

स्वर्गादि । यजिं यागसंविधानरूपयज्यर्थम् । एवं वपिमित्यपि । अन्तरेणापि यजिं स्व साध्ययागव्यापारं विनापि । मतान्तरमाह ।

"क्रियाप्रवृत्तावाख्याता कैश्चित् स्वार्थपरार्थता ।
असती वा सती वापि विवक्षितनिबन्धना" ॥

सर्वे इमे स्वभूत्यर्थं प्रवर्त्तन्ते न हि कश्चित् परोऽनुग्रहीतव्य इति प्रवर्त्तत इति भाष्योक्तेः । सर्वस्य स्वार्थं प्रवृत्त्या स्वार्थता सर्वत्र मुख्या । परार्थतात्वसत्येव । "सती वा" इति तु लौकिको वाचो युक्तिः । विवक्षितं

**केचिदिति ।** (कै)

"संप्रत्येति" भाष्यस्वरसादिति तेषां भावः ॥ यद्यप्यत्र विधौ कालसम्बन्धो नास्ति तथापि कालोदासीनाः प्रत्यया आचिख्यमाण-कालत्रयसाधारणा इत्यभिप्रायेण

**कालसामान्ये** (कै)

इत्युक्तम्

**तस्मादिति ॥** (कै)

**सम्प्रतीति** (भा)

क्रियाफलविशेषणम् । "सम्प्रती"त्यस्य क्रियाऽव्यवहितोत्तर-कालिकमित्यर्थः । तच्च दृष्टमेवेतिभावः ॥ तद्ध्वनयन् वक्ष्यति

**इह न स्याद् यजत** (भा)

इत्यादि ॥

---

रिति । भा । यजेष्ट इत्यादौ । एतत्तु कालानिर्देशप्रसङ्गेनोक्तं न तु अत्राप्राप्ति-निमित्तमस्ति ॥ पादिकमहरिति । भा । पादौ भतिरस्य इत्यत्रार्थे "असमासे निष्कादिभ्यः" (५।१।२०) इति ठक् ॥ न चान्तरेणेति । भा । न हि स्वर्गादि

---

विवक्षा सा निबन्धनं हेतुरस्याः परार्थताया इत्यर्थः । एवं चासत् परार्थता-विवक्षायां मा भूदात्मनेपदमिति कर्त्रभिप्रायइत्यनेन क्रियाफलं विशेषितम् । सूत्रार्थस्त्वेतत्सूत्रे क्रियाफलके यत्ने कर्त्रभिप्रेतोद्देश्यके आत्मनेपदमित्यर्थः । अत्र "केचिद्" इत्यनेनास्वरुचिर्बोधिता । तद् बीजं तु यजन्ते ऋत्विज इत्या-देरप्यापत्तिः । यः स्वर्गादिफलार्थं निर्देशेनेतरं व्यापारयति स्वयं च प्रति-

विधुरः । (कै)

विरोधी ॥

प्रत्ययः । (कै)

कारणम् ॥

[1]तदुपनिपातः । (कै)

तत्प्राप्तिः कीर्त्तनेन कर्मनाशाजलस्पर्शकरतोयापारगमनविस्मयादिरूपविरोधिकारणसान्निध्ये विनाशसंभवादितिभावः ॥

विप्रकृष्टत्वम् । (कै)

कालान्तरभावित्वम् ॥

---

१ उपलब्धकैयटे "तद्" इति नास्ति ॥

---

फलं यागमन्तरेण भवति तदुद्देशेनैव यागप्रवर्त्तनात् ॥ याजका इति । भा । प्रतिग्रहेणापीतिभावः ॥ तथा च हरिणोक्तम्—

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम्" इति ॥ इति कैयटः ॥

---

विधानमारभते तत्रैव यजमानादौ कर्त्तर्य्यात्मनेपदमिष्यते । यस्तु भृतिरूपनिर्वेशमात्रफलः स्वामिचित्तानुवर्त्तनादेव कृतार्थतां मन्यते तत्र नात्मनेपदं भृत्यादावितीति हेलाराजः । किञ्च स्वरितञित् ग्रहणस्य प्रत्याख्यानस्योक्तभाष्यविरुद्धमिदम् । तेनार्थद्वयवाचकत्वं स्वाभाविकं यत्रास्ति तेऽत्र विषया इति स्पष्टमुक्तम् । कस्तत्र विवक्षाया उपयोगः । किञ्च फलस्य स्वर्गादेरेवात्र ग्रहणमित्यर्थस्य भाष्यसंमतत्वेन क्रियाप्रवृत्तावित्यसङ्गतम् ।

**अभिप्रग्रहणात्त्विति । (कै)**

तदभावेऽवश्यभावित्वं संनिहितत्वमेव च प्राधान्यं गृह्यते । सति तु तस्मिन् क्रियोद्देश्यत्वलक्षणप्राधान्यविशेषलाभ इति भावः ॥ क्रियाप्रारम्भे यदा कर्त्ता फलस्याभिमुख्यमुद्देश्यत्वं बुद्ध्या जानाति तदात्मनेपदमित्यन्वयः । एवं च तादृशोद्देश्यमेव फलशब्देन लभ्यत इति तात्पर्य्यम् ॥ इदमेवाभिप्रेत्य वक्ष्यति

**अभिराभिमुख्ये ॥ (कै)**

**आदिकर्मणीति । (भा)**

आद्यत्वं चाभिमुख्यत्वं च कर्मप्रारम्भकालिकमेवेति दिक् ॥ ननु वपनस्य केशकर्त्तनरूपं फलमव्यवहित मेवेति कथमिहाप्राप्तिरत आह

**केशेति ॥ (कै)**

---

किञ्च क्रियाप्रवृत्तेः सर्वत्र स्वार्थोद्देश्यकत्वेन तत्र परार्थोद्देश्यकत्वेन तत्र परार्थोद्देश्यकत्वविवक्षाऽत्यन्तमनुचितैवेति दिक् । केचित्तु प्रतिविधानार्थादपि तदर्थद्योतकमात्मनेपदं णिचा सह विकल्पते । संविधानमात्रं णिजर्थः । सर्वं इमे स्वभूत्यर्थं प्रवर्त्तत इति न्यायेन स्वार्थं प्रवर्त्तमानस्य प्रयोज्यस्यानुकूल्यकर्त्ता संविधातोच्यते । प्रैषस्तु न णिजर्थः । एवं चैकविषयत्वात् तयोः पर्य्यायः । यजते याजयतीति वदन्ति । तन्मतमाह

"केषां चित् कर्त्रभिप्राये णिचा सह विकल्पते
आत्मनेपदमन्येषां तदर्था प्रकृतिर्यथा"

णिचा सहं णिजर्था प्रकृतिर्धातुर्यथा विकल्पते तद्वत् । अन्येषां स्वरितञिद्व्यतिरिक्तधातूनाम् । "हेतुमति च" (३।१।२६) इत्यस्यापि संविधान-

धान्यं वपत इति । (कै)

बीजविकरणार्थोऽत्र वपतिरितिभाव ॥ भाष्ये

यं च (भा)

इत्यादि । अत्र "अभिप्रैतिः" सम्बन्धमात्रे । एवं च येन फलेन सम्प्रति कर्त्ता सम्बद्धः येन च सम्बद्धो भविष्यति येन च सम्बद्धोऽभूत् सर्वत्रात्मनेपदं सिद्धम् । कर्मारम्भे तस्यैव स्वसम्बन्धित्वेनोद्देश्यात् । तत्र भूते उपयोगोऽलाविष्टदेवदत्त इत्यादौ ॥ भाष्ये

[1]अत्रापि हीति । (भा)

न च तानि फलानि न क्रियारम्भोद्देश्यानि इति वाच्यम् ।

---

१ अत्र "हि" इति नास्ति बङ्गभूपलब्धभाष्यपुस्तकेषु ॥

---

रूपे व्यापारे वर्त्तमानाद्धातोर्णिजित्यर्थः । यजतेश्च संविधानमेवार्थः । पाचयतीत्यादावपि एवमित्येतन्मतम् । वस्तुतो णिच् प्रेरणावाची । "तत्प्रयोजको हेतुश्च" (१। ४। ५५) इति सूत्रात् । अत एव तदाश्रयस्य कर्तृत्वम् । अत एव पाचयति देवदत्तो यज्ञदत्तेन इत्यादि प्रयोगाः "गतिबुद्धि" (१। ४। ५२) इति सूत्रं च चरितार्थम् । एवं च भिन्नविषयत्वाद् विकल्पोक्तिरसङ्गता । किं च सामान्यविहितस्य णिचो धातुविशेषाद्विहितेनात्मनेपदेन बाध एवोचितः । एतच्च केषां चिदित्यनेन सूचितमिति कैलाराजः ॥ अथ एतेषां ण्यात्मनेपदयोर्विकल्पभ्रमबीजं दर्शयति

"श्रीणीश्च वपते धत्ते चिणोति चिनुतेऽपि च ।
आत्मप्रयोगा दृश्यन्ते येषु ण्यर्थोऽभिधीयते ॥"

ऋत्विग्व्यापारवचनयजेरारम्भो होता भविष्यामीत्यादिप्रतिवचनं तदुद्देश्याश्च गाव एवेति भावः ॥

पादो भृतिरस्येति । (कै)

पादभृतिसम्बन्धिदिनमित्यर्थः । दिवसस्य तां भृतिं लप्स्यामह इति तात्पर्य्यम् ॥ भाष्ये

सर्वच चेति । (भा)

न हि प्रयोजनमनुद्दिश्येतिन्यायादिति भावः ॥

प्रकर्षेति । (भा)

अनन्यलभ्यत्वं प्रकर्षः ॥

---

आत्मानं क्रीणीष्व इति विनतां कद्रूराह । तस्य च दास्यादात्मनो मोचनाय पुत्रसंविधानं कुरु इत्यर्थ इति तेषां तद्भ्रमबीजम् । तत्र प्रत्युपकारं विना दास्यान्मुक्त्यसम्भवात् प्रत्युपकारस्य च स्वासाध्यत्वादर्थसामर्थ्यात् पुत्रसंविधानं गम्यते । न तु स तदर्थ इति स तेषां भ्रमः । एवं केशश्मश्रु वपते इत्यत्र वपनकर्त्तुः संविधानं कुरुते इत्यर्थ इति तेषां भ्रमबीजम् । तत्रापि स्वस्यासामर्थ्येन सामर्थ्यात्तद् गम्यते इति तेषां भ्रमः सः । एवमन्यत्रापि ऊह्यमिति कैयटाराजः । अथ सिद्धान्ते प्रकृते

"यत्रोभौ स्वामिदासौ तु प्रारभेते सह क्रियाम्
युगपद्धर्मभेदेन धातुस्तत्र न वर्त्तते" ॥

स्वामिसाध्यं सम्भारघटनरूपं संविधानम् । दाससाध्यं तु विक्लित्तिपर्य्यन्तं साधनविनियोगरूपम् । तत्र भिन्नत्वाद् व्यापारस्य युगपदेकधातु-

**साधीयः** (भा)

इत्यस्य क्रियाफलेनान्वयः । अनन्यलभ्यं क्रियाफलं यच्च संविधानरूपे धात्वर्थे सति कर्त्तारमभिप्रैति तच्च तज्जानी इत्यर्थ इति भावः ॥ किं तत् साधीयः क्रियाफलं तत्राह

**न चान्तरेणेति ।** (भा)

यष्ट्र्यादिफलमन्तरेण यजिक्रियां न च नैव लभन्ते तदित्यर्थः ॥ गवादिषु च तद्व्यतिरेकं दर्शयति

**याजकाः पुनर्** (भा)

इत्यादिना ॥ तद्व्याचष्टे

---

वाच्यत्वासम्भवेन किं संविधानापेक्षमात्मनेपदं किं वा संस्कारकापेक्षम् परस्मैपदमिति संशयः । अनेकार्थत्वाद्धातूनां युगपदर्थद्वयाभिधानेऽप्येकत्र-प्रयोगे विरुद्धलादेशद्वयानुपपत्त्या स एव संशय इति हेलाराजः ॥ न च क्रियागतविशेषमविवक्षितं कृत्वा क्रियामात्रे साध्यसाधनभावमात्रविव-क्षायामत्र परस्मैपदं युक्तमिति वाच्यम् । तया क्रियया स्वामिनो भोजनस्य लाभेन दासस्य श्रममात्रलाभेन पूर्वपक्षस्यैव सिद्धेः । किं चैवं रीत्या यजति यजमान इत्यस्याप्यापत्तिः । न चेष्टापत्तिः । तदा कर्तृगामिनोऽकर्तृगामिनश्च फलस्याभावेन "स्वरितञित उभयवन्तः" इति भाष्यस्यासङ्गतेः। अत्र स्वामि-पदार्थसामर्थ्यात् तद्गतं संविधानमवगतं दास पदार्थसामर्थ्याच्च तत् क्रियायाः परार्थत्वमनवगतमिति नाप्राख्यातस्य परस्मैपदमिति केचित् । एवमपि पूर्वपक्षस्यैव सिद्धिरित्यन्ये ॥ समाधत्ते

## न हीति । (कै)

यद्यपि दानादिनापि स्वर्गो भवति तथापि स्वर्गविशेषस्य क्रियाविशेषनियतत्वाद्नन्यलभ्यत्वमिति भावः ॥

## तदुद्देशेन । (कै)

विशेषोद्देशेन। एवं च क्रियाफलशब्देन तदेव ग्राह्यमिति भावः॥ कारिकायां यत्सिद्ध्यर्थं पचादय एवारभ्यन्त इत्यन्वयः। एवकारा-ध्याहारस्य बोध्यः ॥

---

"संविधातुस्य सान्निध्यात् दासे धर्मोऽनुषज्यते ।
कृत्रिया चापि सम्बन्धात् कृत्रिशब्दाभिधेयता" ॥

उत्तरार्धस्य यथेत्यादिः। दासधर्मस्य तु न स्वामिन्यारोपः। उत्तमे निकृष्टधर्मारोपाप्रतीतेरित्यलं विस्तरेण। "अग्नीन् आदधीत" इत्यत्र यद्य-प्याधानफलमाहवनीयत्वादग्निनिष्ठं तथापि यज्ञहोमादिमुखलाभरूपं कर्तृ-मतमप्यस्ति तदादायात्मनेपदम्। आहवनीयत्वादेराधानसंस्कारातिरिक्तत्वे मानाभावेन तस्य च धात्वर्थतया तदतिरिक्तस्यैव मदुक्तस्य तत्फलत्वौचित्यात्। स्पष्टं चेदं "एङः पूर्वपरयोः" ( ६ । ४ । ८४ ) इति सूत्रे भाष्ये। एतेन कर्त्रभिप्रेतत्वं फले कर्त्रर्थत्वमेव न तु कर्तृसमवेतत्वमिति पार्थसारथ्युक्तम-पास्तम् ॥

# शेषात् कर्त्तरि परस्मैपदम्।
# १। ३। ७८॥

भाष्ये

अर्थे (भा)

कर्मकर्त्तृरूपे॥

प्रतिषेध इति। (भा)

परस्मैपदस्येति शेषः॥ कार्य्यातिदेशे कर्मवच्छास्त्रस्य परत्वेनात्मनेपदं सिध्यत्येव इत्यत आह

शास्त्रेति। (कै)

वस्तुतः कार्य्यातिदेशेऽप्युपदेशदेश एव देशस्तस्य शास्त्रातिदेशानतिरेकश्च इति न दोष इति बोध्यम्॥ नन्वेवमपि विशेषविहितेनातिदेशिकेनोपदेशस्य बाधः स्यादत आह

स्वाश्रयमिति। (कै)

अचारितार्थ्यमेव हि बाधकत्वे बीजम् अतिदेशस्य यगादिसम्पादनेन चरितार्थ इति भावः॥ भाष्ये

शेष इति। (भा)

एवं च भावकर्मणोरितिनियमे उपयुक्तत्वान्नायं शेष इति

भावः ॥ ननु प्रकृतिनियमेऽनुदात्तङिद्दादिभ्यो व्यावृत्तं परस्मैपदं शेषेभ्य एवेति किं तेनेत्यत आह

प्रत्ययनियम इति ॥ (कै)

शेषं दर्शयति

गन्धनादिष्विति । (कै)

एवं गन्धनादौ प्राप्तमात्मनेपदं यथा बाधते तथाऽसति कर्तृग्रहणे कर्मकर्त्तर्य्यपि तद्बाधेतेति भावः ॥

सति त्विति । (कै)

इह करणं तु स्पष्टार्थमिति भावः ॥

---

# अनुपराभ्यां कृञः । १ । ३ । ७९ ॥

भाष्ये

प्रतिषिध्यते तत्र परस्मैपदमिति । (भा)

स्वरितञित आत्मनेपदमिति प्राप्तस्य पुनर्विधानेनार्थादन्यत्र इत्यवगतेरितिभावः ॥ अत एव प्रतिषिध्यते इत्युक्ताऽग्रे

कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवतीति (भा)

उक्तिः संगच्छते ॥ ननु तिबादिसूत्रेण सामान्यतः प्राप्तानां "स्वरि-

तञ्जितः" (१ । ३ । ७२) इति नियमे तदपवादतया अनेन परस्मैपदविधाने आत्मनेपदमापद्यते कर्त्रभिप्रायादौ अनेन परस्मैपदविधानात् ॥ अन्यच्च "शेषात्" इति नियमेन व्यावर्त्तितत्वादत आह

अयमभिप्राय इति। (कै)

तदपवादत्वापेक्षया कर्तृगामिक्रियाफलादौ एव "तिप्तस् झि" (३ । ४ । ७८) इत्यस्य प्रतिप्रसवविधौ लाघवादिति भावः ॥

प्रतिप्रसूयत इति। (कै)

क्रमेण नियम इति पक्षे इयं शङ्का इत्यर्थः ॥

मौलेन। (कै)

सर्वेषां मूले स्थितेन "तिपतस् झि" (३ । ४ । ८८) इत्यनेन। "वा क्यषः" (१ । ३ । ९०) इत्यतो "द्युद्भ्यः" (१ । ३ । ९१) इत्यत्र वाग्रहणानुवृत्तिः ॥ नन्वनेन निषेधेन नियमापाकरणेऽपि पुनर्मूलविधेः प्रवृत्त्याशङ्का तदवस्थैवेत्यत आह

साक्षादिति। (कै)

तन्निषेधे हि शेषत्वात् शेषादिनियमाद्यानियमप्रसङ्ग इतिभावः ॥

विधीयत इति। (कै)

न क्रमेण नियमः किन्तु सर्वप्रकरणं युगपदेव नियामकमिति

भावः ॥ अनेन नियमानां विधिमुखेन प्रवृत्तिः सामान्यशास्त्रसंकोचकताचेति ध्वनितम् ॥ भाष्येऽपि

**आत्मनेपदेन परस्मैपदं बाध्यते** (भा)

इत्युक्त्या विधिमुखप्रवृत्तिः सूचिता । निषेधमुखेन प्रवृत्तौ हि तन्निषेधस्य शाब्दत्वाद्बाध्यते इत्युक्तिरसंगतैव स्यात् ॥

---

# बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । १ । ३ । ८६ ॥

उत्तरसूत्रेण सिद्धिमाशङ्क्यपरिहरति भाष्ये

**बुधादिष्विति** ॥ (भा)

नन्वकर्मकाणां ग्रहणं सकर्मकार्थमिति विरुद्धमत आह

**अकर्मका अपीति** । (कै)

प्रकारत्रयेण तेषां सकर्मकत्वमितिभावः ॥ नन्वकर्मकाणां सकर्मकत्वाद्ग्रायामिव अप्राप्तत्वाविशेषात् अचित्तवत् कर्तृकतायामपि विध्यर्थत्वसम्भवाद् वाकारोऽनुपपन्न इत्यत आह

**चार्थे इति** ॥ (कै)

**अचित्तवत् कर्तृकार्थमिति ।** (कै)

अचित्तवत्कर्तृकाकर्मकार्थमित्यर्थः ॥

---

# अणावकर्मकाच्चित्तवत्कर्तृकात् ।
# १ । ३ । ८८ ॥



ननु यतो णेरात्मनेपदं ततः प्रागवस्थाऽणिपद्याद्योति न दोषो-ऽत आह

**णिमाचेति ।** (कै)

प्रत्यासत्तिमजानानस्याशङ्का इत्यर्थः ॥

---

१ अणावकर्मकादिति चुरादिणिचो ण्यन्तात् परस्मैपदवचनम् । वा । अणावकर्मकादिति चुरादिणिचो ण्यन्तात् परस्मैपदं वक्तव्यम् । इहापि यथा स्यात् । चेतयमानं प्रयोजयति चेतयतीति ॥ यदि तर्ह्युपसंख्यायते ऽणि-ग्रहणमिदानीं किमर्थं स्यात् । अकर्मकग्रहणाण्यन्तविशेषणं यथा विज्ञायेत । अथाक्रियमाणे कस्याकर्मकग्रहणं स्यात् । णेरिति वर्त्तते (१ । ३ । ८६) ण्यन्तविशेषणम् । तत्र को दोषः । इहैव स्यात् चेतयमानं प्रयोजयति चेतयतीति । इह न स्यात् । आसयति । शाययतीति ॥ सिद्धं तु अत-स्मिन्नाविति वचनात् । वा । सिद्धमेतत् । अतस्मिन्णौ योऽकर्मकस्तस्मेति

चुरादिणिचो ण्यन्तादिति । (भा)

सामानाधिकरण्ये वैयधिकरण्ये चानन्वयोऽत आह

द्वितीयेति ॥ (कै)

आरोहयमाणमिति । (कै)

णिवृत्तप्रेषणचतुर्थकक्षेयं ततो हेतुमण्णिच् ॥

प्रयोजनान्तरमपीति । (कै)

वस्तुतस्तादृशप्रयोगानभिधानमितिभाष्याशय इत्यन्ये ॥

तस्यैवेति । (कै)

यद्यपि

यस्मात्सेः प्राग् (भा)

इति वक्ष्यमाणरीत्या हेतुमण्णिरिति लभ्यं तथाप्ययं भावः । तथा सति "आधृषाद्वा" इति विकल्पितणिच्यण्यन्तसम्भवेन ततश्चुरादिण्यन्तादपि परस्मैपदं यथा स्यादिति उत्तरभाष्यस्य त्वयं भावः । कश्चित्तथाऽण्यन्तसंभवेऽपि चुरादिणिच्त्वावच्छेदेन न सम्भवति । हेतुमण्णिच्त्वावच्छेदेन तु सम्भवत्यण्यन्ततेति स एव गृह्यते इति ॥

---

वक्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तमणावकर्मकादिति चुरादिणिचो ण्यन्तात् परस्मैपदमिति । नैष दोषः । अणाविति कस्येदं णेर्ग्रहणम् । यस्मात्सेः प्राक् कर्म कर्त्ता वा विद्यते न चैतस्मात्सेः प्राक् कर्म कर्त्ता वा विद्यते ॥

# न पादम्याङ् यमाङ् यसपरिमुह-रुचिनृतिवदवसः। १।३।८९॥



छन्दसीति। (कै)

"सुपां सुलुक्" (७।१।३९) इत्युपलक्षणमिदम्॥

---

# [1]लुटि च क्लृपः।१।३।९३॥



भाष्ये

अनुकृष्यते इति। (भा)

"वृद्भ्यः स्यसनोः" (१।३।९२) इत्यनेन तु न सिद्धिः। तत्र चतुर्णामेव ग्रहणादितिभावः॥

---

१ किमर्थश्चकारः। स्यसनोरित्येतदनुकृष्यते (१।३।९२)। यदि तर्हि नान्तरेण चकारमनुवृत्तिर्भवति "द्युद्भ्यो लुङि" (१।३।९१) इत्यत्रापि चकारः कर्त्तव्यः विभाषा इत्यनुकर्षणार्थः (१।३।९०)। अथेदानीमन्तरेणापि चकारमत्रानुवृत्तिर्भवतीहापि नार्थश्चकारेण। एवं सर्वे चकाराः प्रत्याख्यायन्ते॥

भाष्यकार इति । (के)

न च चकारेण स्पष्टा प्रतिपत्तिः । स्वरितत्वं तु व्याख्यानसापेक्षमिति वाच्यम् । सत्तेऽपि चे समुच्चेतव्यविशेषप्रतिपत्तये तदपेक्षायास्तुल्यत्वादितिभावः ॥

सर्वे चकारा इति । (भा)

अनुवृत्तिफलका इत्यर्थः । तेन "आटश्च" ( ६ । १ । ९० ) इति चस्य पुनर्विधानार्थत्वपरभाष्येणाविरोधः ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते
महाभाष्यप्रदीपोद्योते प्रथमस्याध्यायस्य
तृतीये पादे द्वितीयमाह्निकम्
पादश्च समाप्तः ॥

---

## महाभाष्यप्रदीपोद्द्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

---

# आ कडारादेका संज्ञा । १ । ४ । १ ॥

नन्वविरुद्धानां संज्ञानां विषये विरोधमूलकविप्रतिषेधशास्त्राऽप्रवृत्तेरस्य वैयर्थ्यमनुपपन्नमत आह

**आकडारादिति । (कै)**

अविरोधमजानतः शङ्केति भावः ॥ निरवकाशस्थले तु अविरोधं जानतोऽपि शङ्केत्याह

**विशेषेति । (कै)**

नतु विरोधादपीत्येवकारार्थः ॥

---

आ कडारादेका संज्ञा । १ । ४ । १ ॥

किमर्थमिदमुच्यते । अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम् । वा । अन्यत्र संज्ञासमावेशो भवति । क्वान्यत्र । लोके व्याकरणे च । लोके तावत् । इन्द्रः शक्रः पुरुहूतः पुरन्दरः । कन्दुः कोष्ठः कुसूल इति । एकस्य

न च संज्ञानामिति। (कै)

इग्ः शक्तः कृत् कृत्य इति च संज्ञानां लोकशास्त्रयोर्युगपत्प्रवृत्तिदर्शनादिति भावः॥

न चेति। (कै)

अनवकाशत्वप्रयुक्त इत्यर्थः॥ एकफलकत्वे सहानवस्थानलक्षणविरोधे वा अनवकाशं बाधकं न चैतदुभयमप्यत्रेत्याह

भिन्नफलत्वादिति। (कै)

वस्तुतः समावेशदर्शनादेवाविरोधो विशेषत्वेऽप्यबाधकत्वमिति भाष्याशयः। कैयटोक्तमेकफलत्वं विरोधश्च व्यभिचरितौ। अत एवाचिरादेशेन नुटो बाधमाशङ्क्य "न तिसृ" (६।४।४) इति ज्ञापकेन समाहितं सप्तमे (७।२।१००) भाष्ये। तादृशस्थले एकफलत्वाभावः स्पष्ट एव। तत्रापि दध्नो बाधनमविरोधे साक्षादनुपकारभेदे च दृष्टमित्यलम्। एते तु सूत्रे अन्यत्र बलवत्त्वेन दृष्टतया व्यवस्थाकाङ्क्षायां परत्वानवकाशत्वाभ्यां सा इत्याहुः॥

यद्यपीति। (कै)

एवं च दृष्टान्तो विषम इति भावः॥

---

द्रव्यस्य बह्व्यः संज्ञा भवन्ति। व्याकरणेऽपि कर्त्तव्यम् हर्त्तव्यमित्यत्र प्रत्ययकृत् कृत्यसंज्ञानां समावेशो भवति। पाञ्चालः वैदेहः वैदर्भ इत्यत्र प्रत्ययतद्धिततद्राजसंज्ञानां समावेशो भवति। अन्यत्र संज्ञासमावेशादेतस्मात्कारणाद् आ कडारादपि संज्ञानां समावेशः प्राप्नोति। इष्यते चैकैव संज्ञा स्यादिति तच्चान्तरेण यत्नं न सिध्यतीति नियमार्थं वचनम्। एव-

उदाहरणेति । (कै)

फलभेदेऽपि यदि समावेशः किमु वक्तव्यं तदभेद इति दृष्टान्तेति भावः ॥ ननु इन्द्रादीनामैश्वर्य्यशक्तिमत्त्ववज्रधाकाशपूर्दारणानि प्रवृत्तिनिमित्तानीति । कथमेते संज्ञाशब्दाः शब्दप्रवृत्तिनिमित्तको हि स इति चेन्न । सत्यपि योगे रूढिमात्रेण संज्ञाशब्दत्वमिति भगवतोऽभिप्रायात् ॥

कर्मणि विधानमिति । (कै)

एवं च फलभेदादविरोधाच्च न बाध इति कैयटाशयः । ननूभयथा पाठनिर्णये कथं संदेहोऽत आह ।

गुणदोषेति । (कै)

किं सम्भवमात्रेण [1]द्विधापाठोऽस्याचरणादिति विवेकं तद्विचारः कार्य्य इति भावः ॥

यत्नः । (कै)

ज्ञापकाश्रयणचकारादिरूपः ॥ यद्यपि परं कार्य्यमिति [2]पाठेऽपि सूत्राणामन्यथा पाठः कार्य्यस्तथापि तत्र न वर्णगौरवं नापि प्रतिपत्तिगौरवमिति न स दोष इति भावः ॥

---

१ द्विधापाठोऽर्थाचरणाद् । क ॥

२ "पाठे" इत्यारभ्य "स दोषः" इत्यन्तं नास्ति । ङ ॥

---

मर्थमिदमुच्यते ॥ अस्तिप्रयोजनमेतत् । किं तर्हीति । कथं त्वेतत् सूत्रं पठितव्यम् । किमा कडारादेका संज्ञेति । आहोस्वित् प्राक् कडारात् परं कार्यमिति । कुतः पुनरयं सन्देहः । उभयथाह्याचार्य्येण शिष्याः सूत्रं

## कार्य्यशब्देनेति । (कै)

संज्ञा इत्येव तु नोक्तम् उच्चारणानन्वयात् । यद्यप्यन्यान्यपि कार्य्याण्यत्र सन्ति वचनपुरुषनियमपूर्वनिपातादयः तथापि तेषां केनापि बाधप्रसक्त्यभावाद्बाधितप्रवृत्त्ये चैतत् सूत्रसत्त्वात्तल्लाभ इति भावः ॥

## पूर्वया । (कै)

अनवकाशया ॥

## न नियमार्थमिति । (कै)

आद्ये पाठे तु एकैव संज्ञा न द्वितीयेति नियमे विध्यर्थत्वासम्भवात् ॥ अत्र च विध्यर्थत्वसम्भवेन नियमो न युक्त इति भावः ॥ ननु पर्य्यायेण प्रवृत्त्या पूर्वस्यापि चारितार्थ्यसंभवेन संज्ञानां विरोधाभावेन च उभयोः प्रसक्तौ अत्रापि पाठे नियम एव स्यादत आह

## एतदेव चेति । (कै)

नियमेऽनुवाददोषापत्त्या वरं बाधकत्वकल्पनाद्वारा विधित्वमिति भावः ॥

---

प्रतिपादिताः । केचिदा कडारादेका संज्ञेति । केचित् प्राक् कडारात् परं कार्य्यमिति । कश्चात्र विशेषः । तत्रैकसंज्ञाधिकारे तद्वचनम् । वा । तत्रैकसंज्ञाधिकारे तद्वक्तव्यम् । किम् । एका संज्ञाभवतीति ॥ ननु च यस्यापि परं कार्य्यं तेनापि परग्रहणं कर्त्तव्यम् । परार्थं मम भविष्यति । विप्रतिषेधे चेति (१ । ४ । २) । ममापि तर्ह्येकग्रहणं परार्थं भविष्यति । सरूपाणामेकशेष एकविभक्तौ (१ । २ । ६४) इति । संज्ञाधिकारश्चायम् ।

## विप्रतिषेधे (कै)

इत्यस्य दृष्टबाधयेति शेषः ॥ भाष्ये

## परार्थमिति। (भा)

अनर्थ(अपि। का) अप्रकरणार्थमित्यर्थः। परार्थं यत्त्वया कृतं तदेव ममाच कृतं भविष्यतीत्यर्थः ॥ ननु विशेष्यवाचिपदासन्निधाने नपुंसकमेव प्रयोक्तुमुचितं संज्ञापर्य्यायनामादिशब्दानामपि विशेष्यत्वसंभवाच्चात आह

## संज्ञेति। (कै)

प्रचुरप्रसिद्धेः (सिद्धे। इ) संज्ञाशब्द एव प्रकरणादुपतिष्ठते इत्यर्थः॥ ननु "सरूपाणाम्" (१। २। ६४) इत्यस्यातिक्रान्तत्वात् कथं तदर्थतास्येत्यत आह

## असमाचेति। (कै)

एकसंज्ञाधिकारोत्तरमित्यर्थः ॥

## लिङ्गविपरिणामेनेति। (कै)

भावसाधने शेषशब्दे विभक्तिविपरिणामेनेत्यपि बोध्यम्। बहुयोगव्यवधानात् यत्तया परार्थं कृतं तदेव ममाच वुद्धिस्थं भवि-

---

तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः संज्ञायाः। तत्रैतावद्वाच्यम्। आ कडारादेका। किम्। एकासंज्ञा भवतीति ॥ अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः। वा। अङ्गसंज्ञया भपदसंज्ञयोः (१। ४। १३-१४-१८) समावेशो न प्राप्नोति। शार्ङ्गिकाः। वार्हिकाः। याजुष्काः। धानुष्काः। (४। ४। ५१॥ (५। १। ६३) ७। ३। ५१॥ ८। ३। ३९॥ ७। २। ११८)

ष्यति इत्यर्थकतया तत्रत्यमत्रानुवर्त्तते इत्येव भाष्येण (भाष्यं न। का) व्याख्यातम् ॥ नन्वेवमपि संज्ञेत्यधिककार्य्यमेवेत्यत आह

संज्ञाधिकारश्चेति ॥ (भा)

किम् (भा)

इतिप्रश्नः। "एका संज्ञा" इत्याद्युत्तरम्। प्रश्ने सामान्ये नपुंसकम्। सर्पिः शब्दादार्हीयठक् तदस्य पण्यमिति (वा। इ) इसुसुक्तान्तात् कः। तत्राङ्गसंज्ञाभावे किं स्यादत आह

असत्यामिति ॥ (कै)

अनङ्गस्यापीति। (कै)

यद्यपीष्टानुरोधात् समावेशोऽपि ज्ञापयितुं शक्यस्तथापि तद्वचनैकशरणानामिष्टानिष्टे दुर्ज्ञेये इति भावः ॥

देवदत्तो गार्ग्य इति। (कै)

वाक्यसंस्कारपक्षे इदम्। प्रत्ययग्रहणपरिभाषया वृद्धिवारणं शक्यमिति चिन्त्यम्। कुमुद्वान् इति ड्मतुप्। सिद्धान्तस्थित एव ज्ञापकात् समावेश इति "परं कार्य्यत्वम्" इत्यत्र सुबन्तसमुदायात् कथं तद्धितस्तदुत्पत्तावपि कथं पूर्वपदे विभक्तिश्रवणमत आह

---

वाभ्रव्यः। माधव्य इति (४ । १ । १०६ । (१०५) ६ । ४ । १४६ ॥ ७ । २ । ११७) । अनवकाशे भपदसंज्ञे अङ्गसंज्ञां बाधेयाताम्। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः॥ यस्य पुनः परं कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः। कथम्। पूर्वं तस्य भपदसंज्ञे पराङ्गसंज्ञा। कथम्। एवं स वक्ष्यति। यस्मात्प्रत्ययविधिस्तदादिसुप्तिङन्तं पदम्।

परं कार्य्यमिति। (कै)

शब्दस्य भावस्यार्थः। यथैकदेशद्वारा एतत् सूत्रार्थरूपः। अनुवादे ऽर्थविशेषणकशब्दस्वरूपप्रतीतेरितिभावः॥

ततः इति। (कै)

अनुवर्त्तमानस्यापि विषयकोटौ निवेशादितिभावः॥

अङ्गं सदिति। (कै)

स्वादिषु यदङ्गं तत्पदमिति व्याख्यानेनानुवादसामर्थ्यादङ्ग-पदत्वयोः समावेश इति भावः॥ नन्वनुवृत्तिसामर्थ्यात् समावेशोऽत आह

एका संज्ञेति॥ (कै)

तदुक्तं भाष्ये

एका संज्ञेति वचनात् (भा)

इत्यादि॥

बाधे इति। (कै)

उत्सर्गापवादन्यायेनेति भावः॥

---

नः क्ये (१। ४। १५)। सिति च (१। ४। १६)। स्वादिष्वसर्वनामस्थाने (८। ३। ६४)। यचि भम् (१। ४। १८)। तस्यान्ते प्रत्यये अङ्गमिति। तथारम्भसामर्थ्याच्च भपदसंज्ञे परं कार्य्यत्वाच्चाङ्गसंज्ञा भविष्यति॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्याप्यङ्गसंज्ञापूर्विके भपदसंज्ञे। कथम्। अनुवृत्तिः क्रियते। पर्य्यायः प्रसज्यते। एकासंज्ञेति वचनान्नास्ति यौगपद्येन सम्भवः॥ कर्मधारयत्वे तत्पुरुषग्रहणम्। वा। कर्मधारयत्वे तत्पुरुषग्रहणं कर्त्तव्यम्।

इह त्विति । (कै)

इहापि तथैव स्यादितिभावः ॥

कथमिति चेदिति । (कै)

पदमित्यनुवृत्तावपि उभयोर्विधेयतया कथं भसंज्ञा पदकार्य्यमिति प्रश्नः ॥

उच्यते इति । (कै)

नानेन पदसंज्ञा विधीयते किन्त्वनुद्यते इतिभावः ॥

पदसंज्ञा प्रवर्त्तते इति । (कै)

तद्बुद्धिः प्रवर्त्तते इत्यर्थः । अनुवादसामर्थ्यादितिभावः ॥ इह तु "एका संज्ञेति" नियमबाधनाय विधेयतेति विशेष इति बोध्यम् । वस्तुतस्तद्भाष्यमन्यार्थकं न तु एवमर्थकमिति तत्रैव निरूपितम् ॥ नन्वनया रीत्या परकार्य्यम् इति पाठेऽपि ज्ञापितसंज्ञाबाधस्या-संज्ञाबाधाय पर्य्याय एव स्यात् न तु समावेश इति चेन्न । अनुमिताप्राप्त्यपवादभूतत्वादस्याः प्राप्तेर्ज्ञापितो बाधस्तदितरपर्य्यवसायीति समावेशसिद्धिरित्याशयात् ॥ ननु बहुव्रीहेः संज्ञानिवृत्तये तत्र तत्पुरुषग्रहणमावश्यकमत आह

---

तत्पुरुषः समानाधिकरणः कर्मधारयः (१ । २ । ४२) इति । एकसंज्ञाधिकार इति चोदितम् । अक्रियमाणे ह्यनवकाशा कर्मधारयसंज्ञा तत्पुरुषसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेस्तस्योभयोःसंज्ञयोर्भावः सिद्धः । कथम् । पूर्वा तस्य कर्मधारयसंज्ञा परा तत्पुरुषसंज्ञा । कथम् । एवं स वक्ष्यति । पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन कर्मधाय

**एका संज्ञेति॥** (कै)

**अन्यच्च वेति।** (कै)

यथान्यास्मित्यर्थः॥

**मया त्विति।** (कै)

परं कार्य्यत्वादिनेत्यर्थः॥ ननु समानाधिकरणग्रहणमपि
र्त्तव्यमिति [1]किं तत्पुरुषपदकर्त्तव्यतैव विशेष्योच्यतेऽत आह भाष्ये

**एकसंज्ञाधिकार इति॥** (भा)

**चोदितमिति।** (भा)

ाद्यन्यत्र सा संज्ञा तदोभयं कार्य्यम् एकसंज्ञाधिकारे तत्पुरुष-
करणे [2]"नवकेवला: समानाधिकरणेने"त्युत्तरं करणे तु अधि-
ारादेव समानाधिकरण इति लभ्यते इति तत्कर्त्तव्यतैव
[3]चोदितेति भावः॥

**अनवकाशेति।** (भा)

यथाचानवकाशत्वाबहुव्रीहिसंज्ञां बाधते तथा तत्पुरुषसंज्ञा-
मपि बाधेतेत्यर्थः॥

१ किं तत्पुरुषपदकर्त्तव्यमिति। क॥ २ अ २। पा १। सू ४९॥
३ नोदिता। का। इ॥

ति (२। १। ४६)। एवं सर्वं कर्मधारयप्रकरणमनुक्रम्य तस्यान्ते श्रितादि-
तत्पुरुष इति। (२। १। २४)। तत्रारम्भसामर्थ्याच्च कर्मधारयसंज्ञापरं
ार्यत्वाच्च तत्पुरुषसंज्ञा भविष्यति॥ ननु च यस्याप्येकसंज्ञाधिकारस्त-
त्रापि तत्पुरुषसंज्ञापूर्विका कर्मधारयसंज्ञा। कथम्। अनुवृत्तिः क्रियते।
र्य्यायः प्रसज्यते। एका संज्ञेतिवचनान्नास्ति यौगपद्येन संभवः॥ तत्पुरुषत्वे

## यद्येवमिति । (कै)

कर्मधारयप्रकरणान्ते [1]"द्वितीयाश्रित" इत्यादिपठनीयं श्रिता-दिमपेक्ष्य च तत्पुरुषसंज्ञा कर्त्तव्येति भाष्यार्थं मत्वा शङ्केयं यदि तु "द्वितीयाश्रित" इत्यादि कृत्वा कर्मधारयप्रकरणमनुक्रम्य [1]"उप-पदमतिङिति" प्रकरणान्ते श्रितादिभिस्तत्पुरुष इत्युच्यते तदा नेयं शङ्केति ध्येयम् ॥ परन्त्वत्र पक्षे श्रितादिभिरित्यस्याधिकरणाद् गौरवं भवतीत्युपाध्यायोक्तमेव सम्यक् ॥ नन्वेवमपि समानाधि-करणस्य तत्पुरुषत्वं न स्यात् तत्पुरुष इत्यस्योत्तरत्रैव सम्बन्धादत आह

## तत्पुरुष इत्यत्र चेति । (कै)

तथा च [3]कर्मधारयसंज्ञया तत्पुरुषत्वस्य पर्याये सिद्धे परं कार्य्यमिति समावेशार्थमिति भावः । अत्र पक्षे बहुव्रीहिसंज्ञा-विषयेऽस्याप्रसक्तिरेवेति बोध्यम् ॥ ननु द्वितीयाध्यायस्य तत्पुरुष-संज्ञायाः प्रथमे कथमनुवृत्तिरत आह

---

१ अ २ । पा १ । सू २४ ॥ २ अ १ । पा २ । सू १९ ।

३ "कर्मधारयत्वस्य पर्याये सिद्धे"। इ ॥ "परम्" इत्यारभ्य "बोध्यम्" इत्यन्तं नास्ति । का ॥

---

द्विगु च ग्रहणम् । वा । तत्पुरुषत्वे द्विगु च ग्रहणं कर्त्तव्यम् । तत्पुरुषः (२ ॥ १ । २२) द्विगुश्च(२ । १ । २३) इति चकारः कर्त्तव्यः । अक्रियमाणे हि चकारेऽनवकाशा द्विगुसंज्ञा तत्पुरुषसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः । यस्य पुनः परं कार्य्यत्वं नियमानुपपत्ति-स्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् । पूर्वा तस्य द्विगुसंज्ञा परा

## व्यधिकरणानामिति॥ (कै)

द्वितीय एव पूर्वकालैकसर्वजरत् पुराणनवकेवलाः समानाधिकरणेन कर्मधारय इत्येवं कर्मधारय संज्ञा करिष्यत इति भावः॥

## पुंवद्भावेति। (कै)

"स्त्रियाः पुंवद्" इति तु "न कोपधायाः" इति निषिद्धमिति भावः॥ यथा न्यासे तत्पुरुषानुवादेन कर्मधारयसंज्ञाया आकडारात् बहिः कृतत्वेन समावेशसिद्धिरिति तत्त्वम्॥ ननु "द्विगुश्च" इति सूत्रपाठाद् "द्विगुश्च" इति अनुपपन्नमत आह

## द्विगोरिति।

व्याप्तिन्यायात् कडाराः कर्मधारये इत्ययमेवावधिरिति तात्पर्य्यम्। आद्वन्द्वादिति तु नोक्तम्। "द्वन्द्वश्च प्राणी"त्यस्यावधित्वापत्तौ सम्बुद्ध्यामन्त्रितसंज्ञयोः [1]समावेशानापत्तेः॥

## परस्तादिति। (कै)

## सर्वं द्विगुप्रकरणमनुक्रम्य (भा)

---

१ "समावेश" इत्यारभ्य "इति तत्त्वम्" इत्यन्तं नास्ति। क॥

---

तत्पुरुषसंज्ञा। कथम्। एवं स वक्ष्यति। तद्धितार्थोत्तरपदसमाहारे च (२। १। ५१) संख्यापूर्वो द्विगुः (२। १। ५२) इति। एवं सर्वं द्विगुप्रकरणमनुक्रम्य तस्यान्ते श्रितादिस्तत्पुरुष इति (२। १। २४)। तत्रारम्भसामर्थ्याच्च द्विगुसंज्ञा परं कार्य्यत्वाच्च तत्पुरुषसंज्ञा भविष्यति॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि तत्पुरुषसंज्ञापूर्विका द्विगुसंज्ञा। कथम्। अनुवृत्तिः क्रियते। पर्य्यायः प्रसज्येत। एकासंज्ञेति वचनान्नास्ति

इत्यादिग्रन्थश्च। अन्ये तु चकारघटितं द्विगुश्चेति सूत्रं कर्त्तव्यमिति भाष्यार्थमाहुः। कृतमेवेति न दोष इति तत्त्वम्॥ ननु गत्युपसर्गसंज्ञयोः समानविषयत्वात् कथमुपसर्गत्वस्यैव निरवकाशत्वमत आह

ऊर्य्यादीति। (कै)

गतित्वेनैकीकृत्य सावकाशत्वाभिमानः। गतिस्वरो "गतिरनन्तर" इति पूर्वपदप्रकृतिस्वरः। "उपसर्गादसमास" इति णत्वम्। "उपसर्गात् सुनोती"ति षत्वम्। "दिवः कर्म च" इत्यत्र संज्ञयोः समावेशेन तद्भावत्वर्थसाधकतमे शक्तिद्वयसमावेशो बोध्यते॥

समावेशस्येति। (कै)

करणत्वादक्षाणां तृतीया[१]। अकर्मकत्वाभावात्[२] परस्मैपदाभावः। प्रयोज्येऽकर्मकत्वप्रयुक्तकर्मत्वनिवृत्तिद्वारा यज्ञदत्ते तृतीया च इति भावः। तृतीयैव चात्र शास्त्रवत्त्वाच्छक्तिद्वयबोधिकेति बोध्यम्॥ ननु कर्मत्वविधानसामर्थ्याद्द्वितीया इत्यत आह

---

१ कर्मत्वाच्चाकर्मकत्वाभावात्। क॥
२ 'अणावकर्मकाद्'। १। ३। ८८॥

---

यौगपद्येन सम्भवः॥ गतिदिवः कर्महेतुमत्सु च ग्रहणम्। वा। गतिदिवः कर्महेतुमत्सु च ग्रहणं कर्त्तव्यम् उपसर्गाः क्रियायोगे (१। ४। ५६) गतिश्च (१। ४। ६०) इति चकारः कर्त्तव्यः। अक्रियमाणे हि चकारेऽनवकाशोपसर्गसंज्ञा गतिसंज्ञां बाधेत। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावसिद्धः। कथम्। पूर्वा तस्योपसर्गसंज्ञा परा गतिसंज्ञा। तत्रारम्भसाम-

कर्मसंज्ञा चेति। (कै)

इदमुपलक्षणं कर्म्मणि लकारादेरपि॥

तृतीयात्विति। (कै)

[1]"कर्त्तृकरणयोरि"त्यत्रास्योपस्थितिस्तु अकर्तृयोगे चरितार्थेति भावः॥ न च स्तोकं पाक [2]इत्यादावपि षष्ठीस्यादिति वाच्यम्। कर्त्तृसाहचर्याद् अधात्वर्थकर्मण एव ग्रहणेनादोषात्। न चैव मनसा देव इत्यादिप्रयोगः कथं हेतुतृतीयान्तेन पचाद्यजन्तो देव-शब्दस्य समासे सिद्धत्वात्। केचित् साधकतमगतकर्मत्वशक्तिबोधे-ऽच्चान् दीव्यतीति प्रयोगे दृढ़तरं मानं चिन्त्यम्। कार्य्यकालपक्षे-ऽपि परत्वात् तृतीया बाध्ये न्याय्ये उपस्थितेरेव न्याय्यत्वात्। किञ्च तत्र फलाश्रयत्वविवक्षया कर्त्तरि इति कर्मत्वं न च तदा करणत्व-

---

१ अ २। पा ३। सू १८॥
२ "इत्यादावपि" इत्यारभ्य "तत्र फलाश्रयत्वविवक्षया" इत्यन्तं नास्ति इकुलखदीयविवरणपुस्तके॥

---

र्थाच्चोपसर्गसंज्ञा परं कार्य्यत्वाच्च गतिसंज्ञा भविष्यति॥ ननु च यस्याप्ये-कसंज्ञाधिकारस्तस्याप्युपसर्गसंज्ञापूर्विका गतिसंज्ञा। कथम्। अनुवृत्तिः क्रियते। पर्य्यायः प्रसज्येत। एकासंज्ञेति वचनान्नास्तियौगपद्येन सम्भवः॥ गतिसंज्ञाप्यनवकाशा सा वचनाद् भविष्यति। सावकाशा गतिसंज्ञा। कोऽवकाशः। ऊर्य्यादीन्यवकाशः (१।४।६१)। प्रादीनां या गतिसंज्ञा सानवकाशा। गति॥ दिवः कर्म। साधकतमं करणम् (१।४।४२) दिवः कर्म च (१।४।४३) इति चकारः कर्त्तव्यः। अक्रियमाणे हि चकारे-

मिति न दोषः। किञ्च [1]"क्ङिति च" इतिसूत्रकैयटोक्तरीत्या यथोद्देशेऽपि प्रधानानुरोधेन गुणानां स्वात्मभेदकल्पनस्य तुल्यतया विप्रतिषेधकार्य्यकालपक्षे इत्युक्तिरनुचिता। किञ्च कार्य्यकालपक्षेऽप्यादिभ्यः परैव प्रगृह्यसंज्ञा इति [2]"अदसोमात्" इति सूत्रभाष्योक्तरीत्या "अपादानमुत्तराणि" गां दोग्धि पय इति अत्रत्य भाष्यासङ्गतेः। आ कडारात्संज्ञानां यथोद्देशत्वमेवेति च तदुक्त्यसङ्गतिरित्याहुः॥ [3]"हेतुमति च" इति च ग्रहणम् इति भ्रमं वारयति

**हेतुसंज्ञेति॥ (कै)**

**निबन्धन इति। (कै)**

ननु वात्सीबन्धुः इत्यत्र प्लुताप्राप्ते भाष्यस्य न्यूनतैवेति चेन्न। प्लुतविधायके दूराद् आह्वानं ज्ञापनमात्रोपलक्षणं न त्वभिमुखीकृत्य ज्ञापनरूपसम्बोधन[4]विभक्तिनियामकस्योपलक्षणम्। एवं चागच्छतु भवान् गार्गीबन्धुर्वात्सीबन्धुरिति वाक्यवर्त्तिन उदाहरणत्व-

---

१ अ १। पा १। सू ५॥
२ अ १। पा १। सू १२॥
३ अ ३। पा १। सू २६॥
४ सम्बोधनस्य। क॥

---

ऽनवकाशाकर्मसंज्ञाकरणसंज्ञां बाधेत। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः॥ यस्य पुनः परं कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः। कथम्। पूर्वा तस्य कर्मसंज्ञा पराकरणसंज्ञा। कथम्। एवं च वक्ष्यति। दिवः साधकतमं कर्म। ततः करणम्। करणसंज्ञं च भवति साधकतमम्। दिव इति निवृत्तम्। तत्रारम्भसामर्थ्याच्च कर्मसंज्ञा परं कार्य्यत्वाच्च करणसंज्ञा भविष्यति॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि

मिति भाष्याप्रयत्नेनादोषात्। अतिप्रसङ्गस्तु व्यवस्थितविभाषया अनभिधानेन वा परिहरणीय इत्याहुः॥

## चिन्त्यम् इति। (कै)

अत्रेयं चिन्ता। अस्मादेव भाष्यप्रयोगात्तस्यानित्यत्वं तेनोक्त-प्रयोगसिद्धिरित्याहुः॥

## ततो घिसंज्ञं चेति। (कै)

तथाच नदीघिसंज्ञाविषये ते संज्ञे नदीघिसंज्ञे पूर्विके इति भाष्यार्थ इति भावः॥

## पर्य्यायार्थैवेति। (कै)

एवं हि एका संज्ञेति नियमो न बाधित इति भावः। तदन्तस्य घिनदीसंज्ञे इति सिद्धान्तः॥

## ननु चेति। (कै)

तत्र शबादिपरस्मिपोऽभावात् तिङ् परस्मैपदमेव गृह्यते इति भावः॥

## पर्य्याय इति। (कै)

---

करणसंज्ञापूर्विका कर्मसंज्ञा। कथम्। अनुवृत्तिः क्रियते। पर्य्यायः प्रसज्येत। एकासंज्ञेति वचनान्नास्ति यौगपद्येन सम्भवः। दिवः कर्म॥ हेतुमत्। स्वतन्त्रः कर्त्ता (१। ४। ५४) तत्प्रयोजको हेतुश्च (१। ४। ५५) इति चकारः कर्त्तव्यः। अक्रियमाणे हि चकारे अनवकाशा हेतुसंज्ञा कर्मसंज्ञां बाधेत। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः॥ यस्य पुनः परं

एकसंज्ञाधिकाराबाधायेति भावः ॥ वस्तुत इष्टानुरोधाद्दूणेति-विभाषाग्रहणाच्च समावेशज्ञापकत्वमेवास्येति "एका संज्ञा" इति पाठेऽपि न दोषः ॥ इदानीं परं कार्य्यत्वपक्षे दोषानाह भाष्ये

**परवचन इति ॥** (भा)

"छलियै" "तदस्य प्राप्तमि"त्यधिकारे [1]"छतोरण्" इति वर्त्तमाने [2]"छन्दसि घस्" इति घस् ॥

**पदसंज्ञात्विति ।** (कै)

गुणेऽवादेशे [3]"लोपः शाकल्यस्य" इत्यर्थमपि सेति बोध्यम् ॥

**नियमार्थमिति ।** (कै)

यद्यपि परं कार्य्यत्वपक्षेऽपि गत्यादिसूत्रं नियमार्थं तथाप्यत्र पक्षे इष्टसिद्धिरिति भावः ॥ ननु परत्वात् कर्त्तृत्वे प्राप्ते कर्मसंज्ञा-विध्यर्थमेव गत्यादिसूत्रं स्यात् कथं नियमार्थत्वमित्यत आह

---

१ अ ५ । पा १ । सू १०९ ॥ २ अ ५ । पा १ । सू १०६ ॥
३ अ ८ । पा ३ । सू १९ ॥

---

कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् । पूर्वा तस्य हेतुसंज्ञा परा कर्तृसंज्ञा । कथम् । एवं स वक्ष्यति । स्वतन्त्रः प्रयोजको हेतुरिति । ततः कर्त्ता । कर्तृसंज्ञास्य भवति स्वतन्त्रः । प्रयोजक इति निवृत्तम् । तत्रारम्भसामर्थ्याच्च हेतुसंज्ञा परं कार्यत्वाच्च कर्तृसंज्ञा भविष्यति । ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि कर्तृसंज्ञा पूर्विका हेतुसंज्ञा । कथम् । अनुवृत्तिः क्रियते । पर्य्यायः प्रसज्येत । एकासंज्ञेति वचनान्नास्ति

तथा ह्यीति ॥ (कै)

प्राधान्यादिति । (कै)

शब्दशास्त्रत्वाच्छाब्दं प्राधान्यं अन्तरङ्गत्वादिभ्यो बलवत् लोकेऽपि अन्तरङ्गकार्य्यात् प्रधानकार्य्यस्य बलवत्त्वं दृष्टं मन्त्रिराजस्थले इति भावः ॥

अविरोधादिति । (कै)

पूर्वेणापवादेन निवर्त्तितस्य परकार्य्यस्य प्रवर्त्तकेनानेन निरवकाशपूर्वकार्य्यस्य निवर्त्तयितुमशक्यतया एकसञ्ज्ञा नियमराहित्येन च विरोधाभावादित्यर्थः ॥

गत्यर्थादीनामेवेति । (कै)

एषां कर्मसंज्ञैव इति नियमस्तु न । प्राक् कडारादिति शास्त्रबाधापत्तेः ॥

आरम्भसामर्थ्याच्च इति (भा)

भाष्ये । [1]"हेतुमति च" इति सूत्रे भाष्ये गतिसूत्रनियमत्वोक्त्या कर्तुरित्यण्यन्तधातुविषयत्वावश्यकत्वेन ण्यन्तधातुविषयस्य [2]"कर्त्तु-

१ अ ३ । पा १ । सू २६ ॥ २ अ १ । पा ४ । सू ७९ ॥

यौगपद्येन संभवः ॥ गुरुलघुसंज्ञे नदीघिसंज्ञे । वा । गुरुलघुसंज्ञे नदीघिसंज्ञे वाधेयाताम् (१ । ४ । ३–१२) । गार्गीबन्धुः । वात्सीबन्धुः (६ । २ । १०९ ॥ ८ । २ । ८३) । वैत्रम् । (२ । २ । ३२ ॥ ५ । १ । १३१ ) विविनय्य (६ । ४ । ५६) । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ॥ यस्य पुनः परं कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् । पूर्वे तस्य

रीप्सिततमम्" इत्यस्यारम्भसामर्थ्यादित्यर्थः । यत्त्वेतद्भाष्यबलाद् गत्यादिसूत्रं विध्यर्थं परत्वान्तरङ्गत्वोपजीव्यत्वैः कर्त्तृत्वप्राप्तेः । एवं च पाचयत्यादौ न दोषः । यत्र "आरम्भसामर्थ्याद्" इत्यस्य गत्यादिसूत्रारम्भसामर्थ्यादित्यर्थ इति तन्न प्रधानानुरोधेन सर्व्वतो बलवत्त्वात् । किं चात्र पाठे विध्यर्थत्वं दुरुपपादमुभयोरप्यविरोधात् प्राप्तेरिति दिक् ॥

## यदीति । (कै)

ननु समावेशस्य सिद्धत्वेऽपि पक्षे कर्त्तृत्वमात्ररूपपर्य्यायार्थं तदस्तु न च संज्ञयोः समावेशेऽपि तत् कार्य्यशास्त्रयोर्यौगपद्यायोगात् कार्य्यान्तरस्य चाभावात् पर्य्यायः फलतीति वाच्यम् [१]समावेशेऽस्य कर्मभिन्नत्वाभावेन [२]"उभयप्राप्तौ" इति निषेधाप्रवृत्तौ नित्यं षष्ठी । पर्य्याये तु कर्त्तृत्वे निषेधेऽपि कर्मत्वे तदभावात् पक्षे भाव्यं षष्ठ्येति विशेषादिति चेन्न इष्टविषयेऽनभिधानेन तादृशप्रयोगस्यैवाभावादिति भाष्याशयात् ॥

---

१ सम्प्रवेशे । इ ॥ २ अ २ । पा ३ । सू ६६ ॥

---

नद्गीघिसंज्ञेपरे गुरुलघुसंज्ञे । तत्रारम्भसामर्थ्याच्च नदीघिसंज्ञे परं कार्य्यत्वाच्च गुरुलघुसंज्ञे भविष्यतः ॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि नदीघिसंज्ञाधिकारस्तस्यापि नदीघिसंज्ञापूर्व्विके गुरुलघुसंज्ञे । कथम् । अनुवृत्तिः क्रियते । पर्य्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन सम्भवः ॥ परस्मैपदसंज्ञां पुरुषसंज्ञा । वा । परस्मैपदसंज्ञां पुरुषसंज्ञा बाधेत (१।४।९९।१०१) परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ॥ यस्य पुनः परं कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् । पूर्व्वा

**ह्रक्राविति । (कै)**

ह्रकराविव्युचितम् । यद्वा सूत्रगतहृतयणादेशे रेफान्त-शब्दानुकरणोत्तरपदद्वन्द्वोऽयं द्विवचनान्त इति बोध्यम् ॥ ननूपपा-दितरीत्या संज्ञासमावेशसम्भव इत्यत आह

**अयं भाव इति ॥ (कै)**

**तत्र घिलक्षणे इति । (कै)**

गुणेन नदीत्वनिमित्तविनाशेन युगपत्तयोरसम्भवेन नदीसंज्ञापे-क्षया परत्वादिति भावः ॥

**अलं विधित्वाच्चेति । (कै)**

पूर्वविध्यभावाद् [१]"अचः परस्मिन्" इत्यस्याप्यभाव इति बोध्यम् ॥

**तस्मादिति । (कै)**

दृष्टानुरोधादेवमेव कल्प्यते नत्वल्विधावपि स्थानिवत्त्वादि-तिभावः ॥ भाष्ये

---

१ अ १ । पा १ सू ५७ ॥

---

तस्य पुरुषसंज्ञा परा परस्मैपदसंज्ञा । कथम् । एवं स वक्ष्यति । तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमा इति । एवं सर्वं पुरुषनियममनुक्रम्य तस्यान्ते लः परस्मैपदमिति । तत्रारम्भसामर्थ्याच्च पुरुषसंज्ञा परं कार्य्यत्वाच्च परस्मैपदसंज्ञा भविष्यति ॥ ननु च यस्याप्येकं संज्ञाधिकार-स्तस्यापि परस्मैपदसंज्ञा पूर्व्विका पुरुषसंज्ञा । कथम् । अनुवृत्तिः क्रियते । पर्य्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ॥

आश्रयाभावादिति। (भा)

नदीत्वस्याश्रयभूतह्रस्वाभावादित्यर्थः ॥

यस्य त्विति। (कै)

नदीत्वाभावे घित्वानिवृत्तेर्गुणेन यणो बाधात् यणो निमित्तं नदीत्वमिति भावः॥ मास्तु शेषवचनं घिसंज्ञानिवृत्त्यर्थं बहुव्रीहि-प्रतिषेधार्थं तत्कर्त्तव्यमेवेत्याह भाष्ये

बहुव्रीह्यर्थं त्विति ॥ (भा)

अत्रेति। (कै)

उन्मत्तेति क्तान्तस्य पूर्वनिपातस्तु बहुव्रीहित्वाभावेऽप्युपसर्जन-त्वेन तं विना संज्ञाया अप्रतीतेस्सार्थिक इति भावः॥ नित्यनपुंसकत्वं तु संज्ञयोः समावेशेन सिद्धम् ॥

[1]पाक्षिकः कबिति। (कै)

शेषादिति कपो न [2]"संज्ञायामिति" निषेधात् चिन्त्यमिदम्।

१ उपलब्धकैयटे "पाक्षिकस्य कप्" इत्यस्ति ॥

२ अ ६। पा ३। सू ३८ ॥

परस्मैपदसंज्ञाप्यनवकाशा वचनाद्भविष्यति। सावकाशा परस्मैपद-संज्ञा। कोऽवकाशः। शतृक्वसू अवकाशः ( ३।२।१२४-१०७ )॥ परवचने त्विति पदं भम्। वा। परवचने त्विति पदं भसंज्ञामपि प्राप्नोति ( १।४।१६ —१८ )। अयं ते योनिर्ऋत्वियः ( ५।१।१०६॥६।४।१४६ )। प्रजाम् विन्दाम ऋत्वियाम्। आरम्भसामर्थ्याच्च पदसंज्ञा परं कार्य्यत्वाच्च भसंज्ञा प्राप्नोति॥ गतिबुद्ध्यादीनां ण्यन्तानां कर्म्म कर्तृसंज्ञम्। वा। गतिबुद्ध्यादीनां ण्यन्तानां कर्म्म कर्तृसंज्ञमपि प्राप्नोति ( १।४।५२।५४ )। आरम्भसामर्थ्याच्च

शेषग्रहणे तु नदीपदघटितसमुदायस्यान्यपदार्थे विद्यमानस्य समासोक्तेः शेषत्वाभावान्न बहुव्रीहिरिति बोध्यम् ॥ ननु समानाधिकरणसमासोऽयम् । अत एव मृगचपलेत्यादौ पुंवत्त्वं तत्र क्वान्यपदार्थप्रतीतिरत आह

यदेति । (कै)

अयमपि पक्षस्तत्सूत्रभाष्ये स्पष्टः ॥

भावरूप इति । (कै)

विशेष्यभूत इत्यर्थ ॥

समाह्रियमाणेति । (कै)

[1]"समाहारे च" इत्यत्र कर्मसाधनः समाहारशब्द इति भावः ॥

अशेषत्वादिति । (कै)

[2]शेषादिति सूत्रे समासान्तापेक्षया शेष इत्यभिमानिनेदम् ।

---

१ नदीभिश्च (२ । १ । २०) इति सूत्रे भाष्ये॥ २ अ २ । पा २ । सू २३॥

---

कर्मसंज्ञा परं कार्य्यत्वाच्च कर्तृसंज्ञा प्राप्नोति ॥ नैष दोषः । आचार्य्यप्रवृत्तिर्ज्ञापयति न कर्मसंज्ञायां कर्तृसंज्ञा भवतीति यदयं "हृक्रोरन्यतरस्याम्" (१।४।५३) इत्यन्यतरस्यां ग्रहणं करोति ॥ शेषवचनं च घिसंज्ञानिवृत्त्यर्थम् । वा ॥ शेषग्रहणं च कर्त्तव्यम् । "शेषो घ्यसखि" (१।४।७) इति । किं प्रयोजनम् । घिसंज्ञानिवृत्त्यर्थम् । नदीसंज्ञायां घिसंज्ञा मा भूदिति । शकट्यै पद्धत्यै बुध्यै धेन्वै (७।३।११२—११९)। इतरथा हि परं कार्य्यत्वाच्च घिसंज्ञारम्भसामर्थ्याच्च "ङिति ह्रस्वश्च (१।४।६)

अनन्तरत्वाङ्गसंज्ञाधिकारापेक्षं शेषत्वमिति भाष्यसम्मतपक्षे तु तत्रापि प्रसङ्ग इति चिन्त्यम् ॥

## टचश्चित् करणादिति । (कै)

अस्यान्यत्र राजगवीत्यादौ चारितार्थ्यादिदं चिन्त्यमिति कश्चित् ॥

## पञ्चपात्रमिति । (कै)

अत्र शेषत्वात् कपोऽप्यापत्तिः । एतानि प्रयोजनानि शेषग्रहणस्य पठतः शेषार्थकत्वपक्षे । त्रिकतः शेषे तु अन्त्यं द्वयं शेषग्रहणे कृते सिध्यति । आद्यं तु प्रयोजनद्वयत्रिकतः शेषे शेषग्रहणे कृतेऽपि न सिध्यतीति बोध्यम् ॥

## समासवाच्यत्वे इति । (कै)

समास एव क्रान्ताद्यर्थप्रतीतेः । यदागमे हीति न्यायेनैकार्थीभावबलात् समासस्यैव सोऽर्थ इति भावः ॥

## यदा त्विति । (कै)

एकार्थीभावस्तु पञ्चम्यर्थान्तर्भावेनेति तद्भावः ॥

---

इति नदीसंज्ञा ॥ न वासंभवात् । वा । न वा कर्त्तव्यम् । नदीसंज्ञायां घिसंज्ञा कस्मान्न भवति । असंभवात् । कोऽसावसंभवः । ह्रस्वलक्षणा हि नदीसंज्ञा घिसंज्ञायां च गुणः । वा । ह्रस्वलक्षणा हि नदीसंज्ञा घिसंज्ञायां च गुणेन भवितव्यम् । (७।३।१११) ॥ तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञाभावः । वा । तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञा न भविष्यति । किं कारणम् । आश्रयाभावात् । आश्रयाभावान्नदीसंज्ञायां

**क्रियमाणेऽपीति । (कै)**

तत्करणमेव प्रथमो दोषः । कृते दोषान्तरमपीति भावः ॥ बहुव्रीह्यसमानाधिकरणतत्पुरुषा समासोक्तेः शेषत्वाभावात् तत्र बहुव्रीहिप्राप्तिरिति बोध्यम् ॥

**शेषग्रहणं न करोतीति । (कै)**

यदतः शेषार्थं न करोतीति चिकतः शेषार्थं तु करिष्यतीत्यर्थः ॥

**परत्वादिति । (कै)**

नञ् समासादयोऽन्यपदार्थाविवक्षायां चरितार्थाः । अव्ययीभावोऽपि समाक्रियमाणार्थत्वे चरितार्थः । बहुव्रीहिरपि अन्यत्र चरितार्थः । न च समानाधिकरणतत्पुरुषविषये बहुव्रीहिः क्व चरितार्थः । व्यधिकरणे चरितार्थ इत्यभिमानात् । यद्वा तस्य तद्बाधकत्वमनवकाशत्वेनैव[1] बाधकत्वोपलक्षणम् भाष्ये विप्रतिषेधादित्यपि बोध्यम् ॥

**प्राप्नोतीति । (कै)**

---

१ परत्वं च । का ॥

---

घिसंज्ञानिवृत्तिरिति चेद्यणादेशाभावः । वा । आश्रयाभावान्नदीसंज्ञायां घिसंज्ञानिवृत्तिरिति चेदेवमुच्यते । यणादेशोऽपि न प्राप्नोति ॥ नैष दोषः । नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञाभावः । वा । नद्याश्रयो यणादेशः । यदा नदीसंज्ञया घिसंज्ञा बाधिता तत उत्तरकालं यणादेशेन भवितव्यम् । नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञा भविष्यति । बहुव्रीह्यर्थं तु । वा । बहुव्रीहिप्रतिषेधार्थं तु शेषग्रहणं कर्तव्यम् । "शेषो

तथा चानयोः पदयोर्न शेषत्वमिति बहुव्रीह्यप्राप्तिः॥ ननु द्वैरावतीकेऽनवकाशत्वा[1]"नदीभिश्च" इत्यनेनैव भाव्यम् एवं च कथमत्र बहुव्रीहिः किमर्थं वा निषेधोऽत आह

## तस्य त्ववकाश इति॥ (कै)

ननु तत्रापि समाहारस्यान्यपदार्थस्य सत्त्वात् कथमयमवकाशोऽत आह

## यदेति। (कै)

एवं सति पञ्चानां नदीनां समाहार इत्यर्थे परत्वाद् बहुव्रीहिः प्राप्नोति सोऽपि शेषग्रहणादेव वारणीयः परं कार्य्यत्वमिति पाठे इति दिक्॥ वस्तुतः समाहारे चायमिष्यते इत्युक्तेर्भावसाधनत्वाच्च समाहारशब्दस्य समाहाररूपेऽन्यपदार्थेऽयमपवाद इति मत्वा द्वैरावतीके शेषे ग्रहणाद् भाष्ये दोष उक्तः। संख्येत्यनुवर्त्तमाने [2]"नदीभिश्च" इत्यत्रैषां पदानां ग्रहणेनाशेषत्वात् प्रपतितपर्णे "प्रादयो गताद्यर्थे" इत्यस्याप्रवृत्तेराह

१ अ २। पा १। सू २०॥ २ अ २। पा १। सू २०॥

"बहुव्रीहिः" (२।२।२३) इति॥ किं प्रयोजनम्॥ प्रयोजनमव्ययीभावोपमानद्विगुशब्दलोपेषु। वा। अव्ययीभावे। उन्मत्तगङ्गम् लोहितगङ्गम् (२।१।२१।६।२।१॥५।४।१५४)॥ उपमाने। शस्त्रीश्यामा। कुमुदश्येनी (२।१।५५॥५।४।१५४—१५३)॥ द्विगु। पञ्चगवम्। दशगवम् (२।१।५१-५२॥६।२।१)॥ शब्दलोपे। भिक्षाशालिभिः भिक्षाशालिः (२।२।१८ (५।४।१५३)॥ तत्र शेषवचनाद्दोषः संख्यासमानाधिकरणनञ्समासेषु

प्रपर्याक इति ॥ (कै)

भाष्ये

क्रार्थे प्रतिषेधः (भा)

इत्यस्य क्रार्थे वाच्ये बहुव्रीहिप्रतिषेधो वक्तव्य इत्यर्थः ॥ ननु [1]"कुगति" इति सूत्रविहितः समासेऽपि सुपुरुष इत्यादौ साव-का॥ऽत आह

परिगणनमिति । (कै)

[2]प्राद्यो गताद्यर्थे इत्यादीनामपि परिगणनद्वारा स्वतन्त्र-विधायकान्येव न तु तत्प्रपञ्चभूतान्येवेति भावः ॥ ननु क्रार्थे विशेष्ये तत्पुरुषः तद्वति "बहुव्रीहिरिति" भिन्नविषयत्वात् "तत्पुरुष इति चेदि"त्याद्यनुपपन्नमत आह

इतर इति । (कै)

"प्राद्यो गताद्यर्थे" इति परिगणनरूपं विशेषमज्ञात्वा इत्यर्थः ।

---

१ अ २ । पा २ । सू १८ ॥
२ अ २ । पा २ । सू १८ । इति सूत्रस्थवार्त्तिकम ॥

---

बहुव्रीहिप्रतिषेधः । वा । तत्र शेषवचनाद्दोषो भवति । संख्या समानाधिकरणनञ्समासेषु बहुव्रीहेः प्रतिषेधः प्राप्नोति । संख्या । वीरावतीको देशः । वीरावतीको देशः (१ । १ । २०) । समानाधिकरण । वीरपुरुषको ग्रामः । (२ । १ । ५८) । नञ्समासे । अब्राह्मणको देशः अवृषलको देशः (२ । २ । १८) । क्रल्लोपे च शेषवचनात् प्रादिभिर्न बहु-व्रीहिः । वा । क्रल्लोपे च शेषवचनात् प्रादिभिर्बहुव्रीहिर्न प्राप्नोति ।

तथाच तत्र तत्पुरुषप्रतिषेधो वक्तव्य इत्याशयः। वस्तुतस्तत्र शेष-ग्रहणमुभयोरप्यावश्यकं[1] "शेषाद् विभाषा" इति सूत्रे शेषाधिकारस्थादित्यर्थलाभाय चिकतस्य शेषस्तेन "परं कार्य्यमि"ति पाठे यज्ञाससमानाधिकरणनञ्समासलोपेषु दोषपरिहारार्थः। एवं च दोषोक्तिरेकदेश्युक्तिः। उन्मत्तगङ्गमित्यत्र न दोषः स्थित एवेति। "परं कार्य्यम्" इति पाठो दूषितो भगवता यत्तिये दोषाश्चेति बोध्यम्॥ नन्वेतदवधिप्रविष्टसंज्ञासु फलसत्त्वात् प्रश्नानुपपत्तिरत आह

अस्मिन्निति॥ (कै)

स च बाध इति। (कै)

परत्वसमानार्थकाद्ग्रहणेन प्रतिपादितमिति भावः॥ ननु समावेशे "[2]छन्दस्युभयथा" इति व्यर्थं स्यादत आह

छन्दसीति॥ (कै)

तिङाम्। (कै)

कडाराद्यादेशानाम्॥

---

१ अ ५। पा ४। सू १५४॥ २ अ ३। पा ४। सू ११७॥

---

प्रपतति पर्णः प्रपर्णकः। प्रपतति पलाशः प्रपलाशक इति (२। २। ६)। अथैकसंज्ञाधिकारे कथं सिध्यति। एकसंज्ञाधिकारे विप्रतिषेधात् बहुव्रीहिः। एकसंज्ञाधिकारे विप्रतिषेधात् बहुव्रीहिर्भविष्यति। एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिरिति चेत् स्वार्थे प्रतिषेधः। वा। एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिरिति चेत् स्वार्थे प्रतिषेधो वक्तव्यः।

शेषस्यापि। (कै)

तथाहि:। वस्तुतोऽत्र "[१]लङः शाकटायनस्यैव" इत्यत्र एवकारानुवृत्तेर्न समावेशः। एवं "[२]द्विषश्चेति" इत्यत्रापि॥

भाष्ये

वृद्धम्। (भा)

गोत्रम्॥

अत्र समावेश इति। (भा)

शलङ्कोर्गोत्रापत्यं "[३]बाह्वादीञ्" शलङ्कोः शलङ्कादेशश्च। ततो यूनि "[४]यञिञोश्च" इति फक्॥ "[५]पैलादिभ्यश्च" इति लुक्। पीलु शब्दात् "[६]पीलाया वा" इति गोत्रेऽण्। ततो यूनि "[७]अणो द्व्यचः" इति फिञ् तस्य पूर्व्वेण लुक् न च "[८]गोत्रेऽलुगचि" इत्यनेन अलुक्यपि यूनि लुगिति परा लुगभविष्यति इति वाच्यम्। ततोऽपि परस्य "[९]फक् फिञोरन्यतरस्याम्"

---

१ अ ३। पा ४। सू १११॥ २ अ ३। पा ४। सू ११२॥
३। अ ४। पा १। सू ९६॥ ४ अ २॥ पा ४। सू ६४॥
५ अ २। पा ४। सू ५९॥ ६ अ ४। पा १। सू ११८॥
७ अ ४। पा १। सू १५६॥ ८ अ ४। पा १। सू ८९॥
९ अ ४। पा १। सू ९१॥

---

गिरौशयानिः। निर्वाराणसिः॥ तत्पुरुषोऽत्र बाधको भविष्यति। तत्पुरुष इति चेदन्यत्र कार्य्यात् प्रतिषेधः। वा। तत्पुरुष इति चेदन्यत्र कार्य्यात् प्रतिषेधो वक्तव्यः। प्रपततिपर्णः प्रपर्णकः। प्रपतितपलाशः

इत्यस्य प्रवृत्त्या पक्षे प्रत्ययश्रवणप्रसङ्गादिति भावः॥ सिद्धान्ते तु विकल्पेनेष्यत एव इत्याह

## फक्फिञोरिति। (कै)

अन्तरङ्गत्वात् पैलादिलुकापहारेण सिद्धान्ते यूनिलुगप्राप्तेरिति भावः॥ "[1]गोत्रेऽलुगचि" इत्यत्र [2]भूम्नि प्राप्तस्य लुगिति भाष्योक्तेश्च दोषश्चिन्त्यः। तस्मादौपगवस्य गोत्रापत्यम् औपगविरित्यादौ "[3]एको गोत्रे" इति नियमादिञ् नस्याद् इति फलं बोध्यम्। तुशब्दस्यैवकारार्थत्वादिहासमावेशो बोध्यः॥

## शकट्यौ इति। (कै)

यद्यपि नदी संज्ञाविधानसामर्थ्यात् घित्वं नेति प्रागुपपादितम्। तथापि समावेशस्यानिष्टतामात्रेणोदाहरणत्वमुक्तमिति बोध्यम्॥ नन्वत्र धनुषः करणत्वेनापादानत्वप्रसक्तिरेव न इत्यत आह

## अपायेति। (कै)

धनुर्निर्गतशरकरणकवेधे धनुषः साक्षात् करणत्वासम्भवात् अवश्यं

---

१. अ ४। पा १। सू ८६॥

२ भूम्नीति च लुक् प्राप्तो वाक्ये चार्थे विधीयतेऽजादिः।
बहिरङ्गमन्तरङ्गाद्विप्रतिषेधादयुक्तं स्यात्॥
भूम्निप्राप्तस्य लुको यदजादौ तद्धितेऽलुकं शास्ति।
एतद्ब्रवीति कुर्वन् समानकालावलुग्लुक् च॥

३ अ ४। पा १। सू ९३॥

---

प्रपलाशकः इति॥ सिद्धं तु प्रादीनां क्तार्थे तत्पुरुषवचनात्। वा। सिद्धमेतत्। कथम्। प्रादीनां क्तार्थे तत्पुरुषो भवतीति वक्तव्यम्। कानि पुनरस्य

निर्गमनपूर्वकवेधे विध्यति वर्त्तयित्वा तद्घटकनिर्गमनस्य अवधिभावेनैव निर्वर्त्तकं धनुर्वेधे परंपरया करणम् इत्यवश्यं वाच्यमित्यस्त्युभयोः प्राप्तिरिति भावः॥

## कंसपाच्याम् (भा)

इत्यादेरपि कंसपाचान्निर्गतमन्नं भुङ्क्ते इत्याद्यर्थं इदृग्स्थले धनुःकंसपाचादेर्द्वैधाम्वय इति बोध्यम्॥ नच कार्य्यकालपक्षे संज्ञाशास्त्राणां विधिप्रदेशेष्वेव वाक्यार्थेन विपरीतं परत्वं पञ्चमीप्रदेशोपस्थितापादानसंज्ञायाः तृतीयाविध्युपस्थितकरणसंज्ञातः परत्वात्। एवम् "आलोपोऽनः" इत्याद्येकवाक्यतापन्नभसंज्ञया नलोपाद्येकवाक्यतापन्नपदसंज्ञायाः परत्वादसिद्धत्वाच्च बाधो न स्यादिति वाच्यम्। एतदधिकारस्थसंज्ञाविषये यथोद्देशपक्षस्यैव वाङ्गीकारेणादोषात्॥ भाष्ये

## गां दोग्धीति। (भा)

दुहेर्विभागानुकूलव्यापारानुकूलव्यापारार्थकत्वे कर्त्तृव्यापारजन्यफलाश्रयत्वात् कर्त्तुरित्यस्याप्राप्तिः। विभागनिरूपितावधित्वविवक्षणाच्चापादानत्वप्राप्तिः। न च पयः संनिधौ गौर्नेप्सिततमा-

---

योगस्य प्रयोजनानि। प्रयोजनं ह्रस्वसंज्ञां दीर्घप्लुतौ। वा। ह्रस्वसंज्ञां दीर्घप्लुतसंज्ञे बाधिते (१।२।२७)॥ तिङ् सार्व्वधातुकम् लिङ् लिटोरार्द्धधातुकम्। वा। तिङः सार्व्वधातुकसंज्ञां लिङ्लिटोरार्धधातुकसंज्ञा बाधते (३।४।११३-११५-११६)॥ अपत्यं वृद्धं युवा। वा। अपत्यं वृद्धं युवसंज्ञा बाधते (४।१।१६२।१६३)॥ घिं नदी। वा। घिसंज्ञां नदीसंज्ञा बाधते। (१।४।३—७)॥ लघु गुरु। वा। लघुसंज्ञां गुरुसंज्ञा

[1]कारकान्तरापेक्षयैव प्रकर्षस्य विवक्षितत्वात्॥ ननु स्वकक्षायामेव कर्मान्तरापेक्षयापि। अत एवान्येन यथा दीपिकया गच्छतीति अनेककरणयोगः। "[1]अकथितं च" इत्येतत्तु अपादानत्वाविवक्षाया-मेवेति न तेन विप्रतिषेध इति दिक्॥ भाष्ये

गेहं प्रविशतीति। (भा)

गेहे प्रविश इति ग्रामे आगत इत्यादि तु अध्वाध्वेव वेति बोध्यम्॥ केचित्तु यदा तेषां संयोगसमानाधिकरणो व्यापारोऽर्थ-स्तदा कर्मत्वाप्राप्तेस्तत् साधुत्वं बोध्यम्। यदा तु व्यधिकरणो व्यापारोऽर्थस्तदोभयविवक्षायां भाष्योदाहरणोपपत्तिर्बोध्येत्याहुः॥ तन्न "[2]हृद्द्युभ्यां च" इत्यलुग्विधायकवार्त्तिकस्थभाष्यविरुद्धम्। तत्र "[3]हृदिस्पृग्" इत्यादौ द्वितीयार्थे चैषां सप्तमी द्रष्टव्या इत्युक्तम्। धनुर्विध्यतीत्यत्र धनुर्गतशरस्तत्करणकबोधो धनुः कर्तृक इति धनुः करणको धनुष्ठस्थ व्यापार इति वा बोधः।

---

१ कारकान्तरापेक्ष एव। इ॥ २ अ १। पा ४। सू ५१॥

३ "हलदन्तात् सप्तम्याः संज्ञायाम्॥ (६। ३। ९) इति सूत्रस्थवार्त्ति-कम्। हृद्द्युभ्यां ङेरुपसंख्यानम्। वा। हृद्द्युभ्यां ङेरुपसंख्यानं कर्त्तव्यम्। हृदिस्पृक्। दिविस्पृक्॥

---

बाधते (१।४।१०-११)॥ पदं भम्। वा। पदसंज्ञां भसंज्ञा बाधते। (१।४।१४-१८)॥ अपदानमुत्तराणि। वा। अपादानसंज्ञामुत्तराणि कारकाणि बाधन्ते। (इ)। धनुषा विध्यति। कांसपात्र्यां भुङ्क्ते। गां दोग्धि। धनुर्विध्यति॥ धनुषा विध्यतीत्यपाययुक्तत्वाच्च "ध्रुवमपायेऽपादानम्" (१।४।२४) इत्यपादानसंज्ञा प्राप्नोति "साधकतमं करणम्"

स्वव्यापारे स्वस्यापि करणत्वविवक्षासम्भवात् । एवमसिश्छिनत्ति इत्यादौ गेहं प्रविशतीत्यादौ गेहाधिकरणको गेहकर्मको व्यापार इति बोधः। अस्याधिकरणत्वकर्मत्वयोर्नियतत्वम् ॥

षत्वं नेति । (कै)

"[1]उपसर्गात्सुनोति" इत्यनेनेति शेषः ॥

प्रकृति स्वरः । (कै)

"[2]तत्पुरुषे तुल्यार्थ" इत्यनेन ॥

वृद्धिः । (कै)

"[3]सिचि वृद्धि"रिति ॥

दीर्घः । (कै)

"[4]क्रमः परस्मैपदेषु" इति ॥

क्रमत इति । (कै)

"[5]वृत्तिसर्ग" इत्यनेनात्मनेपदम् ॥

---

१ अ ८ । पा ३ । सू ६५ ॥ २ अ ६ । पा २ । सू २ ॥
३ अ ७ । पा २ । सू १ ॥ ४ अ ७ । पा ३ । सू ७६ ॥
५ अ १ । पा ३ । सू ३८ ॥

---

(१ । ४ । ४२ ) इति च करणसंज्ञा । करणसंज्ञा परा सा भवति ॥ कांस्यपात्र्यां भुङ्क्ते इत्यत्रापाययुक्तत्वाच्च "ध्रुवमपायेऽपादानम्" इत्यपादानसंज्ञा प्राप्नोति "आधारोऽधिकरणम्" (१ । ४ । ४५) इति चाधिकरणसंज्ञा । अधिकरणसंज्ञा परा सा भवति ॥ "गां दोग्धि" इत्यत्रापाय-

अव्ययीभावः । (कै)

अनवकाशत्वात् ॥

बहुव्रीहिः । (कै)

परत्वात् ॥

समास इति । (भा)

सामान्यसंज्ञायां "[1]सहसुपा" इत्यत्र चरितार्थामव्ययीभावादि-विशेषसंज्ञा न बाधन्ते समाससंज्ञानुवादेन तासां विधानात् अत एव समासान्ता इत्यधिकारे "[2]अव्ययीभावे शरत्प्रभृतिभ्यः" इत्यादिविधानं सङ्गच्छते ॥

एकेति । (कै)

एवं चोभयोर्निरवकाशत्वात् न बाध्यबाधकभाव इति भावः ॥ नन्वेवमपि पर्य्यायः स्यादत आह

चकारेति ॥ (कै)

समाविशतीति । (कै)

पर्य्यायस्तु न । "[3]अव्ययादाप् सुप" इति ज्ञापकात् । संज्ञाकारविनिर्मुक्तस्थलाभावेनानुवृत्तिविनैव पर्य्यायसिद्धिरेवेति भावः ॥

---

१ अ २ । पा १ । सू ४ ॥
२ अ ५ । पा ४ । सू १०७ ॥ ३ अ २ । पा ४ । सू ८२ ॥

---

युक्त्वाऽपादानसंज्ञा प्राप्नोति "कर्त्तुरीप्सिततमं कर्म्म" (१ । ४ । ४९) इति च कर्म्मसंज्ञा । कर्म्मसंज्ञा परा सा भवति ॥ धनुर्विध्यतीत्यत्रापाययुक्तत्वादपादानसंज्ञा प्राप्नोति "स्वतन्त्रः कर्त्ता" (१ । ४ । ५४ ) इति

गुणवचनसंज्ञा त्विति । (कै)

एवं चात्र शास्त्रे गुणवचनशब्देन[1] जातिसंज्ञाव्ययकृदन्ततद्धितान्तसमस्तसर्वनामसङ्ख्याशब्दातिरिक्तः शब्दो गृह्यते इति बोध्यम् । [2]अत एव द्वारवतीत्वमित्यत्र न पुंवद्भाव इति बोध्यम् । अत्र कृत्तद्धितसंज्ञे तदन्तस्य बोध्ये प्रातिपदिकसंज्ञासमानाधिकरणत्वात् । न गुणिपरशुक्लादीनां गुणवचनत्वानापत्तिः तत्र मतुप् लोपादिति वाच्यम् । श्रूयमाणतद्धितान्तस्यैव तत्संज्ञाविधानेनादोषात् । गुणगुणिनोरभेदविवक्षायां तथा त्वाभावेनाक्षतेश्च । मतुप् लोपस्तु भेदविवक्षायां शुक्लवान् इत्यादेरसाधुत्वाय तदा मतुपोऽनभिधानमाश्रित्य तु प्रत्याख्यानमिति बोध्यम् । रूपादयो जातिशब्दा असर्वलिङ्गत्वात् ॥

---

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥
इति यद् गुणलक्षणं "वोतो गुणवचनात्" ( ४ । १ । ४४ ) सूत्रे उक्तम् तदेकदेशयुक्तिर्भगवताऽव्याख्यानात् ॥
२ "अत एव" इत्यारभ्य "बोध्यम्" इत्यन्तं नास्ति क पुस्तके ॥

---

च कर्तृसंज्ञा । कर्तृसंज्ञा परा सा भवति ॥ क्रुधद्रुहोरुपसृष्टयोः कर्म्म-सम्प्रदानम् । वा । क्रुधद्रुहोरुपसृष्टयोः कर्म्मसंज्ञा सम्प्रदानसंज्ञां बाधते (१ । ४ । ३८—३७) ॥ करणं पराणि । वा । करणसंज्ञा (१ । ४ । ४२ ) पराणि कारकाणि बाधन्ते । क्ष । धनुर्विध्यति । असिश्छिनत्तीति ॥ अधिकरणं कर्म्म । वा । अधिकरणसंज्ञां कर्म्मसंज्ञा बाधते (१ । ४ । ४५—४९) क्ष । गेहं प्रविशतीति ॥ अधिकरणं कर्त्ता । वा । अधिकरणसंज्ञां कर्तृसंज्ञा बाधते ( १ । ४ । ४५—४८ ) । क्ष । स्थाली पचतीति ॥ अध्युपसृष्टं

ष्यञ्विधिरिति। (कै)

[१]"वोतो गुणवचनात्" [२]"क्तलोर्गुणवचनस्य" इत्यादिरप्युपलक्षणमेतत्॥ ननु प्रातिपदिकमात्रस्य गुणवचनसंज्ञकत्वे ब्राह्मणादिग्रहणं व्यर्थमत आह

ब्राह्मणादीति। (कै)

अन्यथा ब्राह्मणगणपत्यादिभ्यः ष्यञ् नस्यात् प्राणिभृज्जातिलक्षणो ब्राह्मणशब्दे। वयो वचनलक्षणो बालशब्दे। निपुणादयो युवादयः॥

आश्रयतीति। (कै)

न लोकप्रसिद्धामित्यर्थः॥ एकशब्दे सङ्ख्यासंज्ञया राजपुरुषे समाससंज्ञया बाधमाशङ्क्याह

ऐक्यमिति॥ (कै)

राजपौरुष्यमिति। (कै)

अनुशतिकादित्वादुभयपदवृद्धिः॥ भाष्ये

---

१ अ ४। पा १। सू ४४॥

२ अ ६। पा ३। सू ३५। एतत् सूत्रस्यवार्त्तिकम्॥

---

कर्म्म। वा। अध्युपस्टष्टं कर्म्माधिकरणसंज्ञां वाधते (१। ४। ४६–४५)॥ गत्युपसर्गसंज्ञे कर्म्मप्रवचनीयसंज्ञा। वा। गत्युपसर्गसंज्ञे कर्म्मप्रवचनीयसंज्ञा वाधते (१। ४। ५९—६०—८३)॥ परस्मैपदमात्मनेपदम्। वा। परस्मैपदसंज्ञामात्मनेपदसंज्ञा वाधते (१। ४। ९९—१००)॥ समाससंज्ञाच। वा। समाससंज्ञाश्च या या परा अनवकाशाश्च तास्ताः पूर्व्वाः सावकाशाश्च वाधन्ते॥ अर्थवत् प्रातिपदिकम्। वा अर्थवत् प्रातिपदिकसंज्ञं भवति॥ गुणवचनं च। वा। गुणवचनसंज्ञं च भवत्यर्थवत्॥ समासकृत्तद्धिताव्ययसर्व्वनामासर्व्वलिङ्गा जातिः। वा। समास। समाससंज्ञा च

**किमर्थमिति।** (भा)

"गुणवचनं च" इत्यारभ्य "एकद्रव्योपनिवेशिनी संज्ञा" इत्यन्तवचनजातं "किमर्थम्" इत्यर्थः॥ वैयर्थ्यमेवोपपादयति

**यथा न्यास एवेति॥** (भा)

समाधत्ते

**सन्ति चैवात्रेति॥** (भा)

**अपूर्वा इति।** (भा)

कृत्संज्ञा तद्धितसंज्ञा॥

**असर्वलिङ्गा जातिरिति।** (भा)

"एकद्रव्योपनिवेशिनी"त्येताः। तदर्थमेतद्वचनं जातमित्यर्थः॥

समाध्यन्तरमाह

**अपि चेति॥** (भा)

**सन्निविष्टानामिति।** (भा)

निर्धारणषष्ठी॥ तत्र संख्या संज्ञया जातिसंज्ञाया बाधाद् ङित्येत्यादौ टाबेव। तथा तया सर्वनामसंज्ञाया बाधात् सर्वाय

---

वक्तव्या। कृत्। कृत्संज्ञा च वक्तव्या। तद्धित। तद्धितसंज्ञा च वक्तव्या। अव्यय। अव्ययसंज्ञा च वक्तव्या। सर्व्वनाम। सर्व्वनामसंज्ञा च वक्तव्या। असर्व्वलिङ्गा च जातिरित्येतच्च वक्तव्यम्॥ संख्या। वा। संख्यासंज्ञा च वक्तव्या॥ डु च। वा। डु संज्ञा च वक्तव्या॥ का पुनर्डुसंज्ञा। षट्संज्ञा॥ एकद्रव्योपनिवेशिनीसंज्ञा। वा। एकद्रव्योपनिवेशिनी संज्ञेत्येतच्च वक्तव्यम्॥ किमर्थमिदमुच्यते। यथान्यास एव भूयिष्ठाः संज्ञाः क्रियन्ते॥ सन्ति चैवात्र काश्चिदपूर्व्वाः संज्ञाः। अपि चैतेनानुपूर्व्व्येण संनिविष्टानां बाधनं यथा स्यात्। गुणवचनसंज्ञायाश्चैताभिर्बाधनं यथा स्यादिति॥

इत्यादौ न स्यै। एवं संख्या संज्ञया सर्वप्राचीनसंज्ञाबाध इत्याद्यूह्यम्॥ समाधान्तरमाह

गुणवचनसंज्ञायाश्चेति। (भा)

एवं चैतदतिरिक्तशब्दत्वं शास्त्रे गुणवचनशब्दत्वमित्यर्थादुक्तमिति दिक्॥

---

# विप्रतिषेधे परं कार्यम्।१।४।२॥

शब्दस्वरूपे सन्देहाभावादर्थस्य विरोधस्य प्रसिद्धत्वात् कोऽयमिति प्रश्नानुपपत्तिरत आह

आचार्य्येति। (कै)

विशेषार्थकत्वे परस्परव्याघातादुभयोर्विरुद्धयोः शास्त्रयोरप्रामाण्यं स्यादित्यर्थः॥

---

विप्रतिषेधे परं कार्य्यम्। १। ४। २॥

विप्रतिषेधे इति कोऽयं शब्दः। विप्रतिपूर्वात् सिधेः कर्मव्यतिहारे घञ्। इतरेतरप्रतिषेधो विप्रतिषेधः। अन्योऽन्यप्रतिषेधो विप्रतिषेधः॥ कः पुनर्विप्रतिषेधः। द्वौ प्रसङ्गावन्यार्थावेकस्मिन् स विप्रतिषेधः। वा। द्वौ प्रसङ्गौ यदान्यार्थौ भवत एकस्मिंश्च युगपत् प्राप्नुतः स विप्रतिषेधः। क्व पुनर-

---

आचार्य्यवचनानां सर्वेषां प्रामाण्याभ्युपगमाल्लौकिकार्थस्य विरोधवाचिनो विप्रतिषेध शब्दस्येह ग्रहणं न सम्भवतीति मत्वा पृच्छति विप्रतिषेध इति। कोऽयं शब्द इति। इतरस्तु लौकिकार्थव्युत्तिरेवोपात्तो न त्वस्याप्यन्योऽर्थः परिभाषित इति मत्वाह विप्रतिपूर्वादिति॥ कर्मव्यतिहार

## सर्वेषामिति। (कै)

अनेन शास्त्रेण प्रामाण्याभ्यनुज्ञानात् तस्य प्रामाण्येऽपि अन्यस्या-प्रामाण्येन सर्वेषां तत्त्वं भग्नमिति भावः॥

## इतर इति। (कै)

अप्रामाण्यं लग्ने परिहरिष्यत इति भावः॥ कर्मव्यतिहारे घञो विधानाभावादाह

## सिधेरिति॥ (कै)

## सेधतेरिति। (कै)

परस्परं प्रतिकूलं गमनमित्यर्थबोधने तस्यैव समर्थत्वादिति भावः॥ पौनरुक्त्यं परिहरति

## स एवार्थ इति। (कै)

कस्य चित् कश्चित् प्रसिद्ध इति पर्यायोपादानमिति भावः॥ अथागतिकगतित्वेनाह

---

न्यार्थौ क्व चैकस्मिन् युगपत् प्राप्नुतः। वृक्षाभ्याम् वृक्षेष्वित्यन्यार्थौ वृक्षेभ्य इत्यत्र युगपत् प्राप्नुतः (७।३।१०२-३)॥ किञ्च स्यात्। एकस्मिन् युगपदसम्भवात् पूर्वपरप्राप्तेरुभयप्रसङ्गः। वा। एकस्मिन् युगपदसम्भवात् पूर्वस्याश्च परस्याश्च प्राप्तेरुभयप्रसङ्गः॥ इदं विप्रतिषिद्धं यदुच्यत एकस्मिन्

---

इति। सिधेर्विशेषणं व्यतिहारविशिष्टक्रियावचनात् सेधतेर्भावे घञि-त्यर्थः। इतरेतरप्रतिषेधोऽन्योऽन्यप्रतिषेध इति। स एवार्थः पर्यायाभ्यां प्रदर्श्यते। यद्वा पर्यायाप्रतिपत्तौ शब्दद्वयेन प्रदर्श्यते। विरोधं पूर्वोक्तेन न्यायेनासम्भावयन् पुनः पृच्छति। कः पुनरिति॥ द्वौ प्रसङ्गाविति। सर्व-

यद्वेति। (कै)

प्रतिषेधशब्द एकत्र पाक्षिकप्रतिषेधपरः। परत्रात्यन्तिकप्रतिषेधपर इति भावः॥ एवं च सकृद्गति पुनः प्रसङ्गपत्रयोः सिद्धये पर्य्यायाप्रतिपत्तिफलस्य कादाचित्कप्रवृत्तिप्रतिबन्धस्य सर्वथा तत्प्रतिबन्धस्य च प्रतिषेधशब्दार्थत्वेन लोकसिद्धिविरोधार्थकतैव फलितेति ध्येयम्॥

पूर्वोक्तेन। (कै)

अप्रामाण्यापत्तिरूपेण॥ ननु "प्राप्नुत" इति क्रिया न स शब्देन परामर्शयोग्या। सर्वनामपरामर्शायोग्यत्वस्यैव तस्यासत्त्वस्य "वति" सूत्रे कैयटेन वक्ष्यमाणत्वात्। कर्त्तृपरामर्शस्तु न तस्य गुणत्वात् द्विवचनापत्तेश्चात (अतः। क) आह

युगपदिति। (कै)

---

युगपदसम्भवात् पूर्वपरप्राप्तेरुभयप्रसङ्ग इति। कथं ह्येकस्मिंश्च नाम युगपदसम्भवः स्यात् पूर्वस्याश्च परस्याश्च प्राप्तेरुभयप्रसङ्गश्च स्यात्। नैतद्विप्रतिषिद्धम्। यदुच्यते एकस्मिन् युगपदसम्भवादिति कार्य्ययोर्युगपदसम्भवः शास्त्रयोरुभयप्रसङ्गः॥ तृजादिभिस्तुल्यम्। वा। तृजादिभिस्तुल्यं पर्य्यायः प्राप्नोति। तद्यथा। तृजादयः (३ । १ । १३३) पर्य्यायेण भवन्ति॥ किं

---

स्याचार्य्यवचनस्य प्रमाणोऽपि लब्धावकाशयोर्वचनयोरेकस्मिन् विषये विरुद्धकार्य्यद्वयसमर्पणादस्त्येव विरोधः॥ प्रसज्येते इति। प्रसक्तौ विधी। अन्यार्थाविति। अन्यत्र सावकाशौ। स विप्रतिषेध इति। युगपद् यासौ प्राप्तिः सा विरोधनिमित्तत्वादभेदोपचाराद्विप्रतिषेधशब्देनोक्ता। किञ्च

आख्यातोपात्तक्रियायाः परामर्शाभावेऽप्यध्याहृतप्राप्यादिपदोपात्तायाः परामर्शे न दोषः। लिङ्गन्तु प्रतिनिर्देशाभिप्रायेणेति बोध्यम् ॥ ननु सा [1]च विप्रतिषेधोऽत आह

**विरोधनिमित्तत्वादिति । (कै)**

विरोधफलबाधनिमित्तत्वादित्यर्थः ॥ नन्वनेन परस्य प्रतिपादनात् कथमयं प्रश्नोऽत आह

**यदीदमिति ॥ (कै)**

तदनारम्भे ऽन्यत्र सावकाशयोः सामर्थ्याभावेन कथं पर्य्यायप्राप्तिरत आह

**इतरो व्यक्तीति ॥ (कै)**

**पर्य्यायेति । (कै)**

एवं च पाक्षिकबाधो विरोधफलमिति भावः ॥ भाष्ये

१ 'न' इति पाठोऽस्ति क पुस्तके ॥

पुनः कारणं ढजादयः पर्य्यायेण भवन्ति । अनवयवप्रसङ्गात् प्रतिपदं विधेश्च । वा । अनवयवेन प्रसज्यन्ते प्रतिपदं च विधीयन्ते ॥ अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात् । वा । अप्रतिपत्तिर्वा पुनरुभयोः शास्त्रयोः स्यात् । किं कारणम् । तुल्यबलत्वात् । तुल्य बले ह्युभे शास्त्रे । तद्यथा । द्वयोस्तुल्यबलयोरेकः

स्यादिति । यदीदं नारभ्येत इति भावः ॥ इतरो व्यक्तिपदार्थाश्रयेण पर्य्यायमाह एकस्मिन्निति । अनवयवप्रसङ्गादिति । सर्वव्यक्त्युद्देशेन शास्त्रस्य प्रवर्त्तनादित्यर्थः । प्रतिपदविधेश्चेति ॥ अनेनोत्सर्गापवादवैधर्म्यं दर्शयति न ह्युत्सर्गः प्रतिपदं विधीयते। तत्र पर्य्यायप्रसङ्गे नियमार्थमिदं परमेव भवति न पूर्व-

एकस्मिन् (भा)

इत्यस्य लक्ष्ये इति शेषः ॥

असम्भवाद् (भा)

इत्यस्य कार्य्ययोरिति शेषः ॥

पूर्वपरप्राप्तेरिति । (भा)

पूर्वस्य परस्य च योगस्य प्राप्तेरित्यर्थः । वचनद्वयप्रामाण्यादिति यावत् ॥ भगवता तु धर्मधर्मिणोरभेदमाश्रित्य प्राप्तिशब्देन पूर्वपर-शब्दयोः सामानाधिकरण्यमाश्रितम् ॥

उभयप्रसङ्ग इति (भा)

पर्य्यायेणेति शेषः ॥ सूत्रयोरेवासम्भवप्राप्ती इति मत्वा पृच्छति

इदं विप्रतिषिद्धमिति ॥ (भा)

शास्त्रयोरुभयप्रसङ्ग इति । (भा)

---

प्रेष्योभवति । स तयोः पर्य्यायेण कार्य्यं करोति । यदा तमुभौ युगपत् प्रेष-यतो नानादिक्षु च कार्य्ये भवतस्तदा यद्यसावविरोधार्थी भवति तत उभयोर्न करोति । किं पुनः कारणमुभयोर्न करोति । यौगपद्यासम्भवात् । नास्ति यौग-पद्येन सम्भवः ॥ तत्र प्रतिपत्त्यर्थं वचनम् । वा । तत्र प्रतिपत्त्यर्थमिदं व्यक्तव्यम् ॥

---

मिति । एतत् सूत्रारम्भाच्च । पूर्वस्य लक्षणस्य तत्रारम्भोऽनुमीयते । तदु-च्यते सत्यप्रवृत्तौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । इदानीं जातिपक्षा-श्रयेणाह अप्रतिपत्तिर्वेति । अत्र पक्षे विध्यर्थमिदम् । परं भवतीति । तस्मिन् कृते यदि पूर्वस्य प्राप्तिनिमित्तमस्ति ततस्तदपि प्रवर्त्तते ।

पर्य्यायेण शास्त्रयोः प्राप्तेरुभयः प्रसङ्ग इत्यर्थः॥ ननु शास्त्रप्रसङ्गोऽपि कार्य्यार्थं एवेति कार्य्ययोर्युगपदसम्भवे कथं शास्त्रयोः प्रसङ्गोऽत आह

तृजादिभिरिति। (भा)

एवं च युगपदसम्भवः पर्य्यायेणोभयप्रसङ्ग इति तात्पर्य्यम्॥

सर्वव्यक्त्युद्देशेनेति। (कै)

ण्वुल्तृजयोः धातुमात्राद्विधानेन विनिगमकाभावादिति भावः॥ नन्वनवयवेन प्रसक्तस्यापि सामान्यशास्त्रस्य विशेषेणात्यन्तिकबाधदर्शनादिदमप्रयोजकमत आह

अनेनेति। (कै)

"प्रतिपदविधेस्त्व"त्यस्य बाधकाभावादिति शेषः॥ उत्सर्गस्य सामान्यविषयत्वमपवादस्य विशेषविषयत्वमिति तच्छक्तिविषयकं

---

तव्यदादीनां त्वप्रसिद्धिः । वा । तव्यदादीनांतु (३ । १ । ९६) कार्य्यस्याप्रसिद्धिः। न हि किंचित्तव्यदादिषु नियमकारि शास्त्रमारभ्यते येन तव्यदादयः स्युः। यश्च भवता हेतुर्व्यपदिष्टोऽप्रतिपत्तिरुभयोस्तुल्यबलत्वादिति तुल्यः स तव्यदादिषु॥ नैष दोषः। अनवकाशास्तव्यदादय उच्यन्ते च ते वचनाद्भविष्यन्ति। यश्च भवता हेतुर्व्यपदिष्टस्तृजादिभिस्तुल्यं पर्य्यायः प्राप्नो-

---

तदुच्यते। पुनः प्रसङ्गविज्ञानात् सिद्धमिति। तव्यदादीनां तु कार्य्यस्येति। परत्वादेः साधुत्वस्य वेत्यर्थः। एकवाक्योपात्तत्वादनवकाशत्वाच्च शास्त्रेषां परत्वेन व्यवस्था। तृजादिभिरिति। आदिशब्दस्य प्रकारार्थत्वात् तृजादिभ्य-

विशेषशास्त्रेण सामान्यशास्त्रस्य तद्विषयकत्वं बाध्यते। इगादौ तु नैवमिति उभयोरपि प्रतिव्यक्तिप्रवृत्तिः। एवं प्रकृतेऽपि दीर्घैत्वशास्त्रयोः कस्यापि व्यक्तिविशेषविषयकत्वाभावेनोभयोरपि स्वस्व-विषयसर्वव्यक्तिविषयतयोपस्थितेन पर्यायप्रसङ्ग इति भावः॥ नन्वेवं तद्विषयकपूर्वलक्षणस्याप्रमाणत्वं स्यादत आह

एतत्त्वेति। (कै)

एतज्ज्ञानबलेन पूर्वस्य तद्व्यतिरिक्तव्यक्तिविषयतैव कल्प्यत इति भावः॥ ननु तुल्यबलत्वेनैव पर्याय उपपादितस्तत् कथं तेनैवा-प्रतिपत्तिरापाद्यते ऽत आह

इदानीमिति। (कै)

जतिपक्षे तज्जातेरेवोद्देश्यत्वेन तज्जात्युपरक्तव्यक्तौ क्वचित् कार्य्या-भावेऽपि शास्त्रस्य चारितार्थ्यमिति भावः॥

ततस्तदपीति। (कै)

---

तीति तुल्यः स तव्यदादिषु॥ एतावदिह सूत्रं विप्रतिषेधे परमिति। पठिष्यति ह्याचार्यः। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ( ६ । ३ । ४२-१३८ ॥ ६ । ४ । ६२ ॥ ७ । १ । २६ ) इति। पुनश्च पठिष्यति। पुनः प्रसङ्गविज्ञानात् सिद्धमिति। किं पुनरियता सूत्रेणोभयं लभ्यम्। लभ्यमि-

---

तव्यदादयो न भिन्ना इत्यर्थः। सकृद् गताविति। यथा कुरुतात्त्वमिति हेर्लुक् च प्राप्नोति तातङ् चेति परत्वात् तातङ् तस्य स्थानिवद्भावाल्लुङ् न प्रवर्त्तते। द्वारमिति। अप्रतिपत्त्यपनयनेन परशास्त्रप्रवृत्तेर्द्वारमुपायः क्रियत इति यावत्। पुनः प्रसङ्ग विज्ञानादिति। ईजतुरिति। परत्वात् सम्प्र-

अप्रवृत्तौ मानाभावादिति भावः ॥ "वृक्षेभ्य" इत्यादौ चेत्ते निमित्ताभावात् दीर्घस्याप्रवृत्तिरित्यन्यत् ॥ भाष्ये

तद् यथेति । (भा)

तत्र यथा एकः प्रेष्य उभयोर्नकरोति तथा प्रकृते ( प्रकृत । इ ) उदाहरणरूपा व्यक्तिरुभयोरपि कार्य्यं नाश्रयिष्यतीत्यर्थः । वचने त्वन्यत्र चरितार्थः । यथा तत्र प्रेष्यः परस्पराविरुद्धकार्य्यकरणेन चरितार्थस्वामिनाविति भावः ॥ "प्रतिपत्त्यर्थम्" इत्यस्य विध्यर्थमित्यर्थः ॥ ननु तव्यदादीन्येव कार्य्याणि किं तेषामपि कार्य्यनाम इत्यत आह

परत्वेति ॥ (कै)

एकवाक्येति । (कै)

शास्त्रगतमेव पौर्वापर्य्यं गृह्यते इति भावः ॥ कार्य्यगतपौर्वापर्य्याश्रयणेऽप्याह

अनवकाशत्वाच्चेति । (कै)

---

त्वाह । कथम् । इह भवता द्वौ हेतू व्यपदिष्टौ । तृजादिभिस्तुल्यं पर्य्यायः प्राप्नोतीति च । अप्रतिपत्तिर्वोभयोस्तुल्यफलत्वादिति च । तद्यदा तावदेष हेतुस्तृजादिभिस्तुल्यं पर्य्यायः प्राप्नोतीति तदा विप्रतिषेधे परमित्यनेन किं क्रियते । नियमः । विप्रतिषेधे परमेव भवतीति । तदेतदुपपन्नं भवति सक्षाद्

---

सारयो कृते द्विर्वचनं भवति । लक्ष्यानुरोधेन च व्यक्त्याकृतिपदार्थाश्रयणा-दनयोः परिभाषयोर्विषयविभागोऽवसेयः । तस्य इष्टवाचीति । इष्टानिष्ट-विभागश्च व्याख्यानाद् बोध्यः । अन्तरङ्गं चेति । अन्तर्मध्येऽङ्गानि निमित्तानि पारार्थ्यात् यस्य तदन्तरङ्गमित्युच्यते । एवं बहिरङ्गानि यस्य तद्बहि-

धातुत्वजात्याक्रान्तव्यक्तौ न प्रवर्त्तते न वेति अत्र विनिगमकाभावादिति भावः ॥ ननु "तव्यदादि" इत्यादिपदेन तृजादीनामपि ग्रहणात् कथं [1]सादृश्यमत आह

आदीति ॥ (कै)

ननु पर्य्यायेणोत्पत्तिरेव प्रकारस्तस्य तृजादावपि सत्त्वेन कथं भेदोऽत आह

तृजादीति ॥ (कै)

भाष्ये

आचार्य्यः । (भा)

वार्त्तिककारः ॥

यथेति । (कै)

नन्वत्र कृताकृतप्रसङ्गित्वेन नित्यः शब्दान्तरप्राप्त्या तस्यापि

---

१ "सादृश्यम्" इत्यारभ्य "फलकत्वात्" इत्यन्तं नास्ति क पुस्तके ॥

---

गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । यदा त्वेष हेतुरप्रतिपत्तिर्वोभयोस्तुल्यफलत्वादिति तदा विप्रतिषेधे परमित्यनेन किं क्रियते । द्वारम् । विप्रतिषेधे परं तावद्भवति तस्मिन् कृते यदि पूर्वमपि प्राप्नोति तदपि भवति । तदेतदुपपन्नं भवति पुनः प्रसङ्गविज्ञानात् सिद्धमिति ॥ विप्रतिषेधे

---

रङ्गम् । एतच्च न्यायसिद्धमेवानूदितम् । कार्य्यमित्यत्र अर्हे कृत्यः । कारयार्हं कार्यं तुल्यबलं च करणार्हमिति नित्यानित्योत्सर्गापवादान्तरङ्गबहिरङ्गेष्वस्य सूत्रस्याव्यापारः । स्योन इति । सिवेर्बाऽङ्लकान्नप्रत्यये कृतेऽपवात्वाद्वलोपं बाधित्वा गुणात् पूर्वमन्तरङ्गत्वादूठ् भवति । तत्र कृतेऽन्तरङ्गत्वात् यणा

अनित्यत्वात् । न चान्तरङ्गानपीति न्यायात् कैमुतिकन्यायेन परादपि लुको बलवत्त्वेन इदमयुक्तमिति वाच्यम् । परिभाषाणामिष्टसिद्धिमात्रफलकत्वात् ॥

## ईजतुरिति । ( कै )

न च पूर्वं [1]द्वित्वप्रवृत्तावपि [2]"वचिस्वपि" इति [3]"लिट्यभ्यासस्य" इति सम्प्रसारणाभ्यामिष्टं सिध्यतीति वाच्यम् । [4]"न सम्प्रसारणे" इति निषेधेन अभ्यासस्य सम्प्रसारणानापत्तेः ॥

## व्यक्त्याकृतीति । ( कै )

केचित्तु न हि व्यक्तिपक्षे सर्वं शास्त्रं व्याप्नोति न तु जातिपक्षे इत्यत्र मानमस्ति पक्षद्वयेऽपि सर्वव्याप्तिः [5]एकशेषसूत्रे भाष्ये

---

१ "अपि" इति नास्ति क पुस्तके ॥
२ अ ६ । पा १ । सू १५ ॥ ३ अ ६ । पा १ । सू १७ ॥
४ अ ६ । पा १ । सू ३७ ॥ ५ अ १ । पा २ । सू ६४ ॥

---

परमित्युक्त्वाऽधिकारे पूर्वमिति वक्तव्यम् । किं कृतं भवति । पूर्वविप्रतिषेधा न पठितव्या भवन्ति । गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषिद्धम् । नुमचिरतृज्वद्भावेभ्यो नुट् ( ७ । १ । ६५ ) इति । कथं ये परविप्रतिषेधाः । इत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेनेति ( ७ । १ । १०० ) सूत्रं च

---

गुणो बाध्यते । बहिरङ्गस्याप्यूठो यणादेशे कर्तव्येऽसिद्धत्वं न भवति । नाजानन्तर्यं इति वचनात् । द्यौकामिरिति ॥ ननु कृतयणादेशात् तद्धितोत्पत्तौ वृद्धा भाव्यमिति नास्ति युगपद् यणवृद्ध्योः प्राप्तिः । एवं तर्हि अकृतव्यूहाः पाणिनीया इति दि उ काम इति स्थिते अत्र यणवृद्ध्योर्युग-

स्पष्टमुक्ता न ब्राह्मणं हन्यादित्यादौ सर्वब्राह्मणहनननिषेधाय जातिपक्षाश्रयणमिति च तच्च स्पष्टम् । किं च भाष्यं पक्षद्वयसाधारण्येन दृष्टान्तभेदेन पर्य्यायाप्रतिपत्तौ ये प्राप्ते तदाश्रयेण तद्वचनोपपत्तिपरं "न तु जातिपक्षाश्रयेण" इति स्पष्टमेव । अन्यथा जातिपक्षप्रवृत्तामप्रतिपत्तिमुपक्रम्य तव्यादिषु दोषाशङ्कापरं भाष्यमसङ्गतं स्यात् । अनवकाशत्वेनैषां न परत्वेन व्यवस्था इति त्वदुक्तासङ्गतत्वापत्तेश्च । अग्रे तृजादितुल्यताया एव तेषु प्रतिपादनाच्च । न हि तृजादयो व्यक्तिपक्षे एव सर्वविषया अपि तु जातिपक्षेऽपि । किं च व्यक्तिपक्षेऽप्यन्यव्यक्तिविषयत्वलाभेन चरितार्थस्येयं व्यक्तिर्विरोधात् सर्वविषयकत्वं न कल्पयतीति उपपत्तिरस्ति । किं च जातिपक्षे तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्व्यक्तिविषयकत्व[1]मित्यत्र विनिगमकाभावः। तत्रैकः शास्त्रदृष्टान्तोऽपरो लौकिकस्तयोराश्रयणे

१ "इत्यत्र" इत्यारभ्य "लक्ष्यानुसारः" इत्यन्तं नास्ति इ-पुस्तके ॥

भिद्यते ॥ यथान्यासमेवास्तु । कथं ये पूर्वविप्रतिषेधाः । विप्रतिषेधे परमित्येव सिद्धम् । कथम् । परशब्दोऽयं बह्वर्थः । अस्त्येव व्यवस्थायां वर्त्तते । पूर्वः पर इति । अस्त्यन्यार्थे वर्त्तते । परपुत्रः परभार्य्या । अन्यपुत्रः । अन्यभार्य्येति गम्यते । अस्ति प्राधान्ये वर्त्तते । तद्यथा । परमियं ब्राह्मण्यस्मिन्

पत्प्रसङ्गः । अथवा दीव्यतेर्ग्निरिति पदं यदा विभज्यान् व्याख्यायते । दिव् काम इ इति तदा "दिव उत्" इत्युत्वे कृते यण् वृद्धौ प्राप्नुतः । दुद्यूषतीति । दिवेः सन् । सनीवन्तर्द्धेति पक्षे इडभावः । हलन्ताच्चेति कित्त्वम् । ऊडादेशः । तत्र यण् च प्राप्नोति द्विर्वचनं च । नित्यत्वाद् द्विर्वचनं स्यात् । एतद्भाष्यं दूषयन्ति द्विः प्रयोगो द्विर्वचनं षाष्ठिकं व्यवस्थापितम् । तत्र

लक्ष्यानुसारो बीजमित्येव युक्तमुचितमन्यथा तव व्यक्तिपदार्थाश्रयेण सकृद्गते "सकृद्गति" इति न्याये कुरुताम् इति उदाहरणं दत्त-मसङ्गतं स्यात्। कुरुशब्दाद् हेर्लुग् इति वचनस्य तातङ्भावपक्षे चारितार्थ्येन कुरुशब्दाद्धेस्तातङिति वचनस्यानवकाशत्वेन विप्रति-षेधाप्रसक्तेरिति वदन्ति॥ वक्ष्यमाणपूर्वविप्रतिषेधवार्त्तिकाश्रयेण गौरवं मत्वाह

**विप्रतिषेधे इति॥** (भा)

**पूर्वविप्रतिषिद्धमिति।** (भा)

कर्मधारयः। "नुम्" शब्दस्वरूपस्य विशेष्यत्वान्नपुंसकनिर्देशः॥ अङ्गाधिकारे परविप्रतिषेधस्यापीष्टत्वेन इदमसंगतं मत्वाहान्यः

**कथमिति॥** (भा)

**सूत्रं च भिद्यते इति।** (भा)

अधिकसूत्रकरणादिति भावः। येनानङ्गाधिकारस्थपूर्वविप्रति-षेधासंग्रहरूपो दोषसंग्रहः सूत्रं भिद्यते चेत्यन्वयः॥

---

कुटुम्बे। प्रधानमिति गम्यते। अस्तीष्टवाची परशब्दः। तद्यथा। परं धाम गत इति। इष्टं धामेति गम्यते। तद्य इष्टवाची परशब्दस्तस्येदं ग्रहणम्। विप्रतिषेधे परं यदिष्टं तद्भवति॥ अन्तरङ्गं च। वा। अन्तरङ्गं च बलीयो-भवतीति वक्तव्यम्॥ किम् प्रयोजनम्। प्रयोजनं यणेकादेशेत्त्वोत्त्वानि गुणा-

---

शब्दान्तरप्राप्त्या द्विर्वचनमनित्यं यण् तु नित्य इति वदन्तः। अल्लोपस्येति। ननु गाण्डीवधन्वनेत्यत्रास्ति सम्प्रधारणा। गाण्डीवधनु अन् आ इति स्थिते यदि पूर्वं यणादेशः ततो "न संयोगाद्वमन्तात्" इत्यल्लोपनिषेधात् रूपं सिध्यति। अथ तु परत्वादल्लोपः स्यात्ततो यण् न स्यात्। एवं तर्हि

व्यवस्थायामिति । ( भा )

तदाकाङ्क्षप्रवृत्तिनिमित्ते इत्यर्थः ॥ ननु लक्षणचक्षुषां तद्विभागो दुर्ज्ञेयोऽत आह

इष्टानिष्टेति ॥ ( कै )

अङ्गशब्दस्य निमित्तेषु वृत्तौ निमित्तं दर्शयति

पारार्थ्यादिति । ( कै )

एवं चान्तर्भूतनिमित्तापेक्षं च बहिरङ्गमिति भावः ॥

एतच्च न्यायेति । ( कै )

स च न्यायः [१]"अचः परस्मिन्" इत्यत्र भाष्ये दर्शितः ॥

कारणार्हम् । ( कै )

कारणयोग्यम् ॥

---

१ अ १ । पा १ । सू ५७ ॥

---

वृद्धिर्द्विर्वचनाल्लोपस्वरेभ्यः । वा । गुणाद्यणादेशः । स्योनः । स्योना । गुणश्च प्राप्नोति यणादेशश्च ( ७ । ३ । ८६ ॥ ६ । १ ७७ । ) ॥ परत्वाद्गुणः स्यात् । यणादेशो भवति अन्तरङ्गतः । वृद्धेर्यणादेशः । द्यौकामिः । स्यौकामिः । वृद्धिश्च प्राप्नोति यणादेशश्च ( ७ । २ । ११७ ॥ ६ । १ । ७७ ) । परत्वाद-

---

नित्यत्वात् पूर्वमत्र यण् भवतीति मन्यते । कृतेऽप्यल्लोपे तस्य स्थानिवत्त्वाद्यणः प्राप्त्या नित्यत्वम् । यणि कृते नास्त्यल्लोप: प्रतिषेधादिति तस्यानित्यत्वम् । द्यौकामिरिति । दि उ काम इ इति स्थिते यण् च प्राप्नोति ञ्नित्यादिर्नित्यमिति स्वरश्च । तत्र यदि पूर्वं स्वरः स्यात् तदा उदात्त-

## तुल्यबलं चेति। (कै)

यद्यपि विप्रतिषेधशब्देन इदमपि लब्धुं शक्यं तथापि तदे-तदर्थबोधने समर्थमिति भावः॥ कदाचिल्लोके दुर्बलबलवतोऽपि विरोधदर्शनात्

## नित्यानित्येति। (कै)

नित्यस्य बलवत्त्वे बीजं तु कृताकृतप्रसङ्गित्वेनावश्यकतैव अन्त-रङ्गं प्रथमं बुद्धावारोहतीति तत्काले बहिरङ्गानुपस्थितेस्तदेव प्रथमं प्रवर्त्तते एवं च क्वचिद्भाष्ये परत्वान्नित्यत्वाच्च इत्यादौ परत्वादित्यु-क्तिरेकदेशिन इति बोध्यम्॥

## पूर्वमन्तरङ्गत्वादिति। (कै)

अन्तरङ्गत्वाभावेऽपि नित्यत्वेनोठ् सुसाधु इत्युक्तं [1]"येन विधिः" इति सूत्रे। इदमुदाहरणमुणादिषु व्युत्पत्तिपक्षवादिनां शाकटा-यनादीनां मते॥

---

१ अ १। पा १। सू ७२॥

---

वृद्धिः स्यात्। यथादेशो भवति अन्तरङ्गतः॥ द्विर्वचनाद्यथादेशः। दुद्यूषति। सुस्यूषति। द्विर्वचनं च प्राप्नोति यथादेशश्च (६। १। ६-७७)। नित्यत्वाद् द्विर्वचनं स्यात्। यथादेशो भवत्यन्तरङ्गतः॥ अल्लोपस्य च यथादेशस्य च नास्ति सम्प्रधारणा॥ स्वराद्यथादेशः। द्यौकामिः स्यौकामिः। स्वरश्च प्राप्नोति

---

स्वरितयोर्यथा इत्यौकारः स्वरितः स्यादुदात्तश्च इष्यते। द्युकाम इति। पूर्वपदप्रकृतिस्वरोऽपि यथा अन्तरङ्गत्वाद्बाध्यते तथैव "दिव उद्" इत्युत्वेन च॥ काद्रवेय इति। कद्रूशब्दात् "संज्ञायाम्" इत्यूङिकृते "स्त्रीभ्यो ढक्" "द्यच" इति ढकि एयादेशे "ढलोपोऽकद्र्वाः" इति लोपप्र-

कृतेऽन्तरङ्गत्वादिति । (कै)

अन्तर्भूतनिमित्तकत्वरूपादित्यर्थः ॥

युगपत्प्रसङ्ग इति । (कै)

अन्तरङ्गन्यायमनालोचयन्तः पूर्व्वपक्षिण इति शेषः ॥ ननु [1]"अकृतव्यूह" परिभाषा नास्त्येव किं च तद्विषये नान्तरङ्गन्याय इति भाष्यासङ्गतिरित्यत आह

अथवेति । (कै)

एवं चानयैव सिद्धे "[2]समर्थानाम्" इत्यत्र समर्थग्रहणं न कार्य्यमित्यभिप्रायः ॥ स्थाने द्विर्वचनपक्षे यणोऽपि शब्दान्तरप्राप्ति-नित्यत्वं स्यादत आह

द्विः प्रयोग इति ॥ (कै)

वदन्त इति । (कै)

---

१ परिभाषेन्दुशेखरे ५७ ॥ २ अ ४ । पा १ । सू ८२ ॥

---

यणादेशश्च । (६ । १ । १६७—७७) । परत्वात् स्वरः स्यात् । यणादेशो भवत्यन्तरङ्गत्वात् ॥ गुणादेकादेशः । कारवेयो मन्त्रमपश्यत् । गुणश्च प्राप्नोत्येकादेशश्च ॥ (६ । ४ । १४६ ॥ ६ । १ । १०१) ॥ परत्वाद्गुणः स्यात् . एकादेशो भवत्यन्तरङ्गतः ॥ वृद्धेरेकादेशः । वैत्तमाणिः सौत्थितिः । वृद्धिश्च प्राप्नो-

---

तिषेधाद् "ओर्गुणः" इति गुणश्च प्राप्नोत्येकादेशश्च ॥ नन्वकृत एकादेशेऽप्रत्यय इति निषेधात् प्रातिपदिकत्वाभावात्तद्धित एव न स्यात् । कृते त्वेकादेशे तस्यान्तवद्भावात् प्रातिपदिकत्वात्तद्धितोत्पत्तिरित्यानुपूर्व्या सिद्धत्वादप्रयोजनमेतदित्याङः । अत्रोच्यते । अकृतेऽप्येकादेशे "नोङ धात्वोः" इति

कृताकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यताभ्युपगमे तु यणोऽपि नित्यतया परत्वाद्यणेव स्यादिति तेषामाशयः॥ अन्ये तु द्विः प्रयोगपक्षेऽपि द्वितीयः प्रयोगो द्विर्वचननिष्पाद्य पर एव। एवं च यस्य द्वित्वं न तस्य यण् तदनन्तरं किन्तु द्वितीयस्य प्रयोगस्य द्विर्वचनं यण्यपि कृते तस्यैव नित्यशब्दवादे प्रयोगभेद एव शब्दभेदकः। प्रयोगे कृताकृतप्रसङ्ग्येव हि नित्यमिति भाष्याशयमाहुः॥

## तस्यानित्यत्वमिति। (कै)

यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति क्वाचित्कमिति भावः॥

## पूर्वपदप्रकृतीति। (कै)

दिवि कामो यस्येति विग्रहे "[१]बहुव्रीहौ प्रकृत्या" इत्यनेनेत्यर्थः॥ ननूत्वे यण् इति ततः पूर्व्वमेव स्वरः स्यादत आह

१। अ ६। पा २। सू १॥

त्वेकादेशश्च (७। २। ११७। ६। १। १०१)॥ परत्वाद्वृद्धिः स्यात् एकादेशो भवत्यन्तरङ्गतः॥ द्विर्वचनादेकादेशः। छाया ओदनो छौदनः। छौदनमिच्छति छौदनीयति। छौदनीयतेः सन् जुच्छौदनीयिषति। द्विर्वचनं च प्राप्नोति एकादेशश्च (६। १।८—८८)॥ नित्यत्वाद्द्विर्वचनं स्यात्। एकादेशो

"टिलोपोऽकद्रा" इति निषेधाच्च ज्ञापकाद्भविष्यति तद्धित इत्यदोषः। शुनेति। ननु "श्वयुवा" इति सम्प्रसारणे कृते "तस्यासिद्धवदत्रा" इत्यसिद्धत्वात् "न संयोगाद्वमन्तात्" इति निषेधादल्लोपस्य नास्ति प्राप्तिः। एवं तर्हि प्राग्भादित्यसिद्धत्वमाश्रित्यैतदुक्तम्। प्रयोजनप्रत्याख्यानवाद्याह

तथैवेति ॥ (कै)

[1]स्त्रीभ्य इति । (पा)

यदि कद्रूर्नागमाता तदानेन । यदि काचन मानुषी तदा "[2]द्व्यचः" इत्यपि प्राप्ते तदपवादो "[3]ङ्याप" इति एकादेशात् पूर्वं द्व्यच्त्वाभावे "स्त्रीभ्य" इत्यनेनैव ढक् । कद्रूश्च नागमातैवेत्यु-चिता ॥

ज्ञापकादिति । (कै)

"[4]स्त्रीभ्यो ढग्" इत्यादौ प्रातिपदिकादित्यस्य सम्बन्धेन लिङ्ग-विशिष्टपरिभाषया नासिद्धेर्ज्ञापकपर्यन्तानुधावनं किमर्थमिति चिन्त्यम् । अत एवैणी पादौ ढक् सिद्धिरित्याहुः ॥

ज्ञापकमपि चिन्त्यम् । अन्तरङ्गं बलवदित्येतज्ज्ञापनेन कृते एकादेशे तत् प्रवृत्त्या चारितार्थ्यसम्भवात् ॥ भाष्ये

---

१ अ ४ । पा १ । सू १२० ॥ २ अ ४ । पा १ । सू ११३ ॥
३ अ ४ । पा १ । सू १२१ ॥ ४ अ ४ । पा १ । सू १२० ॥

---

भवति अन्तरङ्गतः ॥ अल्लोपादेकादेशः । शुना शुने । अल्लोपश्च प्राप्नोत्येकादेशश्च (६ । ४ । १३४ ॥ ६ । १ । १०८) । परत्वादल्लोपः स्यात् । एकादेशो'भवत्यन्तरङ्गतः । नैतदस्ति प्रयोजनम् । नास्त्यत्र विशेषोऽल्लोपेन वा निवृत्तौ सत्यां पूर्वत्वेन वा । अयमस्ति विशेषः । अल्लोपेन निवृत्तौ सत्यामु-

---

नैतदस्तीति ॥ प्रयोजनवाद्याह अयमस्तीति । प्रत्याख्यानवाद्याह नास्तीति । प्रयोजनवाद्याह नैष इति । स एवाह यत्र तर्हीति । यत्र पुनरित्यर्थः । शुनः पश्येति । अत्र हि न गोश्वन् इति इति प्रतिषेधाभावादल्लोपे सति उदात्तनिवृत्तिस्वरप्रसङ्गः । तस्मात् पूर्वमेकादेश एष्टव्यः । प्रत्याख्यानवाद्याह

**परत्वाद् वृद्धिरिति।** (भा)

न च सा नित्या शब्दान्तरप्राप्तत्वात्। इदमपि समर्थग्रहण-प्रत्याख्यानतात्पर्य्यकम्॥

**नित्यत्वाद्द्विर्वचनमिति।** (भा)

भाष्ये शब्दान्तरप्राप्त्यानित्यत्वं तु काचित्कमितिभावः॥

**एवं तर्हीति।** (भा)

तस्य "[1]असोरल्लोप" इति तपरकरणेनानित्यत्वादनाश्रयण-मिति वक्तुं युक्तं "[2]वार्णादाङ्गम्" इत्यप्यनित्यत्वान्नाश्रितम्। नवा-न्तरङ्गपरिभाषाया अपि "[3]आभीय" त्वेन तद्दृष्ट्या वहिरङ्गस्या-सिद्धतया सर्वथा नेदमुदाहरणमिति वाच्यम्। "[4]वाह ऊठ्" सूत्रज्ञापितासिद्धपरिभाषाया आभीयत्वेऽपि "अन्तरङ्गं वलीय"

---

१ अ ६। पा ४। सू १११॥ २ परिभाषेन्दुशे ५६॥
३ अ ६। पा ४। सू २२॥ ४ अ ६। पा ४। सू १३२॥

---

दात्तनिवृत्तिः स्वरः प्रसज्येत (६। १। १६१)। नाचोदात्तनिवृत्तिः स्वरः प्राप्नोति। किं कारणम्। न गोश्वन् साववर्ण (६। १। १८२) इति प्रतिषेधात्। नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः। कस्य तर्हि। तृती-यादिस्वरस्य (६। १। १६८)। यत्र तर्हि तृतीयादिस्वरो नास्ति। शुनः

---

एवं तर्हीति। प्रयोजनवाद्याह यत्र तर्हीति। वह्वश्वणीति। "बहोर्नञ्-वदुत्तरपदभूम्नि" इत्यन्तोदात्तत्त्वान् ङीपि कृतेऽल्लोपे क्रियमाणे उदात्तनिवृत्तिस्वरः स्यात्। प्रत्याख्यानवाद्याह यदि पुनरिति। प्रयोजन-वाद्याह नैवं शक्यमिति। कुमारशब्दः साववर्णान्त इति ङीप उदात्त-

इत्यस्यास्तत्वे मानाभावात्। धर्मिग्राहकमानेन तां प्रति बहिरङ्ग-स्याभीयामिद्धत्वाप्रवर्त्तनाच्चेति दिक् ॥ भाष्ये

उदात्तनिवृत्तिस्वरः। (भा)

[1]"अनुदात्तस्य यत्र उदात्तलोप" इत्यनेन ॥

[2]न गोश्वन् इति। (कै)

गवादिभ्यः परस्य उदात्तत्वं नेत्यर्थः। तृतीयादिस्वरस्य "[3]सावेकाच" इति विहितस्य आनन्तर्यात् तृतीयादिर्विभक्तिरित्यनुवर्त्तनाच्चेतिभावः॥ एवं च मत्वल्लोपे उदात्तनिवृत्तिस्वरः स्यादिति प्रयोजनवाद्याशयः। इत उत्तरो "यत्र तर्हि" इत्यादिग्रन्थो ग्रन्थच्छायया प्रत्याख्यानवादिन इति [4]भाति तन्तु न युक्तम्। तृती-

१ अ ६। पा १। सू १६१॥
२ न गोश्वन् साववर्णराडङ् क्रुङ् कृद्भ्यः ६। १। १८२॥
३ सावेकाचस्तृतीयादिर्विभक्तिः। ६। १। १६८॥
४ "भाति" इति नास्ति क पुस्तके॥

पश्येति। एवं तर्हि न लाक्षणिकस्य प्रतिषेधं शिष्मः। किं तर्हि। येन केनचिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्य प्रतिषेधः। यत्र तर्हि विभक्तिर्नास्ति। बक्रभुनीति (६। २। १७५)। यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत। नैवं शक्यम्। इहापि प्रसज्येत कुमारीति। एवं तर्ह्यो-

स्वरो न स्यात्। प्रत्याख्यानवाद्याह एवं तर्हीति। भुनीत्यत्र ङीप उदात्तनिवृत्तिस्वरस्य सिद्धत्वात् किं ङीब् विधानेन इत्यर्थः। तदेवमल्लोपादेशादेशस्य स्वरार्थत्वं दूषितम्। प्रयोजनान्तरं त्वस्त्येव। यद्यल्लोपो भवति तदा "अन उपधालोपिन" इति ङीपि सन्ति बक्रभुनीति भवति। यदा

यादिविभक्त्यभावेन "न गोश्वन्" इत्यस्याप्रसक्तेरुदात्तनिवृत्तिस्वरो निष्प्रत्यूह इति फलभेदोपसंहारस्य तदपवादकप्रत्याख्यानवादिविरुद्धत्वाद् अत आह

स एवेति। (कै)

अयं भावः। तृतीयादिस्थानिकस्य लक्षणविशेषानादरेण सर्वस्य निषेध इत्याशङ्क्य उदाहरणान्तरदानमिति॥ ननु "एवं तर्हि" शब्दो न युक्त इत्यत आह

पुनरिति। (कै)

चेत्यर्थः॥ एतदर्थमेव तत्तदुक्तित्वं नादित अन्तत्योजनमिति बोध्यम्॥ भाष्ये

न लाक्षणिकस्येति। (भा)

तृतीयादिशब्दविशेषमुपादाय विहितस्येत्यर्थः॥ भाष्ये

---

चार्यप्रवृत्तिर्ज्ञापयति नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति यदयं श्वन्शब्दं गौरादिषु पठति (४।१।४१)। अन्तोदात्तार्थं यत्नं करोति। सिद्धं हि स्यात् ङीपैव॥ स्वरादेकादेशः। सौत्थितिः वैत्तमार्गिः। स्वरश्च प्राप्नोत्येकादेशश्च (६।१।१८७)। परत्वात् स्वरः स्यात्। एकादेशो भवत्यन्तरङ्गतः। गुणस्य च इत्त्वोत्त्वयोश्च नास्ति सम्प्रधारणा॥ वृद्धेरित्त्वोत्त्वे। स्तैर्णिः।

---

त्वेकादेशेनाल्लोपो वाध्यते तदोपधालोपित्वाभावान् ङीबभावाद्बहुश्वेति गौरादित्वत्वाद् ङीष् नास्ति। अनुपसर्जनादित्यधिकारात्। भाष्ये तु बहुश्वीति प्रत्याख्यानवादिमतेनोपन्यस्तम्। तत्पक्षे किल ङीपा भाव्यमिति। न्यायमूलं चेदमन्तमन्तरङ्गं बलीय इति। न च न्यायस्यात्र केन चिद्बाधो-

विभक्तिस्वरस्येति । (भा)

तृतीयादिरिति नानुवर्त्तते विभक्तिरित्येव । एवं च शुन इत्यादावपि नास्ति फलभेद इत्यर्थः ॥ ननु बहुश्वन् शब्दस्य बहुव्रीहित्वेन पूर्वपदप्रकृतिस्वरत्वात् उदात्तनिवृत्तिस्वरप्राप्तिरत आह

बह्वोरिति । (भा)

प्रत्याख्यानवादिनाऽल्लोपस्यैव दृष्टत्वेन तद्रीत्या "अन उपधा" इत्यस्य प्राप्तिं मत्वा "बहुशुनी" त्युदाहृतम् ॥ भाष्ये

यदि पुनरिति । (भा)

विभक्तिग्रहणमपि नानुवर्त्तते इति भावः ॥

कुमारशब्द इति । (कै)

तस्माद्विभक्तिग्रहणमनुवर्त्तते । तथा च [1]बहुशुना इत्यत्रोदात्त-निवृत्तिस्वरः स्यादिति भावः ॥

---

१ "बहुशुना" इत्यारभ्य "भावः" इत्यन्तं नास्ति क पुस्तके ॥

---

पौर्त्तिः । वृद्धिश्च प्राप्नोतीत्त्वोत्त्वे च ( ७ । २ ११७ ॥ ७ । १ । १००—१०२ ) । परत्वाद्वृद्धिः स्यात् । इत्त्वोत्त्वे भवतोऽन्तरङ्गतः ॥ द्विर्वचनादित्त्वोत्त्वे । आतेस्तीर्थ्यते आपो पूर्य्यते । द्विर्वचनं च प्राप्नोतीत्त्वं च ( ६ । १ । ३ । ७ । १००—१०२ ) । नित्यत्वाद्द्विर्वचनं स्यात् । इत्त्वोत्त्वे भवतोऽन्तरङ्गतः । अल्लोपस्य चेत्त्वोत्त्वयोश्च नास्ति सम्प्रधारणा ॥ स्वरे नास्ति विशेषः ॥

---

उक्तीति बहुश्वा इत्येव भाष्यमिति न्यायविद आहुः । सौत्थितिरिति । सु उत्थित इ इति स्थिते यद्यत्र पूर्वमुकारस्योदात्तत्वं स्यात् तदा स्वरितो वानुदात्ते पदादौ इति पक्षे स्वरितत्वं प्रसज्येत । पूर्वं त्वेकादेशे कृते नित्यमानुदात्तमेतद्भवति । गुणस्येति । परत्वाद्धि गुणेति भाष्यम् । स्वैरिरिति ।

**बहुश्रुनीति । (कै)**

"[1]ङाबुभाभ्याम्" इति डापि तदभावे चेतिभावः॥ नन्वेवं प्रयोजनवादिग्रन्थे बहुश्रुनीत्ययुक्तमत आह

**भाष्ये त्विति ॥ (कै)**

ननु प्रत्याख्यानान्ततथैव अचत्य ग्रन्थपर्य्यवसानात् [2]"असिद्धवत्" सूत्रस्थैतदानुपूर्वीकभाष्याच्च बहुश्रुनीति भगवत इष्टमिति भ्रमं वारयति ।

**न्याये— (कै)**

त्यादिना ॥ ननु भाष्यमेव न्यायबाधकमस्तु इत्यत आह

**न्यायविद इति । (कै)**

भाष्यस्य उदात्तनिवृत्तिस्वरकृतस्वरवैलक्षण्यपरिहारमात्रतात्प-

---

१ अ ४ । पा १ । सू १३ ॥ २ अ ६ । पा ४ । सू २२ ॥

---

इण् ङिश्रीनामाद्गुणः सवर्णदीर्घत्वात् । वा । इण् ङिश्रीनामाद्गुणः सवर्णदीर्घत्वात्प्रयोजनम् । अयज इन्द्रम् अवप इन्द्रम् । वृक्ष इन्द्रम् प्लक्ष इन्द्रम् । य इन्द्रम् त इन्द्रम् । आद्गुणश्च प्राप्नोति सवर्णदीर्घत्वं च ( ६।१।८७।१०१ ) परत्वात् सवर्णदीर्घत्वं स्यात् । आद्गुणो भवत्यन्तरङ्गतः ॥ न वा सवर्णदीर्घ-

---

विभज्यान्वाख्याने लुत इ इति स्थितेऽन्तरङ्गत्वादित्वं ततो वृद्धिः । स्वर इति । लैर्गिरिति यदि पूर्वं स्वरः तत इत्वं तथाप्यान्तरतम्यादुदात्तत्वं सिध्यति । नवेति । दश्चाग्रमित्याद्गुणः प्राप्नोति । कुमारी ईहत इत्यादौ यणादेश इत्यवग्रहं सर्वदीर्घत्वेन विध्यन्तरं बाध्यम् । नैतदिति । एकाग्निमित्तप्रा-

र्थकतया न न्यायबाधकत्वम् ॥ [1]"डाबुभाभ्याम्" इति सूत्रस्थभाष्यरीत्या "बडभ्या" इत्येव भाष्यसम्मतमिति भावः ॥ नन्वल्लोपे सति तस्य स्थानिवत्त्वाद्यण् स्यादिति कुतो नापादितम् "[2]यूनस्तिः" "शुनः पुच्छ" इत्यादिनिर्देशैर्वारणसम्भवात्। वस्तुतो लोपे सर्वानुदात्तं शुनेति प्राप्नोति पूर्वरूपे तु एकादेशस्वरेण आद्युदात्तमित्यपि विशेषो बोध्यम् ॥ ननु पूर्वमुदात्तत्वेऽपि तदेकादेशस्य "[3]एकादेश उदात्तेन" इत्यनेन उदात्तत्वे इष्टसिद्धेराह

तदेति ॥ (कै)

नित्यमिति। (कै)

"[4]ऋन्नित्यादिः" इत्यनेनेतिभावः। एतदपि प्रयोजनं समर्थग्रहणप्रत्याख्यानाभिप्रायेण ॥

---

१ अ ४। पा १। सू १३॥ २ अ ४। पा १। सू ७७॥
३ अ ८। पा २। सू ५॥ ४ अ ६। पा १। सू ६७॥

---

त्वस्यानवकाशत्वात्। वा। न वैतदन्तरङ्गेणापि सिध्यति। किं कारणम्। सवर्णदीर्घत्वस्यानवकाशत्वात्। अनवकाशं सवर्णदीर्घत्वमाद्गुणं बाधेत॥ नैतदन्तरङ्गेऽप्यनवकाशं परमिति। इहापि स्योनः स्योनेति प्रश्नं वक्तुं न वा परत्वाद्गुणस्येति। ऊङापोरेकादेश ईत्वलोपाभ्याम्। वा। ऊङापो-

---

विध्यन्तरबाधनेन सावकाशः सवर्णदीर्घोऽन्तरङ्गं बाधितुं न प्रभवतीति भावः। निरवकाशेन तु विध्यन्तरेण सावकाशोऽन्तरङ्गोऽपि विधिर्बाध्यते यथा "गोमतेऽजुगचि" इत्यलुका लुक्। न वा परत्वादिति। यथा त्वत्र परत्वेन न व्यवस्था अपि तु अन्तरङ्गत्वेन तथा आद्गुणोऽपि समानकालो दीर्घस्य

परत्वाद्दीति । (कै)

इदं वस्तुतत्त्वकथनं न तु (सम्प्रधारणा । इ । क) सम्प्रधारणाभावे हेतुः । स तु उभयोरपि बहिर्भूतप्रत्ययापेक्षत्वेन समत्वेनान्तरङ्गत्वाभाव इति बोध्यम् ॥ मनुस्तीर्णमब्धादिभि न दोषोऽत आह

विभज्येति ॥ (कै)

भाष्ये

इत्वोत्वे भवतोऽन्तरङ्गत इति (भा)

अत्र एकाच्त्वानभ्यासत्वप्रथमत्वादिबहूपाध्यपेक्षत्वेन द्वित्वस्य बहिरङ्गत्वं बोध्यम् । इदं प्रयोजनमेकदेशयुक्तिः । इयोर्नित्यत्वेऽनित्यत्वे वा परत्वादिसिद्धे यकन्तस्य द्वित्वेन तस्यापरनिमित्तकत्वेनान्तरङ्गत्वाद्वेत्यन्ये। स्वरेणापि इत्वोत्वयोर्नास्ति सम्प्रधारणेत्याह

स्वरे नास्तीति ॥ (भा)

---

रेकादेश इत्वलोपाभ्यां भवत्यन्तरङ्गतः प्रयोजनम् ॥ इत्वादेकादेशः । खट्वीयति मालीयति । इत्वं च प्राप्नोत्येकादेशश्च (७ । ४ । ३३ ॥ ६ । १ । १०१)। परत्वादीत्वं स्यात् । एकादेशो भवत्यन्तरङ्गतः ॥ लोपादेकादेशः । कामण्डलेयः माद्रबाहेयः । लोपश्च प्राप्नोत्येकादेशश्च (६।४।१४७ ॥ ६।१।१०१)।

---

बाध्यते न त्वन्तरङ्ग इति भावः । खट्वीयतीति । खट्व आय इयि स्थिते यदि पूर्वमीत्वं स्यात् तत आद्गुणः प्रसज्येत । मन्वाकारस्य कृते इत्वे "यस्येति" लोपो भविष्यति । नैतदस्ति । पूर्वविधावितीत्वस्य स्थानिवद्भावात् । नलोपे त्वाभ्यामिति । ऊङ इत्वासम्भवादयं क्रमोऽयुक्त आश्रयितुमिति

ननु "कुमारी ईहते दण्डाग्रम्" इत्यादौ सावकाशं दीर्घत्वमत आह

दण्डाग्रमिति। (कै)

एवं च यण्गुणाभ्यां सर्वविषयव्याप्तेरवश्यं विध्यन्तरे बाधे बाध्यसामान्यचिन्तयाऽदृश्यमाणविशेषत्वात् सर्वबाध्यमित्यर्थः। अन्तरङ्गादपि निरवकाशस्य बलवत्त्वेन "नैतदन्तरङ्गे" इत्यनुपपन्नमत आह

एकनिमित्तेति। (कै)

एकस्थानिक इत्यपि बोध्यम्। एवं च स्वसमाननिमित्तकेन स्वसमानस्थानिकेनैव च येन नाप्राप्तिन्यायो न तु विभिन्नस्थानिनिमित्तकेनापीति न तद्बाध इति भावः। यस्तु सर्वथानवकाशः स बाधक एवेत्याह

निरवकाशेनेति। (कै)

---

परत्वाल्लोपः स्यात्। एकादेशो भवत्यन्तरङ्गत्वः॥ अथ किमर्थमौल्लोपाभ्यामित्युच्यते न लोपेत्वाभ्यामित्येवोच्यते। संख्यातानुदेशो (१।३।१०) माभूदिति। आपोऽप्येकादेशो लोपे प्रयोजयति। चौड़िः। बालाकिः (६। ४। १४८)॥ आत्वनपुंसकोपसर्जनह्रस्वत्वान्ययवायावेकदेशातुग्विधिभ्यः। वा।

---

भावः। यद्यप्यनाद्यदन्तमिति ईत्वशब्दस्य पूर्वनिपातो न्याय्यः। तथापि लक्ष्ये प्रायेणासौ नाद्रियते। चौड़िरिति। पूर्वमाकारलोपे सति तस्य स्थानिवत्त्वादसिद्धत्वाच्चाकारलोपाभावा "दाद्गुणः" इति गुणस्य प्रसङ्गः। न्याबौषधिरिति। विभज्यान्वाख्याने ङ्लो अनीय इति स्थिते अनेमित्तिकत्वा-

एकस्याभिनिमित्तकेनेत्यर्थः॥ वहिर्भूताजादिप्रत्ययापेक्षत्वाद्-लुक् वहिरङ्गः॥ भाष्ये

इहापीति। (भा)

यद्यन्तरङ्गेऽपीदं स्यात् तर्हि तत्रापि अन्तरङ्गत्वाद् यण् न स्यात् गुणस्य परत्वादिति बाधकतर्केण समाननिमित्तकमेव निरवकाश-पराभ्यां बाध्यते इति। तत् फलितमाह

यथा त्विति॥ (कै)

ननु खट्वाशब्दे सुबुत्पत्तेः प्रागेवैकादेशोऽत आह

खट्व आय् इति। (कै)

विभज्यान्वाख्याने दोषः। [1]सुप् "लिङ्गविशिष्ट" परिभाषया इति भावः॥

---

१ परिभाषेन्दुशे- ७२॥

---

आत्वनपुंसकोपसर्जनह्रस्वत्वान्ययवायावेकादेशतुग्विधिभ्यो भवत्यन्तरङ्गतः॥ वेञ् वानीयम्। श्यो श्यानीयम्। ग्लै ग्लानीयम्। म्लै म्लानीयम्। ग्लाच्छत्रम्। म्लाच्छत्रम्। आत्वं च प्राप्नोति एते च विधयः (६।१।४५। ६।१।७८—७६) परत्वादेते विधयः स्युः। आत्वं भवत्यन्तरङ्गतः। नपुंसकोपस-र्जनह्रस्वत्वं च प्रयोजनम्। अतिर्यन्न। अतिन्वन्न। अतिरिच्छत्रम्। अतिनु-

---

दात्वमन्तरङ्गं भवति ग्लाच्छत्रमिति ग्ला ग्ला इति क्विबन्तम्। अत्रापि तथा विभज्यान्वाख्याने ग्लै छत्रमिति स्थिते यदि पूर्वं तुक् स्यात् तदा एजन्त-त्वाभावादत्वं स्याद् यथा ढौकितेति। उपदेशग्रहणानपेक्षया नैतदुदा-हरणम्। अतिर्यन्नेति। अतिरै अन्न इति स्थिते आयादेशे सत्यनजन्त-त्वाद्ध्रस्वो न स्यात्। आराशस्त्रीदमिति। आराशस्त्री इदमिति स्थिते

लोप इति। (कै)

खट्वाशब्दाकारस्येत्यर्थः॥ नन्वजाद्यदन्तत्वादीशब्दस्यैव पूर्वनिपातो युक्तोऽत आह

ऊङ इति॥ (कै)

न्याय्य इति। (कै)

शास्त्रीयत्वात् क्रमबाधोऽपि सोढव्य इति भावः॥

लक्षणे इति। (कै)

'अन्तिकबाढयोर्नेदसाधौ (पा)

इत्यादिनिर्देशैः क्रमानुसारस्य सर्वनिपातविधिभ्यो बलवत्त्वज्ञापनादिति भावः॥ भाष्ये

संख्यातानुदेश इति। (भा)

---

१ अ ५। पा ३। सू ६३॥

---

च्छन्नम्। आराशस्त्रीदम्। धानाशष्कुलीदम्। निष्कौशाम्बीदम्। निर्वाराणसीदम्। निष्कौशाम्बिच्छन्नम्। निर्वाराणसिच्छन्नम्। नपुंसकोपसर्जनह्रस्वत्वं च प्राप्नोत्येते च विधयः (१।२।४७–४८॥ ६।१।८८–७६–१०१)। परत्वादेते विधयः स्युः। नपुंसकोपसर्जनह्रस्वत्वं भवत्यन्तरङ्गतः। तुगप्येका-

---

यद्यत्र पूर्वमेकादेशः स्यात्तदा तस्यान्तवद्भावाद् ह्रस्वे कृते रूपं न सिध्येत। अग्निचिदत्रेति। पदसमुदायस्य विभज्यान्वाख्याने अग्निचिद् अत्र इति स्थिते यदि पूर्वं यण् स्यात् तदा तुक् न स्यात्। नपुंसकं चाचाग्निचि इति ह्रस्वम्। पुंसिविभक्त्या व्यवधानात्। सुहृद् दुष्कृताविति। कथं पुनरत्रा-

ननु नात्र [1]यथासंख्यसूत्रप्राप्तिः। तस्य विध्यङ्गत्वात्। नापि स्थानाख्यप्रमाणस्य समाननिर्देशादिति चेन्न। अनूद्यमानयोरपि तत् प्रवृत्तेर्दृष्टत्वादिति भावः॥

**असिद्धत्वाच्चेति। (कै)**

चिणो लुक् न्यायेनात्र आभीयासिद्धत्वं बोध्यम्॥ ननु उपदेशे आत्मनेमित्तिकम् आयादयस्तु प्रत्ययोत्पत्त्यनन्तरभाविन इति सम्प्रधारणाभावादाह

**विभज्येति। (कै)**

"अश्नितीति" प्रसज्यप्रतिषेध इति भावः॥

**क्विबन्तमिति। (कै)**

कर्त्तरि क्विबन्तेन षष्ठीसमास इत्यर्थः॥

**नये क्षये इति।**

---

[1] अ १। पा ३। सू १०।

---

देशगुणवृद्ध्यौत्त्वदीर्घत्वेत्वमुमेत्त्वरीविधिभ्यः। वा। यथोकादेशगुणवृद्ध्यौत्त्व-दीर्घत्वेत्वमुमेत्त्वरीविधिभ्यस्तुग् भवत्यन्तरङ्गतः॥ यथादेशात्। अग्निचिदत्र-सोमसुदत्र॥ यथादेशात्। अग्निचिदिदम्। सोमसुदुदकम्। गुणात्। अग्निचिते। सोमसुते॥ वृद्धेः। प्र ऋच्छकः। प्रार्च्छकः॥ औत्त्वात्। अग्नि-

---

नङ् प्राप्नोति। यावता विद्यायोनिसम्बन्धवाचिनामृदन्तानां द्वन्द्वे स विहित इति चिन्त्यमेतत्। धियतीति। धि धारणे तिपि शे कृते तिवाश्रयो गुणः प्राप्नोति। विकरणाश्रय इयङ् भवत्यन्तरङ्गत्वात्। यथादेशश्चेति। "एरने-कात्र" इति यण्। शुश्रुवतुरिति। श्रु अतुस् "श्रुः सम्प्रसारणम्" "अभ्यासस्य

एवं च एतत् प्रयोजनमेकदेश्युक्तिरिति भावः ॥

अन्तवदिति । (कै)

"स नपुंसकमि"ति नपुंसकत्वस्यापि शास्त्रीयत्वादतिदेश इति भावः ॥

पदसमुदायस्येति । (कै)

पदस्य (पा)

पदात् (पा)

इत्यादौ पदसमुदायस्याप्यन्वाख्यानदर्शनादिति भावः ॥

पुंसि विभक्त्येति । (कै)

न च सुबपेक्षया परत्वात् प्रथमं तुग् इति कथं सुपा व्यवधानोक्तिरिति वाच्यम् "अग्निचिद्" इत्यादौ गुणतुकोः सम्प्रधारणायाः अग्रे भाष्ये कृतत्वेन तुकः पूर्वमन्तरङ्गत्वाद्विभक्तिः सिद्धवत् कृत्यैवास्य भाष्यस्य प्रवृत्तिरित्याशयात् ॥ भाष्ये

---

चिति । सोमसुति ॥ दीर्घत्वात् । जगद्भ्याम् । जनगद्भ्याम् ॥ इत्त्वात् । जगत्यति । जनगत्यति ॥ मुमः । अग्निचिन्मन्यः । सोमसुन्मन्यः ॥ एत्त्वात् । जगद्भ्यः । जनगद्भ्यः ॥ रीविधेः । सुकृत्यति । पापकृत्यति ॥ अनडाहभ्यां चेति वक्तव्यम् । सुकृत् । सुकृद्भ्यां । तुक् च प्राप्नोत्येते च विधयः ( ६।१।७१-

---

च" इति सम्प्रसारणे कृते यद्याकारस्य लोपः स्यात्तदा स्थानिवत्त्वादसिद्धवदत्राभादित्यसिद्धत्वात् चोवङ् न स्यात् । औपगवीति । उपगोरियमित्यणि ङीपि च कृते यदि प्रत्ययाद्युदात्तत्वात् पिदनुदात्ताद्वा पूर्वं लोपः स्यात् तदोदात्तनिवृत्तिः स्वरः ईकारस्य न स्यात् । अग्निरिन्द्र इति । यद्यपि प्रत्यय-

प्र ऋच्छकः प्रार्च्छक इति । ( भा )

षत्वतुकोरित्यनपेक्षेदं वहिरङ्गत्वेनापि सिध्यति नाजानन्तर्य्ये इति तु भाष्येवेत्यभिप्रायः ॥

चिन्त्यमेतदिति । ( कै )

सुहृतादिशब्दयोऽपि प्रकरणादिना यदा स्त्रलिङ्गविशेषे पर्य्यवसानं तदा इदमुदाहरणमित्याहुः ॥ ननु शस्य ङित्त्वाद्गुणस्य कथं प्राप्तिः द्वयोरप्येकनिमित्तत्वेन अन्तरङ्गत्वाद्यभावस्येत्यत आह

तिवाश्रय इति ॥ ( कै )

गुणः । ( कै )

लघूपधगुणः ॥

एरिति । ( कै )

"इको यण्" इति तु इयङा वाधितमितिभावः ॥ औत्थानिकयणस्तु पूर्वरूपमपवाद इति तात्पर्य्यम् ॥

---

७४, ७७, १०१॥७।३।११९॥६।१।८१॥७.३।११८,१०२॥७.४।३३॥६।३।६७ ) । परत्वादेते विधयः स्युः । तुग् भवत्यन्तरङ्गतः ॥ इयङादेशो गुणात् । वा । इयङादेशो गुणाद् भवत्यन्तरङ्गतः प्रयोजनम् । धियति । रियति । इयङादेशस्य प्राप्नोति गुणस्य ( ६।४।७७॥७।३।८६ ) । परत्वाद्गुणः स्यात् । इयङादेशो भवत्यन्तरङ्गतः ॥ उवङादेशस्येति वक्तव्यम् । प्रादुद्रुवत् । प्रासुस्रुवत् ॥

---

रक्षितायाः प्रकृते प्रयोगो नास्ति तथापि वाक्यस्य विभज्यान्वाख्याने क्रियमाणेऽयं विचारः क्रियते । यद्यपि प्रत्ययस्य नित्यत्वं तथापि अन्तरङ्गेणैव सिद्धत्वान्न तदाश्रितम् । षत्वत्वेनेति । यद्यत्र पूर्वं यण् स्यात् अनल्विधाविति

## यथाकारेति । (कै)

नतु "इदतिङ्" सूत्रस्थाकररीत्या चिकीर्षतीत्यादौ "अचः परस्मिन्" इति स्थानिवत्त्वेन तुगभाववत् शुक्ववतुरित्यत्र पूर्वरूपेऽपि तस्य स्थानिवत्त्वात् उवङोः प्राप्तिरिति चेन्न। पूर्वस्य धातुत्वाभावेन तदुद्देश्यकविधेरभावात् इत्याहुः ॥

## उपगोरियमिति। (कै)

अनन्तरापत्यमिति शेष इत्येके। गोत्रापि तु जातित्वान् ङीष एवस्यादिति न स्वरः प्रयोजनमिति भावः ॥

## प्रत्ययाद्युदात्तत्वादिति। (कै)

एतदणः

## पिदनुदात्तत्वादेति (कै)

एतन्ङीपः पिदनुदात्तमपि उभयापेक्षलोपाद्न्तरङ्गमेवेति बोध्यम् ॥

---

ओः संप्रसारणपूर्वत्वं यणादेशात्। वा। सम्प्रसारणपूर्वत्वं यणादेशात् भवत्यन्तरङ्गतः प्रयोजनम्। शुशुवतुः। शुशुवुः। पूर्वत्वं च प्राप्नोति यणादेशश्च ( ६।१।१०८।६।४।८२ )। परत्वाद् यणादेशः स्यात्। पूर्वत्वं भवत्यन्तरङ्गतः॥ ऊ आकारलोपात। वा। ऊ आकारलोपात् पूर्वत्वं भवत्यन्तरङ्गतः प्रयोजनम्। जुहुवतुः। जुहुवुः। पूर्वत्वं च प्राप्नोत्याकारलोपश्च ( ६।१।१०८।

---

स्थानिवत्त्वनिषेधात् उत्वं न स्यात्। पूर्वशालाप्रिय इति। पूर्वशालाप्रिय अस्येति त्रिपाद बहुव्रीहौ कृते "तद्धितार्थे"ति द्वयोः पदयोः तत्पुरुषः। तत्र त्रिपदाश्रयबहुव्रीहिनिमित्तः पूर्वपदप्रकृतिस्वरो बहिरङ्गत्वान्न प्रवर्तते।

प्रत्ययस्येति। (कै)

एकादेशेऽपि पूर्वान्तवत्त्वेन सुपः प्राप्तेस्तस्य नित्यत्वं नेति तत्रेति ॥ भाष्ये

परत्वाद्यणिति। (भा)

शब्दान्तरप्राप्तेर्नित्यत्वं नोक्तम् ॥ स्थादेशशब्देन स्थादेशस्थानिक आदेशस्तदाह

उत्वं नेति ॥ (कै)

तत्रेति। (कै)

यद्यपि सतिशिष्टत्वादिदं सिद्धं तथापि अन्तरङ्गन्यायादपीष्ट-सिद्धिरिति भावः ॥

बहिरङ्गे कृते इति। (कै)

अयं हि न्यायो युगपत्प्राप्तौ अन्तरङ्गस्य प्रथमं प्रवृत्तिबोधक एवेति भावः ॥

---

६।४।६४)। परत्वादाकारलोपः स्यात्। पूर्वत्वं भवत्यन्तरङ्गतः॥ स्वरो लोपात्। वा। स्वरो लोपाद् भवत्यन्तरङ्गतः प्रयोजनम्॥ औपगवी सौदामनी। स्वरश्च प्राप्नोति लोपश्च (३।१।३-४॥६।४।१४८)॥ परत्वाल्लोपः स्यात्। स्वरो भवत्यन्तरङ्गतः॥ प्रत्ययविधिरेकादेशात्। वा। प्रत्ययविधिरेकादेशाद् भवत्यन्तरङ्गतः प्रयोजनम्। अग्निरिन्द्रः। वायुरुदकम्॥ प्रत्ययविधिश्च

---

तेन तत्पुरुषसमासाश्रयं शालाशब्दस्यान्तोदात्तत्वं भवति। पूर्वशब्दः "स्वाङ्गशिटामदन्तानाम्" इति आद्युदात्तः। यथावेदमिति। अन्तरङ्ग-वलीयस्त्वेन एतन्न सिध्यति। बहिरङ्गे कृते आद्गुणे एत ऐ इति प्राप्नोति।

पूर्वोक्तेति । (कै)

अन्तरङ्गे कर्त्तव्ये बहिरङ्गमसिद्धं तद्बहिरङ्गं कृतं चिकीर्षितं च इत्यन्यत् ॥ ननु स्योन इत्यत्र परत्वाद्गुणे तस्यासिद्धत्वेऽपि इकोऽभावाद्यण् न स्यादत आह

शास्त्रेति ॥ (कै)

नन्वेवं सौत्थितिरित्यादौ स्योने गुणशास्त्रवत् बहिरङ्गमाद्युदात्तशास्त्रं न प्रवर्त्तेत इत्यत आह

अन्तरङ्गेति । (कै)

युगपत्प्राप्तौ बहिरङ्गस्य न पूर्वं प्रवृत्तिः । प्रवृत्ते तु अन्तरङ्गे भवत्येव बहिरङ्गमिति भावः ॥ भाष्ये

बहिरङ्गलक्षणस्येति । (भा)

ऊठ् इति शेषः ॥ अत्रैकदेशीसमाधत्ते

नाजानन्तर्य्ये इति ॥ (भा)

---

प्राप्नोत्येकादेशश्च (४।१।२॥६।१।१०१) परत्वादेकादेशः स्यात् । प्रत्ययविधिर्भवत्यन्तरङ्गतः ॥ यथादेशाश्चेति वक्तव्यम् (६।१।७७) । अग्निरत्र । वायुरत्र ॥ णादेशो वर्णविधेः । णादेशो वर्णविधेर्भवत्यरङ्गतः प्रयोजनम् । पचतीत्र । पठत्यत्र । णादेशस्य प्राप्नोति यथादेशश्च (३।४।८६॥६।१।७७) । परत्वात् यथादेशः स्यात् । णादेशो भवत्यन्तरङ्गतः ॥ तत्पूर्वमोऽन्तोदात्तत्वं

---

अनयैवेति । इयं हि व्यापिका । पूर्वोक्तप्रयोजननिष्पादनात् । शास्त्रासिद्धत्वाश्रयाद् बहिरङ्गलक्षणं न तावत् प्रवर्त्तते । अन्तरङ्गलक्षणे तु प्रवृत्ते यत्र निमित्तसद्भावस्तत्र बहिरङ्गलक्षणप्रवृत्तिः । नाजानन्तर्य्ये इति । अचो-

## अचोरानन्तर्य्यमिति । (कै)

अचोरिति द्वित्वमविवक्षितम् । तेन वक्ष्यमाणेन छत्वतुग्-ग्रहणरूपेण ज्ञापकेन न विरोधः । अचोऽप्यानन्तर्य्यनिमित्तकेऽन्त-रङ्गे कर्त्तव्ये कृते च तस्मिन् प्राप्ते अन्तरङ्गे कर्त्तव्ये जातस्य बहि-रङ्गस्यासिद्धत्वं नेति तदर्थः । एतेन पचावेदमित्यादौ गुणेऽजान-न्तर्य्याश्रयणात् असिद्धत्वानापत्तिरित्यपास्तम् ॥

## अयजे इन्द्रं धियति । (भा)

इत्यादि च सिद्धम् ॥

## अक्षद्यूः (भा)

इत्यत्र यणि लोपाभावस्य सिद्धः ॥

## तुक् तु प्रवर्त्तिष्यत इति । (कै)

समासोत्तरं ल्यप् प्रवृत्त्या पूर्वपदसम्बन्धेन समासे जाते तत्र संहिताया नित्यत्वात् एकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धी

---

पूर्वपदप्रकृतिस्वरात् । वा । तत्पुरुषान्तोदात्तत्वं पूर्वपदप्रकृतिस्वराद् भव-त्यन्तरङ्गतः प्रयोजनम् । पूर्वशालाप्रियः अपरशालाप्रियः । तत्पुरुषान्तो-दात्तत्वं च प्राप्नोति पूर्वपदप्रकृतिस्वरत्वं च (६।१।२२३।६।२।१)। परत्वात् पूर्वपदप्रकृतिस्वरत्वं स्यात् । तत्पुरुषान्तोदात्तत्वं भवत्यन्तरङ्गतः ॥ एता-न्यस्याः परिभाषाया प्रयोजनानि यदर्थमेषा परिभाषा कर्त्तव्या॥ यदि सन्ति

---

रानन्तर्य्यमाश्रित्य यत्र कार्य्यं विधीयते तत्रैषा परिभाषा नोपतिष्ठते । यदयमिति । कोऽसिचदधीत्येति । बहिरङ्गस्यैकादेशस्य सिद्धत्वात् छत्वं न भविष्यति । तुक् तु प्रवर्त्तिष्यते इति किमसिद्धवचनेन । यदयमिति । द्वित्व-

वर्णापेक्षस्यैकादेशस्य दध्यत्र इत्यादौ संयोगान्तलोपापेक्षया यणो बहिरङ्गत्वेनासिद्धत्ववदसिद्धत्वेन तत्प्रवृत्तिरिति भावः॥ सत्वग्रहणं तु न युक्तम् ज्ञापकं त्रैपादिकेऽन्तरङ्गे तत्परिभाषायाः कार्य्यकालपक्षेऽप्यप्रवृत्तेर्विसर्जनीयसूत्रभाष्यसम्मतत्वात्। सत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेनान्तरङ्गत्वाभावाच्च। न वा अधीत्य इत्यादौ "पूर्वं धातुरुपसर्गेण युज्यते" इत्येकादेशोऽन्तरङ्ग इति वाच्यम्। साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पदान्तरसम्बन्धनिमित्तकार्य्यात् पूर्वमुपसर्गसम्बन्धेन तन्निमित्तकस्यान्तरङ्गमिति तदर्थो न तु प्रत्ययनिमित्तादपीति तदर्थ इति [1]"सम्प्रसारणाच्चे"ति सूत्रे [2]भाष्ये स्पष्टत्वाच्च। तत्र हि खट्वा आरूढ़ इत्यत्र सवर्णदीर्घात् गुणोऽन्तरङ्ग इत्युक्तम्। [3]"सुट् कात् पूर्वं" इत्यादि सूत्रेष्वप्युक्तम्। उपसर्गार्थेन

१ अ ६। पा १। सू १०८॥
२ "भाष्ये" इत्यारभ्य "सूत्रेषु" इत्यन्तं नास्ति ङ पुस्तके॥
३ अ ६। पा १। सू १३५॥

---

प्रयोजनानीत्येषा परिभाषा क्रियते ननु चेयमपि कर्त्तव्यासिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति। किं प्रयोजनम् पचावेदम् पचामेदम्। असिद्धत्वाद् बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणमेत्वं (३।४।९३) मा भूदिति। उभे तर्हि कर्त्तव्ये। नेत्याह। अनयैव सिद्धम्। इहापि स्योनः स्योनेत्यसिद्धत्वाद् बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणो यणादेशो भविष्यति॥ यद्यसिद्ध

---

वाह ऊठ् इति स्थिते वाहः सम्प्रसारणमेव कर्त्तव्यम्। तत्र कृते पूर्वैकादेशे च श्राश्रये गुणे "वृद्धिरेचो"ति वृद्धौ सिद्धं दित्यौह इति। अनकारान्ते चोपपदे वहेश्छन्दसि ण्विनं दृश्यते। प्रयोगदर्शने वा सति ऊठ्‌तेः क्विपि

पूर्वं सम्बन्धस्ततः प्रत्यये कृते उपसर्गेण सम्बन्ध इति। संकृति इति स्थितेऽन्तरङ्गतरार्थकोपसर्गनिमित्तकत्वादुपसर्गार्थाश्रितमुपसर्गनिमित्तं कार्य्यमन्तरङ्गं यत्तु न तथा तच्च पूर्वागत[1]साधनकार्य्यमेवान्तरङ्गमत एव "प्रेद्धः" इत्यत्र "गुणो वहिरङ्ग" इति भाष्ये उक्तम्। अस्याश्च परिभाषाया भाष्येऽन्यत्र क्वाप्यव्यवहारादियमेकदेश्युक्तिः। एतज्[2]ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यमिति तत्त्वम्। वृद्धौ सिद्धेति परिभाषासत्त्वे तु विभक्तिनिमित्तसम्प्रसारणस्य व्याश्रये अन्तरङ्गे गुणेऽसिद्धत्वात्तदभावे वृद्धौ गुणस्यासिद्धत्वात्तदभावे च वृद्ध्यर्थमूडावश्यक इति भावः॥ नन्वकारान्तोपसर्गे चोपपदे अवर्णाभावात् पररूपेण वाधाच्च। [3]"वृद्धिरेचि" इत्यस्य प्राप्तौ [4]सम्प्रसारणयोः फले विशेष इत्यत आह

---

१ "साधनमेव"। इ॥

२ "ज्ञापकेन" इत्यारभ्य "विभक्तिनिमित्त" इत्यन्तं नास्ति इ पुस्तके॥

३ अ ६। पा १। सू ८८। ४ सम्प्रसारणस्य व्याश्रये। इ॥

---

हिरङ्गलक्षणमन्तरङ्गलक्षणा इत्युच्यतेऽक्षद्यूः। हिरण्य यूः असिद्धत्वाद्बहि-
ङ्गलक्षणस्योठोऽन्तरङ्गलक्षणो यणादेशो न प्राप्नोति (६।४।१६॥६।१।७७)।
ष दोषः। असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणा इत्युक्त्वा ततो वक्ष्यामि
'नाजानन्तर्य्ये बहिष्ट्वप्रक्लृप्तिः" इति। सा तर्ह्येषा परिभाषा कर्त्तव्या। न
र्त्तव्या। आचार्य्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं षत्वतु-

---

योगो भविष्यति किमूडादेशविधानेन परिभाषाया ज्ञापक ऊठ् विधिः।
स्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वादन्तरङ्गे गुणो न स्यादि-
ठ् विधीयते। पूर्वेषुकामशम इति। पूर्वं इषु कामशमी च इति स्थिते

अनकारान्तेति। (कै)

इदमकारान्तोपसर्गोपलक्षणम्॥

छन्दसीति। (कै)

न च ण्यन्तात् क्विपि वच्यादिभ्यो विहितत्वाभावेन सम्प्रसारणाभावे विश्ववाड्शब्दो लोकेऽप्यस्त्येवेति वाच्यम्। क्वौ लुप्तमित्यस्य क्वाचित्कतया णिलोपस्य स्थानिवत्त्वेन तत्र १"वाह ऊट्" सूत्रस्य प्राप्तिरेवाभावादित्याहुः। वस्तुतो लोकेऽपि वहेर्ण्विच् दर्शनात् छन्दसीत्युपलक्षणम्॥

ऊहतेरिति। (कै)

धातूनामनेकार्थत्वात्कार्यभेदः॥ भाष्ये

तस्यैतस्येति। (भा)

असिद्धं बहिरङ्गमित्यस्येत्यर्थः॥

---

१ अ ६। पा ४। सू १३२॥

---

कोरसिद्धः" (६।१।८६) इत्याह॥ इयं तर्हि परिभाषा कर्त्तव्या "वहिरङ्गलक्षणामन्तरङ्गलक्षणा" इति। एषा च न कर्त्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं "वाह ऊठ्" (६।४।१३२) इत्यूठं शास्ति। तस्य दोषः पूर्वपदोत्तरपदयोर्वृद्धिस्वरावेकादेशात्। वा। तस्यैतस्य लक्षणस्य दोषः पूर्वोत्तरपदयोर्वृद्धिस्वरावेकादेशादन्तरङ्गतो-

---

यद्यन्तरङ्गत्वादाद्गुणः स्यात् तदा पूर्वोत्तरपदयोर्थपवर्गाभावादुभयत आश्रयत्वोऽन्तादिवद्भावनिषेधाच्च "दिशोऽमद्राणाम्" "प्राचां ग्रामनगराणाम्" इत्युत्तरपदवृद्धिर्न स्यात् उत्तरपदवृद्धौ सर्वं चेति च शब्दादिकशब्दायोरि

[१]दिशोऽमद्राणाम् इति। (कै)

इत्यनुवर्त्तमाने इति शेषः॥ अत्रापि स्वर उदाहर्त्तुं शक्य इत्यभिप्रायेणाह

उत्तरपदेति॥ (कै)

च शब्दाद्दिक् शब्दाश्चेति। (कै)

अनेन विहितं पूर्वपदान्तोदात्तत्वं तथैव व्यपवर्गाभावान्न स्यादित्यन्वयः॥ भाष्ये .

[२]उदके केवले इति। (भा)

मिश्रवाचिनि समासे उदके परे पूर्व मन्तोदात्तमिति तदर्थः। एतदुदाहरणमेकदेशिनः। [३]"अन्तादिवच्च" इति सूत्रे पूर्वान्तवद्भावेनैतत्स्वरसाधनात् उभयाश्रयत्वं तु नाच। [४]"एकदेश-

---

१ अ ७। पा ३। सू १३॥ २ अ ६। पा १। सू ६६॥
३ अ ६। पा १। सू ८५॥ ४ परिभाषेन्दुशे ३७॥

---

ऽभिनिर्वृत्तान्न प्राप्नुतः। पूर्वेषुकामशमः। अपरैषुकामशमः (७।३।१४॥ ६।२।१०५)। गुडोदकम् तिलोदकम्। उदके केवले (६।२।६६) इति पूर्वोत्तरपदयोर्व्यपवर्गाभावान्न स्यात्॥ नैष दोषः। आचार्य्यप्रवृत्तिर्ज्ञापयति पूर्वोत्तरपदयोस्तावत् कार्य्यं भवति नैकादेश इति यदयं "नेन्द्रस्य परस्य" (७।३।२२) इति प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्।

---

तथैव पूर्वपदान्तोदात्तत्वं न स्यात्। आवश्यकं च एतदुभयं पूर्वकार्य्यान्तरङ्गत्विक इति। गुडोदकमिति। उदके केवले इति पूर्वपदान्तोदात्तत्वं न स्यात्। उदश्विदुदकमित्यादावेव तु स्यात्। प्रसङ्गेन व्याकरणान्तरे अन्यत्रं विचार-

विकृतस्यानन्यत्वाद्"दकशब्दस्याप्युदकशब्देन ग्रहणादिति तत्र कैयटः॥

भाष्ये

[1]नेन्द्रस्येति। (भा)

ननूभयत आश्रयणेनान्तादिवत्त्वाभावेऽपि [2]अन्तादिवत्त्वेऽपि व्यपवर्गाभावे वा सोमेन्द्र इति तदुदाहरणे विकारविशिष्टे तद्भावेन पूर्वपदत्वेन्द्रशब्दे एकदेशविकृतन्यायेन इन्द्रशब्दत्वात् सामर्थ्येनान्तवृद्धिनिषेध एवास्तु अत आह

इन्द्रे द्वावचाविति। (भा)

एको यस्येतीति। (भा)

यद्यपि वृद्धिः परा तथापि लोपो नित्य इति भावः॥ न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम् एकदेशविकृतन्यायस्याप्याहार्यारोपबोधकत्वेन व्यपवर्गस्य

---

१ अ ७। पा ३। सू २२॥

२ "अन्तादिवत्त्वेऽपि व्यपवर्गाभावे वा" इति नास्ति ह पुस्तके॥

---

इन्द्रे द्वावचौ। तत्रैको "यस्येति च" (६।४।१४८) इति लोपेन ह्रियते अपर एकादेशेन। ततोऽनच्क इन्द्रः सम्पन्नः। तत्र कः प्रसङ्गो वृद्धेः। पश्यति त्वाचार्यः पूर्वपदोत्तरपदयोस्तावत् कार्यं भवति नैकादेश इति ततो नेन्द्रस्य परस्येति प्रतिषेधं शास्ति॥ यथादेशादि युवौ। वा। यथादेशादि-युवावन्तरङ्गतोऽभिनिर्वृत्तत्वान्न प्राप्नुतः। वैयाकरणाः सौवश्व इति। लक्षयां हि

---

यितुमाह यथादेशादिति॥ लोपो भविष्यतीति। ननु बहिरङ्गत्वादियुवोर-सिद्धत्वाल्लोपो न प्राप्नोति। अत्राहुः। समुदायस्यासिद्धत्वं नावयवस्येति। समुदायस्यासिद्धत्वे सामर्थ्यात्तदवयवस्याप्यसिद्धत्वमिति चिन्त्यमेतत्।

निरूपयितुमशक्यत्वात्। किञ्च इकुरूपोत्तरपदाश्रयाणिकत्वेऽ- न्तरङ्गभावेनाप्राप्तेस्ताद्रूप्यानतिदेशादितिदिक्॥ पाणिनीये तादृश- लक्षणाभावादाह

प्रसङ्गेनेति॥ (कै)

तदेव दर्शयति भाष्ये

लक्षणं हि भवति व्योरिति॥ (भा)

अनवकाशत्वे हेतुः

अचीत्युच्यते इति। (भा)

यत इत्यादिः॥

बहिरङ्गत्वादिति। (कै)

वृद्धिप्रसङ्ग इत्युक्तेस्तन्निमित्तकत्वादित्यर्थः॥

चिन्त्यमिति। (कै)

एवं च "स्वामने" इत्यादि ग्रन्थः पूर्वपक्ष्येकदेशिसिद्धान्त्येक-

---

भवति व्योरपि वृद्धिप्रसङ्ग इयुवौ भवत इति॥ नैष दोषः। अनवकाशावियुवौ। अचीत्युच्यते॥ किं पुनः कारणमचीत्युच्यते। इह मा भूताम्॥ ऐति- कायनः। औपगव इति। स्वामन्त इयुवौ "लोपो व्योर्वलि" (६।१।६६) इति लोपो भविष्यति। यत्र तर्हि लोपो नास्ति। प्रैथमेधः। प्रैयंगव इति॥ उस्ति परत्वात्। वा। उस्ति परत्वादान्तरङ्गतोऽभिनिर्वृत्तादि-

---

पयेयुरिति। यच् आया उस् इति स्थिते ययचान्तरङ्गत्वात् परत्वं क्रियेत तदा अपवर्गाभावात् इयादेशो न स्यात्। एकादेशस्यान्तवत्वाद्भविष्यतीति चेद् एवमपि रूपं न सिध्येत्। यासित्यस्येति। स लोपायवाद इयादेशः।

देशिनोरुक्तिरिति भावः । वस्तुतः परिभाषारम्भे दोषात् परिभाषा न कार्य्या इति पूर्वपक्षिणो वाक्ये तामादाय दोषोद्भावनयुक्तमिति चिन्त्यमेव चिन्त्यम् ॥

## या उसिति स्थित इति । ( कै )

अन्तरङ्गत्वादियः पूर्वं यलोपः ॥

## व्यपवर्गाभावादिति । ( कै )

या शब्दाभावादिति भावः ॥

## न सिद्ध्येदिति । ( कै )

उकारान्तस्य इयापत्तेरिति भावः । यासिति छेदे सौत्रो निर्देश इति भावः ॥ अतो या इय इत्येव पाठ इति [१]"आने मुक्" इति सूत्रे भाष्ये ॥ ननु नित्यान्तरङ्गत्वेन यलोपे यासेव दुर्लभोऽत आह

---

१ अ ७ । पा २ । सू ८२ ।

---

यादेशो न प्राप्नोति ( ६ । १ । ६६ ॥ ७ । २ । ८० ) ॥ पचेयुः । यजेयुः ॥ नैष दोषः । नैवं विज्ञायते या इत्येतस्येय् भवतीति । कथं तर्हि । यास् इत्येतस्य इय् भवतीति ॥ लुग् लोपयण्यवायावेकादेशेभ्यः । वा । लोप-यण्यवायावेकादेशेभ्यो लुग् बलीयान् इति वक्तव्यम् ॥ लोपात् । गोमान् प्रियोऽस्य गोमत्प्रियः । यवमत्प्रियः । गोमानिवाचरति गोमत्यते ।

---

सङ्घाते यलोपे नास्ति परत्वप्रसङ्गः । गोमत्प्रिय इति । यदा लोपः स्यात् तदा प्रत्ययलक्षणेन नुमादि स्यात् । ग्रामणि कुलमिति । यणादिषु कृतेषु लुकि सति ह्रस्वं न सिद्ध्येत् । ह्रस्वादिति । पूर्वमेकादेशे कृते नद्यादि-

**सलोपापवाद इति । (कै)**

वार्णपरिभाषयेदं सिध्यति ॥ तदनाश्रयणे तु भाष्यम् । लुग्-लोपयोः फले विशेषमाह

**यद्यपेति । (कै)**

लुकि तु "१न लुमते"ति निषेधः इति भावः ॥ भाष्ये

**परत्वादेते इति । (भा)**

परत्वादुत्कृष्टत्वादन्तरङ्गत्वादित्यर्थः । तदाह

**अन्तरङ्गानपीति ॥ (कै)**

**इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥**

---

१ अ १ । पा १ । सू ६३ ॥

---

यवमत्यते ॥ यथादेशात् । ग्रामण्यः कुलं ग्रामणि कुलम् । सेनान्यः कुलं सेनानि कुलम् ॥ अथवा यावेकादेशोऽयः । गवे हितं गोहितम् ॥ रायः कुलम् रैकुलम् । गावः कुलं गौकुलम् । वृकाद्भयं वृकभयम् ॥ लुक् च प्राप्नोत्येते च विषयः ( २ । ४ । ७१ ॥ ६ । १ । ६८—७७—७८—१०१ ) । परत्वादेते विधयः स्युः । लुग्बलीयान् इति वक्तव्यं लुग् यथा स्यात् ॥

---

महाबाहुलुकि सति रूपं न सिध्येत् । "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" इत्यस्य प्रत्ययोत्तरपदयोश्च इत्यत्र ज्ञापितत्वात् सिद्धम् ॥

# महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥



## यू स्त्र्याख्यौ नदी । १ । ४ । ३ ॥



ननु यूपदाभावे [1]स्त्र्याख्यमात्रेऽतिप्रसङ्गः स्त्र्याख्याविति द्विवचनवैयर्थ्यं चेत्यत आह

स्त्र्याख्यं नदी (कै)

इत्यादि ॥ ननु खट्वाशब्दस्य फिषोऽन्तोदात्तत्वेन पूर्वपदप्रकृतिस्वरनित्स्वरयोर्न विशेषोऽत आह

---

१ "स्त्र्याख्यमात्रेति प्रसङ्गः" इति नास्ति पुस्तके ।

---

यू स्त्र्याख्यौ नदी । १ । ४ । ३ ॥

यू इति किमर्थम् । खट्वा माला । किं च स्यात् । खट्वाबन्धुः मालाबन्धुः । नदी बन्धुनि (६ । २ । १०९) इत्येष स्वरः प्रसज्येत । इह च बहुखट्वक इति नद्यृतश्च (५ । ४ । १५३) इति नित्यः कप् प्रसज्येत ॥ नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति नाप्नो नदीसंज्ञा भवतीति यदयं ङेराम्

नित् स्वरेणेति । (कै)

खटेः क्वनि खट्वाशब्दो निष्पत्तेरिति भावः ॥ ननु मातृशब्दस्य जननीपरिच्छेदवाचकतया नानालिङ्गत्वेन स्त्र्याख्यत्वाभावोऽत आह

मातृशब्द इति । (कै)

आख्याग्रहणसामर्थ्याच्च लिङ्गव्यतिरिक्तार्थभेदः शब्दभेदनियामक इति न दोष इति भावः ॥

बहुपितृक इति । (कै)

अनन्तरामिति अध्याहार्य्यः ॥ समानधर्मानुपपत्तिमेव दर्शयति

न ह्मीति ॥ (कै)

एवं तर्ह्मीति । (कै)

निर्देशानुपपत्त्या ह्रस्वपक्षस्यैव युक्तत्वमिति व्युत्पादनाय प्रश्न इति भावः ॥ भाष्ये

निर्देशो नोपपद्यते इति । (भा)

छान्दसत्वकल्पनं वृथेति भावः ॥ दीर्घमात्रग्रहणार्थं तत् स्यादिति न वृथात्वमत आह

उत्तरञ्च चेति ॥ (भा)

---

नद्याम्नीभ्यः (७ । ३ । ११६) इति पृथग् आप् ग्रहणं करोति । इह तर्हि मात्रे मातुरिति आण् नद्याः (७ । ३ । ११२) इत्याट् प्रसज्येत । किं पुनरिदं दीर्घयोर्ग्रहणम् आहोस्विद् ह्रस्वयोः । किं चातः । यदि दीर्घयोर्ग्रहणं यू इति निर्देशो नोपपद्यते । दीर्घाद्धि पूर्वसवर्णः प्रतिषिध्यते (६ ।

ननु ह्रस्वनिर्देशेऽपि "यू ह्रस्व इति" भिन्नार्थकवचनत्वात् सामानाधिकरण्यानुपपत्तिरत आह

**ह्रस्व इतीति। (कै)**

वेदाः [1]प्रमाणानि इत्यादावप्येवमेव॥ नन्वेकत्वाविवक्षापेक्षया यू इत्यस्यासन्नत्व एव कस्य इत्यत आह

**असतीति॥ (कै)**

ननु ह्रस्वनिर्देशदीर्घयोर्न स्यादिति कुतो नोक्तमत आह

**दीर्घयोरपीति॥ (कै)**

**अनुवर्त्तते इति। (कै)**

तस्य सप्तम्या विपरिणमय्य शब्दसंज्ञायां विधेयायां सवर्णग्रहणं न इत्यर्थकरणादिति भावः॥

**नास्ति विशेष इति। (कै)**

वचनारम्भं प्रतीति शेषः॥

**अथ त्विति। (कै)**

असन्दिग्धे सन्दिग्धवचनमेतत्॥

---

१ प्रमाणम्। क॥

---

१।१०५)। उत्तरत्र (१।४।६) च विशेषणं न प्रकल्पेत यू ह्रस्वाविति। यदि यू न ह्रस्वौ। अथ ह्रस्वौ न यू। यू ह्रस्वौ चेति विप्रतिषिद्धम्॥ अथ ह्रस्वयोर्हि शकटे अत्रापि प्रसज्येत (७।३।१०७)। नैष दोषः। अवश्य-मत्र विभाषा नदीसंज्ञैषितव्या। उभयं हीष्यते। हे शकटि हे शकट

पठ्यते इति । (कै)

पाठाऽभावेऽपि

[1]सर्वतोऽक्तिन्नर्थात् (ग-सू)

इति ङीपि "शकटी" शब्दस्य त(ष)त्त्वमिति बोध्यम् ॥

अस्ति भेद इति । (कै)

एवं चोभाभ्यामपि अवश्यं वचनं कार्य्यमित्याशयकं भाष्यमेक-देश्युक्तिरिति भावः ॥ ननु किं शब्दोऽनिर्धारितविशेषविषये प्रश्ने प्रश्नविषयत्वं च नियमार्थत्वे प्रयोजकमत आह

कोऽर्थ इति । (कै)

अर्थः प्रयोजनम् ॥

सम्बन्धः । (कै)

विषयविषयिभावः । समासकृत्तद्धितोत्तरत्वादेः सम्बन्धार्थक-त्वादित्यर्थः ॥ प्रश्नविशयत्वे वीजं दर्शयन् तस्य प्रयोजकत्वमाह

यच (कै)

---

१ अ ४ । पा १ । सू ४५ । एतत् सूत्रस्थगणसूत्रम् ॥

---

इति ॥ इह तर्हि शकटिबन्धुरिति नदी बन्धुनि (६ । २ । १०६) इत्येष स्वरः प्रसज्येत । इह च बहुशकटिरिति नद्यृतश्च (५ । ४ । १५३) इति नित्यः कप् प्रसज्येत ॥ नैष दोषः । ङिति ह्रस्वश्च (१ । ४ । ६) इत्ययं नियमार्थो भविष्यति । ङित्येव यू स्त्र्याख्यौ नदी संज्ञौ भवतो नान्यत्रेति ॥

इत्यादि॥ एवं विधेयत्वाभिमतान्यथासिद्धिर्नियमप्रयोजिकेति फलितं तदाह भाष्ये

विधेयं नास्ति (भा)

इत्यादि॥

अस्त्री [1]वा नदीसंज्ञौ नेति। भा

केवलस्त्रीशब्दादौ प्राप्त्या तदन्ते चान्यापि नित्यस्त्रीलिङ्गा-नित्यर्थाज्ञानात् प्राप्तिं मत्वैव व्याख्यातम्॥ ननु शेषग्रहणप्रत्याख्या-नात् घित्वेन गुणो भविष्यतीत्यत आह

नित्ययेति। (कै)

विभक्तेन ह्रस्वावित्यनेन नित्यसंज्ञाया एव विधानादिति भावः॥ भाष्ये

शेषग्रहणं न करिष्यते इति। (भा)

तत् सत्त्वे हि स्त्रीलिङ्गह्रस्वयोर्नदीसंज्ञाया उक्तत्वेनानुक्तनदी-त्वाभावात् तत्र घिसंज्ञाविधातुमशक्येति भावः॥ ननु घित्वेऽपि नदीत्वानिवृत्तेराडाद्यपि स्यादत आह

---

१. उपलब्धभाष्यपुस्तके "वास्त्री" इति पाठोऽस्ति। उपलब्धविवरणे तु "अस्त्री वा" इत्यस्ति॥

---

केमर्थक्यान्नियमो भवति। विधेयं नास्तीति कृत्वा। इह चास्ति विधेयम्। किम्। नित्या नदीसंज्ञा प्राप्ता सा विभाषा विधेया। तत्रापूर्वो विधिरस्तु नियमोऽस्त्वित्यपूर्व एव विधिर्भविष्यति न नियमः॥ अथायं नित्यो योगः स्यात् प्रकल्प्येत नियमः। वाढं प्रकल्प्येत। नित्यस्तर्हि भविष्यति। तत्कथम्।

एकविषयत्वादिति । (कै)

"एकसंज्ञाधिकाराद्" इति पर्य्याये हेतुः ॥

अविशेषेण (भा)

इत्यस्य स्त्रीपुंसाविशेषेणेति नार्थ इत्याह

बाध्यत्वादिति ॥ (कै)

सामान्यम् ।

बाध्यत्वलक्षणसादृश्यम् ॥

सूत्रेष्वपीति । (कै)

"छन्दोवदि"त्यतिदेशादिति भावः ॥

तादर्थ्यादिति । (कै)

"छान्दोवदि"त्यतिदेशे बीजमुक्तम् ॥

निर्देशानुपपत्त्येति । (कै)

निर्देशकल्पितातिदेशान्यथानुपपत्त्या इत्यर्थः । अतिदेशविषये तद्वैयर्थ्यापत्त्या "गौणमुख्य" न्यायाप्रवृत्तेरिति भावः ॥ शब्दे सन्देहाभावात् कोऽयम् इति प्रश्नोऽनुपपन्न इत्यत आह

यथार्थ इति ॥ (कै)

भाष्ये एकदेश्याह

---

योगविभागः करिष्यते (१ । ४ । ६) । इदमस्ति । यू स्त्र्याख्यौ नदी । नेयङुवङ्स्थानावस्त्री (१ । ४ । ४) वामि (१ । ४ । ५) ततो ङिति । ङिति च इयङुवङ्स्थानौ यू वास्त्री नदीसंज्ञौ न भवतः । ततो ह्रस्वौ । ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः इयङुवङ्स्थानौ वा नेति च निवृत्तम् ।

स्त्रियमिति ॥ (भा)

इतर आह

यद्येवमिति ॥ (भा)

स्त्र्याख्याविति । (भा)

कर्मव्युत्पत्त्यातोयुक्ता भाष्यमिति भावः ॥

यस्त्विति । (कै)

यद्यपि

आचष्टे इति (भा)

आख्या इति (भा)

व्युत्पाद्य पश्चात् षष्ठीसमासे सिध्यति । तथापि

स्त्रियमाचक्षाते (भा)

इति विग्रहोल्लेखादेवमुक्तम् ॥ पुनरेकदेश्याह

न तर्हीदानीमिति ॥ (भा)

लौकप्रयोगे विप्रतिपन्नप्रतिबोधकानुपपत्तिकथनमसङ्गतमत आह

शिष्टेति ॥ (कै)

स एवाह

---

यद्येवं भ्रुकुटये अत्र गुणो न प्राप्नोति (७ । ३ । १११) । द्वितीयो योग-विभागः करिष्यते घेग्रहणं न करिष्यते (१ । ४ । ७) । कथम् इदमस्ति यू स्त्र्याख्यौ नदी । नेयङुवङ्स्थानावस्त्री । वामि । ततो ङिति । ङिति च इयङुवङ्स्थानौ यू वास्त्री नदीसंज्ञौ न भवतः । ततो ह्रस्वौ । ह्रस्वौ च यू

छन्दोवदिति । (भा)

इदमिष्टमिति भावः ॥ इतर आह

न च्छेषेति ॥ (भा)

तद्व्याचष्टे

असाधव इति । (कै)

[1]ऋषीणां तपो माहात्म्यात् तदुच्चारयितृणामस्माकं न प्रत्यवाय इति बोध्यम् ॥

स्त्रियामाख्यायेते (भा)

इति भाष्ये । शास्त्रेणेति शेषः ॥ ननु उपपदत्वाभावात् समासो न स्यादत आह

साधनमिति ॥ (कै)

नद्यौति । ( कै )

ईकाराद्यन्तस्य स्त्रियां विधानाभावादर्थयोः संज्ञा इति वाच्यम् । एवं च कूष्ण्वोरेव स्यान्न तु नद्यादेरिति भावः॥

---

१ "ऋषीणाम्" इत्यारभ्य "स्त्रियामाख्यायेते इति" इत्यन्तं नास्ति इ पुस्तके ॥

---

स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः । इयङुवङ्स्थानौ वा नेति च निवृत्तम् । ततो घि-। घि संज्ञौ च भवतः । स्त्र्याख्यौ यू ह्रस्वौ ङिति । ततोऽसखि । सखि वर्जितौ च यू ह्रस्वौ घिसंज्ञौ भवतः । स्त्र्याख्यौ ङितीति च निवृत्तम् ॥ यदि तर्हि शेषग्रहणं न क्रियते नार्थं एकेनापि योगविभागेन । अविशेषेण

प्रतिपादनम् । ( कै )

शास्त्रेणेत्यर्थः ॥ भाष्ये

एवं तर्हि विजिति । ( भा )

सूत्राणां छन्दोवत्त्वादिति भावः । क्विप् तु नोक्तम् । तस्मा-दन्तेभ्योऽनभिधानात् ॥ अत एव शंस्था इत्यादौ नेत्वम् ॥ एवं चादन्तधातुप्रकृतिकमादन्तं प्रातिपदिकं लोके साध्विति बोध्यम् । आदन्तेभ्यो विच्छन्दसि विधानादित्याहुः ॥ वर्णयोः स्त्र्याख्यान-कर्तृत्वाभावात् कथं तन्व्यादौ सिद्धिरत आह

समुदायेति । ( कै )

रूढोऽस्तु शास्त्रकल्पितं तदस्तीति भावः ॥

अच पक्षे । ( कै )

तदन्तसंज्ञापक्षे वक्तुं शक्य इति चिन्त्यम् ॥

अच पक्षे । ( कै )

"[१]आच्छीनद्योः" इत्यादि विषये अवयवे समुदायरूपारोपेण निर्वाह इति बोध्यम् ॥

---

१ अ ७ । पा । १ । सू ८० ॥

---

नदीसंज्ञोत्सर्गः । तस्या ङ्वलयोर्घिसंज्ञा बाधिका । तस्यां नित्यायां प्राप्तायामियं ङिति विभाषारभ्यते ॥ अथवा पुनरस्तु दीर्घयोः । ननु चोक्तं निर्देशोनोपपद्यत इति दीर्घाज्जि पूर्वसवर्णः प्रतिषिध्यते इति वा छन्दसि (६ । १ । १०६) इत्येवं भविष्यति। छन्दसीत्युच्यते न चेदं छन्दः।

**कप्रत्ययपक्षे । ( कै )**

आख्याशब्दसत्त्वेनाख्याग्रहणमयुक्तमत आह

**विजिति ॥ ( कै )**

**प्रवृत्तिनिमित्तेति । ( कै )**

एवं चाख्याबोधकं ग्रहणमित्यर्थ इति भावः ॥

**नियम इति । ( कै )**

वार्त्तिके विषयशब्दोऽन्यच्च भावे तद्द्योतक एवकारो भाष्ये एवकारार्थ एव च नित्यग्रहणेनाप्याख्यायत इति बोध्यम् ॥

**स्त्रियमेवेति । ( कै )**

स्त्रीत्वविशिष्टमेवेत्यर्थः ॥

**क्रियाशब्दत्वादिति । ( कै )**

प्रवृत्तिनिमित्तभेद एव शब्दभेदे प्रयोजको न तु[1] विशेष्यभेदोऽपि लिङ्गभेदस्तद्भेदेपि भेदव्यवहाराभावादिति भावः ॥

**[2]ङिति ह्रस्वश्चेत्यचेति । ( कै )**

---

१ विशेष्यभेदेनापि लिङ्गभेदस्तद्भेदव्यवहाराभावाद् । इ ॥

२ अ १ । पा ४ । सू ६ ॥

---

**छन्दोवत् सूत्राणि भवन्तीति ॥** यदप्युच्यते उत्तरत्र विशेषणं न प्रकल्पेत यू स्त्र्याख्याविति यदि यू न स्त्र्याख्यौ अथ स्त्र्याख्यौ न यू यू स्त्र्याख्यौ इति विप्रतिषिद्धमिति । नैतद्विप्रतिषिद्धम् । आहायं यू स्त्र्याख्याविति । यदि यू न स्त्र्याख्यौ । अथ स्त्र्याख्यौ न यू । त एवं विज्ञास्यामः । य्वोर्यौ स्त्र्याख्याविति ।

ह्रस्वघटितवाक्ये दीर्घघटितवाक्ये च एतदुपसंहारे स्फुटी भविष्यति ॥ भाष्ये

प्रथमलिङ्गेति । (भा)

वृत्तेः पूर्वं लिङ्गबोधके वृत्तिघटके शब्दे विद्यमानौ स्त्र्याख्यौ यौ यू तयोर्वृत्तौ स्त्र्याख्यत्वाभावेऽपि नदीत्वार्थमित्यर्थः । तदन्तसंज्ञापक्षे वृत्तिघटकशब्दे विद्यमानत्वं तस्य व्यपदेशिवद्भावेन बोध्यम् ॥ तदाह

यः शब्द इति । (कै)

यद्यप्यर्थभेदाच्छब्दभेदः तथापि श्रुत्यैक्यमात्रेणाभेदाध्यवसायात् यत्तच्छब्दबोधितैक्योपपत्तिः ॥

प्रकारान्तरम् । (कै)

वृत्त्यन्तरप्राप्तिः ॥

आचारे क्विपमिति । (कै)

[१]प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणादिति भावः ॥ अन्तादाचारक्विप् सत्वे इदम् ॥

---

१ परिभाषेन्दुशे—७१ ॥

---

कौ च य्वोऽर्थतौ । सवर्णौ ॥ अथ स्त्र्याख्याविति कोऽयं शब्दः । स्त्रियमाचक्षाते स्त्र्याख्यौ । यद्येवं स्त्र्याख्यायाविति प्राप्नोति (३ । २ । १) । अनुपसर्गे हि को विधीयते (३ । २ । ३) । न तर्हीदानीमिदं भवति

यस्मिन् दशसहस्राणि पुत्रे जाते गवां ददौ ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति ॥

खरकुटीवेति। (कै)

खरकुटशब्दात् [1]पिप्पल्यादेराकृतिगणत्वात् ङीष् कुटीशब्देन समासो वा ॥

पुंस्त्वस्यानिवर्त्तनादिति। (कै)

न च तदनिवृत्तौ खरकुटीः पश्य इत्यादौ नत्वापत्तिः। "[2]प्रकृतिवद्" इत्यतिदेशेन प्रकृतिलिङ्गप्रयुक्तकार्य्यातिदेशेन तद्भिन्नलाश्रयकार्य्याप्रवृत्तेः स्पष्टं चेदं "[3]स्त्रियाम्" इति सूत्रे भाष्ये। यद्वा तेन स्वप्रयुक्तकार्य्याभावोऽप्यतिदिश्यते। स्पष्टं चेदं "[4]तस्माच्छसो नः पुंसि" इति सूत्रे भाष्यकैयटयोः ॥ अत्रापि पक्षे प्रकृते स्वाश्रयलिङ्गनिवृत्तौ मानाभावः इत्याशयः। तत्प्रत्याख्यानेऽपि स्त्र्याख्यावित्यस्य स्त्रीत्वेनैव य आहेति नार्थः किन्तु स्त्रीत्वविशिष्टमेव य आहेत्यर्थः। न चायं तथा स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वादिविशिष्टस्याभिधानात्। न च पदार्थमात्रे शास्त्रीयलिङ्गत्रयस्य सत्त्वेनासम्भवः। व्यक्तिवस्तुपदार्थादिपदबोध्यत्वकाले तत्तल्लिङ्गोपजने-

---

१ षिद् गौरादिभ्यश्च ( ४ । १ । ४१ ) एतत् सूत्रस्थगणसूत्रम् ॥
२ परिभाषेन्दुशे–३९ ॥ ३ अ ४ । पा १ । सू ३ ॥
४ अ ६ । पा १ । सू १०३ ॥

---

छन्दोवत्कवयः कुर्वन्ति। न ह्येवेष्टिः ॥ एवं तर्हि कर्मसाधनो भविष्यति (३। ३। ५८)। स्त्रियामाख्यायेते स्त्र्याख्यौ। यदि कर्मसाधनः कृत्स्त्रिया धातुस्त्रियाश्च न सिध्यति। तन्व्यै लक्ष्म्यै श्रियै भुवे॥ एवं तर्हि बहुव्रीहिर्भविष्यति। स्त्रियामाख्यानयोः स्त्र्याख्यौ। एवमपि कृत्स्त्रिया

ऽपि स्त्रीपदादिबोध्यतदृशायां तत्त्वे मानाभावात् । प्रकृते तु ब्राह्मणायेत्यादिविशेष्यदर्शनेन तत्त्वानुमानात् तत्फलं तु श्रिये ब्राह्मणाय इत्यत्र सुपि "[१]ङिति ह्रस्वश्च" इति विकल्पाभावः। "प्रथम लिङ्गं च" इति तु न तद्विषयमिति वक्ष्यते। एतेन यथा दारादिशब्दैः शब्दशक्तिस्वभावाच्छास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्याभिधानं तथा सुबन्तैरपि शास्त्रीयस्त्रीत्वविशिष्टस्यैव पुमादेरभिधानम् अत एव "[२]तदशिष्यम्" इत्यनेन तत्प्रत्याख्यानं संगच्छते। एवं चास्यापि नित्यस्त्रीत्वमस्त्येव इत्यपास्तम् ॥ अतिशयिता तन्त्रीरिति विग्रहे दोषाभावादाह

तन्त्रीमतीति ॥ (कै)

बहिरङ्ग इति । (कै)

अकृतव्यूहपरिभाषा तु नास्त्येव इति भावः ॥ यथोद्देशे इदम् अवयवशब्देनाच वृत्तिप्रकृतिभूतशब्दमात्रग्रहणम् । अत एव कजादयन्ते न दोषः। समुदाये कार्य्यप्रवृत्तिस्तु नद्यन्तत्वाद् बोध्या॥ वस्तुतः कार्य्यकालपक्षेऽपि समासस्येष्टैव तदवयवस्य तत्प्राप्तिः। अत एव भाष्ये

---

१ अ१ । पा ४ । सू ६ । २ अ१ । पा २ । सू ५३ ॥

---

धातुस्त्रियाश्च न सिध्यति । तस्मै वाक्यै श्रियै भुवै ॥ एवं तर्हि विभविष्यति (३ । २ । ७४) । अथवा पुनरस्तु क एव । स्त्रियमाचक्षाते स्त्रयाख्याविति । ननु चोक्तम् स्त्रयाख्यायाविति प्राप्नोति अनुपसर्गे हि को विधीयत इति । मूलविभुजादिपाठात् को भविष्यति (३ । २ । ५) । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तम्

## तदाश्रया नदीसंज्ञा भविष्यति (भा)

इत्युक्तम् । कार्य्यवेलायामपि भविष्यतीत्यर्थस्तस्य । कैयटरीत्या तु "तदाश्रया नदीसंज्ञास्ती"ति वदेत् । कुमारीत्यादावपि विशेषण-तया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वमस्त्येव । प्राधान्येन तन्मात्र बोध-कत्वनिवेशे तु न मानमित्याशयः ॥

## चिन्त्यमेतदिति । (कै)

आध्यायतीत्यादिविग्रह इत्यभिमानः । वस्तुतस्तु ध्यानं धीः आ ईषत् प्रकृष्टा वा धीर्यस्य इति विग्रहः । एवं च गतिपूर्वत्वाद्यपि सुलभः "अवयवस्य इयङ् स्थानत्वम्" इति भाष्यं च रमणीयमेव ॥

## आध्यै (भा)

इत्यादौ समुदायस्य नित्यस्त्रीत्वाभावान्नदीत्वाप्राप्तेरवयवस्य सा वाच्या सा च न प्राप्नोति तस्य "इयङ्स्थानत्वात्" वार्त्तिकारम्भे तु न दोषस्तेन हि नित्यस्त्रीत्वाभावेऽपि प्राक्तननित्यस्त्रीत्वं गृहीत्वा इदानीं सा प्रवर्त्तते न चेदानीमसावियङ्स्थान इति निषेधाप्रवृत्तिः प्राक्तनेयङ्स्थानत्वं गृहीत्वा निषेधस्य तु न वृत्तिर्मानाभावादिति

---

यस्मिन् दशसहस्राणि पुत्रे जाते गवां ददौ ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवतीति ॥

यथाख्याग्रहणं किमर्थम् । नदीसंज्ञायामाख्याग्रहणं स्त्रीविषयार्थम् । वा । नदीसंज्ञायामाख्याग्रहणं क्रियते स्त्रीविषयार्थम् । स्त्रीविषयावेव यौ नित्यं तयोरेव नदीसंज्ञा यथा स्यात् । इह मा भूत् । ग्रामण्ये सेनान्ये स्त्रिया इति ॥ प्रथमलिङ्गग्रहणं च । वा । प्रथम लिङ्गग्रहणं च कर्त्तव्यम् ।

भावः। न च "[1]गतिकारकपूर्वस्य" इत्यत्र प्रतिपदोक्तपरिभाषया नित्यसमासस्यैव ग्रहणमिति। अत्र यण् दुर्लभः। अत एव "[2]ह्रस्वो नपुंसके" सूत्रे "मानः समस्य दूढ्यः" (वेदे) इति मन्त्रव्याख्यावसरे दुर्धिय इति कैयटेन प्रयुक्तमिति वाच्यम्। मानाभावात् कैयटप्रयोगे दुःस्थिता धीर्येषामिति विग्रहेण धीशब्दं प्रति गतित्वाभावान्नदोषः। अत्र वेदमपि भाष्यं मानम्॥

## सामर्थ्याक्षिप्तमिति। (कै)

इयङुवङ्स्थानत्वस्याङ्गे एव सम्भवादिति भावः॥ एतद्वार्त्तिकभाष्यप्रामाण्यादियङुवङ्भ्यामुपस्थितस्याङ्गस्य शब्देऽन्वय इति तात्पर्यम्॥

## अङ्गत्वं नास्तीति। (कै)

ननु त्वदुक्तविग्रहे अन्तर्वर्त्तिविभक्त्या धीशब्दस्याप्यङ्गत्वमस्त्येव इति चेन्न नदीसंज्ञाकार्य्यप्रयोजकश्रूयमाणविभक्तिनिरूपिताङ्गे यत्र

१ गतिकारकपूर्वस्येष्यते। भा। अ ६। पा ४। सू ८२॥
२ अ १। पा १। सू ३९॥

प्रथमलिङ्गे यौ स्त्र्याख्याविति वक्तव्यम्॥ किं प्रयोजनम्। प्रयोजनं क्विप्लुप्समासाः। वा। कुमार्य्यै (३। १। ८) ब्राह्मणाय॥ लुप्। खरकुट्यै (५। ३। ६८) ब्राह्मणाय॥ समास। अतितन्त्र्यै ब्राह्मणाय अतिलक्ष्म्यै ब्राह्मणाय तत्तर्हि वक्तव्यम्। न वक्तव्यम्। अवयवस्त्रीविषयत्वात् सिद्धम्। अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसंज्ञा भविष्यति। अवयवस्त्रीविषयत्वात् सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसङ्गोऽवयवस्येय-

त्रापि इयङादेः स्थितिस्तन्निषेधात्। अत एव हे श्रीरित्यादौ निषेधः। तदाह

## एतदर्थमेवेति। (कै)

यत्र नदीकार्याश्रयेऽङ्गे बाधकाबाधितेयङुवङो स्थितिः क्वचित् प्रयोगे दृष्टान्तस्य शब्दस्य सति सम्भवे तदवयवस्य च नदीत्वं नेत्यर्थ इति भावः॥ प्रध्यै इत्यत्र अन्तावयवनित्यस्त्रीत्वमादाय नित्यैव संज्ञा इयङ्स्थानत्वाभावाच्च न "ङिति ह्रस्वश्च" ( १ । ४ । ६ ) इति विकल्पः। न च प्रधीशब्दावयवस्य नदीत्वे "नद्यृतश्च" इति कबापत्तिः। समासात् पूर्वावस्थायामुत्तरपदस्य नदीत्व एव कपः प्रवृत्तेः॥ नन्वेवम् अतिश्रिये ब्राह्मणाय इत्यादाववयवस्त्रीत्वमादाय विकल्पापत्तिरित्याशङ्क्य भाष्ये

## ह्रस्वयोरेव (भा)

इत्यादि॥ ङित्प्रत्ययाच्चिप्राङ्गस्यैव स्त्रियामिति विशेषणमिति अनेन अन्वाख्यायत इति बोध्यम्। आख्या पदं तु अत्र न सम्ब-

---

१ अ ५। पा ४। सू १५२॥

---

उवङ्स्थानत्वात्। वा। अवयवस्त्रीविषयत्वात् सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे (१।४।४) यणस्थानयोरपि स्वोः प्रतिषेधः प्रसज्येत। आध्यै प्रध्यै (६।४।८२) ब्राह्मण्यै। किं कारणम्। अवयवस्य इयङ् उवङ्स्थानत्वात्। अवयवोऽन्येयङ् उवङ्स्थानः (६।४।७७)॥ सिद्धन्त्वङ्गरूपग्रहणाद् यस्याङ्गस्येयुवौ तत्प्रतिषेधात्। वा। सिद्धमेतत्। कथम्। अङ्गरूपं

ध्यते। अतिश्रिया इत्यादावङ्गस्य तत्त्वाभावात् पाक्षिकनदीत्वानापत्तेः। एवं च समुदायस्यानेन नदीत्वं क्रियते तत्र "प्रथमलिङ्गग्रहणं च" इत्यस्य प्रत्याख्यानरीत्या प्राप्त्यभावात्सूत्रं निवर्त्त्यं विधित्वेनैव व्याचष्टे

## नदीसंज्ञौ भवत इति। (भा)

वस्तुतो वार्त्तिकेनाप्यतिस्त्र्यै इत्यादाववयवस्यैव सा क्रियते इति समुदायस्य नैव प्राप्तिः॥

## अतिस्त्रिये (भा)

इत्यादाववयवस्य तेन प्राप्ता "[१]नेयङ्"ति निषिद्धा। तस्य तु नानेन संज्ञा विकल्पः यतो ङिद्विहितस्तदादित्वाभावात् ह्रस्वावित्यादेर्ह्रस्ववर्णाद्यन्ते इयङादिस्थानेवर्णाद्यन्ते च शब्दरूपे इति वार्त्तिकोऽर्थः तादृशौ शब्दाविति भाष्योऽर्थः इत्यलम्॥ ननु प्रथम-

१ अ १। पा ४। सू ४॥

गृह्यते। यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणं न चैतस्याङ्गस्येयुवौ भवतः॥ ङ्स्येयुवस्थानप्रवृत्तौ च स्त्रीं वचने। वा। ङ्स्त्रौ च इयुवस्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम्। शकट्यै (५। ३। ६८) अतिशकट्यै ब्राह्मण्यै। सा मा भूत् शकटये अतिशकटये ब्राह्मणाय। धेन्वै अतिधेन्वै ब्राह्मण्यै। सा मा भूत्। धेनवे अतिधेनवे ब्राह्मणाय। श्रियै अतिश्रियै। सा मा भूत् श्रिये अतिश्रिये ब्राह्मणाय।

लिङ्ग्रहणस्य "यूस्त्र्याख्यावि" त्यत्रोपसंख्यातत्वेन "[1]ङिति ह्रस्वश्च" इत्यत्राप्रसक्तेः ह्रस्वयुवेत्यादिव्यर्थमत आह

अवयवेति। (कै)

न्यायस्तत्रापि समान इति भावः॥ "प्रथमलिङ्ग" इत्यस्य "[2]ङिति ह्रस्वश्च" इत्यत्रानुवृत्तिभ्रमवारणाय इदम् इति तु भाष्ये वक्ष्यति। अतः कैयटे प्रत्याख्यानवाक्यमारम्भवाक्यस्याप्युपलक्षणं बोध्यम्॥

न हि प्राक् प्रवृत्तेरिति। (कै)

ननु नयतीति नीस्तमतिक्रान्तायै अतिनियै ब्राह्मण्यै हरिमतिक्रान्तायै अतिहर्य्यै इत्यत्र नदीत्वापत्तिमनिष्टमस्त्येव न वाङ्गस्य नित्यस्त्रीत्वाभावान्न दोषः। तस्य नित्यस्त्रीत्वेन विशेषणेऽतिश्रियै ब्राह्मण्यै इत्यसिध्यापत्तेरिति चेन्न तादृशानामनभिधानात्॥

नियमार्थ इति।

अस्त्रीवचनाद्व्यावृत्त्यर्थं इत्यर्थः॥

---

१ अ १। पा ४। सू ६॥ २ अ १। पा ४। सू ६॥

---

भ्रुवै अतिभ्रुवै ब्राह्मण्यै। क्व मा भूत्। भ्रुवे अतिभ्रुवे ब्राह्मणाय॥ अपर आह। कृतौ च इयुवस्थानौ च प्रवृत्तावपि स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम्। ग्रामण्यै अतिग्रामण्यै ब्राह्मण्यै। क्व मा भूत् ग्रामण्ये अतिग्रामण्ये ब्राह्मणाय। धेन्वै अतिधेन्वै ब्राह्मण्यै। क्व मा भूत् धेनवे अतिधेनवे ब्राह्मणाय। श्रियै अतिश्रियै ब्राह्मण्यै। क्व मा भूत्। श्रिये अतिश्रिये

**शकटये** (भा)

इत्युदाहरणं तु लुबन्तं बोध्यम् ॥

**उपसंहारस्येति ।** (कै)

"प्रथमलिङ्गग्रहणं चोदितं तद्द्वेष्यमि"त्यादेरित्यर्थः ॥ द्वेष्यम् इत्यस्यानिष्टविषयकमपीत्यर्थः ॥

**विकल्पते ।** (भा)

इत्यत्रोपसर्गाविवक्षितार्थः ॥

**तदाचार्य इति ।** (भा)

अस्याशय उक्तः ॥

---

ब्राह्मण्याय । भ्रुवै अतिभ्रुवै ब्राह्मण्यै । क्व मा भूत् । भ्रुवे अतिभ्रुवे ब्राह्मण्याय । किमर्थं पुनरिदमुच्यते । प्रथमलिङ्गग्रहणं चोदितम् । तद्द्वेष्यम् विजानीयात् सर्वमेतद् विकल्पते इति । तदाचार्य्यः सुहृद् भूत्वान्वाचष्टे कृतौ च इयुवस्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेवेति ॥

# षष्ठीयुक्तश्छन्दसि वा ।१।४।९॥



अत्र षष्ठीपदं तदन्तपरम् । षष्ठ्या युक्त इत्यर्थे तु षष्ठ्याम् इत्येव सिद्धे युक्तग्रहणवैयर्थ्यापत्तेः । तत्र समासे पूर्वेणैव सिद्धत्वात् "कुलुञ्चानां पतये नम" इत्यसमासार्थमेवेदम् । न चैवमपि समासे छन्दसि परत्वादयमेव विकल्पः स्यादिति वाच्यम् । वेदे आपाद्यरूपाभावेनेष्टापत्तेः । तत्र "[1]बहुलं छन्दसि" इत्यादि बहुतराकरणलाघवाय योगविभागो भाष्ये कृतः ॥ नन्वेवमपि स्थानान्तरविहितानां कथं विकल्पसिद्धिरत आह

| | |
|---|---|
| १ अ २ । पा ४ । सू ३९ ॥ | अ २ । पा ४ । सू ७३ ॥ |
| अ २ । पा ४ । सू ७६ ॥ | अ ३ । पा २ । सू ८८ ॥ |
| अ ५ । पा २ । सू १२२ ॥ | अ ६ । पा १ । सू ३४ ॥ |
| अ ७ । पा १ । सू ८ ॥ | अ ७ । पा १ । सू १० ॥ |
| अ ७ । पा १ । सू १०३ ॥ | अ ७ । पा ३ । सू ९७ ॥ |
| अ ७ । पा ४ । सू ७८ ॥ | अ ६ । पा ४ । सू ७५ ॥ |

षष्ठीयुक्तश्छन्दसि वा । १ । ४ । ९ ॥

योगविभागः कर्तव्यः । षष्ठीयुक्तश्छन्दसि । षष्ठीयुक्तः पतिशब्दश्छन्दसि घिसंज्ञो भवति । ततो वा । वा छन्दसि सर्वे विधयो भवन्ति । सुपां व्यत्ययः । तिङां व्यत्ययः । वर्णव्यत्ययः । लिङ्गव्यत्ययः । कालव्यत्ययः ।

तेनेति । (कै)

योगविभागसामर्थ्यगम्यसर्वविषयत्वेनेत्यर्थः ॥

परिभाषेति । (कै)

कार्य्यमात्रं चास्या लिङ्गम् । तदाह

यावदिति ॥ (कै)

उभयत्र विभाषेति । (कै)

यत्र यत्रास्या उपस्थितिस्ते केचित् [1]प्राप्तविभाषारूपाः केचिद्-प्राप्तविभाषारूपाः पर्य्यवस्यन्तीति भावः ॥ यद्यपि तेषु विधिषु नित्यं प्राप्तेषु "[2]छन्दसि वा" इत्यनेन सर्वापि प्राप्तविभाषैव तथाप्यस्य विकल्पविधेर्व्यत्ययमात्रपर्य्यवसन्नतयाऽस्त्येव तत् सम्भव इति भावः ॥ [4]ननु स्वादिवाक्येनानियमे प्राप्ते कथं व्यत्यय इत्यत आह

कर्मणीति । (कै)

---

१ "प्राप्त" इत्यारभ्य "सर्वापि" इत्यन्तं नास्ति इ पुस्तके ॥

२ अ ८ । पा ३ । सू ४९ ॥ ३ बोध्यम् । क ॥

४ "ननु" इत्यारभ्य "इति भावः" इत्यन्तं नास्ति इ पुस्तके ॥

---

पुरुषव्यत्ययः । आत्मनेपदव्यत्ययः । परस्मैपदव्यत्ययः ॥ सुपां व्यत्ययः । युक्ता मातासीद्धुरि दक्षिणायाः । दक्षिणायाम् इति प्राप्ते ॥ तिङां व्यत्ययः । चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते ॥ वर्णव्यत्ययः । त्रिष्टुभौजः । सुभितमुग्रवीरम् । सुहितमिति प्राप्ते ॥ लिङ्गव्यत्ययः । मधोर्गृह्णाति । मधोस्तृप्ता इवासते । मधुन इति प्राप्ते ॥ कालव्यत्ययः । श्वोऽग्नीनाधास्य-

नियमस्यैव विकल्प इति भावः॥ यत् कर्मणि वेति तत् छन्दसि वेति वचनव्यक्तेः। एवं च करणेऽप्राप्तद्वितीयाया "यवागूवा अग्निहोत्रं जुहोति" इत्यादौ प्रयोगभेदेन करणाकरणाभ्यां विकल्पेऽप्राप्तविभाषा। अन्यप्राप्तावन्यस्य करणात् व्यत्ययत्वं च बोध्यम्॥

सुहितमिति प्राप्ते इति। (भा)

सकारहकारयोः भ्रमौ। क्वचित्तु "क्षुभितमिति प्राप्ते" इति पाठो दृश्यते॥

मधुन इति प्राप्ते इति। (भा)

"[1]माध्वीर्गावो भवन्तु न" इति चौरवाची नपुंसकलिङ्ग इति भावः॥ कालव्यत्ययस्य अन्नाणोऽप्यग्रकत्वादाह

कालविहितेति॥ (कै)

---

१ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्य्यः। माध्वीर्गावो भवन्तु नः। अ १। म १। सू ९०। ऋ ८॥

---

मायेन। श्वः सोमेन यक्ष्यमाणेन। श्व आधाता श्वो यष्टेति प्राप्ते (३। ३। १५)॥ पुरुषव्यत्ययः। अधासवीरैर्दशभिर्वियूयाः। वियूयादिति प्राप्ते॥ आत्मनेपदव्यत्ययः। ब्रह्मचारिणमिच्छते। इच्छतीति प्राप्ते॥ परस्मैपदव्यत्ययः। प्रतीपमन्य ऊर्मिर्युध्यति। अन्वीपमन्य ऊर्मिर्युध्यति युध्यत इति प्राप्ते॥

# यस्मात्प्रत्ययविधिस्तदादि प्रत्यये-ऽङ्गम् । १ । ४ । १३ ॥

ननु सर्वस्यापि शब्दस्य व्यवहारव्यपदेशार्थत्वाद्व्यैव तत् कथमनुचितमत आह

संज्ञिन इतीति ॥ (कै)

ननु तदादिपदमेव संज्ञिनिर्देशकं भविष्यतीत्यत आह

सति हीति ॥ (कै)

ननु यच्छब्दाभावे तच्छब्दप्रयोगो नेत्यसिद्धम् । "ते तद्राजाः" "कला च सा कान्तिमती कलावतः" "सा गङ्गा" इत्यादौ प्रकृत-प्रसिद्धानुभूतार्थकेषु व्यभिचाराद् इत्यत आह

परामृष्टव्येति । (कै)

प्रकृतादेरभावादिति भावः ॥

तदिति । (कै)

परामर्शाभावादिति भावः । तदित्येतत् परामर्शयोग्याभावादित्यर्थः ॥ न च "प्रत्ययविधि" इत्यत्र प्रकृतप्रत्ययस्यैव तदा परा-

---

यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । १ । ४ । १३ ॥

यस्मादिति व्यपदेशाय ॥ अथ प्रत्ययग्रहणं किमर्थम् । यस्माद्विधिस्तदादिप्रत्ययेऽङ्गमितीयत्युच्यमाने स्त्री इयती । (५ । २ । ४० ॥ ७ । १ । २ ॥ ६ । २ । ६० ॥ ६ । ४ । १४८ ) स्त्रीयतीत्यत्रापि प्रसज्येत ( ६ । ४ । १४८ ) । प्रत्ययग्रहणे पुनः क्रियमाणे न दोषो भवति ॥ अथ विधिग्रहणं

मर्गोऽस्तु येन प्रत्ययस्य विधिस्तदाद्यङ्गमित्यर्थोऽस्त्विति वाच्यम्। [1]एवं हि विहितप्रत्ययादेरेवाङ्गसंज्ञा स्यादिति भविष्यतीत्यादौ धातोर्गुणानापत्तिः। एवं च विशिष्टसंज्ञिनिर्देशार्थं "यस्माद्" इत्युक्तमिति भावः॥ न च प्रकृत्यादिप्रत्ययेऽङ्गमित्येवास्तु "प्रकृत्यादि" इत्यस्य "यस्मात् प्रत्ययविधिस्तदादि" इत्यस्य च पर्य्यायत्वेन पर्य्यायेषु लाघवगौरवविचारानादरात् योगविभागेन वक्ष्यमाणपरिभाषाभाव तथान्यासस्यावश्यकत्वाच्च॥

स्त्री इयतीति। (भा)

इदं शब्दात् [2]परिमाणे वतुः। [3]वस्य घस्तस्य [4]इयादेश "[5]इदम इश्" "[6]यस्येति" लोपः। उगित्वान् ङीप्। ननु यस्माद्विधिस्तदादिप्रत्ययेऽङ्गम् इत्युक्ते यत्र प्रत्ययेऽङ्गत्वं तस्यैव विधेः प्रत्यासत्त्यालाभेन प्रकृते न दोषोऽत आह

स्त्रीशब्दादिति। (कै)

---

१ "एवं हि" इत्यारभ्य "निर्देशार्थम्" इत्यन्तं नास्ति क पुस्तके॥
२ अ ५। पा २। सू ४०॥ ३ अ ५। पा २। सू ४०॥
४ अ ७। पा १। सू २॥ ५ अ ५। पा ३। सू ३॥
६ अ ६। पा ४। सू १४८॥

---

किमर्थम्। यस्मात् प्रत्ययस्तदादि प्रत्ययेऽङ्गमितीयत्युच्यमाने दधि अधुना मधु अधुना (५।३।१७) अत्रापि प्रसज्येत (६।४।१४८॥७।१।७३)। विधिग्रहणे पुनः क्रियमाणे न दोषो भवति॥ तदेतत् प्रत्ययग्रहणेन विधिग्रहणेन च समुदितेन क्रियते संनियोगः। यस्मात् यः प्रत्ययः विधीयते तदादि तस्मिन्नङ्गसंज्ञं भवतीति॥ अथ तदादि ग्रहणं किमर्थम्। अङ्ग-

तदभावे तु व्याप्तिन्यायेन इहापि स्यात् । सति तु प्रत्ययग्रहणे तत् सामर्थ्यात् प्रत्यासत्तिरेवाश्रीयते इति भावः ॥

असिद्धत्वं नास्तीति । (कै)

चिणो लुग्न्यायेन प्राप्तिः ॥

प्रागभावादिति । (कै)

वस्तुतस्तु इयङापत्तिर्दोषः । न च तथापि लोपस्यासिद्धत्वं व्याश्रयत्वात् तत् प्राप्तेरभावात् । यस्येतिलोपप्राप्तिनिमित्तसमुदायापेक्षयातिरिक्तस्य स्त्रीशब्दस्येयङापेक्षणादित्यादिषष्ठे निरूपयिष्यामः ॥

नानादिष्टादिति । (कै)

इयङि "[1]न पदान्ते"ति निषेधोऽपि बोध्यः ॥ ननु विधिग्रहणाभावे "यस्मात् प्रत्यय" इत्यस्य क्रियाकाङ्क्षा न शान्ता इत्यत आह

अध्याहरिष्यत इति ॥ (कै)

परशब्दस्यापीति । (कै)

यद्यपि यस्मादिति पञ्चम्या परशब्दाध्याहारस्योभयोरप्यावश्यकत्वं तथापि तावतैव स्यान् न तु विधीयत इत्यस्यापि ॥

---

१ अ १ । पा १ । सू ५८ ॥

---

संज्ञायां तदादिवचनं स्यादिनुमर्थम् । वा । अङ्गसंज्ञायां तदादिग्रहणं क्रियते स्याद्यर्थं नुमर्थं च ॥ स्याद्यर्थं तावत् । करिष्यावः करिष्यामः ( ७ । ३ । १०१ ) नुमर्थं कुण्डानि वनानि ( ६ । ४ । ८ ) ॥ मित् नुटोरुपसंख्यानम् । वा । मित्वतः नुट्वतश्चोपसंख्यानं कर्त्तव्यम् ॥ मित्वतः । भिनत्ति छिनत्ति । अभिनत् अच्छिनत् ( ३ । १ । ७८ ॥ ६ । ४ । ७१ ) ॥ नुट्वतः । संचस्करतुः

अपिः। (कै)

एवार्थे॥

विधिग्रहण इति। (कै)

प्रत्ययग्रहणस्याप्युपलक्षणम्॥

भसंज्ञायां चेति। (कै)

न च सति प्रत्ययविधिग्रहणे "[1]यचि भम्" इत्यत्रापि यस्मात् यजादिप्रत्ययविधिरित्यर्थलाभात्तत्र भसंज्ञाप्राप्तिरिति वाच्यम्। यस्मात् प्रत्ययविधिस्तस्य यजादौ प्रत्यये भत्वमित्यर्थः स्यात् प्रत्यासत्तिन्यायानाश्रयणेनैवास्य ग्रन्थस्य प्रवृत्तेरिति भावः॥

यस्येति लोप इति। (कै)

"[2]इकोऽचि" इति नुमः प्राप्तिरित्यन्ये। प्राग्दीव्यतीयत्वेनास्य विभक्तित्वाद् भत्वाच्च न नलोप इति तदाशयः॥

इत्याहेति। (कै)

इत्याशङ्कायामाह इत्यर्थः॥

प्रत्यासत्तीति। (कै)

---

१ अ १ पा ४। सू १८॥ २ अ ७। पा १। सू ७३॥

---

संचस्करः (६। १। १३६। ७। ४। १०)। किं पुनः कारणं न सिध्यति। सुटो बहिरङ्गत्वात्। बहिरङ्गः सुट्। अन्तरङ्गो गुणः। असिद्धं बहिरङ्गमन्तरङ्गे वक्ष्यत्येतत्। संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम् (७। ४। १०)। यदि संयोगोपधग्रहणं क्रियते नार्थः संयोगादिग्रहणेन इहापि सस्वरतुः सस्वरुरिति संयोगोपधस्येत्येव सिद्धम्। भवेदेवमर्थेन

तन्न्यायप्रवृत्तिलाभार्थमेवोभयमिति भावः ॥ विधिग्रहणं भन-क्तीत्यादौ "१अतो दीर्घ" व्यावृत्त्यर्थमित्यपि बोध्यम् । ध्वनितं चेदं अम् विधायके भाष्ये ॥ भाष्ये

अथ तदादीति । (भा)

आदिग्रहणविषयः प्रश्नः ॥ ननु दीर्घग्रहणविधानसामर्थ्यादन-ङ्गत्वेऽपि दीर्घोऽत आह

अन्यथेति । (कै)

चिकीर्षामीत्यादौ ग्रवेकादेशस्य पूर्वान्तवत्त्वेनाङ्गत्वान्तचापि दीर्घस्य चारितार्थ्यं बोध्यम् । करोतीत्यादौ गुणोऽपि प्रयोजनं बोध्यम् ॥

तदेदमिति । (कै)

कुण्डानीत्येतदित्यर्थः ॥ ननु मित् नुटोरङ्गत्वेन किंचित् प्रयोजनमत आह

सतयोरिति । (कै)

सति सप्तमीति भावः ॥

---

१ अ० । पा ३ । सू १०१ ।

---

नार्थः । इदं तु न सिध्यति संचस्कारतुः संचस्करुः । किं पुनः कारणं न सिध्यति । इह तस्य वा ग्रहणं भवति तदादेर्वा न चेदं तन्नापि तदादि । सिद्धं तु तदाद्यादि वचनात् । वा । सिद्धमेतत् । कथम् । तदाद्याद्यङ्गसंज्ञं भवतीति वक्तव्यम् । किमिदं तदाद्यादीति । तस्यादिस्तदादिः । तदादिरादि-र्यस्य तदिदं तदाद्यादीति ॥ स तर्हि तथा निर्देशः कर्तव्यः । न कर्तव्यः ।

भाष्येति। (कै)

सत्यन्तस्यैव सिद्धे मलघ्वाहाराश्रयणमयुक्तमतः फलितार्थकथन-परं भाष्यमित्यर्थः॥

रूपोदाहरणमिति। (कै)

भिलद्रूपमीदृशमित्यर्थः॥ अन्ये तु भिनत्तीत्यादौ अङ्गत्वाभावे लघूपधगुणाशङ्का कर्मधारयेण समाधानं च वृद्धोक्तमसङ्गतं स्यादिति भाष्याशयमाहुः॥ ननु परत्वात् पूर्वमेवाडागमोऽत आह

नित्यत्वादिति। (कै)

"लावस्थायामड्" इति पक्षे "भिन्धि" इत्यादौ अङ्गं धित्वं न स्याद् इति बोध्यम्॥ ननु संशब्दमात्रापेक्षत्वेनान्तरङ्गत्वात् लुटि ततो खिङ्गादिकमिति न दोषोऽत आह

द्विर्वचने इति। (कै)

"[1]पूर्वं धातुः साधनेन युज्यते" इति सिद्धान्ताद् इति भावः॥ ननु टित्त्वाद्धालवयवत्वेन न दोषोऽत आह

---

१ यद्येवं धातूपसर्गयोरपि समासः प्राप्नोति पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेति। नैतदस्ति। पूर्वं धातुः साधनेन युज्यते पश्चा-दुपसर्गेण। साधनं हि क्रियां निर्वर्त्तयति तामुपसर्गो विशिनष्टि। अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्॥ २। २। १९॥

---

उत्तरपदलोपोऽत्र द्रष्टव्यः। तद्यथा। उष्ट्रमुखमिव मुखमस्योष्ट्रमुखः। खरमुखः। एवं तदाद्यादि तदादीति॥ तदेकदेशविज्ञानाद्वासिद्धम्। वा। तदेकदेशविज्ञानाद्वा सिद्धमेतत्। तदेकदेशभूतं तद्ग्रहणेन गृह्यते। तद्यथा। गङ्गा यमुना देवदत्तेति। अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुना-ग्रहणेन गृह्यते। तथा देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते॥ विषम

(यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्। १। ४। १३।) (अ.१। पा. ४। आ.२)

## अडभ्यासेति। (कै)

नायं टित्वादाद्यवयवः किन्त्वनेन मध्यं प्रवेशित इत्यभक्त इति भावः॥

## तद्भक्तस्येति। (कै)

टित्वादित्यर्थः॥

## स्कृशब्दादेवेति। (कै)

इदं चिन्त्यम्। एवं ह्यत्र धातूपसर्गयोः समासो दुर्वारः स हि "[1]पूर्वं धातुः साधनेन" इति न्यायेन "उपपदमतिङ्" (२।२।१९) इति सूत्रे भगवता वारितः॥

---

१ पदमितीयं भगवतः कृत्रिमासंज्ञा। युक्तमिह द्रष्टव्यं किमन्तरङ्गं किं वहिरङ्गमिति। धातूपसर्गयोः कार्य्यं यत् तदन्तरङ्गम्। कुत एतत्। पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेति। नैतत् सारम्। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण। साधनं हि क्रियां निर्वर्त्तयति। तामुपसर्गो विशिनष्टि। अभिनिर्वृत्तस्य चार्थस्यो पसर्गेण विशेषः शक्यो वक्तुम्। सत्यमेवमेतत्। यस्त्वसौ धातूपसर्ग योरभिसम्बन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते। अवश्य चैतदेव विज्ञेयम्। यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चा दुपसर्गेणेति। तस्यास्यते गुरुणा इत्यकर्मकः। उपास्यते गुरुरि केन सकर्मकः स्यात्॥ ६। १। १३५॥

---

उपन्यासः। इह केचिच्छब्दा अव्यक्तपरिमाणानामर्थानां वाचका भवन्ति य एं संख्याशब्दाः परिमाणशब्दाश्च। पञ्च सप्त इत्येकेनाप्यपायेन भवन्ति। द्रोण खार्य्याढकमिति नैवाधिके भवन्ति न च न्यूने। केचिद् यावदेव तद् भवं तावदेवाऽऽहुर् एते जातिशब्दा गुणशब्दाश्च। तैलं घृतमिति खार्य्यामपि भवन्ति द्रोणेऽपि। शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति वटकणिक

इड्गुणेति । (कै)

"ऋतश्च संयोगादेः" (७।४।४३) "गुणोर्त्तिसंयोगाद्योः" (७। ४।२९) इति विहितेत्यर्थः ॥

अभक्तत्वं सुटो ज्ञापितमिति । (कै)

इदं ज्ञापकं कथमितिचिन्त्यम् । "यद्वास्य इति" मत्वेति शेषः । अत एव इड्गुणनिवृत्तये वचनमेव करिष्यति भाष्यकृत् षष्ठे । किं च सुटो भक्तत्वे सकारादेर्धातुत्वाभावात् स्कृशब्दस्य कथं द्वित्वमिति सुधीभिर्विभाव्यम् । यद्यप्यत्र पूर्वपक्षिणः सुटोऽनवयवत्वाभिमानात् संचस्करतुः इत्यादौ संयोगादित्वाभावादपि गुणो न प्राप्नोति तथापि "संयोगोपधग्रहणं कर्त्तव्यम्" इति वार्त्तिकेन साध्यः । यद्यप्यवयवावयविभावस्य षष्ठ्यर्थस्याभावात् कथं तेनापि सिद्धि-स्तथापि यदन्यवर्णनिरूपितमुपधात्वं संयोगस्येति निरूपकत्वलक्षणे षष्ठ्यर्थे बहुव्रीहिरित्यभिमानः ॥ भाष्ये

किं पुनरिति (भा)

प्रश्नमुपपादयति

सुटो बहिरङ्गत्वादिति । (भा)

---

मात्रेऽपि द्रव्ये । अकृसंज्ञाचाप्यल्पपरिमाणानां क्रियते सा केनाधिकस्य स्यात् । एवं तर्ह्याचार्य्यप्रवृत्तिर्ज्ञापयति तदेकदेशभूतं तद् ग्रहणेन गृह्यत इति यदयं नेदमदसोरकोः (७।१।११) इति सककारयोः प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । इदमदसोः कार्य्यमुच्यमानं कः प्रसङ्गो यत् सककारयोः स्यात् । पश्यति त्वाचार्य्यस्तदेकदेशभूतं तद् ग्रहणेन गृह्यत इति ततः सककारयोः प्रतिषेधं शास्ति ॥ अथ द्वितीयं प्रत्ययग्रहणं

वहिर्भूतोपसर्गनिमित्तत्वात् सुटो वहिरङ्गत्वमेवं च तस्यासिद्धत्वात् सिद्धत्वेवाङ्गत्वमिति भावः॥ नन्वसिद्धत्वेनाङ्गत्वसाधने तेनैव संयोगादित्वाभावात् कथं गुणः स्यादत आह

**वक्ष्यत्येतदिति।** (भा)

तथा च तत् सामर्थ्यात् तदंशेनासिद्धत्वमिति भावः॥

**सस्वरतुः** (भा)

इत्यस्य संयोगोपधग्रहणेन सिद्धावपि तदा सामर्थ्याभावादसिद्धत्वाभावानुपपत्तौ "संचस्करतुः" इत्यादि न सिध्यतीत्याह

**भवेद्** (भा)

इत्यादिः

**संचस्करुः** (भा)

इत्यन्तम्॥ तस्मात् संयोगोपधग्रहणसामर्थ्योपपत्तये संयोगादिग्रहणमपि कार्य्यमिति भावः॥ तच संयोगोपधग्रहणे कृते यत् तत् सामर्थ्यादसिद्धत्वाभावस्तद्बहिरङ्गत्वेऽपि तद्विषये तदभावः स्यादिति। तत् करणेऽपि तदसिद्धिरित्यचार्योऽप्यभिप्रेतस्तच सिद्धत्वाभावे कुतोऽङ्गत्वं न सिध्यतीति पुनः पृच्छति

---

किमर्थम्। प्रत्ययग्रहणं पदादावप्रसङ्गार्थम्। वा। प्रत्ययग्रहणं क्रियते पदादावङ्गसंज्ञा मा भूदिति। किं च स्यात्। स्त्र्यर्थम् अग्र्यम् अर्थम् अङ्गस्येयङुवङौ स्याताम् (६।४।७७—७९)॥ परिमाणार्थं च। वा परिमाणार्थं च द्वितीयं प्रत्ययग्रहणं क्रियते। यस्मात् प्रत्ययविधिस्तदाद्यङ्गमितीयत्युच्यमाने दाधतयस्याप्यङ्गसंज्ञा प्रसज्येत॥ तत्तर्हि कर्त्तव्यम् न कर्त्तव्यम्। केनेदानीमङ्गकार्य्यं भविष्यति। प्रत्यय इति प्रकृत्याश्र

किं पुनरिति। (भा)

एवं "सुटो बहिरङ्गत्वाद्" इत्यादिभाष्यं योजयन्ति केचित्॥ परेतु भाष्ये

सुटो बहिरङ्गत्वाद् (भा)

इत्यादिः

किं पुनः कारणं न सिध्यति (भा)

इत्यन्तो ग्रन्थ उपसर्गार्थसम्बन्धो धातोः पूर्वमेव ततश्च प्रत्यये कृते द्विर्वचनात् पूर्वमन्तरङ्गतरार्थकोपसर्गनिमित्तकः सुट् इति लिटः स्यशब्दादिव्यभावेन संयोगादेरङ्गत्वाभावाद्गुणेन प्राप्नोतीति भाष्याशय इति प्रामाणिकाः॥ ननु तदादिग्रहणे सति कथं तस्य केवलस्य ग्रहणमत आह.

व्यपदेशिवदिति॥ (कै)

तस्यादिश्चकार इति। (कै)

द्विर्वचने द्विःप्रयोगलक्षोकारादित्यर्थः॥ ननूक्तमुखे बाधात् तथाङ्गीकारेऽपि करिष्याम इत्यादौ मुख्यार्थत्वेऽपि चरितार्थ्याद्च लक्षणायां मानाभावोऽत आह

इहापीति॥ (कै)

---

कार्य्यमध्येष्ये। यदि प्रत्यय इति प्रकृत्याङ्गकार्य्यमधीषे। प्राकरोत् उपेहिष्ठ। उपसर्गात् पूर्वावडाटौ प्राप्नुतः (६।४।७१—७२)॥ सिद्धं तु प्रत्ययग्रहणे यस्मात् स तदादितदन्तविज्ञानात्। वा। सिद्धमेतत्। कथम्। प्रत्ययग्रहणे यस्मात् स प्रत्ययो विहितस्तदादेस्तदन्तस्य च भवतीत्येषा परिभाषा कर्त्तव्या॥ कः पुनरत्र विशेष एषा परिभाषा

**प्रतिलक्ष्यमिति।** (कै)

तस्य लक्ष्यत्वनिश्चयः शिष्टप्रयोगादिति भावः॥

**तदवयवे इति।** (कै)

तदाद्यवयवे इत्यर्थः॥ भाष्ये

**अक्तपरिमाणानाम्।** (भा)

नियतपरिमाणानाम्॥

**एकेनाप्यपाये इति।** (भा)

तृतीया न कर्त्तरि षष्ठ्या बाधादत आह

**अपाये इति।** (कै)

न चैकस्य विद्यमानस्यापाये करणता संभवतीति सामर्थ्यात् स्वभावेनेति ज्ञायते। एवं चैकाभावेन पञ्चादिशब्दवाच्यरूपापाये पञ्चादिशब्दा न प्रवर्त्तन्ते इति भावः॥ तत्र दृष्टान्तमाह

**यथेति॥** (कै)

**विशिष्टरूपपरिग्रहादिति।** (कै)

एवमुपसर्गादिसंज्ञा अप्यक्तपरिमाणनिष्ठत्वान्न न्यूने लौकिकैक-

क्रियेत प्रत्ययग्रहणं व। अवश्यमेषा परिभाषा कर्त्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि। प्रयोजनं धातुप्रातिपदिकप्रत्ययसमास-तद्धितविधिस्वराः। वा। धातु। देवदत्तश्चिकीर्षति। संघातस्य धातुसंज्ञा प्राप्नोति (३।१।३२॥ २।४।७१)॥ प्रातिपदिक। देवदत्तो गार्ग्यः। संघातस्य प्रातिपदिकसंज्ञा प्राप्नोति (१।२।४६॥ २।४।७१)॥ प्रत्यय। महान्तं पुत्रमिच्छति। संघातात्प्रत्ययोत्पत्तिः

देशविकृतन्यायेन इत्यपि बोध्यम् ॥ नन्वभक्तत्वात्तदेकदेशत्वमेवा-
सिद्धमत आह

तन्मध्येति ॥ (कै)

[1]भाष्ये

पदादाविति । (भा)

पदादौ परे इत्यर्थः ॥

असतीति । (कै)

तदभावे प्रत्यासत्तिन्याये मानाभावादित्यर्थः ॥

निषेधादिति । (कै)

अङ्गसंज्ञापि प्रत्यये परतः पूर्वस्य कार्य्यमिति भावः ॥

तस्मिन् कर्त्तव्ये इति । (कै)

तन्निमित्तेऽङ्गत्वे कर्त्तव्ये इत्यर्थः ॥

तदादेः संघातस्येति । (कै)

वाक्यसंस्कारपक्षे इदम् ॥

दाशतय- (भा)

शब्देन ऋक्संहितेत्यन्ये ॥

१ "भाष्ये" इत्यारभ्य "निषेधाद्" इत्यन्तं नास्ति क पुस्तके ॥

प्राप्नोति (३।१।८)॥ समास। ऋद्धस्य राज्ञः पुरुषः। संघातस्य
समाससंज्ञा प्राप्नोति (२।२।८)॥ तद्धितविधि। देवदत्तो गार्ग्या-
यणः। संघातात् तद्धितोत्पत्तिः प्राप्नोति (४।१।१०१॥ २।४।

एतच्चेति । (कै)

इदमपिना सूचितमिति भावः ॥ यदि तर्हीत्यनेनाव्यवहितत्वात् द्वितीयप्रत्ययग्रहणं परामृश्यते तदा

केनेदानीम् (भा)

इत्यादिभाष्यासंगतिः । न हि तदकरणेऽङ्गकार्य्यं काचिदनुपपत्तिः ॥ अङ्गसंज्ञायामङ्गस्येत्यधिकदीर्घादिविधिसंभवादत आह

अवयवान् इति ॥ (कै)

भिस्सा (कै)

ओदनः ॥ [1]क्रिमिशब्दात् "[2]लोमादित्वात्" "ने" "टापि" द्वितीयैकवचनम् । एवं च पदाङ्गाधिकारव्यावर्त्य तदेवप्रत्ययग्रहणस्यापीति भावः । नामः प्रत्ययसमुदायत्वेन प्रत्ययत्वाभाव इति बोध्यम् । एतद्द्वयमपि "[3]अर्थवत्" परिभाषया सिद्धमिति चिन्त्यम् ॥

अनियतावधेरिति । (कै)

एवं च देवदत्तः प्राकरोद् इत्यत्र देवात् पूर्वमपि आट्

१ क्रिमियाम् इति । कै ॥

२ लोमादिपामादिपिच्छादिभ्यः श न इलचः । ५ । २ । १०० ॥

३ परिभाषेन्दुशे–१४ ॥

०१ ) ॥ स्वर । देवदत्तो गार्ग्यः । संघातस्य ञ्नित्यादिर्नित्यम् ( ६ । १ । १९७ ) इत्याद्युदात्तत्वं प्राप्नोति ॥ प्रत्ययग्रहणे यस्मात् स तदादेस्तदन्तस्य ग्रहणं भवतीति न दोषो भवति ॥ सा तर्ह्येषा परिभाषा कर्त्तव्या । न कर्त्तव्या । एवं वक्ष्यामि । यस्मात् प्रत्ययविधिस्तदादिप्रत्यये ग्रहणमा

स्यादिति बोध्यम् ॥ ननु केन इत्यादौ तदन्तग्रहणाभावात् समुच्चयोऽयुक्तोऽत आह

यच्चेति । (कै)

व्यवस्थितत्वाच्च समुच्चयस्तत्र तदन्तविधेः "[1]प्रत्ययग्रहणे चापञ्चम्या" इति निषेधादिति भावः । प्रत्ययविधौ तु नास्याः प्रवृत्तिः विहितप्रत्ययविषयत्वादस्या इति बोध्यम् ॥

यच्च त्विति । (कै)

"[2]कृत्तद्धित" इत्यादौ । एतेन प्रकृते "[3]तदादि" इत्यंशस्यैव उपयोगेन तदन्तस्य इत्ययुक्तमित्यपास्तम् । प्रसङ्गात्तदुक्तेः । एवम् "[4]एङ्ह्रस्वात् सम्बुद्धेः" इत्यादौ "तदादेः" इति पञ्चम्यन्तम् इत्यपि बोध्यम् ॥ सूत्रप्रश्नस्य प्रक्रान्तत्वात् प्रत्ययग्रहणमित्ययुक्तमत आह

प्रत्यय इति ॥ (कै)

ततश्चेति । (कै)

संघातस्य धातुत्वात् प्रातिपदिकत्वाच्चेत्यर्थः । न च समास-

---

१ परिभाषेन्दुशे–२४ ॥ २ अ१ । पा२ । सू४६ ॥
३ परिभाषेन्दुशे–५ "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्" २१ ॥
४ अ६ । पा१ । सू६९ ॥

---

गृह्यते । ततोऽङ्गम् । अङ्गसंज्ञं च भवति यस्मात्प्रत्ययविधिस्तदादिप्रत्यये ॥ यदि प्रत्ययग्रहणे यस्मात् स तदादेर्ग्रहणं भवतीत्युच्यते अवतप्ते नकुलस्थितं

ग्रहणकृतनियमेन प्रातिपदिकत्वं दुर्लभम्। नियमस्य भेदसंसर्गद्वारकार्थवत् समुदायविषयकत्वात्। न च तद्धितान्तस्य तादृशमर्थवत्त्वमित्याशयात्॥

## असामर्थ्यादिति। (कै)

यदि स्यात् तदा महान्तपुत्रीयति इत्यपि स्यादिति भावः॥

## विवक्षितायामपीति। (कै)

वस्तुतस्तत्र संख्याविवक्षायां फलाभाव इति वक्ष्यामः॥

## ततश्च इञीति। (कै)

ननु देवदत्तो गार्ग्यायण इत्यत्र यदि गार्ग्यापत्यं देवदत्तस्तदा समुदायात् प्राप्तिरेव नासामर्थ्यात्। अपत्यप्रत्ययोऽह्यपत्यवता समर्थो न त्वपत्यसमानाधिकरणविशेषणेनापि। यदि देवदत्तो यो गार्ग्यस्तस्यापत्यमित्यर्थस्तर्हि देवदत्तस्य गार्ग्यस्यापत्यमित्याद्युदाहार्यमिति चेन्न। देवदत्तो गार्ग्यायणो भक्तिरस्येति विवक्षायां "[१]गोत्रक्षत्रियाख्येभ्य" इति वुञ् स्यादित्यभिप्रायात्॥

## योगविभाग इति। (कै)

न च द्वितीयस्योपयोगाभावादिदमयुक्तम्। "कृस्वादङ्गात्"

---

१ अ ४। पा ३। सू ९९॥

---

त एतत् उदके विशीर्यां त एतत् स गतिकेन स नकुलेन च समासो (२। १। ४७) न प्राप्नोति। एवं तर्हि प्रत्ययग्रहणे यस्मात् स तदादेर्ग्रहणं भवतीत्युक्त्वा ततो वक्ष्यामि। कृद्ग्रहणे गतिकारकपूर्वस्यापि। वा। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीत्येषापरिभाषा कर्तव्या॥

(८।२।२७) "न लुमताङ्गस्य" (१।१।६३) इत्यादिव्यवहार-निर्वाहाय द्वितीययोगोऽप्यावश्यक इति भावः॥

## सोपस्कारत्वादिति। (कै)

पूरणापेक्षत्वादित्यर्थः॥

## अवतप्ते (भा)

इत्यादौ॥

## नकुलस्थितविशीर्ण- (भा)

शब्दयोरनया परिभाषया क्तान्तत्वाभावात् कृदन्तरूपोत्तर-पदत्वाभावाच्च॥ क्तेन "चेपे" (२।१।४७) "तत्पुरुषे कृति" (६।३।१४) इति समासविभक्त्यलुकौ न स्याताम्। आद्ये चापत्तम्। अन्त्ये सता लभ्यत्वं द्योत्यम्॥

## व्यावक्रोशी (भा)

इत्यत्र कर्मव्यतिहारे णच् "णचः स्त्रियामञ्" (५।४।१४) "न कर्मव्यतिहारे" (७।३।६) इत्यैज् निषेधः॥ "सांकूटिने" "अभिविधौ भाव इनुण्" (३।३।४४)। "सांकुटिनम्" इति ह्रस्वपाठोऽपि भाष्ये॥ ननु दूरादागतेऽन्तोदात्तत्वं साध्यं तच्च समासस्वरेणासिद्धमत आह

## आगम्यते स्मेति। (कै)

---

कान्येतस्याः परिभाषायाः प्रयोजनानि। प्रयोजनं समासतद्धितविधिस्वराः। वा। समास। अवतप्ते नकुलस्थितं त एतत्। उदके विशीर्णं त एतत्। स गतिकेन स नकुलेन च समासः सिद्धो भवति। समास॥

(यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । १।४।१३) (अ. १। पा. ४। आ २)

स्मशब्दप्रयोगो भूतकालद्योतनाय । गतिस्वरेण कर्म्मणि क्तान्ते उत्तरपदे "गतिरनन्तरः" (६।२।४९) इति विहितेन पूर्वपद-प्रकृतिस्वरेण ॥

## ततो दूरशब्दस्येति । (कै)

अयमपि परिभाषा साध्य एव ॥

## [1]कृत्स्वरेणेति । (कै)

कृदुत्तरपदप्रकृतिस्वरेणेत्यर्थः । एतत् प्राप्तिरपि परिभाषयैव स गतेरपीत्यनेन तत्प्राप्तियोग्यता ॥ ननु गतिस्वरेण पूर्वं बाधितस्य "[2]थाथे"त्यस्य कथं पुनः प्राप्तिरत आह

## स्थानान्तरप्राप्तत्वादिति । (कै)

समासान्तरप्राप्तत्वादित्यर्थः । यतो गतेरुत्तरक्तान्तस्य यदन्तोदात्तत्वं तस्यैव सोपवादो न तु कारकादुत्तरक्तान्तस्यापीति तात्पर्य्यम् ॥

## गतिस्वरस्य बाधकस्यापीति । (कै)

[3]थाथादिस्वरबाधकस्यापीत्यर्थः ॥

---

१ अ ६ । पा २ । सू १ ३९ ॥

२ थाथघञ्क्ताजबित्रकाणाम् । ६ । २ । १४४ ॥

३ अ ६ । पा २ । सू १४४ ॥

---

तद्धितविधि । सां कूटिनम् थावकोग्यौ । संघातात् तद्धितोत्पत्तिः सिद्धा भवति ( ५ । ४ । १५-१४ ) । तद्धितविधि । स्वर । दूरात् आगतः दूरादागत इति ( २ । १ । ३९ ॥ ६ । ३ । २ ) अन्तस्थाथघञ्क्ताजबित्रकाणाम्

### बाधकत्वादिति। (कै)

समासान्तरे प्राप्त्या सति शिष्टत्वेनेति भावः। यद्यपि परिभाषाभावे कृदन्तत्वाभावात् कृत्स्वराप्राप्तौ समासान्तोदात्तत्वेनेदं सिध्यति तथापि परिभाषासत्त्वेऽपि सिध्यतीत्युपन्यासः॥

### अस्या इति। (कै)

एकदेशद्वारा कृत्स्ना परिभाषा ज्ञाप्यत इतिभावः। अनन्तरग्रहणे तु तत्सामर्थ्यात् प्रत्ययग्रहणे यस्मादित्यस्या एवोपस्थानमिति तात्पर्य्यम्। एतच्च विस्तरेण "गतिरनन्तरः" (६।२।४९) इति सूत्रे षष्ठे उपपादयिष्यते।



(६।२।१४३-१४४) इत्येव स्वरः सिद्धो भवति॥ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति न दोषो भवति। सा तर्ह्येषा परिभाषा कर्तव्या। न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं गतिरनन्तरः (६।२।४९) इत्यनन्तरग्रहणं करोति॥

# सुप्तिङन्तम् पदम् । १ । ४ । १४ ॥

तिङ्साहचर्य्यात् सुबपि प्रत्याहारः । [1]"न ङिसम्बुद्ध्योः" इति निषेधाच्च ॥

## तदन्तविधेरिति । (कै)

शब्दस्वरूपस्य विशेष्यत्वात्तदन्तलाभः इति भावः । न च तदन्तविधिलाभेऽपि व्यपदेशिवद्भावेन केवलप्रत्ययस्यापि प्राप्तौ तदप्रवृत्तये पुनरन्तग्रहणमिति वाच्यम् । "[2]हलि सर्वेषाम्" इत्यादिनिर्देशैस्तस्येहाप्रवृत्तिकल्पनादिति तात्पर्य्यम् ॥

## परत्वाद् बाधित्वेति । (कै)

पुंवद्भावाद् ह्रस्वत्वं विप्रतिषेधेनेत्युक्तेरिति भावः । न च पुनः पुंवत्त्वम् । सकृद्गतिन्यायाश्रयणात् । अत एव तत् सार्थकम् ॥

## तरपि त्विति । (कै)

अत्र पक्षे घसंज्ञकस्योत्तरपदस्य सम्भवेन नद्येवोत्तरपदविशेषणात् केवलस्य चोत्तरपदत्वाभावात् तत्र परतो न ह्रस्वप्राप्तिरिति भावः ॥

## कुमारीगौरितरेति । (कै)

---

१ अ ८ । पा २ । सू ८ ॥ २ अ ८ । पा ३ । सू २२ ॥

---

सुप्तिङन्तं पदम् । १ । ४ । १४ ॥

अन्तग्रहणं किमर्थं न सुप्तिङ् पदमित्येवोच्येत । केनेदानीं तदन्तानां भविष्यति । तदन्तविधिना ( १ । १ । ७२ ) ॥ अत उत्तरं पठति । पद-

गौरीशब्दे "[1]तसिलादिषु" इति पुंवत्त्वं प्राप्नोति । कुमारिगौरीतरेत्यपपाठः ॥ न च तदन्तविध्यभावे ज्ञापितेऽप्यन्तपदं व्यर्थं प्रत्ययमात्रस्य संज्ञायामपि पदप्रदेशेषु तदन्तविधिना सिद्धेरिति वाच्यम् । पदत्वस्य प्रत्ययाप्रत्ययसाधारणत्वात् । "[2]उञि च पदे" इत्याद्यसंगतेश्चेति दिक् ॥

## अधातुरिति । (कै)

विशेषणतया क्रियाबोधकस्यापि क्विबन्तादेः "[3]अलसन्तस्य" इति सूत्रेऽधातुरित्युक्त्या धातुत्वानपगमज्ञापनादिति भावः ॥

## प्रत्ययनिमित्तमिति । (कै)

लक्षणग्रहणादिति भावः ॥ न च केवलकृतां तद्धितानां च प्रातिपदिकत्वे फलाभावः । "[4]ङ्याप् प्रातिपदिकाद्" इत्यादौ शब्दरूपं विशेष्यमादाय तदन्तविध्याश्रयणेन तल्लाभात् ॥

## लौकिकी । (कै)

लोकविदिता । अत्र पक्षे अर्थवद्ग्रहणात् तदन्तस्यापि न प्राप्नोतीति भावः ॥

## सामर्थ्यादिति । (कै)

कृत्तद्धितयोरर्थवत्त्वाव्यभिचारादिति भावः ॥

---

१ अ ६ । पा ३ । । सू ३५ ॥ २ अ ८ । पा ३ । सू २१ ।
३ अ ६ । पा ४ । सू १४ ॥ ४ अ ४ । पा १ । सू १ ॥

---

संज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम् । वा । पदसंज्ञायामन्तग्रहणं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् । एतज्ज्ञापयत्याचार्योऽन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्न भवतीति ।

**लौकिकार्थप्रत्यासन्न इति** (कै)

लौकिकार्थं यत् पदं तदर्थस्य प्रत्यासन्नः शास्त्रकृत् कल्पित-त्वादिप्रकृतेरर्थस्तदाह

**अभिव्यक्ततर इति ॥** (कै)

तदेवाह

**प्रत्ययान्तेष्विति ।** (कै)

कृत्तद्धितप्रत्ययार्थस्तु न तादृशः कल्पितावयवार्थत्वात् तस्य ॥

**प्रत्ययान्तेषु ।** (कै)

सुबन्तेषु ॥ सुबन्तार्थत्वात् तस्याः सुपो द्योतकत्वात् तत्रैव स लक्ष्यते न तु तद्रहिते इत्यर्थः। एवमेव पूर्वसूत्रे। इहाप्यर्थाधिकारादनु-वृत्तिसामर्थ्येन तद्ग्रहणस्यदुक्तमनुवृत्तिसामर्थ्यादिति न तु तत्साम-र्थ्यादित्युक्तम् ॥ [1]भाष्येऽपि

**अर्थवद्** (भा)

इत्यस्यार्थवत्पदद्योतार्थवदित्यर्थः ॥

---

१ "भाष्ये" इत्यारभ्य "इत्यर्थः" इत्यन्तं नास्ति क पुस्तके ॥

---

किमेतस्य ज्ञापने प्रयोजनम्। तरप्तमपौ घः ( १ । १ । २२ ) तरप्तम-बन्तस्य घसंज्ञा न भवति। किं च स्यात्। कुमारी गौरितरा। घादिषु नद्या ह्रस्वो भवतीति ( ६ । ३ । ४३ ) ह्रस्वत्वं प्रसज्येत ॥ यद्येतज्ज्ञाप्यते सनाद्यन्ता धातवः ( ३ । १ । ३२ ) इत्यन्तग्रहणं कर्त्तव्यम् ॥ कृत्तद्धित-समासाश्च ( १ । २ । ४६ ) इत्यन्तग्रहणं कर्त्तव्यम्। इदं तृतीयं ज्ञाप-कार्थम् ॥ द्वे तावत् क्रियेते न्यास एव। यदप्युच्यते कृत्तद्धितसमासास्वन्त-ग्रहणं कर्त्तव्यमिति। न कर्त्तव्यम्। अर्थवदिति वर्त्तते ( १ । २ ४५ ) कृत्तद्धितान्तं चैवार्थवत्। न केवलाः कृतस्तद्धिता वा ॥

# *नः क्ये । १ । ४ । १५ ॥

नलोपार्थत्वात् पदत्वप्रयोजनप्रश्नोऽनुपपन्नोऽत आह

लुप्तेऽपीति ॥ (कै)

ज्ञापकादिति । (कै)

न च नान्तात् कपि ततः क्विपि सुपि "[1]प्रत्ययलक्षणेन" क्य सत्त्वादनेन नियमेन पदत्वस्य व्यावृत्तेः प्राप्तनलोपवारणाय तदावश्यकम् । तथा प्रयोगाभावात् । अन्तरङ्गनलोपस्य बहिरङ्गेण निषेधेन बाधायोगाच्च । वचनं त्वन्यथानियमे चरितार्थमिति भावः ॥ क्ये नान्तं पदमेव इत्यपि न व्याख्यानात् । [2]अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ इति दशसमानाक्षराणि । [3]ऌकारस्य दीर्घाभावान् नवैव इति प्रातिशाख्ये ॥

तपस्यतीति । (कै)

अत्र पदत्वे रुत्वं स्यादिति भावः ॥

---

१ अ १ । पा १ । सू ६२ ॥

२ "गोसमानाक्षरनान्तादित्येके" ( ३ । १ । ८ ) इति भाष्यवार्त्तिकस्थ-"समानाक्षर" शब्दविवरणम् ॥

३ "ऌकारोदीर्घः प्लुतास्च उक्तवर्जम्" ( शुक्लयजुः प्रातिशाख्य—अध्या—८—सू ३० ) अत्र पूर्वसूत्राद् "न" इति वर्त्तते ॥ अथ नवादितः समानाक्षराणि । २ । तैत्तिरीयप्रातिशाख्यम् ॥ "ऋपर्य्यन्ताः स्वरास्त्रेधा ऌकारो ह्रस्व एव च" । १२ ॥ अमरेशनिर्मिता वर्णरत्नप्रदीपिका शिक्षा ॥

---

* किमर्थमिदमुच्यते । न सुबन्तं पदमित्येव सिद्धम् ( १ । ४ । १४ ॥ २ । ४ । ७१ ॥ १ । १ । ६२ ) ॥ नियमार्थोऽयमारम्भः । नान्तमेव क्ये पदसंज्ञं भवति नान्यत् । क्व मा भूत् । वाच्यति स्रुच्यति ( ८ । २ । ३०—३९ ) ॥

# [1]स्वादिष्वसर्वनामस्थाने । १ । ४ । १७ ॥

---

पर्युदासेऽपि आर्थः प्रतिषेधोऽस्त्येव इत्यत आह

प्रसज्येति । (कै)

प्राप्तप्रतिषेध इति भावः ॥

प्राप्तबाधो न युज्यते इति । (कै)

गौरवादिति भावः ॥

---

१ असर्वनामस्थान इत्युच्यते तत्र ते राजा तक्षा (६ । १ । ६८॥ १ । १ । ६२ )। असर्वनामस्थान इति पदसंज्ञायाः प्रतिषेधः प्रसज्येत । नाप्रतिषेधात् । नायं प्रसज्यप्रतिषेधः सर्वनामस्थाने नेति । किं तर्हि पर्युदासोऽयं यदन्यत्सर्वनामस्थानादिति । सर्वनामस्थाने ऽव्यापारः । यदि केन चित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति । अप्राप्तेर्वा । अथवानन्तरा या प्राप्तिः सा प्रतिषिध्यते । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् । अथ वा योगविभागः करिष्यते । स्वादिषु पूर्वं पदसंज्ञं भवति । ततः सर्वनामस्थानेऽयचि । पूर्वं पदसंज्ञं भवति । ततः भम् । भसंज्ञं च यजादावसर्वनामस्थान इति । यदि तर्हि सावपि पदं भवति एचः प्लुतविकारो पदान्तग्रहणाच्चोदितम् (८ । २ । १०७)। इह मा भूत् भद्रं करोषि गौरिति । तस्मिन् क्रियमाणेऽपि प्राप्नोति । वाक्यपदयोरन्त्यस्येत्येवं तत् । भूवद्वद्भ्य एतयोः पदसंज्ञा वक्तव्या भूवद्वद्भ्यः । धारयद्वद्भ्यः ॥

आसादयेदिति । (कै)

अनेन देवदत्तहन्तृहतन्यायस्यायमविषय इति दर्शितम् । सजातीयप्राप्तेरेवाभावादिति भावः ॥ अयजादौ सर्वनामस्थाने इत्यर्थभ्रमं वारयति

असर्वेति । (कै)

यजादौ सर्वनामस्थाने पदं न इत्यर्थः । तादृशार्थे हि योगविभागवैयर्थ्यं स्यादिति भावः ॥ ननु यग्रहणं व्यर्थं तदादिसर्वनामस्थानाभावादत आह

यकारादीति ॥ (कै)

नन्वेवं भविधावपि तथैव सम्बन्धः स्यादत आह

भसंज्ञेति ॥ (कै)

मतुपि स्वादिष्वित्यनेनैव सिद्धमत आह

तसाविति ॥ (कै)

---

# यचि भम् ।१।४।१८॥

सम्पूर्णोत्तरपदस्य लोपविधायकाभावादुत्तरपदलोपे इत्यसंगतमत आह

षडङ्गुलीति। (कै)

एवं च स फलित इति भावः॥

जश्त्वं न स्यादिति। (कै)

तत्तत् सपादसप्ताध्यायीस्थकार्य्यप्रवृत्तियोग्यतया पूर्वं न जश्त्वमिति भावः॥ ननु नाचः स्थानिवत्त्वं किं तु तदादेशस्य इत्यत आह

लोपस्येति॥ (कै)

यच पदान्त इति। (कै)

पदचरमावयव इत्यर्थः॥

न त्विति। (कै)

उक्तरीत्या पूर्वमप्रवृत्तेरिदं चिन्त्यम्। तस्मादयमर्थः। षषष्ठाजादीति वचनबोधितद्वितीयादच ऊर्द्धं लोपविधायकवचनप्रवृत्तिप्रामाण्यादन्नभत्वेन स्थानिवत्त्वप्रतिषेध इति॥ भाष्ये

षषष्ठेति। (भा)

एकाक्षरपूर्वपदानाम् (भा)

इत्यत्र षड्भिरेकाचरेति वाच्यमित्यर्थः॥

नभोऽङ्गिर इति (भा)

भाष्ये। अत्र वतिः "तेन तुल्यम्" (५।१।११५) इत्यादिविहितः॥ ननु मनुष्शब्दे शान्तत्वाभावेन रुत्वाप्राप्तेर्भत्वमनर्थकमत आह

सत्यामिति। (कै)

एकेति । (भा)

शब्दद्वयोपात्तैकद्रव्यसम्बन्धत्वादित्यर्थः । यद्यपि तद्व्यापारकालि-कस्वातन्त्र्यमादाय तदापि कारकत्वव्यवहारस्तत्कालिकपारतन्त्र्य-मादाय चाधिकरणत्वव्यवहार इति शक्यते वक्तुं तथापि प्रकारान्तरे-णापि समाधातुमाह

एवं तर्हीति (भा)

भाष्ये ॥ ननु सर्वेषामेकक्रियाभावात् "सामान्यभूते"त्यनुपपन्न-मत आह

सर्वेषामिति ॥ (कै)

साधारणीति । (कै)

प्रधानक्रिया तत्तद्व्यापारजन्यत्वेन सर्वसाधारणीति भावः ॥

---

क्रियानिष्पादकत्वेन च करणत्वादि । सम्प्रदानापादानयोरपि स्वातन्त्र्यमादा-येव ग्राम आगच्छति विप्रो ददातीति प्रयोगाभावेऽपि कारकत्वं बोध्यम् ।

---

तथासौ स्वतन्त्रा । इदानीं परतन्त्रा । एवं तर्हि प्रधानेन समवाये स्थाली परतन्त्रा व्यवाये स्वतन्त्रा । तद्यथा । अमात्यादीनां राज्ञा सह

---

कारकसंज्ञा तु वस्तुस्थित्या विद्यमानमुद्भूतत्वेनाविवक्षितमपि स्वातन्त्र्य-माश्रित्य करणादीनां विधानसामर्थ्यात् प्रवर्त्तते ॥ यत्र च शक्तीनां निमित्त-निमित्तिभावेन युगपद्विवक्षा तत्र संज्ञानां विप्रतिषेध उच्यते । यथा

---

मनुष्यासनोपयोगे कर्मत्वं वचनवशाद् व्यवस्थितमिति चेत् । अपादानेऽपि तर्हि तन्नास्तीत्यवेहि ॥ एकसंज्ञाधिकारेऽनवकाशया बाधात् । अत एवा-त्मानमात्मा हन्तीत्यादौ परया कर्तृसंज्ञया कर्मसंज्ञाबाधनाशङ्क्य अहङ्कारादि-

---

भिनुः सम्बन्धित्वेन माणवको विवक्षितो न तु प्रश्नक्रियां प्रतिनिमित्तत्वे-

## तस्यां कर्त्तृत्वमिति। (कै)

आनकत्वादिति भावः॥

## अवान्तरेति। (कै)

अपादानत्वादिनिमित्तभूतव्यापारविशेषविवक्षायामित्यर्थः॥

अपादानस्यापि क्वचित् कर्त्तृत्वं दर्शयति

## यथा मातेति॥ (कै)

नन्वेवं करणत्वाद्यवस्थायामपि कर्त्तृत्वप्रसङ्गः प्रधानक्रियां प्रति साधनत्वाविशेषादित्यत आह

## कर्तृसंज्ञात्विति॥ (कै)

नन्वेवं कर्तृभिन्नकारकसंज्ञापि तेषां न स्यादत आह

---

तदुक्तं। भाष्ये। पर्य्याप्तं करणाधिकरणकर्मणां कर्त्तृत्वं निदर्शितमपा-

---

समवाये पारतन्त्र्यं व्यवाये स्वातन्त्र्यम्। किं पुनः प्रधानम्। कर्त्ता। कथं पुनर्ज्ञायते कर्त्ता प्रधानमिति। यत् सर्वेषु साधनेषु संनिहितेषु

---

धनुषा विध्यतीति विनायविवक्षया धनुषः साधकतमत्वाभावात् संज्ञा-द्वयप्रसङ्गे परत्वात् करणसंज्ञा। असिश्छिनत्तीति सत्येव साधकतमत्वे स्वातन्त्र्यस्य विवक्षितत्वात् परत्वात् कर्त्तृसंज्ञा। तदा तु तैक्ष्ण्यादीनां

---

विशिष्टात्मभेदमाश्रित्य तत्र तत्र भाष्ये समाहितमिति दिक्॥ नन्वेवं करणं कारकमिति सामानाधिकरण्यं कथम्। अस्वातन्त्र्येण ण्वुल् प्रत्ययायोगात् अन्यथा कर्त्तृसंज्ञापत्तौ करणसंज्ञायाः पर्य्यायापत्तेरिति चेत्। उच्यते।

---

नेति कर्मसंज्ञा न भवति। असति तु कारकाधिकारे तस्यापि स्यात् शेष-त्वया तु षष्ठी अकथिते दुह्यादिपरिगणनात् राज्ञः पुरुष इत्यादौ

कारकसंज्ञात्विति ॥ (कै)

नन्वेवं करणादीनां विप्रतिषेधानुपपत्तिस्तद्व्यापाराणां परस्पर-परिहारेण वर्त्तमानानामेकत्र युगपदसत्त्वादत आह

यत्र च शक्तीनामिति । (कै)

करणत्वादीनामित्यर्थः ॥

परत्वात्करणसंज्ञेति । (कै)

शक्तिद्वयस्यापि विप्रतिषेधसूत्रबलात् तृतीयैव वाचिकेति भावः॥ नन्वेवं काष्ठानि पचन्तीति न स्यादत आह

असिश्छिनत्तीति । (कै)

वस्तुतस्तदा स्वातन्त्र्यमेव विवक्षितमिति न परत्वोपयोगोऽन्यथा करणाकाङ्क्षैव न स्यात् स्वगतैकशक्त्यभिधाने स्वगतसकलशक्तीनाम-

---

दानादीनां कर्त्तृत्वनिदर्शनायेति । वृक्षोऽवधिभावमुपगच्छति विप्रोऽनुमन्यते

---

कर्त्ता प्रवर्त्तयिता भवति ॥ ननु च भोः प्रधानेनापि वै समवाये स्यात्‌या अनेनार्थोऽधिकरणं कारकमिति । न हि कारकमित्यनेनाधिकरणत्व-मुक्तमधिकरणमिति वा कारकत्वम् । उभौ चान्योऽन्यविशेषकौ भवतः ।

---

करणत्वं । तैक्ष्ण्यादीनां तु कर्त्तृत्वविवक्षायामात्मनः करणत्वम् । तैक्ष्ण्या-मेव हि विवक्षावशाद् द्वेधावतिष्ठते । कर्त्तृत्वेन करत्वेन च । वस्तुस्थित्या

---

अधिकारसामर्थ्यात् कारकशब्दोपनीतं स्वातन्त्र्यमवस्थान्तरगतं विज्ञायते । अवस्थान्तरे यत् स्वातन्त्र्यं तत्साधकतमङ्करणमिति यथा कुर्वद्रूपस्याः

---

सावकाशा । यदि तर्हि विशेषणमिदं ध्रुवादीनां न संज्ञा "कारकाद्दत-श्रुतयोरेवाशिषी" त्यादौ यत्र कारक शब्दः संश्रूयते तत्रापादानादीनां

भिहितवत् प्रकाशाच्च कदापि तृतीया तत्रेति कैयटाशयः॥
छेदनस्य नियमेन करणाकाङ्क्षत्वाद्दर्शयति

तदा त्विति॥ (कै)

नन्वेकस्यैव कर्तृत्वकरणत्वे युगपद्विरुद्धे अत आह

विवक्षेति॥ (कै)

नन्वेवं परस्परं बाध्यबाधकत्वं कथमत आह

वस्तुस्थित्या त्विति॥ (कै)

ननु कारकशब्दाल्लोके क्रियाप्रतीतिर्न दृष्टेत्यत आह

सूत्र इति॥ (कै)

सौत्रत्वादेकवचननपुंसकत्वे

---

इत्यादौ स्वस्वव्यापारप्रवृत्तयोः कर्तृत्वं दृश्यते इति। यति दाधातुवाच्यता तु न तद्व्यापारस्यानभिधानादिति बोध्यम्। कारकत्वं चोपलक्षणं सदेव तत्

---

कथम्। एकद्रव्यसमवायित्वात्। तद्यथा। गार्ग्यो देवदत्त इति। न हि गार्ग्य इत्यनेन देवदत्तत्वमुक्तं देवदत्त इत्यनेन वा गार्ग्यत्वम्। उभौ चान्यो-

---

न्यस्यैक एवार्थात्मेति कर्तृत्वं करणत्वस्य बाधकमुच्यते। अथ वेति। भा। क्रियात्र सूत्रे कारकशब्देनोच्यते। सा हि कर्त्रादीनि विशिष्टव्यपदेशयुक्तानि

---

काश्यां वसन्तीत्यादौ। कर्तुस्तु साम्प्रतिकं स्वातन्त्र्यम्। तत्र कर्मसंज्ञाया-मुपयुज्यते इति। यद्वा। कारकशब्दः क्रियापरः करोति कर्तृकर्मादि-

---

वक्ष्यमाणानामेव ग्रहणमिष्यते तत्र सिध्यति संज्ञा पक्षे तु न दोषः। संज्ञाश्चावर्तमाना संज्ञिनं प्रत्याययति। स्यादेतत्। प्रदेशेष्वपि क्रिया

विषत्वेनेति । (कै)

विषयत्वं च जनकत्वमेव वस्तु वाक्यार्थः ॥ भाष्ये

एवं च कृत्वेति । (भा)

पूर्वमते हि प्रथमोचितेति भावः ॥ ननु मास्तु संज्ञापक्षः कारकपदस्य क्रियापरत्वं च निर्द्धारणसप्तम्यानुपदोक्तार्थलाभादत आह

इतरथा हीति ॥ (भा)

कारकेष्वितीति । (भा)

"मिदचोऽन्त्यात्" ( १ । १ । ४७ ) इत्यादिस्तु सौत्रः प्रयोगः । बहुवचनस्थाने एकवचनस्यौकारात् तत्रागत्या तथात्वौकार इति भावस्तदाह

तत्संज्ञोपयोगीति स्पष्टं चेदं सर्वं भाष्ये सूत्रवृत्त्याम् । ये तु क्रियान्वयित्वं कारकत्वमिति वदन्ति । तेषां कर्तृसमवायेऽपि करणं कारकमित्यादेरनुपऽन्यविशेषकौ भवत एकद्रव्यसमवायित्वात् ॥ एवं तर्हि सामान्यभूताक्रिया वर्तते तस्या निर्वर्त्तकं कारकम् ॥ अथवा यावद् ब्रूयात् क्रियायामिति करोति । विषयत्वेन चायमधिकारः क्रियायां विषये यद् ध्रुवमित्यादि वस्तु सम्पद्यते ॥ एवं च कृत्वेति । भा । निर्द्धारणसप्तम्यां हि कारकेष्विति व्यपदेशानिति श्रुतत्वात् । तथा च अपादानादिसंज्ञाविधौ क्रियायामित्यस्योपस्थित्या क्रियान्वयिनामेव तत्तत्संज्ञाः स्युः । "कारकाद्दत्तश्रुतयोः" निमित्तपर्य्यायस्य कारकशब्दस्योपादानं तच्च निमित्तमपादानाद्येवेति । तदसत् । नटस्य शृणोतीत्यादौ कारकशेषस्य सम्भवादित्यत आह "कारक-

निर्द्धारणस्येति । (कै)

कारकाणां मध्ये यद्ध्रुवं तदपादानमित्यादिक्रमेण हि तदर्थः ।

[1]"द्वन्द्वः सामासिकस्य च" (भगवद्गी—। ३३। अ १० ) इति तु आर्षं। लोके तु निर्द्धारणस्थले एकवचनप्रयोगो न साधुरिति बोध्यम् ॥ नन्वेवं "कारकाद्दत्त" ( ६ । २ । १४८ ) इत्यादौ क्रियाजनकभावस्य ग्रहणं स्यादत आह

कारकाद्दत्तेति ॥ (कै)

---

१ अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षरः कालो धाताऽहं विश्वतो मुखः ॥ ३३ ।
अ १० ॥

---

पत्यभावात् तत्र तदा प्रश्न समाधानपरभाष्यासङ्गतिः । तदर्थं कारकशब्दस्य साधुत्वानुपपत्तिश्चेति बोध्यम् ॥

---

तावत् कारक इति । एवं च कृत्वा निर्देश उपपन्नो भवति कारक इति । इतरथा हि कारकेषु इति ब्रूयात् ॥

---

वाच्यम् । निर्द्धारणस्यानेकाश्रयत्वात् । "कारकाद्दत्तश्रुतयोः" इत्यादौ तु कारकशब्दस्य स्वरितत्वात् तदधिकारोपात्तानामपादानादीनां ग्रहणम् ॥

---

( ६ । २ । १४८ ) इत्यादौ तु कारकशब्दः स्वर्यते तेनैतदधिकारोक्तं कर्त्रादिषट्कमेव गृह्यत इति ॥

---

संशब्दनेषु चेति" कारकग्रहणं प्रदेशेषु स्वर्यते स्वरितेनाधिकारावगतिर्भवतीति भावः ॥

# ध्रुवमपायेऽपादानम् । १ । ४ । २४ ॥

अपायोऽत्र विभागजनकसंयोगानुकूलोऽवधिसाकाङ्क्षो गतिविशेषः
"गतिर्विनात्वऽवधिना नापाय इति कथ्यते"
इति हर्युक्तेः ॥ नन्वध्रुवनिवृत्त्यर्थं तत्स्यादत आह

---

ध्रुवमपायेऽपादानम् । १ । ४ । २४ ॥

पञ्चम्या अपादानत्वप्रकारकशक्तिमान् अर्थः । "अपादाने पञ्चमी" ( २ । ३ । २८ ) इति सूत्रात् । सा शक्तिश्च प्रकृतधातूपात्तविभागजनकव्यापारानाश्रयत्वे सति प्रकृतधात्वर्थविभागाश्रयो यस्तद्वृत्तिः । "ध्रुवमपायेऽपादानम्"

---

ध्रुवमपायेऽपादानम् । १ । ४ । २४ ॥

ध्रुवमिति किमर्थम् । ग्रामादागच्छति शकटेन ( १ । ४ । ४२ ) । नैतदस्ति ।

---

ध्रुवमपायेऽपादानम् । १ । ४ । २४ ॥

ध्रुवग्रहणमिति । भा । अध्रुवस्य परत्वात् संज्ञान्तरं प्रवर्तिष्यत इति प्रश्नः । शकटेनेति । भा । अपाये शकटस्यापि साधनत्वादपादानसंज्ञा

---

ध्रुवमपायेऽपादानम् । १ । २ । २४ ॥

अपायो विश्लेषो विभागस्तद्धेतुत्वोपहितो गतिविशेषस्तस्मिन् विवक्षितेऽस्मिन् साध्ये ऽवधिभूतमपादानसंज्ञं स्यात् । वृक्षात्पतति । ध्रुवमित्यत्र ध्रुगतिस्थैर्ययोरित्यस्मात् कुटादेः पचाद्यच् । ये तु ध्रुवस्थैर्ये इति पठन्ति तेषाम्

---

ध्रुवमपायेऽपादानम् । १ । ४ । २४ ॥

ध्रुवमिति । ध्रुगतिस्थैर्ययोः इत्यस्मात् कुटादेः पचाद्यचि रूपम् ।

अध्रुवस्येति ॥ (कै)

ननु शकटस्य विभागाश्रयत्वाभावात् कथं प्राप्तिरत आह

अपाये इति । (कै)

अपाये यत् साधनमित्येव शब्दमर्यादया लभ्यते न तदुक्तमिति भावः ॥ भाष्ये

ग्रामादागच्छन्निति । (भा)

ग्रामात्काग्नीमागच्छन् वस्त्राधानाय मध्ये कंसपात्र्यामोदनं भुङ्क्ते इत्यर्थः ॥

---

इति सूत्रात् । कर्त्तृवारणाय सप्तम्यन्तम् । अयमेव सूत्रे ध्रुवपदार्थः । विभागश्च न वास्तवसम्बन्धमूलक एव किन्तु बुद्धिकल्पितसम्बन्धकल्पितोऽपि । अत एव जुगुप्सापूर्वकनिवृत्तिलक्षणतामाश्रित्य जुगुप्साविरामेत्यादिप्रत्या-

---

करणसंज्ञाच बाधिका भविष्यति (१ । ४ । २४) ॥ इदं तर्हि । ग्रामादागच्छन्

---

प्राप्नोति ॥ करणसंज्ञेति । भा । यथा धनुषा विध्यतीति क्रियमाणेऽपि ध्रुवग्रहणे परत्वात् करणसंज्ञा भवति एवमक्रियमाणेऽपि शकटस्य भविष्यतीत्यर्थः ॥ इदं तर्हीति । भा । ननु कंसपात्री साधनमेवागमने न भवति भुजिक्रियायां तु साधनं ध्रुवा च तत्र परत्वादधिकरण-

---

"इगुपधलक्षणः" कः प्रत्ययः । ध्रुवतीति ध्रुवं स्थिरम् । एकरूपमिति यावत् । ध्रुवमस्य शीलमिति यथा । तथा च अपाये साध्ये यदेकरूपमिति उक्ते प्रकृतधातूपात्तगत्यनाविष्टत्वे सति तदुपयोगीति लभ्यते । तत्त्वार्थादवधिभूतमेव पर्य्यवस्यति । तेन धावतोऽश्वात् पततीत्यादौ क्रियाया विशिष्टस्याप्य-

---

ये तु ध्रुव गतिस्थैर्य्ययोः इति पठन्ति तेषाम् "इगुपधलक्षणः" कः प्रत्ययः । अपायो विश्लेषो विभागजनक हेतुभूतस्य गतिविशेषोऽवधित्वायेक्षणश्च विभा-

नन्विति। (के)

न च भोजनद्वारा गमनसाधनत्वम्। भोजनस्य प्राधान्येन गमनाङ्गत्वाभावात्। एवं च पुनरच कथनमनुचितमिति भावः॥

वस्तुस्थित्येति। (कै)

भोजनस्यागमनोद्देश्यकत्वादार्थिकं प्राधान्यमिति भावः॥

---

स्थानं भाष्योक्तं संगच्छते। सूत्रेऽर्थोद्देश्यसंयोगानुकूलव्यापाररूपं पातमात्रं तु नापायः। वृक्षमनवहत्यपि पर्णं भूमिं स्पृशति वृक्षात् पर्णं पततीत्यप्रयोगात्।

"गतिं विना त्ववधिना नापाय इति कथ्यते"

इति हर्युक्तेश्च। अवध्यन्वययोग्यविभागं विनेति तदर्थः। तत्र मानमुक्तम्। वृक्षस्य पर्णं पततीत्येवं भाष्ये निदर्शितमिति। तत्र हि वृक्षः

---

कांस्यपात्र्यां ( १ । ४ । ४५ ) पाणिनौदनं भुङ्क्ते इति। अत्राप्यधिकरणसंज्ञा

---

संज्ञेति कडारसूत्रे उक्तम्। एवं तर्हि वस्तुस्थित्यागमनं प्रधानं तदङ्गं तु भोजनम्। शब्दात्तु विपरीतो गुणप्रधानभावः प्रतीयते। तदुक्तम् हरिणा—

---

भेदस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वस्य विवक्ष्यते। तथा परस्परस्मान्मेषा-वपसरतः इत्यत्र सृधातुना गतिद्वयस्यापि उपादानादेकमेवनिष्ठाकृतिं प्रत्य-परस्यापादानत्वं सिध्यति। उक्तञ्च हरिणा प्रकीर्णकाण्डे

"अपाये यदुदासीनं चलं वा यदि वा ऽचलम्।

ध्रुवमेवातदावेशात्तदपादानमुच्यते"॥

---

गत्या विशिष्टत्वात् न केवलमपायस्यैव तेन युक्तः किं तर्हि यतोऽपैति सोऽपि युक्त एव इत्याह "ध्रुवं यदपाययुक्तम्" इति। कथं पुनः वाक्यमेवनिर्देशोऽपा-यापयुक्तमिति प्रतिपद्येमहीत्यत आह "अपाये साध्य" इति। साध्यत्वेन

[1]जपंश्च क्रमणं कुरु ( हरिः )

इति पाठः ॥

अधीयंश्च क्रमणम् ( हरिः )

इति पाठे "इङ्धार्य्योः शत्रकृच्छ्रिणि" (३। २। १३०) इति शता इत्यन्ये ॥

१ "जपश्चक्रमणं कुरु" इति क पुस्तके ॥

पर्णविशेषणमिति अपायस्याविवक्षणात् षष्ठी भाष्ये उक्तेति हेलाराजः ॥ धावतोऽश्वात् पतति कुड्यात् पततोऽश्वात् पतति इत्यादौ पततीत्युपात्तक्रियानाश्रयत्वेन तां प्रत्यश्वस्यापादानत्वमक्षतम् । तदुक्तं हरिणा—

"अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेवातदावेशात् त इति ॥

ाधिका भविष्यति । इदं तर्हि । वृक्षस्य पर्णं पतति । कुड्यस्य पिण्डः पततीति ।

"चङ्क्रम्यमाणो धीष्वात्र जपंश्चङ्क्रमणं कुरु ।
तादर्थ्यस्याविशेषेऽपि शब्दाद् भेदः प्रतीयते"

इति । तत्र कंसपात्रो भुनेः साधनत्वात् तद्द्वारेणाशनस्यापि भवत्येव साधनम् ॥ अन्नामोति । भा । शब्देन भोजनस्यैव प्राधान्यं प्रतीयते

"पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते" ॥
"मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्"

विषयत्वाद् सामर्थ्यलभ्यो योग इति भावः । ध्रुवमित्येकरूपमुच्यते । अध्रुवस्य ध्रौव्यं ध्रुवस्य क्षयमिति । इह यदापायेन विशेष्यतेऽपाये

तादर्थ्यस्य। (कै)

चङ्क्रमणार्थं इत्यस्य हि प्रेरकस्य गवादिरक्षणाय चङ्क्रमणमात्रमपेक्षितमिति तस्यैवार्थं प्राधान्यम् ॥ नन्वेवमपि भुजिसाधनकंसपात्र्याः कथमागमनसाधनत्वमत आह

तत्रेति। (कै)

कंसपात्राधिकरणकभोजनस्य गमनोद्देशेन प्रवृत्तेति भावः ॥

शब्देनेति। (कै)

शब्दसंस्कारे तस्यैव प्रत्यासत्त्या ग्रहीतुमुचितत्वादिति भावः ॥

---

परे तु एवं सति धावतः पतति इत्यादावपादानत्वकथमित्याशङ्का-ध्रौव्यस्याविवक्षितत्वात् सतोऽप्यविवक्षा भवतीति समाधानपरभाष्याऽसंगतिः। पतधात्वर्थव्यापाराश्रयत्वरूपस्य त्वदुक्ताध्रुवत्वस्यात्रासत्वेन सतोऽध्रौव्यस्याविवक्षेत्यस्यासंगतेः। तस्मादवधिभावोपगमातिरिक्तावधित्वोपयोगि-

---

जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्। वा। जुगुप्साविरामप्रमादार्था-

---

इति तत्प्रयुक्तयैव संज्ञया भाव्यम्। यथा भोक्तुं ग्राममभिविशत इति प्रधानक्रियापेक्षया ग्रामस्य कर्मसंज्ञा भवति न तु भुज्यपेक्षया अधिकरणसंज्ञा ॥ वृक्षस्येति। भा। अश्लेषापाय इति भावः ॥ नन्वत्र कारकत्वा-

---

इति ॥ अवदावेशादिति अमायानावेशादित्यर्थः ॥

"गतिर्विनात्ववधिना नापाय इति कथ्यते"

इति तत्रैवोक्तेरवधिनिरपेक्षस्य चलनस्यापायत्वाभावादिति भावः ॥ पर्वतात् पततोऽश्वात् पततीत्यत्र तु पर्वतावधिकपतनाश्रयो योऽश्वस्तदवधिकं

---

यद्ध्रुवमिति न तु सार्वत्रिकम्। तथापाये ध्रुवमुच्यते। यदपायेनाविश्यते उपयुज्यते चापाये तथार्थादवधिभूतमित्याह "यदवधिभूतम्" इति ॥ एवं

[1]सत्येवावधाविति । (कै)

विभागअसंयोगानुकूलव्यापार एवापाय इह तु संयोगानुकूलव्यापार एवार्थ इति भावः ॥

सुज्ञानत्वादिति । (कै)

एवं च संज्ञिनिर्देशस्य कारकाधिकारेण सिद्धत्वाद् ध्रुवग्रहणं चिन्त्यप्रयोजनमिति भावः ॥

---

१ "सत्येव हि अवधाविति" इति उपालब्धकैयटपुस्तके ॥

---

व्यापाराना श्रयत्वे सतीति वक्तव्यम् । अयमेव ध्रुवपदार्थः । अपाये गतिविशेषे सत्युक्तध्रुवत्ववदपादानमिति सूत्रार्थः ॥ प्रासादेरवधिभावोपयोगित्वाभिमानेन प्रश्न इष्टात् पर्णमित्यादौ तदभावान्न तस्य तदुपयोगिता प्रश्नतें विद्यमानस्यापि तस्य तत्त्वेन विवक्षितत्वान्न तदुपयोगित्वं तस्य इत्युत्तर-

---

नामुपसंख्यानं कर्तव्यम् ॥ जुगुप्सा । अधर्माज्जुगुप्सते । अधर्माद् बीभत्सते ॥

---

भावात् संज्ञा न भविष्यति अपायाभावाच्च । सत्येव ह्यवधावपायो भवतीति पूर्वसूत्रे उक्तत्वात् । तत्र केचिदाहुः । सुज्ञानत्वात् पूर्वसूत्रे उक्तत्वाच्च भाष्यकारेणायमर्थो नोक्तः । अन्ये त्वाहुः । सतीह ध्रुवग्रहणे विशिष्टोपायो

---

देवदत्ताश्रयं पतनमर्थः । पञ्चमीत्ववधौ शक्ता । तत्राभेदेन संसर्गेण प्रकृत्यर्थो विशेषणम् । प्रत्ययार्थस्तु क्रियायां विशेषणम् । कारकाणां क्रिययैव समन्वयात् । अन्यथाऽसाधुत्वात् । क्रियान्वये सत्येव हि कारकसंज्ञा तत्पूर्विका विशेषसंज्ञाश्च स्थिताः ॥ अत एवाहुः

---

च सार्थाद् हीनो रथात् पतितः धावतः पतितः इत्यादौ सत्यपि क्रियासापेक्षत्वे तत्सद्भावनादिक्रियानपेक्षत्वात्तन्निमित्तमपायं प्रत्यौदासीन्यादस्त्येव ध्रुवत्वमिति भवत्येव संज्ञा । उक्तञ्च

सतीहेति । (कै)

ध्रुवत्वेन अवधित्वेन विवक्षित इत्यर्थो भवतीति भावः ॥ इह तु अवधित्वेन विवक्षा नावधित्वेनेति तात्पर्य्यम् ॥

कारकाधिकारानपेक्षयेति । (कै)

वृक्षस्य पर्णान्वयेन क्रियाजनकत्वाभावादिति भावः । वस्तुतः पर्णसम्बन्धेऽपि वृक्षस्य पातजनकत्वं वास्तवमस्त्येव इति तदपेक्षाया-

---

मित्याहुः ॥ न च आद्यपक्षे परस्परस्मान्मेषावपसरत इत्यत्र दोष इति वाच्यम् । तत्र मेषपदोपात्तयोरेव क्रियाश्रयत्वं परस्परपदोपात्तयोर्विभागाश्रयत्वमेव इत्यदोषात् । अत एव देवदत्तयज्ञदत्तावन्योऽन्यमाश्लिष्यत इत्यादौ तयोः कर्मत्वसिद्धिः । अन्यथा परत्वात् कर्तृत्वमेव स्यात् ।

---

विराम । धर्माद्विरमति । धर्मान्निवर्त्तते ॥ प्रमाद । धर्मात् प्रमाद्यति । धर्मान्मुह्यति ॥ इह चोपसंख्यानं कर्त्तव्यम् । सांकाश्यकेभ्यः पाटलिपुत्रका

---

लभ्यते असति तु तस्मिन् पातमात्रस्य लोकेऽपायत्वेन प्रसिद्धत्वात् कारकाधिकारानपेक्षया च प्रत्युदाहरणमुपन्यस्तम् ॥ जुगुप्सेति । भय । संश्लेषपूर्वको विश्लेषोऽपायः स चात्र नास्ति । बुद्धिकल्पितस्तु गौण इति भावः ।

---

"नाशो द्विधैव सम्बन्धः सर्ववाक्येष्ववस्थितः ।
सामानाधिकरण्येन यद्वा वापि क्वचिद् भवेद्"

इति ॥ सामानाधिकरण्येनेति नीलो घट इत्याद्यभिप्रायम् । नीलं घटमानय इत्यादावप्यन्तरङ्गक्रियान्वयानन्तरमेकक्रियान्वयित्वात्‌तानां पार्थिक्य-

---

"अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेव तदावेशात्तदपादानमुच्यते"

इति ॥ पततः पतितः इत्यत्रापि परगतपातापेक्षया ध्रौव्यमेव ॥ तथाहि

मपि न दोषः ॥ न च "कारक" इति सूत्रे तद्भावव्यर्थत्वेन इद-
माशङ्क्य भावापायौ विवक्षित इत्यादिभाष्यादपायपदव्यावर्त्यत्वमुक्तं
तत् कथमत्र ध्रुवपदव्यावर्त्यत्वोक्तिर्ध्रुवपदेनाचलार्थकेन तद्भावृत्त्य-
सम्भवस्येति वाच्यम् ।

## ध्रुव इति ॥ (कै)

---

"आत्मानमात्मना हन्ती" त्यादौ अन्तः करणाद्युपाधिभेदवत् प्रकृते शब्दो-
ह्यपोपाधिभेदेन भेदः शब्दालिङ्गितार्थस्यैव भानात् । स्पष्टाचेयं रीतिः
"कर्मवत् कर्मणा" ( ३ । १ । ८७ ) इति सूत्रे भाष्ये ॥

हरिणा तु—

"उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मके ।
विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते"

---

अभिरूपतरा ति तत्तर्हीदं वक्तव्यम् । न वक्तव्यम् । इह तावद् धर्माद्-
जुगुप्सते अधर्माद् बीभत्सत इति । य एष मनुष्यः प्रेक्षा पूर्वकारी भवति स

---

कारकशेषत्वाचात्र षष्ठी प्राप्नोति । यथा नटस्य शृणोतीति । साङ्काश्यकेभ्य
इति । भा । पञ्चमी विभक्ते इत्यनपेक्ष्यवचनम् । अत्र "यतश्च निर्धारणम्"
इति षष्ठीसप्तम्यौ प्राप्नुतः । न वक्तव्यमिति । भा । "साधकतमङ्करणम्"

---

वाधोऽभिप्रायश्च । षष्ठेति । अकारकविभक्तेरपवादत्वं हरये नम इति यथा ।
क्वचिदिति । अकारकविभक्तेरपि । नटस्य शृणोतीत्यादौ क्रियान्वयदर्शनादिति
भावः । एतेन भूतले घटो न इत्यत्र भूतलाधेयत्वाभावो घटे भूतलाधेयत्वं वा

---

पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ ।
तस्य त्वश्वस्य पतने कुड्यादिर्ध्रुव उच्यते ॥

इह तु परस्परस्मात् मेषावपसर्पत इति

किमर्थम् (भा)

इत्यस्य

ध्रुवमपाये (भा)

इति किमर्थमित्याशयात्। तत्र सूत्रोक्तरीत्यैव चास्य व्यावृत्तिः। अपायजनकं यद् ध्रुवमचलं तदपादानमिति सूत्रार्थः। ध्रुवत्वं चावधित्वोपयोगि चेष्टानाश्रयत्वं तेनास्यावधित्वोपगमातिरिक्तस्वव्यापाराभावो ध्वन्यते। करणादौ तु तत्त्वोपगमातिरिक्तोऽपि स्वव्यापारोऽस्तीत्याहुः॥

---

इति तत्तद् व्यक्तित्वेन विभागस्य बुद्ध्या प्रविभागे तत्तद्विभागानुकूलक्रियावत्त्वस्यापरत्राभावादुभयोरपि ध्रुवत्वमित्यर्थः॥

तदेवोक्तम्—

"मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्"

---

पश्यति दुःखोऽधर्मो नानेन कृत्यमस्तीति। स बुद्ध्या संप्राप्य निवर्त्तते। तत्र

---

इति तमग्रहणेन "स्वरितेनाधिकार" इति अधिकः कारोऽधिकार इति अस्यार्थस्याश्रयणेन च बुद्धिस्थवस्थितापायाश्रयाऽपादानसंज्ञा प्रवर्त्तते।

---

घटाभावे विघ्नेषयमिति व्याचक्षाणा नैयायिकाः परास्ताः। उभयथापि क्रियानन्वये कारकविभक्तेरसाधुत्वात्। अर्थाभावेऽव्ययीभावापत्तेश्च। तस्य नित्यसमासत्वात्॥ ननु अस्मदुक्तोऽपि बोधोऽस्मद्दर्शनव्युत्पन्नानामनुभवसाक्षिक इति चेत् सत्यम्। न हि वयं बोध एव नोदेतीति ब्रूमः। सर्वे

---

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्॥
गतिर्विनात्ववधिना नापाय इति कथ्यते॥

जुगुप्सा। (भा)

निन्दा ॥

गौण इति। (कै)

अपायत्वेनाप्रसिद्ध इत्यर्थः ॥

तमग्रहणेनेति। (कै)

कारकाधिकारादेव साधकत्वे लब्धे साधकग्रहणेनैव प्रकर्षे लब्धे तमग्रहणं व्यर्थं सद्प्रसिद्धार्थकत्वेन गौणस्यापि ग्रहणं ज्ञापयतीत्यर्थः ॥ युक्तमन्तरमप्याह

---

इति॥ अत्र वदन्ति वस्तुतस्तत्तन्निष्ठयोर्भेदेऽपि स्थधातुना निवृत्तभेदस्यैवोपादानाद् उभयोरपि तत् क्रियाश्रयत्वेन परत्वात् कर्तृत्वापत्तेरत एव एकशेष (१ । २ । ६४) सूत्रे भाष्ये उक्तं "न वै तिङन्तान्येकशेषं प्रयोजयन्ति क्रियाया एकत्वाद्" इति। अपसरणं विभागपूर्वकं एकतो गमनमि-

---

"ध्रुवमपाये ऽपादानम्" इत्येव सिद्धम् ॥ इह च धर्मादिरमति धर्मान्निवर्तते

---

अधर्माज्जुगुप्सत इति। भा। जुगुप्सादयो निवृत्त्यङ्गे जुगुप्सादौ वर्तन्ते॥ संभिन्नबुद्धिरिति। भा। धर्माधर्मयोरेकाकारबुद्धिर्नास्तिक इत्यर्थः॥

---

सर्वार्थबोधनसमर्था इत्यभ्युपगमात्। किन्तु तस्मिन्नर्थेऽसाधुताम्। तथा च "सिद्धे शब्दार्थसम्बन्धे" इति वार्त्तिकं व्याचक्षाणा भाष्यकारा आहुः॥

समानायामर्थावगतौ साधुभिश्चासाधुभिश्च गम्यागम्येतिवन्नियमः क्रियत इति। उक्तञ्च

---

जुगुप्सेति। प्रश्लेषपूर्वको विश्लेषोऽपायः स चात्र नास्ति बुद्धिपरिकल्पितस्तु गौणः। न च मुख्ये सम्भवति गौणस्य ग्रहणं युक्तम्। अत एव

स्वरितेनाधी-(कै)

त्यादि ॥ ननु प्रयोक्तृभिः साम्याभावाद्यत्नैः साम्यं गतवानित्य-नुपपन्नमत आह

तैरिति ॥ (कै)

नन्वत्र क्रियाभावात् कारकत्वाभावेन कथमपादानत्वमत आह ।

त्रिविधं चेति ॥ (कै)

---

त्यत्र विस्तरः ॥ धात्वर्थे प्रकृतत्वं च न शब्दोपात्तत्वं किं तु विवक्षितत्व-मात्रमत एव धनुषा विध्यतीत्यत्रापादानसंज्ञां बाधित्वा करणसंज्ञा इति भाष्यं संगच्छते । शरनिःसरणं प्रत्यवधिभावोपगमेनैव व्यधेन करणताभ्युप-गमेनोभयोरपि निमित्तनिमित्तिभावेन स्थित्या युगपद्विवक्षायां विप्रतिषे-धोपपत्तेः । एवमन्यत्रापि बोध्यम् । कांसपात्र्यामन्नं भुङ्क्ते इत्यस्य तत्र स्थित-

---

इति धर्मात् प्रमाद्यति धर्मान् मुह्यतीति य एष मनुष्यः संभिन्नबुद्धि-

---

यत्नैरिति । भा । तैः सां काशकैः पाटलिपुत्रकाणां समग्रुणत्वधाः साम्यमवगतवान् स प्रकर्षापेक्षया पुनः पृथक् कृत्वा वाक्यं प्रयुङ्क्ते इत्यर्थः । त्रिविधं चेदमपादानम् । निर्दिष्टविषयमुपात्तविषयमपेक्षितक्रियां चेति ।

---

"भेदाभेदकसम्बन्धोपाधिभेदनियन्त्रितम् ।
साधुत्वं तदभावेऽपि बोधो नेह निवार्यते"

इति ॥ एवं च कस्माद् वाक्यात् कीदृग् बोध इति प्रश्ने यो यथा व्युत्पन्नस्तस्य तादृगेवेति स्थितिः । कीदृशे बोधे साधुत्वं कुत्र नेति परं विषय

---

"भीत्रार्थानाम्" इत्यादेरारम्भः इति वाक्यकारस्याभिप्रायः । अत्र च कारकशेषत्वात् षष्ठी प्राप्नोति नटस्य शृणोतीति यथा । प्रत्याख्यानं तु "साधकतमम्" इति तमब्ग्रहणां लिङ्गम् । कारकप्रकरणे यथासम्भवमेव

**केवलं प्रतीयत इति । (कै)**

"प्रविश पिण्डीम्" इत्यादाविवोपात्तपदेनेत्यर्थः ॥

**यथेति । (कै)**

अत्र विभक्ता इति क्रिया गम्यत इत्याह

**गतियुक्तेष्विति ॥ (भा)**

त्रासादीनामवधित्वोपयोगितां मन्यमानस्य प्रश्नः । उत्तराशयस्तु न तदवधित्वोपयोग्यस्मात् पतितो वृक्षात् पतित इत्यादावभावात् । अत्र विद्यमानमपि तदविवक्षितत्वान्नावधित्वोपयोगितया विवक्षितं

---

मन्नं तत उद्धृत्य भुङ्क्ते इत्यर्थ इति तत्राप्युभयविवक्षा अपादानत्वप्रयोजकायाश्रय एवावधिरित्युच्यते ॥ यत्तु विभागः पञ्चम्यर्थः । आश्रयत्वं प्रकृतिप्रत्ययार्थयोः संसर्गः । विभागस्य च जन्यजनकभावेन धात्वर्थेऽन्वयः ॥ यद्वा विभाग आश्रयश्च पञ्चम्यर्थ इति । तन्न । वृक्षापादानकेत्येवं बोधानुभवात् । वृक्षा-

---

र्भवति स पश्यति नेदं किञ्चिद् धर्मो नाम नैनं करिष्यामीति । स बुद्ध्या

---

तत्र निर्दिष्टविषयम् । यत्र धातुनाऽपायलक्षणो विषयो निर्दिष्टः । यथा ग्रामादागच्छतीति । उपात्तविषयम् । यत्र धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह यथा बलाहकाद्विद्योतत इति । निःसरणाङ्गे द्योतनेऽत्र द्युतिर्वर्त्तते । यथा

---

इति तत्त्वम् । एतेन घटः कर्मत्वमानयनं कृतिरित्यादीनां स्वरूपयोग्यतेति परास्तम् । तथा व्युत्पन्नस्य बोधानुभवात् । अन्यथा व्युत्पन्नस्य व्युत्पत्तिरूप-सहकारिविरहात् कार्य्यानुदयेऽपि स्वरूपयोग्यतानपायात् । एतेन प्रकृ-त्यर्थप्रकारको बोधो यत्र विशेष्यतया तत्र विषयतया प्रत्ययजन्य इत्यादि

---

साधकतमत्वमिति । तदिह अधर्माज्जुगुप्सते इत्यादौ जुगुप्सादिपूर्विकायां निवृत्तौ जुगुप्सादीनां वृत्तिरिति स्थिते य एष मनुष्यः प्रेक्षापूर्वकारी भवति

किं तन्मात्राद्विकमेवेति तत्त्वम् ॥ ननु त्रासो नाम मनोधर्मो न हि तावता पिण्डस्य ध्रुवत्वमपैतीत्यत आह

चासपूर्वके इति ॥ (कै)

ननु त्रासक्रियान्वयात् पूर्वमेव पतनक्रियासम्बन्धे ध्रुवत्वमस्त्येव इत्यत आह

यस्तत्रास्थः (कै)

इत्यादि ॥

---

द्विभजते इत्यादौ विभागस्य बोधात्तत्त्वापत्तेश्च । तत्रापादानस्यैव पञ्चम्यर्थत्वे किमर्धजरतीयेन । आद्ये प्रकृत्यर्थविभक्त्यर्थयोस्तत् त्वमस्याभेदान्वयस्य व्यानापत्तिश्च ॥ वृक्षात् पर्णं पतति । पतेर्विभागजन्यः संयोगार्थः । तत्र विभागे पञ्चम्यर्थौ विशेषणं प्रकृत्यर्थस्य प्रत्ययार्थे । वृक्षरूपापादानकविभागेत्यादिरीत्या बोधः । वस्तुतोऽपादानवृक्षोऽयं पर्णकर्तृकं पतनमिति बोधः ॥

---

संप्राप्य निवर्तते । तत्र "ध्रुवमपाये ऽपादानम्" इत्येव सिद्धम् ॥ इह च

---

कुशूलात् पचतीत्यादौ अपादानाङ्गे पके पचिर्वर्तते ॥ अपेक्षितक्रियम् । यत्र क्रियावाचि पदं न श्रूयते केवलं क्रिया प्रतीयते । यथा साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति । गतियुक्तेष्विति । भा । अचलं ध्रुवमेक-

---

कार्यकारणभावं कल्पयन्तोऽप्यपास्ताः । विपरीतच्युत्यादिते व्यभिचारस्योद्भवात् । सिद्धान्ते तु घटः कर्मत्वमित्याद्यसाध्वेव । तथा हि । अभिहिते प्रथमेति वार्तिकं तत्कथं घटः कर्मत्वमिति प्रथमा । घटानयनयोरानयनकृतो प्रति कर्मतया "कर्तृकर्मणोः" इति षष्ठी प्रसक्ताचेति दिक् ॥

---

स पश्यति दुःखहेतुरधर्मो नैनं करिष्यामीति स बुद्ध्या तं प्राप्नोति प्राप्य च ततो निवर्तते । धर्मात् प्रमाद्यति धर्मान् मुह्यतीति । य एष नास्तिकः

एकरूपमिति । (कै)

ध्रुवमस्य शीलमित्यादिदर्शनात् ध्रुवस्थैर्ये इत्यादिधात्वर्थानुसारा-च्चेति भावः ॥

अपायविषयमिति । (कै)

प्रत्यासत्तेरिति भावः । विभागजसंयोगानुकूलो गतिविशेषो ह्यपायः स च प्रधान एव गृह्यते युक्तत्वात् स चात्र प्रत्युपात्तः । न च तदाश्रयोऽस्त्यस्तथात्वे कर्त्तृत्वापत्तिरितिभावः ॥ .

---

वृक्षात् पर्णं भूमिं पतति अत्र विभागजन्यसंयोगानुकूलव्यापारो धात्वर्थः । विभागस्य फलतावच्छेदकः ॥ वृक्षं त्यजतीत्यादौ विभागानुकूलो व्यापारोऽर्थ इति कर्मत्वमेव । वृक्षात् फलं त्यजति इत्यादौ विभागजन्यसंयोगानुकूल-व्यापारोऽर्थः ॥ स्पन्देर्विभागोऽर्थ इति वृक्षे स्पन्दते इत्येव । चलतेरासना-सनाच्चलित इति प्रयोगादस्यैव विभागार्थत्वम् । वृक्षाद्विभजते इत्यादौ

---

सां काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति यत्तैः साम्यं गतवान्

---

रूपं च इति परिस्पन्दे ध्रुवता नास्तीति मन्यते ॥ अर्थात् अस्तादिति । भा । ज्ञानपूर्वके परिस्पन्देऽनेकार्थत्वाद् धातूनां नत्सिर्वर्त्तते अस्तस्याश्वः पातस्य निमित्तमिति पूर्वमश्वस्य अस्तत्वेन सम्बन्धः पश्चात् पतित इत्यनेनेति ध्रुव-

---

"निर्दिष्टविषयं किं चिदुपात्तविषयं तथा ।
अपेक्षितक्रियां चेति त्रिधापादानमुच्यते" ॥

यत्र साक्षाद् धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम् । अश्वात् पततीति यथा । यत्र तु धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम् ।

---

पुरुषः स पश्यति नानेन धर्मेण किञ्चिदाप्यते नैनं करिष्यामीति स बुद्ध्या तं प्राप्नोति प्राप्य च ततो निवर्त्तते तत्र ध्रुवमपाय इत्येव सिद्धमिति । तच्चैतत्

अनवच्छिन्नमिति । (कै)

अनिरूपितमित्यर्थः ॥

अपाये यदनाविष्टमिति । (कै)

अपाये सति प्रकृतधातूपात्तया क्रियया यदनाविष्टमित्यर्थः । एवं प्रकृतधातूपात्तगत्यनाविष्टत्वमेव ध्रुवत्वमिति तात्पर्य्यम् ॥ हरिरप्याह

---

विभागजन्यपूर्वदेशसंयोगनाशोऽर्थः । बलाहकाद्विद्योतते विद्युदित्यत्र विद्योततेर्विभागजन्यसंयोगानुकूलक्रियारूपनिःसरणपूर्वकविद्योतने वृत्तिः । बलाहकापादानकं विभागजन्यसंयोगानुकूलक्रियोत्तरकालिकं विद्युत् कर्तृकं विद्योतनमिति बोधः । इदमुपात्तविषयमित्युच्यते । बलाहको नाम धूमज्योतिः सलिलमरुतां संघातः । ततोऽवयवभूतज्योतिषोभेदविवक्षया-

---

भवति स एतत् प्रयुङ्क्ते ॥ गतियुक्तेष्वपादानसंज्ञा नोपपद्यतेऽध्रुवत्वात् । वा । गतियुक्तेष्वपादानसंज्ञा नोपपद्यते । अश्वात् त्रस्तात् पतितः रथात् ।

---

वाश्वस्य नास्ति ॥ न वेति । भा । अयमर्थः । ध्रुवमेकरूपमुच्यते तच्च ध्रौव्यमपायविषयमाश्रीयते । मत्वनवच्छिन्नम् । ततोऽपाये यदनाविष्टं तदपाये ध्रुवमुच्यते । देवदत्तकर्तृके च पाति अश्वस्याप्यश्वस्यापायानावेशाद् ध्रुवत्वम् ।

---

यथा बलाहकाद्विद्योतत इति । निःसरणाङ्गे विद्योतने द्युतिर्वर्तते । यथा वा कुसूलात् पचतीति । आदानाङ्गे पाके अत्र पचिर्वर्तते । अपेक्षितक्रियं तु तत् यत्र प्रत्यक्षसिद्धमागमनं मनसि निधाय पृच्छति कुतो भवान् इति । पाटलिपुत्रादिति चोत्तरयति । अर्थाध्याहारस्य न्याय्यताया उक्तत्वात् । इह

---

"निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियञ्चेति त्रिधापादानमुच्यते" ॥

"अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवातदावेशात्" इति ॥

परन्तु सिद्धान्तभाष्याक्षराणामत्रार्थे न सामञ्जस्यं किं तर्हि ध्रौव्यं विवक्षितम्। अश्वात् त्रस्तात् पतित इत्यत्र अश्वत्वं ध्रुवं तदेव विवक्षितं धावतः पतित इत्यादौ यतो ऽप्यध्रौव्यस्याविवक्षा इत्यक्षराणामसामञ्जस्यात्। प्रधानव्यापाराश्रयत्वरूपस्य त्वदभिमता ध्रौव्यस्यात्र कदाप्यसत्त्वात्। तस्मान्मदुक्त एव सूत्रार्थ उचितो भाष्यार्थश्चेति सुधियो विभावयन्तु ॥

---

विभागविवक्षणात् सोऽवधिः। यदा तु तेजस आधारत्वेन स विवक्ष्यते तदा बलाहके विद्योतत इति सप्तमी। यदात्वभेदेन विवक्षा तेजोमयत्वात् प्रकाशनसामर्थ्ये उदकधूमादेस्तत्प्रकाश प्रतिबन्धकत्वाविवक्षणात् तदा बलाहको विद्योतते इति। यदा तु प्रत्यक्षसिद्धमागमनं मनसि निधाय कुतो

---

पतितः। सामर्थ्याद् गच्छतो हीन इति। किं कारणम्। अध्रुवत्वात् ॥ न वा ध्रौव्यस्याविवक्षितत्वात्। वा। न वैष दोषः। किं कारणम्। अध्रौव्यस्या-

---

देवदत्तस्यैवापायावेशादध्रुवत्वम्। अथवा अश्वस्य त्रस्तत्वाद्यदध्रौव्यं तत् प्रथममविवक्षितमित्यर्थः। तथा हि। कारकस्य पूर्वं क्रियया सम्बन्धः।

---

स्वार्थाद् हीयते इत्यपि निर्दिष्टविषयस्योदाहरणम्। स्यादेतत्। परत्वात् स्वार्थस्य कर्तृसंज्ञा प्राप्नोति। उक्तं हि। अपादानमुत्तराणि इति। किञ्च स्वार्थस्य कर्तृत्वाभावे त्यज्यमानस्य कर्मसंज्ञा न स्यात् कर्तृव्यापारव्याप्य-त्वाभावात्। ततश्च हीयते हीन इति कर्मणि लकारो निष्ठा च न स्यात्।

---

यत्र धातुनापायलक्षणः संज्ञाविषयो निर्दिश्यते। यथा ग्रामादागच्छतीति तन्निर्दिष्टविषयम्। यत्र धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह यथा

**कारकस्य पूर्वमिति । (कै)**

क्रियानिर्वर्त्तकरूपस्य तस्यान्तरङ्गत्वात् पूर्वं क्रिययाऽन्वय इत्यर्थः ॥

**श्रुतिः । (कै)**

पञ्चम्यादिः ॥

**वाक्यम् । (कै)**

पदसमूहः ॥ पूर्वम् अश्वात् पतित इति बोधे पातहेत्वाकाङ्क्षायां पश्चात् चलात् इत्यस्यान्वय इति भावः ॥ नन्वेवमपि चलादिति पञ्चम्यनुपपन्नैव इत्यत आह

---

भवान् इति प्रश्ने पाटलिपुत्रादिति उत्तरयति तत्र आकाङ्क्षा वादोक्तरीत्या वाक्यैकदेशन्यायेन बोधः । एतदपेक्षित क्रियामित्युच्यते । वृक्षात् पततीति तु निर्दिष्टविषयम् । घटाद् भिन्न । इत्यदावप्यनेनैवापादानत्वम् । सूत्रे ऽपायशब्देन भेदस्यापि ग्रहणम् । पञ्चमी विभक्ते इत्यत्र विभक्तशब्देनेव ।

---

विवक्षितत्वात् । नाधाध्रौव्यं विवक्षितम् । किं तर्हि । ध्रौव्यम् । इह तावदश्वाद्,

---

स च श्रुति प्रापित उच्यते । पश्चाद्विशेषणेन वाक्यीयः सम्बन्धः ततश्चाश्वात् पतित इति सम्बन्धेनास्यश्वस्याध्रुवत्वम् । पश्चात् चलत्वेन सम्बन्धे सत्यध्रौव्ये अन्तरङ्गा संज्ञा न निवर्त्तते । विशेषणस्यासत्यपि अपादानत्वे साम-

---

न कर्मकर्त्तर्ययं लकार इति वाच्यम् । जहातेः कर्तृस्थ क्रियत्वात् कर्मण्येवायं लकार इति हरुणोक्तत्वात् । यत्तु "अपादाने चाहीयरुहोः" ( ५ । ४ । ४५ ) इति सूत्रे न्यासकारेण सम्प्रदानसूत्रे कैयटेन चोक्तं कर्मसंज्ञायां कर्तृग्रहणं स्वातन्त्र्योपलक्षणम् । अतो हानक्रियायां स्वतन्त्रत्वा-

---

बलाहकाद् विद्योतते विद्युत् इति अत्र हि निःसरणाङ्गविद्योतने विद्युति-र्वर्त्तते । बलाहकान्निःसृत्य विद्योतत इत्येव । कुसूलात् पतति इत्यत्रापादानाङ्गे

## विशेषणस्येति ॥ (कै)

## [1]सामयिकीति । (कै)

"न केवला प्रकृतिः" इति समयाद् विभक्त्यन्ताया आचा-भिन्नविशेष्यसमानशक्तिकत्वनियमाद्विशेषणानां तेभ्यो विशेष्यसमानैव विभक्तिरिति भावः ॥ आद्यपक्षस्यैव युक्तत्वबोधनाय पुनस्तं स्मारयति

---

१ सामयिकीत्यारभ्य नियमाद् इत्यन्तं नास्ति क पुस्तके ॥

---

तन्मूलकसम्बन्धविवक्षायां घटीयोभेद इति । अपि भिदिर्विदारणे इत्यत्र भेदज्ञानविषयत्वमपि विदारणम् । एकत्वेन गृहीतस्य तथा बोधे बुद्धि-विदारणस्य तत्रापि सत्त्वाद् इत्यन्यत्र विस्तरः ॥ अधर्माज्जुगुप्सते इति । अधर्मानिष्टसाधनताज्ञानपूर्वकं ततो निवर्त्तत इत्यर्थ इति । भाष्यकृन्मतम् ।

---

नश्वात् पतित इति यत्तदश्वेऽश्वत्वमाशुगामित्वं तद्ध्रुवं तच्च विवक्षितम् ।

---

यिकी विभक्तिः । सा च विशेष्यानुरोधेन प्रवर्त्तते नत्वनियमेन । अथवा नत्वस्याप्यपादानत्वं सत्यपि आसाद्ये ध्रुवत्वे पातं प्रति ध्रुवत्वात् । यथोक्तं प्राक् । आशुगामित्वमिति । भा । अयमर्थः । व्युत्पत्तिमात्रमाशुगामित्वमिति

---

पादानेनेप्सुमानस्येह कर्मतेति । तच्चिन्त्यम् । माषेष्वश्वं बध्नातीत्यत्र कर्मणोऽप्यश्वस्य वस्तुतो भक्षणे यत् स्वातन्त्र्यं तदाश्रयकर्मसंज्ञापत्तेः । अत एव कर्मसंज्ञा विधायकसूत्रशेषे कैयटेनोक्तम् । प्रयोजकव्यापारस्या-शब्दार्थत्वात्तदपेक्षं कर्मत्वमयुक्तमिति । अत्राहुः । स्वार्थाद् हीयत इत्यत्र

---

पाके पचिर्वर्त्तते कुसूलादादाय पचतीति । तदुपात्तविषयमपेक्षितक्रियन्तु यत्र क्रिया न श्रूयते प्रमाणान्तरेण प्रतीयते यथा ऽऽगच्छन्तं पुरुषं इत्यत्रेण

अथवेति । (वै)

भाष्यस्वारस्यं द्वितीयव्याख्याने एव न शङ्कनीयमिति । पूर्वोक्त-द्वितीयव्याख्यारीत्येयं शङ्का बोध्या । चलत्वस्य प्रथममनन्वयेऽप्याशु-गामित्वस्य शब्दादुपस्थित्या तत्तत्तमध्रौव्यं न शक्यं जातेरेव प्रवृत्ति-निमित्तत्वादिति भावः ॥ भाष्ये

---

तेन ध्रुवमपाये इत्येवापादानत्वमाश्रित्यवार्त्तिकप्रत्याख्यानात् ॥ "धर्माद् विरमति" । भा । प्रागभावसाधारणात्यन्ताभावानुकूलो व्यापारो विरमते-रर्थः । योगक्षेमसाधारणी चात्रानुकूलता । स च व्यापारो धर्मविषयोऽपेक्षा विशेष एव । तदुक्तं भाष्ये "य एष मनुष्यो नास्तिकबुद्धिर्भवति स

---

रथात् प्रवीतात् पतित इति पत्तद्रथे रथत्वं रमन्तेऽस्मिन् रथ इति तद्ध्रुवत्वं विवक्षितम् । सार्थाद् गच्छतो हीन इति यत् तत्सार्थे सार्थत्वं सहार्थीभाव-

---

तदपेक्षयाऽध्रौव्यं नाशङ्कनीयम् । जातिरेव शब्दप्रवृत्तिनिमित्तमिति नास्त्यनाध्रौव्यम् । आशुगामित्वशब्देन एकार्थसमवायात् साहचर्याद-श्वत्वमेवोच्यते ॥ यद्यपीति । भा । यत्र क्रिया न प्रवृत्तिनिमित्तं किं तु

---

कर्मकर्तरि लकारः । तथा हि । अपगमनमा जहातेरर्थः । सा च क्षुदुप-घातादिना देवदत्तस्यापगमने तत् समर्थाचरणम् । यदा तु क्षुदुपघातादिना स्वयमेवापगच्छति तदाकर्मकर्तृत्वम् । स्फुटं चेदं हरदत्तमाधवग्रन्थयोः । स्यादेतत् । ध्रुवग्रहणं किमर्थम् । न च ग्रामादागच्छति शकटेन इत्यत्र

---

पञ्चम्याह कुतो भवान् इति सोऽपि तदेव प्रत्यक्षसिद्धमागमनमुपजीव्याह पाटलिपुत्रादिति । ध्रुवग्रहणं किम् । ग्रामादागच्छति शकटेन । अत्र

सहार्थीभाव इति। (भा)

सहार्थौ येषां तद्भाव इत्यर्थः॥ परेतु आशुगमनाश्रयत्वमश्व-शब्देन योगतो बुध्यते। रमणक्रियाश्रयत्वं रथशब्देनोच्यते सह-मिलनक्रियाश्रयत्वं च सार्थशब्देनाश्वत्वादिकं च रूढ्या। एवं च अश्वात् पतित इति प्रयोगे यद्यश्वस्य तद्विवक्षयाऽश्वत्वमात्र विवक्षया ध्रुवत्वं तवाभिमतं तर्हि चलादिति विशेषणेऽपि न क्षतिरिति भावः॥ अश्वनिष्ठत्वाशुगामित्वयोर्मध्ये तदश्वत्वमेव ध्रुवताप्रयोजकं तच्च विव-

---

पश्यति नेदं किं चिद् धर्मो नाम नैनं करिष्यामीति स बुद्ध्या संप्राप्य ततो निवर्त्तते इति तेन हि कदापि धर्मानाचरणेऽपि तथा प्रयोग इति लभ्यते। एतेन जीवनकालावच्छिन्नः कृत्यसमानाधिकरणकृतिध्वंसो विरमतेरर्थः। कृतिश्च सर्वत्रैकविशयैव। जीवनमपि कर्तृसम्बन्ध्येव। सामानाधिकरण्यं च

---

त्तद्ध्रुवं तच्च विवक्षितम्॥ यद्यपि तावदत्रैतच्छक्यते वक्तुं ये त्वेतेऽत्यन्त

---

व्युत्पत्तिमात्रनिमित्तं तत्रैतद्वक्तुं युज्यते। यत्र तु शब्दप्रवृत्तिनिमित्तं क्रिया तत्र कथं नाश्रौव्यमिति प्रश्नः॥ अत्रापीति। भा। सरणक्रियोपलक्षितं द्रव्यमात्रमपादानत्वेन विवक्षितम्। तच्च देवदत्तकर्तृके पाते पूर्वोक्तन्यायाद्

---

प्रकटेऽति व्याप्तिवारणाय तदिति वाच्यम्। पदत्वात् तत्र कारणसंज्ञा प्रवृत्तेः। यथा धनुषा विध्यतीत्यत्र। इह हि शरनिः सरणं प्रत्यवधि-भावोपगमेनैव व्यधने करणता इत्युभयप्रसङ्गः। वृक्षस्य पर्णं पततीत्यादौ तु वृक्षः पर्णविशेषणं न त्वपायेन युज्यते। न च संज्ञिनिर्देशार्थं ध्रुवग्रहणम्।

---

प्रकटस्य माभूत्। अथ क्रियमाणेऽपि ध्रुवग्रहणे इह कस्मान्न भवति धनुषा विध्यतीति। अत्र हि शराणामपायं प्रति अवधि भावेनैव धनुषः

क्षितं तदेव विवक्षितमित्यक्षरार्थ इत्याहुः ॥ ननु प्रवृत्तिनिमित्तमविवक्षितमित्ययुक्तमत आह

सरणक्रियोपलक्षितमिति । (कै)

अनेन प्रवृत्तिनिमित्तस्याप्यविवक्षा दर्शिता ॥ तदेव भाष्ये उक्तम् ।

सतोऽप्यविवक्षेति ॥ (भा)

पूर्वोक्तेति । (कै)

अस्मादित्यादावुक्तरीत्या इत्यर्थः ॥ नन्वसतश्चेति प्रकृतानुपयुक्तमत आह

---

समभिव्याहृतकर्तृपदबोध्यशरीरजातीयशरीरघटितम् । चैत्रादिपदैः शरीरविशिष्टात्मबोधनात् । साजात्यं च चैत्रादिपदोपस्थापितचैत्रत्वादिजात्यैव । तेन भाविदेहान्तरावच्छेदेन धर्मकरणेऽपि वर्तमानशरीरावच्छिन्नं चरमक्षतिध्वंसमादाय विरमति प्रयोगसिद्धिः युवशरीरावच्छेदेन धर्मं कुर्वत्यपि

---

गतियुक्तात्तत्र कथम् । धावतः पतितः । त्वरमाणात् पतित इति । अत्रापि

---

ध्रुवमेवेत्यर्थः ॥ कथं पुनरिति । भा । शब्दोपात्तमपि सरणं द्रव्योपलक्षणार्थत्वाद्ध्रौव्यनिमित्तं न भवतीति कुत एतदिति प्रश्नः । अबोमिकेति । भा । अल्पत्वाच्छ्रोतॄणां तत्कार्य्यकरणादेवमुच्यते ॥ असतश्चेति । भा । निदर्शनार्थ-

---

अपाये क्रियायां यदन्वेतीत्यस्यार्थिकस्य संज्ञिसमर्पकत्वात् । यद्वा कारके इति निर्धारणसप्तम्याश्रयणात् कारकमिति लभ्यते । पूर्वत्रापि प्रथमार्थे सप्तमीत्युक्तत्वाच्च । तस्माद् ध्रुवग्रहणं चिन्त्यप्रयोजनम् । "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" अधर्माज्जुगुप्सते विरमति प्रमाद्यति वा ।

---

साधकतमत्वम् । सत्यम् उभयप्रसङ्गे परत्वात् करणसंज्ञा भविष्यति ॥ नन्वेवमक्रियमाणेऽपि शकटस्य नैव भविष्यति । एवं संज्ञान्तरविषये सर्वत्र ।

निदर्शनार्थमिति। (कै)

अग्रे सूक्ष्मो मूले स्थूल ओदनपिण्डे वर्द्धितकम् ॥

यदा त्विति। (कै)

"परस्परस्मान् मेषावपसरत" इत्यत्र तु

"मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।

मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्" ॥

इति बोध्यम् ॥ किं च येषु पदोपात्तयोरेव क्रियाश्रयत्वं

---

वालशरीरावच्छिन्नक्षतिध्वंसमादाय न विरमतीति प्रयोगः। नापि पूर्वपर-कालयोर्धर्मकरणे मध्ये मुहूर्तमात्रमकरणे विरमतीति प्रयोगः। तत् क्षति-ध्वंसस्य क्षतिसमानाधिकरणत्वात्। पञ्चम्यर्थो विषयता इति परास्तम्। धर्माद् विरतोऽपि पुनः प्रवृत्त इत्यादेरनापत्तेश्च ॥ "धर्मात् प्रमाद्यति"।

---

न वाध्रौव्यस्याविवक्षितत्वात् इत्येव सिद्धम्। कथं पुनः सतो नामाविवक्षा

---

मिदमुच्यते। यथाऽसतो विवक्षा भवति एवं सतोऽप्यविवक्षेत्यर्थः॥ समुद्रः कुण्डिकेति। भा। कुण्डिकायां पानीयबाहुल्यात् समुद्रत्वं विवक्षितं समुद्रस्य वा सुतरत्वात् कुण्डिकात्वम्॥ विन्ध्यो वर्धितकमिति भा। पूर्व-

---

संश्लेषपूर्वको विश्लेषो विभागः। स चेह नास्ति। बुद्धिकल्पितस्तु गौणत्वान्न गृह्यते इति वार्त्तिकारम्भः। भाष्यकारस्तु जुगुप्सादयोऽत्र जुगुप्सादिपूर्वि-कायां निवृत्तौ वर्तन्ते इत्युपात्तविषयमेतत्। कारकप्रकरणे च गौणस्यापि ग्रहणम्। साधकतममिति तमग्रहणाल्लिङ्गात्। अपायादिपदानां स्वरित-

---

त्वस्य पत्रं पततीत्यत्रापायस्याविवक्षितत्वादकारकत्वाच्च न भविष्यति संज्ञिनिर्देशार्थं तु न हि कारक इति सम्बन्धेन प्रथमः संज्ञीनिर्देष्टुम् सिद्धं

परस्परपदोपात्तयोर्विभागाश्रयत्वमेवेति तत्र न दोषः। अन्यथा वस्तुतस्तदाश्रयक्रियाभेदेऽपि धातुना विभागद्वयस्य तज्जनकक्रियाद्वयस्य च निवृत्तभेदस्यैवोपादानात् परत्वात् कर्तृत्वदुर्वारमेव स्यात्। आत्मानमात्मना इत्यादावन्तःकरणाद्युपाधिना भेदस्यैव शब्दरूपोपाधिकृतभेदस्यात्रापि सत्त्वाच्च। अस्मन्मते शब्दानुविध्यर्थस्यैव भानाच्च हरिकारिकायामन्येष्ववधित्वमित्यस्य परस्परपदोपात्तयोरिति शेषः। कर्तृत्वमित्यस्य शेषपदोपात्तयोरिति शेष इति वदन्ति॥

---

भा। अत्रेष्टसाधने वस्तुनि समानदेशत्वसमानकालत्वोभयसम्बन्धेनाधिकारविशिष्टेष्टसाधनत्वाभावज्ञानमनिष्टसाधनत्वज्ञानं वा धात्वर्थः। पञ्चम्यर्थो विषयत्वं ज्ञानान्वयि। जुगुप्सादीनां यद्विषयत्वेन विवक्षा तदपादानम्॥ तत् पूर्वकनिवृत्तिपर्यन्तसर्वत्र धात्वर्थ इति तद्भाष्यमतम्॥

---

स्यात्। सतोऽप्यविवक्षा भवति। तद्यथा। अलोमिकैडका। अनुदरा कन्येति। असतश्च विवक्षा भवति। समुद्रः कुण्डिका। विन्ध्यो वर्धितकमिति॥

---

तदन्यतरस्यापारोपेण व्याख्येयम्। मेषोमेषादपसर्पतीत्यत्रैकस्य मेषस्य कर्तृत्वविवक्षा परस्यापादानत्वविवक्षा॥ यदा तु मेषावपसरत इति प्रयोगस्तदाऽवध्यन्तरमपेक्षणीयम्॥

---

त्वादा "स्वरितेनाधिकारः" गौणोऽप्यर्थो गृह्यते इति व्यवस्थापनात्। तत्र बुद्धिकल्पितस्याप्यपायस्य सत्त्वात् सिद्धम्। पूर्वं हि बुद्ध्याऽधर्मं सम्प्राप्य ततो दोषदर्शनात् निवर्त्तते इत्यस्त्यपायः। एवमुत्तरसूत्रेष्वपि प्रपञ्चनं बोध्यमिति दिक्॥

---

तु निर्द्धार्यमाणस्य संश्लिष्टत्वादपायविषये तु कारकेषु मध्ये यत्कारकं संश्लेषान्तरस्याविषयस्तदपादानम् इति तदेवं ध्रुवग्रहणं चिन्त्यप्रयोजनम्॥

# भीत्रार्थानां भयहेतुः ।१।४।२५॥

सूत्रे भीत्राशब्दौ भावक्विबन्तौ। चौरेभ्य इति पाठे प्रत्या-ग्रणन्तो बोध्यः। चुरा स्तेयं शीलमस्य इति णान्तो वा॥

---

भीत्रार्थानां भयहेतुः । १ । ४ । २५ ॥ चोराद्बिभेति । त्रायते वा । अनिष्टज्ञानं भयम् । अनिष्टपरिहारस्त्राणम् । अनिष्टहेतुरपादानम् । "भीत्रार्थानां भयहेतुः" इति सूत्रात् । चोरापादानकानिष्टज्ञानं तदपा-

---

भीत्रार्थानां भयहेतुः । १ । ४ । २५ ॥ अयं योगः शक्योऽवक्तुम् । कथं वृकेभ्यो बिभेति दस्युभ्यो बिभेति चौरेभ्यस्त्रायते दस्युभ्यस्त्रायत इति ।

---

भीत्रार्थानां भयहेतुः । १ । ४ । २५॥ कथमिति । भा । भयम् आकुलीभावः ॥ त्राणम् अनर्थप्रतिघात इति तत्र च नास्ति मुख्योपाय

---

भीत्रार्थानां भयहेतुः । १ । ४ । २५ ॥ भयं भीः त्राणं त्राः भत्रार्थानां

---

भीत्रार्थानां भयहेतुः । १ । ४ । २५ ॥ भयं भीः त्राणं त्राः सम्पदा-दित्वाद् भावे क्विप्। भीत्रौ अर्थौ येषां ते भीत्रार्थाः। षष्ठीप्रयोगापेक्षया कारकापेक्षया चेत्याह "बिभेत्यर्थानामित्यादि"। अत्र बिभेति त्रायति शब्दौ तदर्थयोर्वर्तेते तदर्थोऽर्थो येषामित्यर्थः। त्राणं बाधकेभ्यो रक्षणं बाधकाश्च भयहेतव इति त्रार्थानामपि भयहेतुः कारकं भवत्येव । "चौरेभ्य

अनर्थप्रतिघात इति । (कै)

अनर्थस्य भयं तद्धेतुश्चोरः इति त्राणार्थानामपि भयहेतुः कारकं सम्भवतीति बोध्यम् ॥ भाष्ये

पश्यति । (भा)

---

दानकानिष्टपरिहार इति बोधः ॥ सूत्रे भयहेतुरित्यस्य भयैकदेशानिष्टहेतुरित्यर्थः । यज्जन्यं भयमेव न प्रसिद्धं तत्र पञ्चमी न भवत्येव । तस्या इष्टत्वे तु हेतुत्वारोपेण वा । एवमेव अन्तरिक्षेण जुहोति परमाणुं न पश्यती-

---

इह तावद्वृकेभ्यो बिभेति दस्युभ्यो बिभेतीति य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति यदि मां वृकाः पश्यन्ति ध्रुवो मे मृत्युरिति । स बुद्धा संप्राप्य निवर्तते । तत्र "ध्रुवमपायेऽपादानम्" ( १ । ४ । २४ ) इत्येव

---

इति प्रश्नः ॥ प्रेक्षापूर्वकारीति । भा । बुद्धिव्यवस्थापितोऽपायोऽस्तीति भावः ॥ तत्र निवृत्त्यङ्गे भये बिभेत्यादयो वर्तन्ते इत्यपादानविषयमेतदपादानम् । चोरेभ्यस्त्रायत इत्यनर्थपरिहाराय निवर्तयतीत्यर्थः ॥ चोरमध्यगतस्यापि

---

त्राणार्थानां च योगे भयहेतुः कारकमपादानं स्यात् ॥ चोरेभ्यः उद्विजते

---

इति" । चोरयतेः पचाद्यचि चोरः । क्वचिच्चौरेभ्य इति पाठः । तत्र स्वार्थिकप्रज्ञाद्यण् । छत्रादिषु वा चुराशब्दः पठ्यते स चाप्र[illegible]दित्वस्य "स्थावराद्यो णुचि"ति णुचि बाधके प्राप्ते तस्मादेव निपातनादकारप्रत्यये विशुद्धि च व्युत्पाद्यते । ततश्चुराशीलं प्रीणमस्येति णे कृते स एवार्थो भवति । "बिभेतीति" । ञिभी भये जुहोत्यादिः । "उद्विजत" इति

विचारयतीत्यर्थः ॥ ननु निवृत्तेरेव वारणत्वाद् वारणार्थाना-मित्यनेन सिद्धिरिति कुतो नोक्तमत आह

वारणार्थानामिति ॥ (कै)

अनीप्सितत्वात् । (कै)

तद्धात्वर्थप्रयोज्यफलानाश्रयत्वात् ॥

---

त्वादेवपपत्तिः। आरोपितस्यैव निषेधादबोधाच्च ॥ भाष्यात्तु भयपूर्विका त्राणपूर्विका च निवृत्तिर्निवर्त्तनाचानयोरर्थः बुद्धिप्राप्तचोरापादानिका प्रत्यासत्त्या तद्भयपूर्विका निवृत्तिस्तदपादानिकानिष्टपरिहारफलिका निवर्त्त-

---

सिद्धम् ॥ इह चौरेभ्यस्त्रायते दस्युभ्यस्त्रायते इति च एष मनुष्यः प्रेक्षा-पूर्वकारी सुहृद् भवति स पश्यति यदीमं चौराः पश्यन्ति ध्रुवमस्य बध-

---

त्राणे चोरसम्पर्कफलस्य वधबन्धनापहरणादेर्निवर्त्तनात्तेभ्यो निवर्त्तयतीत्यु-च्यते ॥ "वारणार्थानामीप्सित" इत्यनेनापादानसंज्ञा न प्राप्नोति चोरा-

---

बिभेति रक्षति वा त्रायते भयहेतुग्रहणं चिन्त्यप्रयोजनम्। अरण्ये . बिभेतीत्यादौ तु परत्वादधिकरणसंज्ञा ॥

---

ओविजीभयचलनयोः। तौदादिकानुदात्तेत्। "अरण्य इति" अत्र तवृक्षेभ्यो हस्त्यादिभ्यो भयं नारण्यात् ॥ ननु ध्रुवमित्यनुवर्त्तिष्यते न चारण्यमवधित्वेन विवक्षितमतोऽरण्यस्याधिकरणसंज्ञैव भविष्यति। सत्यम्। पूर्वस्यैवायं प्रपञ्चः। कथं भयादिपूर्विकायां निवृत्तौ भ्यादयो वर्त्तन्ते बिभेतीति कोऽर्थः। भीत्या निवर्त्तते इत्यर्थः ॥ त्रायत इति को ऽर्थः। चोरकृताद् वधादेस्त्राणेन

इदं वचनमिति । (कै)

प्रत्याख्याने तु षष्ठ्या अनभिधानान्निवृत्तिर्बोध्या ॥ क्रियां प्रति जनकत्वेन विवक्षायामेषा संज्ञा । सम्बन्धित्वेन विवक्षायां तु षष्ठ्या-मिष्टापत्तिरेव सूत्राणि प्रपञ्चार्थान्येवेति हृदयः ॥

---

नेति च बोध इति लभ्यते । चोरमध्यगतोऽपि तत्सम्पर्कंपापभयादिति वर्त्तनादिभ्यो निवर्त्तते इत्युच्यते । एतद्विषयेऽपि हेतुत्वापादानत्वाविवक्षायां षष्ठी भवत्येवेति बोध्यम् ॥

---

बन्धनपरिक्लेशा इति । स बुद्ध्या संप्राप्य निवर्त्तयति । तत्र "ध्रुवमपायेऽपादानम्" ( १ । ४ । २४ ) इत्येव सिद्धम् ॥

---

ग्रामनैष्फ्रितत्वात् । सूत्रारम्भपक्षे तु कारकशेषत्वात् षष्ठ्यां प्राप्ताया-मिदं वचनम् ॥

---

"कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे" इति
रामायणश्लोकस्तु कस्य संयुगे इति योजनया व्याख्येयः ॥

---

निवर्त्तयतीत्यर्थः कथं तर्हि चोरमध्यवर्त्तिनि चोरेभ्यो बिभेतीति प्रयोगो न ह्यत्र निवृत्तिरस्ति । अत्रापि भीत्या निवर्त्तितुमिच्छतीत्यर्थो ग्रहण्यः । तदेवं बुद्धिपरिकल्पितोऽप्ययोगोऽस्तीति उपात्तविषयमिदमपादानमिति । तत्र एव प्रयोगप्रपञ्चे विमवयवपर्य्यानुयोगेन ॥

# पराजेरसोढः । १ । ४ । २६ ॥

असोढग्रहणादिति । (कै)

अत्र कालोऽविवक्षितस्तेन पराजेष्यत इत्यपि भवति ॥

---

पराजेरसोढः । १ । ४ । २६ ॥ अध्ययनात् पराजयते । कृत्यसाध्यत्वधीसमानाधिकरणकर्तृविषयकोत्साहाभावो धातोरर्थः । विषयोऽपादानम् । "पराजेरसोढ" इति सूत्रम् ॥ अध्ययनापादानको देवदत्तकर्तृक उत्साहा-

---

पराजेरसोढ । १ । ४ । २६ ॥ अयमपि योगः शक्योऽवक्तुम् । कथम्

---

पराजेरसोढः । १ । ४ । २६ ॥ पराजिः क्वचिदभिभवे वर्त्तते यथा

---

पराजेरसोढः । १ । ४ । २६ ॥ परा पूर्वस्य जयतेः प्रयोगेऽसोढो-ऽर्थोऽपादानं स्यात् । अध्ययनात् पराजयते ग्लायतीत्यर्थः । अकर्मकत्वा-यम् । तत्र यद्यां प्राप्तायां वचनम् । असोढः किम् । शत्रून् पराजयते

---

पराजेरसोढः । १ । ४ । २६ ॥ अत्र धातु पाठगतस्य जीत्येतावन्-मात्रस्यानुकरणं ततः परापूर्वो जिः पराजिरित्युत्तरपदलोपी समासो द्रष्टव्यः ॥ ननु प्रकृतिवदनुकरणं भवतीत्यधातुरिति प्रातिपदिकसंज्ञायाः प्रतिषेधात् असुबन्तत्वात् समासो न प्राप्नोति । नाप्रतिषेधात् । नायं प्रसज्यप्रतिषेधः धातोर्नेति किं तर्हि पर्युदासोऽयं यदन्यद् धातोरिति

न्यूनीभावेति । (कै)

शक्तिवैकल्येत्यर्थः ॥

ग्लानिमिति । (कै)

तत्सम्बन्धिशक्तिवैकल्यमित्यर्थादिति भावः ॥

---

भाव इति बोधः । तत्पूर्विका निवृत्तिरिति वा । शत्रून् पराजयते इत्यत्र तिरस्कारानुकूलो व्यापारो धात्वर्थः । आद्ये अनिष्टं धात्वर्थः । अध्ययनजन्यमनिष्टमिति बोध इति तु न युक्तम् । तथा बोधानानुभवात् । असोढशब्देन

---

अध्ययनात् पराजयत इति । य एष मनुष्यः प्रेक्षापूर्वकारी भवति स

---

शत्रून् पराजयते इति । इह तु असोढग्रहणान् न्यूनीभाववृत्तिर्गृह्यते । अध्ययनात् पराजयते ग्लायतीत्यर्थः । अत्र चार्थे ऽकर्म-

---

अभिभवतीत्यर्थः । असोढ इति क्तार्थो भूतकालो ऽविवक्षितः । तेन अध्ययनात् पराजेष्यत इत्यादिसिद्धम् । वस्तुतस्तु असोढग्रहणं व्यर्थं शत्रून् पराजयत इत्यत्र परत्वात् कर्मसंज्ञासिद्धेः । इह सूत्रे पराजेरिति रूपं "विपराभ्यां

---

धातोर्न विधिर्न प्रतिषेधः । एवमपि इयङादेशः प्राप्नोति परत्वाद् "वेर्ङितो"तिगुणो भविष्यतीति समुदायस्य वा समुदायोऽनुकरणं कस्यस्य समुदायस्य प्रयोगस्थस्य । यद्येवमध्ययनात् पराजयतेऽत्र न प्राप्नोति यत्र पराजीति रूपमस्ति । तर्हि स्याद् यत्र पराजेति रूपमस्ति अध्ययनात् पराजित इति उदाहरणे पराजिर्न्यूनीभावे वर्तते अध्येतुं ग्लायती-

निवृत्त्यङ्गे इति । (कै)

षष्ठीसमासः । प्रविवेकत्वेन ततो निवर्त्तेत इत्यर्थात् ॥

---

तदर्थाज्ञाभाव । प्रेक्षापूर्वकारी मनुष्योऽध्ययनस्य दुःखत्वदुर्धरत्वादिपर्य्यालोच्य बुध्या प्राप्य ततो निवर्त्तते इति भाष्येण सर्वथाध्ययनाप्रवृत्तावपि अस्य प्रयोगस्य इष्टतया तत्रानिष्टस्याध्ययनजन्यत्वासम्भवाच्च ॥

---

पश्यति दुःखमध्ययनं दुर्धरं च गुरवश्च दुरुपचारा इति । स बुद्ध्या संप्राप्य निवर्त्तते । तत्र ध्रुवमपाये ऽपादानम् ॥ ( १ । ४ । २४ ) इत्येव सिद्धम् ॥

---

कत्वात् षष्ठ्यां प्राप्तायां वचनम् । पूर्ववदस्यापि प्रत्याख्यानं निवृत्त्यङ्गे पराजये पराजेर्वर्त्तनात् ॥

---

जेः" इतिवत् समर्थनीयम् । यत्तु परत्वात् "वेङिति" इति गुणः इति हरदत्तेनोक्तम् तत् सूत्रभाष्यादिविरुद्धमिति प्रागेव प्रपञ्चितम् ॥

---

त्यर्थः । अकर्मकधात्वयमत्रार्थे तत्र षष्ठ्यां प्राप्तायां वचनं प्रत्युदाहरणे त्वभिभवे वर्त्तते । विपराभ्यां जेरित्यत्रार्थद्वयेऽपि वर्त्तमानस्य ग्रहणम् । अयमपि प्रपञ्चो न्यूनीभावपूर्विकायां निवृत्तौ वृत्तेः सिद्धम् । अध्ययनात् पराजयते कोऽर्थः न्यूनीभावेन ग्लान्या । ततो निवर्त्तत इत्यर्थः । तेन प्रत्युदाहरणे परत्वात् कर्मसंज्ञा भविष्यतीति न चोदनीयम् ॥

# वारणार्थानामीप्सितः । १ । ४ । २७ ॥

अथाप्युपपादकं

'यस्य खल्विति (भा)

भाष्ये ॥ ननु धात्वर्थजन्यफलशालित्वरूपीप्सितत्वं सर्वत्रापस्तीत्यत आह

१ "यस्य तु खलु" इति उपलब्धभाष्यपुस्तकेऽस्ति परं विवरणे 'यस्य खलु" इति पाठोऽस्ति ॥

वारणार्थानामीप्सितः । १ । ४ । २७ ॥ यवेभ्यो गां वारयति ।

वारणार्थानामीप्सितः । १ । ४ । २७ ॥ किमुदाहरणम् । माषेभ्यो गा वारयति । भवेद्यस्य माषा न गावस्तस्य माषा ईप्सिताः स्युः । यस्य तु

वारणार्थानामीप्सितः । १ । ४ । २७ ॥ किमुदाहरणमिति । भा । अव्याप्तिं मन्यमानस्य प्रश्नः । भवेद्यस्येति । भा । यस्यात्मीया माषास्तस्य न ईप्सिता इत्यर्थः । अभिप्रेतपर्य्यायमीप्सितशब्दं मन्यते ॥ यस्य त्विति । भा ।

वारणार्थानामीप्सितः । १ । ४ । २७ ॥ वारणार्थानां प्रयोगे क्रियया

वारणार्थानामीप्सितः । १ । ४ । २७ ॥ ईप्सितशब्दोऽयमत्राभिप्रेतपर्य्यायस्तस्य ग्रहणे यवानामात्मीयत्वे गवां च परकीयत्व एव स्यान्न

अभिप्रेति ॥ (कै)

आप्तुमिष्टा इति । (कै)

वारणं प्रवृत्तिविघातः स च तद्व्यापारजन्यतत्फलाभावप्रयोजको भक्षणादिजनकव्यापाराभावानुकूलो व्यापारः क्वचित् क्वचित् तद्व्यापारजन्यतत्फलाभावप्रयोजकः संयोगानुकूलव्यापाराभावानुकूल-व्यापारः । एवं च तद्धात्वर्थप्रयोज्यफलाश्रया इत्यर्थस्तदाह

मानशब्देति । (कै)

नाशाभावरूपफलेन व्याप्तुमिष्टा इत्यर्थः । नाशाभावस्य भक्षणाभावापर्यवसन्नस्य च फलस्य धात्वर्थत्वपर्यन्तं नाग्रहः । माष-

---

षमेर्मांशवकं वारयति । कूपादन्धं वारयति । भक्षणसंयोगादिजनक-

---

खलु गावो न माषाः कथं तस्य माषाः ईप्सिताः स्युः । तस्यापि माषा एवेप्सिताः । आतश्चेप्सिता यवेभ्यो गा वारयति ॥ इह कूपादन्धं वारयतीति

---

यस्यात्मीया गावः परकीयास्तु माषास्तस्य न तु ईप्सिताः ॥ तस्यापीति । भा । ईप्सितशब्दः क्रियाशब्द आश्रीयते न तु रूढिशब्दः । तत्र वारण-क्रियया परकीया अपि माषा वारयितुराप्तुमिष्टा भवन्ति मानशब्देते

---

आप्तुमिष्टं कारकमपादानं स्यात् । यवेभ्यो गां वारयति इङ् वरणे

---

विपर्यये न खल्वप्येतदभिप्रेतं यदुतात्मीया गावः परकीयान्यवान्मा भक्षन्निति माभूवन्यवा वारयितुमीप्सिता वार्यमाणानां तु गवामीप्सिताः ।

नाशे हि सति राजभयमधर्मश्च स्यादिति भावः ॥ नन्वेवं माषा एवेति भाष्यात् गवामीप्सितत्वभावो लभ्यते इति सुतरामीप्सिततमत्वाभावेन कर्मत्वाभावाद् द्वितीया न स्यादत आह

भिन्नक्रम इति। (कै)

गवादिनिष्ठव्यापाराभावस्यैव मुख्यतयोद्देश्यत्वेन तदाश्रयत्वेनेच्छाविषयत्वात् तासां कर्मत्वमिति भावः ॥ ननु पूर्वोदाहरणादस्य को विशेष इत्यत आह

अन्धेति ॥ (कै)

ननु तद्धस्त्विनस्य कथं तदीप्सितत्वमत आह

---

व्यापाराभावानुकूलो व्यापारो धात्वर्थः। अभावप्रतियोगिव्यापारजन्यफलाश्रयोऽपादानम्। "वारणार्थानामीप्सितः" इति सूत्रात्। वारणार्थ-

---

कूपे ऽपादानसंज्ञा न प्राप्नोति। न हि तस्य कूप ईप्सितः। कस्तर्हि। अन्धः। तस्यापि कूप एवेप्सितः। पश्यत्वयमन्धः कूपं मा प्रापदिति ॥ अथवा

---

इत्येतेभ्योऽश्वौ गा वारयति ॥ माषा एवेति। भा। एवकारो भिन्नक्रमः। ईप्सिता एवेत्यर्थः। कूपादिति। भा। अन्धसम्बन्धे कूपस्य न विनाशो नापि राजभयमिति प्रश्नः। कस्तर्ह्यन्ध इति। भा। तं प्रत्यनुकम्पायाः सद्भावात्

---

सुरादिः। प्रवृत्तिविघातो वारणम्। ईप्सित इति किम्। यवेभ्यो गां

---

नवाम विशेषः। अतः कर्तुरीप्सितः इति तर्हि न स्याद् अधर्मो यवकं वारयति। कूपादन्धमिति। नह्यभिकूपो वारयितुर्वाथ्यमात्मस्य वाभिप्रेतो।

तं प्रतीति । (कै)

माषाणां राजभयात् इतो गोग्राभावरूपफलाश्रयत्वेन गोत्वा-
द्यभिप्रेतत्वे ऽप्यस्य कथं तत्त्वमत आह

वारणक्रिययेति । (कै)

क्रियाशब्दस्य ग्रहणात् कूपस्यापि तत्संयोगाभावरूपफलाश्रयत्वा-
दिति भावः ॥

गमनादिक्रिययेति । (कै)

वारणधात्वर्थघटकयेत्यर्थः । अत्र पक्षे भक्षणादिजनकव्यापारा-
भावानुकूलव्यापार एव वारयतेरर्थः । एवं च वारणार्थकधातु-

---

धात्वर्थफलाश्रयत्वमात्रेप्सितत्वम् । तेन भक्षणसंयोगाद्याश्रयत्वाद्यवादीना-
मपादानत्वम् । अनुकूलता चात्र योग्यता रूपैव । तेन प्रतिसिद्धे गवि

---

यथैवास्यान्यत्रापायस्य ईप्सितत्वं कूपेऽपि । इह अग्नेर्माणवकं वारयतीति
माणवकेऽपादानसंज्ञा प्राप्नोति । कर्मसंज्ञात्र बाधिका भविष्यति अमावपि

---

तत्रेप्सितत्वं मन्यते ॥ तथापीति । भा । वारणक्रियकानुमित इत्यर्थः ॥
अथवेति । भा । ईप्सित इत्यनेन कर्मणा कर्तृमात्रस्याक्षेपान्निवार्यमाण-
स्यान्यस्य गमनादिक्रियया कूप आनुमिको भवतीति प्रवर्ततेऽपादानसंज्ञा ।

---

वारयति क्षेत्रे । नन्विह परत्वादधिकरणसंज्ञा भविष्यति कृतेऽपीप्सितग्रहणे

---

क्रियाशब्दस्य तु ग्रहणे वार्यमाणस्यान्यादेर्गमनादिक्रियया कूपादेराप्यमान-
त्वात् सिध्यति । अन्यत्रापायमपि गन्तव्यः जिगमिषति । अन्यथा न

प्रतिपाद्यव्यापारजन्यफलाश्रयत्वमेवाऽपेक्षितत्वमिति भावः ॥ नन्वेव-मपि प्रधानकर्त्तुरपीप्सितत्वात् कथमेतन्नाप्सितम् उक्तं

कर्त्तृमात्रस्येति । (कै)

कर्त्तृग्रहणं चोपलक्षणम् ॥ नन्वन्धस्य पदार्थज्ञानाभावात् कथं तद्विषयेच्छा इत्यत आह

अन्धस्य चेति ॥ (कै)

सामर्थ्यगम्यस्यैव प्रकर्षस्यानाश्रयणं न तूपात्तस्य इत्यत उक्तम्

मन्यत इति ॥ (कै)

---

भक्षयत्यपि अयं वारयति तथापि न निवर्त्तत इति प्रयोगसिद्धिः । अप्रवृत्त-वारणेऽपि अयं प्रयोगः । यदीमा गावस्तथा गच्छन्ति ध्रुवं सस्यं नाशयिष्यन्तीत्यतोऽ-

---

तर्हि बाधिका स्यात् । तस्माद् वक्तव्यम् कर्मणो यदीप्सितमिति । ईप्सि-तेप्सितमिति वा ॥ वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततम कर्मेति

---

अन्धस्य च प्रवृत्त्यनुमेयेच्छा तदाह "अन्धश्चापश्यत" इति । भा । अन्धस्ये-त्यर्थः । स ह्यपश्यन्नपि गन्तव्यं गिगमिषति । अन्यथा न क्वचित्तस्य प्रवृत्तिः स्यात् ॥ इदानीमतिप्रसङ्गमुद्भावयति । इहाग्नेरिति । भा ॥ कर्मसंज्ञा चेति ।

---

गोषु ईप्सिततमत्वप्रयुक्ता कर्मसंज्ञा । सत्यम् । चिन्त्यप्रयोजनमेवेप्सित-ग्रहणम् ॥

---

क्वचित्तस्य प्रवृत्तिः स्यात् । यवेभ्यो गां वारयतीति । वृञ् आवरणे चुरादिः । अथात्र गवामपादानसंज्ञा कस्मान्न भवति ईप्सिततमोऽपीप्सितो भवत्येव

तन्वीप्सितमाषाणां न गवादीप्सितं नापि तस्यापादानत्व-मिष्टमत आह

वारयितुरिति ॥ (कै)

यदीप्सितं कर्मेति । (कै)

कर्मशब्दो ऽत्र क्रियापरः । ईप्सितो यो धात्वर्थ इत्यर्थः ॥

तस्य यदीप्सितमिति । (कै)

तज्जन्यफलाश्रय इत्यर्थः । भक्षणादिजनकव्यापारभावस्य हि नाशाभावान्नायतनादिफलमिति भावः । एवं च पूर्वोक्तसमाधान-द्वयाभिप्रायकं लक्षणद्वयं बोध्यम् । एतेनार्थभेदाच्छब्दभेदमात्रेण

---

धर्मो राजभयं च बुद्ध्या प्राप्य निवर्त्तयतीति भाष्यात् । उक्तव्यापाराभावानु-कूला निवर्त्तना च तन्मते धात्वर्थः । अन्येऽभिमुखदेशागमनत्वेनान्धस्य कूप-

---

वचनात् । वा । वारणार्थेषु कर्मग्रहणमनर्थकम् । किं कारणम् । "कर्त्तु-रीप्सिततमं कर्म" ( १ । ४ । ४९ ) इति वचनात् । कर्त्तुरीप्सिततमं कर्म

---

भा । परत्वादिति भावः ॥ कर्मसंज्ञाया अवकाशो वारणार्थेभ्योऽन्ये धातवः । अपादानसंज्ञायास्तु प्रकर्षरहितमीप्सितम् । ईप्सिततमस्य तु उभयप्रसङ्गे परत्वात् कर्मसंज्ञा ॥ अप्राप्नोति । भा । कारकाधिकारे प्रकर्षो न

---

यथा शुक्लतमोऽपि शुक्लः परत्वात् कर्मसंज्ञा भविष्यति कर्मसंज्ञाया अव-काशः वारणार्थेभ्योऽन्यत्र अपादानसंज्ञायास्तु प्रकर्षरहितमीप्सितम् ईप्सित-

लक्षणद्वयकथनमयुक्तमित्यपास्तम् ॥ ननु प्रकर्षाविवक्षणेन अनव-
काशत्वादिदमेव भविष्यतीत्यत आह

प्रकर्षेति । (कै(

अयं भावः । तरबादिः प्रवृत्तिनिमित्तगतप्रकर्षे विधीयते ।
प्रवृत्तिनिमित्तं चात्रेच्छा तस्यां स्वतः प्रकर्षसम्भवेऽपि व्याख्याना-
द्विशेषणीभूतव्याप्तिगतः स गृह्यते व्याप्तिप्रकर्षस्य प्रकृत ॰र्थप्रधानी-
भूतव्यापारप्रयोज्यधात्वर्थफलीयत्वरूपः । एवं च [1]प्रकृतधात्वर्थप्रधानी-

---

१ "प्रकृतधात्वर्थ" इत्यारभ्य "सिद्धमेतत्" इत्यन्तं नास्ति क पुस्तके ॥

---

भूतकर्मिच्छाविषयः । एवं नान्तरीयकविषयभोजनप्रसक्तौ तद्वारणकर्तरि

---

इत्येव सिद्धम् ॥ अयमपि योगः शक्योऽवक्तुम् । कथं माषेभ्यो गा वारयति
इति । पश्यत्वयं यदीमा गावस्तत्र गच्छन्ति ध्रुवं सस्य विनाशः सस्य विनाशे

---

विवक्ष्यते इत्यतस्तं तमनिर्देश्यं मन्यते ॥ कर्मणो यदीप्सितमिति । भा ।
तत्र कर्मसंज्ञा निमित्तमेवापादानसंज्ञाया इति भाष्यकृत् प्रवर्तते । ततस्त-
स्येप्सितस्यापादानसंज्ञा इत्यर्थः ॥ ईप्सितेप्सितमिति । भा । वारयितुर्य-
दीप्सितं कर्म तस्य यदीप्सितमित्यर्थः । शेषषष्ठ्या चात्र समासः । अन्यथा

---

तयस्य तृभयप्रसक्तिः परत्वात् कर्मसंज्ञा । अयमपि प्रमादः । अस्ति ह्यत्रापि
बुद्धिपरिकल्पितोऽपायः कथं पश्यत्वयं यदि भावः सोमे गच्छेयुर्ध्रुवं सस्य विनाशः

भूतव्यापाराश्रयोऽप्रधानधात्वर्थफलाश्रयत्वमीप्सिततमत्वं तच्च नास्त्यत्रेति ॥ ननु कर्त्तृग्रहणात् सिद्धमेतत् प्रकृतसूत्रे इष्येष्यितेति कर्मणा कर्त्तुराक्षेपेणैव सिद्धे पुनः कर्त्तृग्रहणेन प्रकृते धात्वर्थप्रधानीभूतव्यापाराश्रयस्यैव ग्रहणादिति चेन्न। लघुना तमग्रहणेन कर्त्तुरित्यस्य प्रत्याख्याने तात्पर्य्यादित्याहुः ॥ भाष्ये

पश्यत्ययमिति। (भा)

विचारयतीत्यर्थः ॥

---

वेवं विषाद् वारयतीति प्रयोगो भवत्येव। विषस्य विषत्वेन इच्छाविषयत्वाभावेऽपि भक्ष्यत्वेन इच्छा विषयत्वात् ॥

---

ऽधर्मस्यैव राजभयं च। स बुद्ध्या संप्राप्य निवर्त्तयति। तत्र ध्रुवमपायेऽपादानम् (१। ४। २४) इत्येव सिद्धम् ॥

---

त्रेन च पूजायामिति निषेधः स्यात् ॥ कर्त्तुरिति। भा। प्रकर्षप्रत्ययोपादानसामर्थ्यात् कर्मसंज्ञायां प्रकर्षो विवक्ष्यत एव। तत्र द्वयोः संज्ञयोः बाधकाप्रयोः परत्वादीप्सिततमस्य कर्मसंज्ञा ॥

---

सस्य विनाशेऽधर्मस्य राजभयं च स बुद्ध्या संप्राप्य निवर्त्तयतीत्यतो न पोदनीयं प्रत्युदाहरणे धर्मस्याधिकरणसंज्ञा भविष्यतीति ॥

# अन्तर्द्धौ येनादर्शनमिच्छति।१।४।२८॥

"अन्तर्द्धिः" व्यवधानम् "यस्य च भावेन" (२।३।३७) इति सप्तमी॥

---

अन्तर्धौ येनादर्शनमिच्छति।१।४।२८॥ मातुर्निलीयते कृष्णः।

---

अन्तर्धौ येनादर्शनमिच्छति।१।४।२८॥ अयमपि योगः शक्योऽ-

---

अन्तर्धौ येनादर्शनमिच्छति।१।४।२८॥ अन्तर्धत्ते इति।भा। तिरोभवतीत्यर्थः॥

---

अन्तर्धौ येनादर्शनमिच्छति।१।४।२८॥ अन्तर्धाविति सप्तमी येनेति कर्त्तरि तृतीया। न च कृद्योगे षष्ठीप्रसङ्गः। उभयप्राप्तौ कर्मण्ये-

---

अन्तर्धौ येनादर्शनमिच्छति।१।४।२८॥ अन्तर्धाविति नेयं निमित्ताद् कर्मसंयोग इति सप्तमी। यथा हि वेतनेन धान्यं लुनातीत्यत्र वेतनस्य धान्येन योगोऽस्ति तथेहाप्यदर्शनमिच्छतीति इच्छाकर्मणाऽदर्शनेनान्तर्धि-योगो नास्ति। अथादर्शनस्य यत्कर्म आत्माख्य आत्मनोऽदर्शनमिच्छतीति तेनान्तर्द्धेर्योगोऽस्ति यस्यैवादर्शनं तस्यैवान्तर्धानमित्युच्यते। एवमपि निमित्तात् कर्मयोग इति किं निमित्तं गृह्यते। कारणं प्रयोजनं वा। कारणं चेद्व्याघ्रेण वद्धः। अत्रापि प्राप्नोति य एव वध्यते तत्रैव नाव्यमिति तस्मात् प्रयोजनस्य तत्र ग्रहणम्। यथा चर्मणि द्वीपिनं हन्ति इति चर्म द्वीपि-

येन (भा)

इति शौची तृतीया। उभयोः प्रयोगाभावेन "उभयप्राप्तौ" (२। ३। ६६) इत्यस्याप्रवृत्तेः। उभयप्रयोगे एव तत्प्रवृत्तिरिति "आत्ममाने" (३। २। ८३) इति सूत्रे भाष्ये स्पष्टम्॥ अन्तर्द्धि-निमित्तकं यत्कर्तृकमात्मकर्मकादर्शनमिच्छति तदपादानमित्यर्थः॥ नन्वन्तर्धत्त इत्यस्य विभजत इत्यर्थेऽपादानत्वं सिद्धतीत्यत आह

---

कृष्णकर्मकदर्शनाभावप्रयोजकदेशविशेषस्थितिर्धातोरर्थः। धात्वर्थदर्शनक-

---

वक्तुम्। कथम् उपाध्यायादन्तर्धत्त इति। पश्यत्वयं यदि मामुपाध्यायः

---

वेति नियमात्। व्यवधाने सति यत् कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तत् कारकमपादानं स्यात्। मातुर्निलीयते कृष्णः। लीङ् श्लेषणे दैवादिकः।

---

दर्शनस्य प्रयोजनम्। इह तु अन्तर्धानमदर्शनस्य कारणम्। अन्तर्हितः खल्वसौ न दृश्यते। तस्मादिषयसप्तम्येषा सत्सप्तमी वा। येनेति कर्तरि तृतीया। ननु च दर्शनेन योगात् कर्तृकर्मणो कृतीति षष्ठ्याभाव्यम्। उभयप्राप्तौ कर्मण्येवेति नियमात् तृतीया भविष्यति कर्म त्वत्रादर्शनस्यात्मा। नन्वात्मने इति न श्रूयते। मा आवि येनादर्शनमिच्छतीत्युक्ते कस्येत्यपेक्षा-यामात्मन इति गम्यते। अन्तर्धिनिमित्तमिति। अन्तर्धिना कारणेनेत्यर्थः। निमित्तकारणहेतुषु सर्वासांप्रायदर्शनमिति प्रथमा। अथवा बहुव्रीहिरद-दर्शनस्य समानाधिकरणं विशेषणं सूत्रेऽनुपात्तोऽपि तच्छब्दो यत्तदोर्नित्य-सम्बन्धात् लभ्यत एवेत्याह "तत् कारकम्" इति। "अन्तर्धत्त" इति। तिरोभवतीत्यर्थः। "निलीयत" इति। लीङ् श्लेषणे दैवादिकः।

## तिरोभवतीति । (कै)

आत्मकर्मकोपाध्यायकर्तृकदर्शनाभावेच्छया तिरोभवतीत्यर्थः । निवृत्तिपूर्वकतिरोभवने धातोर्वृत्तेः "ध्रुवम्" इति सूत्रेणैव सिद्ध-मिति बोद्धुम् ॥

---

सीत्रापादानम् । तत्पूर्व्वकनिवृत्तिर्धातोरर्थः । तत्र मातुरपादानत्वेनान्वय इति भाष्यमतम् । दर्शने मातृकर्त्तृकत्वप्रत्यासत्तिगम्यम् ॥

---

पश्यति ध्रुवं प्रेषणमुपालम्भो वेति । स बुद्ध्या संप्राप्य निवर्त्तते । तत्र ध्रुवमपाये अपादानम् ( १ । ४ । २४ ) इत्येव सिद्धम् ॥

---

अत्रान्तर्धाविति चिन्त्यप्रयोजनम् । न दिदृक्षते चोरान् इत्यत्र हि परत्वात् कर्मता सिद्धा । इच्छतीति किम् । इच्छायामसत्यां सत्यपि दर्शने यथा स्यात् ॥

---

"चौरान्नदिदृक्षते" इति । आत्मानं ते मा द्राक्षुरित्येवमर्थम् ॥ ननु परत्वात् कर्मसंज्ञा भविष्यति । सत्यम् । अयमपि प्रपञ्चः कथं पश्यत्वेवं यदुपाध्यायः पश्येद् ध्रुवं मे प्रेषणमुपालम्भो वा भवेदिति स बुद्ध्या संप्राप्य निवर्त्तते । येनेत्वस्मिन्नसत्यदर्शनमिच्छतः चिन्त्यस्यैव स्यात् । ध्रुवमित्यनु-वर्त्तिष्यते एवं तर्हि सूत्रस्यावाचकत्वं मा भूत् । असति हि तस्मिन् अन्तर्धौ ध्रुवमपादानसंज्ञं भवति तच्चेद् ध्रुवमदर्शनमिच्छतीत्यर्थः स्यात् । न च ध्रुवमिच्छति यच्चेच्छति न तद्ध्रुवमित्यवाचकं स्यात् ॥

# आख्यातोपयोगे । १ । ४ । २९ ॥



व्यापार इति । (कै)

उपयुज्यते फलाय इति व्युत्पत्तेरिति भावः ॥

आरम्भकाः । (कै)

गीतश्रोतॄणां मध्ये मुख्याः ॥

यत्नेन प्रवृत्तिमन्तो गच्छन्तीति । (कै)

"प्रवृत्तिर्"च व्यापारसामान्यं "यत्नेन" इत्यस्य प्रति यत्नेनेत्यर्थः ॥

व्यापारमात्रे इति । (कै)

कारकाधिकारादिति भावः ॥

---

आख्यातोपयोगे । १ । ४ २९ । उपाध्यायादधीते । उच्चारणोत्तर-

---

आख्यातोपयोगे । १ । ४ । २९ ॥ उपयोग इति किमर्थम् । नटस्य शृणोति । ग्रन्थिकस्य शृणोति । उपयोग इत्युच्यमानेऽप्यत्र प्राप्नोति । एषोऽपि ह्युपयोगः । आतश्चोपयोगो यदारम्भका रङ्गं गच्छन्ति नटस्य श्रोष्यामो ग्रन्थिकस्य श्रोष्याम इति । एवं तर्ह्युपयोग इत्युच्यते सर्वश्चोप-

---

आख्यातोपयोगे । १ । ४ । २९ ॥ उपयोगो व्यापारः स चावच्छिन्नो नटोपाध्याययोरिति मत्वा पृच्छति । उपयोग इति किमर्थमिति । आरम्भका रङ्गं गच्छन्तीति । रङ्गं सामाजिकस्थानम् । आरम्भका यत्नेन प्रवृत्तिमन्तो गच्छन्तीत्यर्थः ॥ प्रकर्षगतिरिति । भा । व्यापारमात्रे कर्मे

ग्रन्थार्थधारणार्थमिति । (कै)

यदा तु नटादिभ्योऽपि तथाध्ययनं तदा नटाच्छृणोतीति भवत्येवेति बोध्यम् ॥

अयमर्थ इति । (कै)

उपयोगशब्दस्य तत्रैव रूढिरन्यत्र तु लक्षणया प्रयोग इत्यर्थः ॥

नियमः । (कै)

भिक्षाचरणभूशय्यादिः । इदं च तत्तद्विधाश्रवणानियमाना-मुपलक्षणमित्याहुः ॥

उभयथेति । (कै)

नटं विना गीतश्रवणाद्ययोगात्तस्य तज्जनकतया कारकत्वं कुलाल-पितृवदन्यथासिद्धत्वसम्भावनया वा कारकत्वमिति भावः ॥ भाष्ये

---

कालिको नियमपूर्वको ग्रन्थस्वीकारानुकूलो व्यापारो धात्वर्थः । उच्चारणा-

---

योगस्तत्र प्रकर्षगतिर्विज्ञास्यते। साधीयो य उपयोग इति । कश्च साधीयः। यो ग्रन्थार्थयोः॥ अथवोपयोगः को भवितुमर्हति । यो नियमपूर्वकः। तद्यथा । उपयुक्ता माणवका इत्युच्यन्ते य एते नियमपूर्वकमधीतवन्तो भवन्ति॥ किं पुनराख्यातानुपयोगे कारकमाहोस्विदकारकम् । कश्चात्र विशेषः। आख्यातानुपयोगे कारकमिति चेदकथितत्वात् कर्मसंज्ञाप्रसङ्गः।

---

उपयोगग्रहणं विशिष्टव्यापारपरिग्रहार्थम् । तेन ग्रन्थार्थधारणार्थं यद्-ग्रहणं स उपयोगः। अथवेति । भा । उपयोगशब्दस्यैवायमर्थो नियमपूर्वकं विद्याग्रहणम् । किं पुनरिति । भा। उभयथा सम्भावाद्दोषदर्शनाच्च प्रश्नः । यद्यपक्रामतीति । भा। यथा फलं वृक्षादपक्रान्तं न पुनर्वृक्षे तद्भवति

**अनुयोगे इति ।** (भा)

अनियमपूर्वकश्रवणे इत्यर्थः ॥

**कर्मसंज्ञाप्रसङ्ग इति ।** (भा)

अपादानादिभिरसङ्कीर्तितत्वं च तत्प्राप्तिपूर्वकाविवक्षायामिव सर्वथा तदप्राप्तावपीति तात्पर्य्यम् । कर्मयुक्तांशोऽपि तत्र परिगणनलभ्य एवेति बोध्यम् ॥

**अस्तु तर्हि कारकमिति।** (भा)

गीतद्वारा तस्य तज्जनकत्वाद् द्वारेण द्वारिणो नान्यथासिद्धिरिति तद्विवक्षैवेति भावः ॥

---

अयोऽत्रापादानम् । अपादानत्वेनैव बोधः सर्वत्र । उपाध्यायान्निःसरन्तं ग्रन्थमधीतेरर्थः । अतिप्रसङ्गस्यानभिधानाद्वारणीय इति भाष्यमतम् ॥

---

वा ॥ आख्यातानुपयोगे कारकमिति चेदकथितत्वात् कर्मसंज्ञा प्राप्नोति (१ । ४ । ५१ ) ॥ अस्तु तर्ह्यकारकम् । अकारकमिति चेदुपयोगवचनानर्थक्यम् । वा । यद्यकारकमुपयोगवचनमनर्थकम् ॥ अस्तु तर्हि कारकम् । ननु चोक्तमाख्यातानुपयोगे कारकमिति चेदकथितत्वात् कर्मसंज्ञाप्रसङ्ग इति । नैष दोषः । परिगणनं तत्र क्रियते ।

---

एवं शब्देऽपि प्रसंङ्ग इत्यर्थः । सन्ततत्वादिति । भा । शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पद्यमाना भिन्ना अपि सादृश्यात्तत्त्वेनाध्यवसीयमानाः श्रोतुः पुनः पुनः श्रोत्रप्रदेशं गच्छन्तो व्यक्तिस्फोटरूपं जातिस्फोटरूपं वा शब्दमभिव्यञ्जयन्तीत्यर्थः ॥ अथवेति । भा । यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात् तत्त्वेनाध्यवसीयमानं सन्ततं

**अपक्रामति तस्मात्तदध्ययनमिति ।** (भा)

अधीयमानवाक्यजातमध्ययनमित्युच्यते । एवं चापक्रमजनितविश्लेषाश्रयत्वादुपाध्यायस्यापादानत्वं सिद्धम् । उपाध्यायादपक्रान्तं शब्दजातमुपादत्ते इत्यर्थादिति भावः ॥ शब्दानामपक्रमणं न युक्तमिति शङ्कते

**यद्यपेति ॥** (भा)

**शब्दस्य व्यञ्जकाध्वनय इति ।** (कै)

पुनः पुनरुत्पाद्यमानत्वेन सन्ततत्वमिति भावः ॥ ननु तेषां भिन्नत्वात् कथं तद्रूपानुरक्तस्य स्फोटस्य स एवायमित्येकताप्रत्ययोऽत आह

**सादृश्यादिति ॥** (कै)

**यथा ज्वालारूपमिति ।** (कै)

प्रतिक्षणं विनश्यदपीत्यर्थः ॥

---

दुहि याचि रुधि प्रच्छि भिक्षि चिञाम्

इति ॥ अयमपि योगः शक्योऽवक्तुम् । कथम् उपाध्यायादधीत इति । अपक्रामति तस्मात्तदध्ययनम् । यद्यपक्रामति किं नात्यन्तायापक्रामति । सन्ततत्वात् ॥ अथवा ज्योतिवंज्ज्ञानानि भवन्ति ॥

---

तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्यमानानि सन्ततान्युच्यन्ते । ज्ञानस्य शब्दरूपापत्तिरिति दर्शनमत्र भाष्यकारस्य । तथाचोक्तम् ।

"वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थित" इति ॥

सन्ततमिति। (कै)

तथा व्यवहारविषय इति भावः॥ *वायोः कश्चित् परमाणूनां शब्दतन्मात्रादिरूपाणां केषाञ्चित्। कश्चिद् ज्ञानस्य शब्दत्वमिष्यते॥

तदुक्तं हरिणा

---

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थितः॥
लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्त्तिना।
स्थानेष्वभिहितो वायुः शब्दत्वं प्रतिपद्यते॥
तस्य कारणसामर्थ्याद्वेगप्रचयधर्मिणः।
सन्निपाताद्विभज्यन्ते सारवत्योऽपि मूर्त्तयः॥
अणवः सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः।
छायातपतमः शब्दभावेन परिणामिनः॥
स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः॥
अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम्।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन निवर्त्तते॥
स मनोभावमापद्य तेजसा पाकमागतः।
वायुमाविशति प्राणमथासौ समुदीर्य्यते॥
अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।
तद्धर्मेण समाविष्टस्तेजसैव विवर्त्तते॥
विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः।
प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते॥
अजस्रवृत्तिर्यः शब्दः सूक्ष्मत्वान्नोपलभ्यते। (नोपलभ्यते)
व्यजनाद्वायुरिव स स्वनिमित्तात्प्रतीयते॥

"लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्त्तिना ।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥"

वक्तुरिच्छा इत्यनेनैकस्यैव वायोरनेकशब्दत्वोपपत्तिरुक्ता ॥ तथा

---

तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।
विवर्त्तमाना स्थानेषु सैषा भेदं प्रपद्यते ॥
शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी ।
यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतीयते ॥
षड्जादिभेदः शब्देन
व्याख्यातो रूप्यते यतः ।
तस्मादर्थविधाः सर्वाः
शब्दमात्राः सुनिश्चिताः ॥

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्त्तत ॥

इति कर्त्तव्यता लोके सर्वा शब्दव्यपाश्रया ।
यां पूर्वाहितसंस्कारो बालोऽपि प्रतिपद्यते ॥
आद्यः करणविन्यासः प्राणस्योर्द्ध्वं समीरणम् ।
स्थानानामभिघातश्च न विना शब्दभावनाम् ॥
न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥
वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥
सा सर्वविद्या शिल्पानां कलानां चोपबन्धनी ।
तद्वशादभिनिष्पत्तौ सर्वं वस्तु विभज्यते ॥

"अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः।
छायातपतमःशब्दभावेन परिणामिनः।
स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः।
अभ्राणीव प्रतीयन्ते शब्दाख्याः परमाणवः॥"

---

सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते।
तन्मात्रामव्यतिक्रान्तं चैतन्यं सर्वजन्तुषु॥
अर्थक्रियासु वाक् सर्वा
समीहयति देहिनः।
तदुत्क्रान्तौ विसंज्ञोऽयं
दृश्यते काष्ठकुड्यवत्॥
प्रविभागे यथा कर्त्ता तथा कार्ये प्रवर्त्तते।
अविभागे तथा सैव कार्यत्वेनावतिष्ठते॥
स्वमात्रा परमात्रा वा श्रुत्या प्रक्रम्यते यथा।
तथैव रूढतामेति तया ह्यर्थो विधीयते॥
अत्यन्तमतथाभूते निमित्ते श्रुत्युपाश्रयात्।
दृश्यतेऽलातचक्रादौ वस्त्वाकारनिरूपणा॥
अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥
तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते॥

---

अन्तर्वर्तिना प्रयत्नेनोर्ध्वमुदीरितः प्राणो वायुस्तेजसानुगृहीतः शब्दतामापद्य शब्दघनसंहन्यमानया प्रकाशमानया युक्तस्यान्तःसन्निवेशिनः शब्दस्याविभक्तं बिम्बमुपगृह्णातीत्येकेषां मतम्॥

तथा

१"अथायमन्तरो ज्ञाता सूक्ष्मवागात्मना स्थितम्।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन २विवर्त्तते॥"

"ज्ञाता" इत्यभिनिविष्टमन्तःकरणम्॥

---

१ "अथेदमान्तरं ज्ञानम्" इति पाठोऽप्यस्ति।

२ निवर्त्तते।

---

नाभिप्रदेशात् प्रयत्नप्रेरितो वायुरूर्ध्वमाक्रमन् उरः प्रभृतीनि स्थानान्याहन्ति तेन चान्तःस्थितशब्दस्य कत्वादिनाभिव्यक्तिरित्यपरमतम्॥

आचार्य्यः खल्वप्याह

"आत्मा बुद्ध्या समेत्यार्थान् मनोयुङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्" इति॥

अपर आह। मनोऽभिहतः कायाग्निः प्राणमुदीरयति स नाभेरुत्थमूर्धन्यभिहतोऽन्येन पुनश्चयताभिहन्यमानः ख इति क इति वा ध्वनिः सम्पद्यत इति॥

सूक्ष्मो वायुरिव सर्वमूर्त्तीनामन्तर्वहिश्च ध्वनिरवस्थितः। स एव केश्चिदाकाश इति पठ्यते। तत्र यथा सूक्ष्मस्य वायोर्व्यजनादभिव्यक्तिः तथा सूक्ष्मो ध्वनिः स्वनिमित्तैरभिव्यक्तप्रचितप्रक्रियारूपः श्रोत्रदेशं प्राप्त उपलभ्यत इत्यर्थः॥

शब्दः प्राणाधिष्ठानो बुद्ध्यधिष्ठानश्च ताभ्यां प्राणबुद्धिशक्तिभ्यामभिव्यक्तोऽर्थं प्रत्याययति तत्र बुद्धितत्त्वान्तरासन्निविष्टः प्राणा ऊर्ध्वमभिप्रवृत्तस्तत् स्थानेषु प्रयत्नानुविधाय्याघातेनानित्यशब्दरूपेण विवर्त्तते स च प्राणविवर्त्तः पृथिवीकाशान्यग्रोधादिवद्भेदं प्राप्य परस्मिन् शब्दात्मनि भेदानुरागं संनिवेशयति॥

"स मनोभावमापद्य तेजसा पाकमागतः"

"तेजसा" जाठरेण । "पाकम्" दाहम् ॥

"वायुमाविशति प्राणमथासौ समुदीर्य्यते"

असौ स वृत्तिमनोयुतः प्राणस्तदाह

---

सर्वा अप्यर्थजातयः सूक्ष्मरूपेण शब्दाधिष्ठानाः । ताः किलात्माभिव्यक्तिमधिष्ठानपरिणामे स प्रतिलभमाना वाच्यवाचकभावरूपेण भेदेन प्रतीयन्ते ॥ एवं ह्याह

"वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं सन्निहितं सन्तनोति । वाचैव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते" इति ॥

संविज्ञातपदनिबन्धनो हि सर्वोऽर्थः शब्देन निरूप्यमाणो व्यवहारमवतरति । अत एव असंविज्ञातपदानां विशेषावधारणं निबन्धनपदप्रत्ययमन्तरेण न जायते । गोपालादयोऽपि हि निबन्धनपदानि प्रकल्प्य गवादिविशेषविषयं व्यवहारमीहन्ते । तस्मात् सर्वत्र शब्दाध्यारूढो भेदवानर्थः शब्दशक्तिसंरूढः शब्दविषयया बुद्ध्या प्रकाश्यत इत्यर्थः ॥

यथैव मृद्धर्मसमन्वयान्मृद्विवर्त्तं घटं व्यवस्थापयन्ति तथैवाम्नाये सम्भृतभोग्यभोक्तृशक्तेर्वागात्मनो बहुधा करणत्वमाम्नातं सर्वत्र शब्दमात्रात्मन्वयात् । तमाम्नायमेवाह छन्दोभ्य इति ॥ अन्यत्रापि । "ऋङ्मयो यजुर्मयः साममयः वैराजः पुरुषो वै यज्ञस्तस्यैता लोकं एवास्मिन्न आहुतयस्ता वै त्रयो लोका" इति ॥ तथा "एष वै छन्दस्यः साममयः प्रथमो वैराजपुरुषो योऽन्नमसृजत तस्मात् पशवोऽजायन्त पशुभ्यो वनस्पतयो वनस्पतिभ्यो दिशः" इति भगवत्योऽपि

"वागेव विश्वा भुवनानि जज्ञे वाच इत् सर्वममृतं यच्च मर्त्यम्" इति ॥ पुराकल्पोऽप्याह

"विभज्य बहुधात्मानं स छन्दस्यः प्रजापतिः ।
छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ॥

"अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।
तद्धर्मेण समाविष्टस्तेजसा सोऽपि पच्यते ॥"

तद्धर्मेण दाहेन दाहकत्वादेव ॥

---

१ तेजसैव विवर्त्तते ॥

---

शाब्दी वाग् भूयसी येषु पुरुषेषु व्यवस्थिता ।
अधिकं वर्त्तते तेषु पुण्यं रूपं प्रजापतेः ॥
प्राजापत्यं महत्तेजस्तत्पात्रैरिव संवृतम् ।
शरीरभेदे विदुषां स्वां योनिमुपधावति ॥
यदेतन्मण्डलं भास्वद्धाम चित्रस्य राधसः ।
तद्भावमभिसम्भूय विद्यायां प्रतिलीयते" ॥
"भेदोद्ग्राहविवर्त्तेन लब्धाकारपरिग्रहा ।
आम्नाता सर्वविद्यासु वागेव प्रकृतिः परा ॥
एकत्वमभिविक्रान्ता वाङ्नेत्रा वाङ्निबन्धनाः ।
पृथग्वदवभासन्ते वाग्विभागा गवादयः ॥
षड्द्वारां षडधिष्ठानां षट्प्रबोधां षडव्ययाम् ।
ते मृत्युमतिवर्त्तन्ते ये वै वाचमुपासत" ॥
"प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान् ।
सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्त्तते" ॥
सर्वो हि विकार आत्ममात्रेति केषाञ्चिद्दर्शनम् ।

स च प्रतिपुरुषमन्तः सन्निविष्टो वाह्य इव प्रत्यवभासते वस्तुतस्तस्यै-कत्वादमूर्त्तत्वादरूपत्वाच्च व्यवहारमात्रमिदमन्तर्बहिरिति अपरेषां मतम् ॥ एकस्य चितितत्त्वस्यायं परिणाम इत्यादि स्वमाता वादिनां दर्शनम् । चैतन्यं भूतयोनि (नो)ति तत्तोदरत्वात्मविभज्यत इत्येकेषां मतम् ॥ अन्येषां तु

"विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग् विधैः"

"श्रुतिरूपैः" ध्वनिरूपैः सहेति शेषः ॥

"प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते" इति ।

"प्राणः" सवृत्तिकमनोरूपान्तःकरणयुतः । एतावतैव ज्ञानस्य शब्दत्वमिति द्रष्टव्यम् ॥

---

दर्शनं यथा महतोऽग्नेर्विस्फुलिङ्गाः सूक्ष्मा वायोरभ्रसङ्घातस्चन्द्रकान्तादिभागिन्यस्तोयधाराः पृथिव्या वासावारोहप्रसवान्यग्रोधा इत्येवमादिपरमात्मवादिनां विद्याभाष्येभ्यः प्रतिपत्तव्यम् । एवम्भूतः सर्वोऽपि प्रपञ्चः यथा श्रुत्या प्रक्रम्यते । श्रुत्यान्तः सन्निवेशिना शब्देन सुखदुःखादिभावेन प्राणिषु बहुधा प्रक्रम्यते दर्श्यते स तथैव तत्र शब्दे रूढतामेति । अत एव तया श्रुत्यार्थो विधीयते निश्चीयते न शब्दैर्यत इत्यर्थः ॥ श्रुतौ सर्वमर्थस्वरूपं सन्निविष्टं यतः सा तमर्थं जनयतीव स हि तस्यां प्रत्याय्यात्मनानित्यमवस्थितः । न हि बाह्यं वस्तुगतं सत्त्वं श्रुतिरपेक्षते । यथा सर्वप्रदेशव्यापिक्रियायां शब्दभावनानुगतायामलातचक्रादिश्रुतिरवतिष्ठमाना व्यावहारिकाणां तेषां शब्दानां स्वानुगतार्थेनार्थवत्तां प्रकल्पयति । तया च श्रुत्या कल्पितो वस्त्वाकारः सत्यप्यनुमानवलीयस्त्वे रूढो भवति । अत्यन्तासत्सु च शशविषाणादिषु श्रुतिरेवार्थं नयति प्रत्यक्षविरोधेऽपि । एवं च सर्वत्र प्रत्यक्षसिद्धेऽत्यन्तसिद्धे वार्थे बोधोपयोगिशब्द एव कारणमिति तात्पर्यम् ॥

इह द्वौ शब्दात्मानौ कार्यो नित्यश्च तत्राद्यो व्यावहारिकः पुरुषस्य वागात्मनः प्रतिबिम्बोपग्राही अन्यस्तु सर्वव्यवहारयोनिः संहृतक्रमः सर्वेषामन्तःसन्निवेशी प्रभवो विकाराणामाश्रयः ॥ सर्वकर्मणामधिष्ठानं सुखदुःखयोः सर्वत्राप्रतिहितकार्यशक्तिः परिच्छिन्नभोगक्षेत्रावधिः सर्वमूर्तीनामपरिणामा प्रकृतिः बोधरूपतया नित्यप्रवृत्तप्रत्ययभावप्रवृत्तिनिवृत्तिपदाभ्यां पर्यन्ववदमिवच प्रसवोच्छेदशक्तियुक्तः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभ-

## दर्शनम् (कै)

सिद्धान्तः ॥

## प्रवादः । (कै)

भाष्याणि ॥ नटस्य शृणोतीत्यादावीदृशबुद्धिकृतापायविवक्षा-भिधानाचेति नाति प्रसङ्गः ॥

---

अस्मिन् खलु वाग् योगविदो विच्छिद्याहङ्कारग्रन्थीन् अत्यन्तं संसृज्यन्ते। आह च

"चत्वारि शृङ्गा त्रयोऽस्य पादा" ( ऋग्वेद ४ । ५८ । ३ ) इत्यादि ऋग्वर्णः ॥

व्यवस्थितसाधुभावे हि शब्दतत्त्वे संक्लिश्यमानेऽपभ्रंशापगमादाविर्भूते धर्मविशेषे नियतोऽभ्युदयः। तदभ्यासाच्च शब्दपूर्वकं योगमधिगम्यप्रतिभा-तत्त्वप्रभवां भावविकारप्रकृतिसत्तां साध्यसाधनशक्तियुक्तां सम्यगवबुध्य नियतं क्षेममाप्नोतीत्यर्थः। आह च

"प्राणवृत्तिमतिक्रान्ते वाचस्तत्त्वे व्यवस्थितः।
क्रमसंहारयोगेन संहृत्यात्मानमात्मनि ॥
वाचः संस्कारमादाय वाचः स्थाने निवेश्य च।
विभज्य बन्धनान्यस्याः कृत्वा तां छिन्नबन्धनाम् ॥
ज्योतिरान्तरमासाद्य छिन्नग्रन्थिपरिग्रहम्।
परेण ज्योतिषैकत्वं छित्वा ग्रन्थीन् प्रपद्यत" इति ॥

"वाग् वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकु-र्विति। सोऽब्रवीद् वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति ऐन्द्रवायवः सह गृह्यते। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वाग् उद्यते। तै-सं ६ । ४ । ७ । ३ ।

# जनिकर्त्तुः प्रकृतिः । १ । ४ । ३० ॥

ननूपादानकारणे समवेततयोत्पद्यमानस्य कथं ततोपक्रम इत्यत आह

लोकेति । (कै)

यथा वृक्षजन्ये फले वृक्षादपक्रान्तत्वव्यवहारः ॥

---

जनिकर्त्तुः प्रकृतिः । १ । ४ । ३० ॥ ब्रह्मणः प्रजाः प्रजायन्ते । उपा-

---

जनिकर्त्तुः प्रकृतिः । १ । ४ ३० ॥ अयमपि योगः शक्योऽवक्तुम् ।

---

जनिकर्त्तुः प्रकृतिः । १ ४ । ३० ॥ अपक्रामन्ति ता इति । भा । लोकप्रसिद्ध्याश्रयेणैतदुच्यते । लोके हि यद्यस्माज्जायते तत्तस्मान्निर्गच्छतो-

---

जनिकर्त्तुः प्रकृतिः । १ । ४ । ३० ॥ जायमानस्य हेतुरुपादानं स्यात् । पुत्रात् प्रमोदो जायते । इह जनिरुत्पत्तिः । जनिरुत्पत्ति-रुद्भव इत्यमरः । इन्जजादिभ्यः इति जनेर्भावे इञ् जनिघसिभ्यामित्यादि सूत्रेणेञ् वा । जनिवध्योश्च इति वृद्धिप्रतिषेधः । तस्याः कर्त्तेति षष्ठीतत्-

---

जनिकर्त्तुः प्रकृतिः । १ । ४ । ३० ॥ जनेः कर्त्ता जनिकर्त्तेति कर्मणि षष्ठ्याः समासः । अयमेव च निर्देशो ज्ञापयति "कर्त्तरि चे" ति प्रतिषेधोऽनित्य इति । कः पुनरत्राविशेषत आह "जन्यर्थस्येति" । एतदुक्तं भवति । जनिशब्दोऽयमिन्जादिभ्य इति जनेर्भावे इञमुत्पाद्य व्युत्पादितः । "जनि-

तन्त्राश्रयाः। (कै)

शास्त्राश्रयाः॥ "तर्काश्रया" इति पाठेऽपि स एवार्थः॥

तत्रास्तीति। (कै)

अन्योत्तरमिति भावः॥

---

हानकारणमपादानम्। जनिकर्तुः प्रकृतिरिति सूत्रात्। सूत्रे प्रकृति-
रुपादानकारणम्। अत्रापादानिका प्रजाकर्तृकोत्पत्तिरितिबोधः।

---

कथं गोमयाद् वृश्चिको जायते। गोलोमाविलोमभ्यो दूर्वा जायन्ते इति।

---

रुच्यते। तर्काश्रयस्तु प्रक्रियाभिद्यन्ते। वैशेषिकदर्शने परमाण्वादिसम-
वेतं कारणेभ्योऽपृथग्देशं कार्य्यमुत्पद्यत इति नास्ति कार्य्यस्यापक्रमः
सांख्यदर्शनेऽप्याविर्भावतिरोभावलक्षणजन्मनाशरूपपरिणामाभ्युपगमान्ना-

---

पुरुषः। कर्त्तरि चेति प्रतिषेधस्त्वनित्यः अत एव ज्ञापकात्। यद्वा शेषषष्ठ्या
समासोऽयम् निषेधस्तु कर्मषष्ठीविषय इति "कारक" इति सूत्रे कैयटः।
तथा चार्थमात्रस्य ग्रहणाद्धात्वन्तरयोगेऽपि भवति अङ्गादङ्गात् सम्भवतीति
यथा। एतेन इक् श्तिपौ धातुनिर्देशे इति इका निर्देशेऽयमित्याश्रित्य

---

वध्योत्र" इतिवद्धिप्रतिषेधः। जन्यार्थवाची न तु "इक्श्तिपौ धातुनिर्देशे"
इति इक्प्रत्ययान्तः। गमहनेत्युपधालोपप्रसङ्गात्। नाप्यागमशुकेनेकारेण
धातोर्निर्देशः। शब्दात्मकस्य धातोः कर्त्रा सम्बन्धायोगात्। अथाप्यर्थ-
द्वारको योगः स्याद् एवमपि धातुनिर्देशे तस्यैव प्रयोगे स्याद् न पर्य्यायस्य।
अङ्गादङ्गात् सम्भवोऽस्तीति। अर्थग्रहणे तत्रापि भवतीति। "प्रकृतिः"

द्रव्यान्तरारम्भेति । (कै)

खण्डपटादिरीत्येत्यर्थः ॥

परिणामेति । (कै)

साङ्ख्यमते प्रतिक्षणपरिणामित्वात् पदार्थानां गोरोमादेस्तत्तद-वस्थापूर्वांरूपेण परिणाम इति भावः ॥

---

ब्रह्मणो निःसरमाणा जायन्त इत्यर्थः । निःसरणं लोकप्रसिद्धाश्रयं

---

अपक्रामन्ति तास्तेभ्यः । यद्यपक्रामन्ति किं नात्यन्तायापक्रामन्ति । सन्त-तत्वात् । अथवान्याश्चान्याश्च प्रादुर्भवन्ति ॥

---

त्यपक्रमः ॥ यदीति । भा । यद्यतोपक्रामतितत्पुनस्तत्र न दृश्यते इति प्रसि-द्धम् । इह तु तत्रास्ति दर्शनमिति प्रश्नः ॥ सन्ततत्वादिति । भा । अविच्छे-

---

गमहनेत्युपधालोप अर्थासङ्गतिं चोद्भावयन्तो मीमांसावार्त्तिककाराः समा-हिताः । अत्र प्रकृतिग्रहणमुपादानमात्रपरमित्येके । अत एव "प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्" ( वेदान्तदर्शन—अ १ । पा ४ । सू २३ ) इत्यधिकरणे ब्रह्मणो जगदुपादानतायां "यतो वा इमानि भूतानि जायन्ते"

---

इत्यस्य विवरणं "कारणम्" इति । उपादानकारणमित्यर्थः । अन्ये तु पुत्रग्रहणमनुवृत्तेरेव प्रकृतिपरिग्रहे सिद्धे प्रकृतिग्रहणं कारणमात्र-परिग्रहार्थं वर्णयन्ति । अत एव हेत्वावुक्तं कारणमिति न पुनरुपादान-कारणमिति । तेन च पुत्रात्प्रमोदो जायत इत्यादावपि भवतीति । किं पुनःसत् जायते उतासत् । न तावत्सत् । जन्म वैयर्थ्यात् । यदि

जन्मायोगादिति । (कै)

वैकल्यादिति भावः ॥

कर्तृत्वासम्भवादिति । (कै)

किं चैवं शशविषाणादेरप्युत्पत्तिप्रसङ्गः । किं चैतन्मते कलिकावस्थायामसत एव गन्धस्य विकसावस्थायामुत्पत्तिर्वाच्या । एवं च सर्वपुष्पेषु विकसमात्रेण गन्धोत्पत्त्यापत्तिः । एवं वालोऽविद्यमानस्य

---

यद्यस्माज्जायते ततो निर्गच्छति इति लोकव्यवहारात् । स च व्यवहार

---

दादित्यर्थः । यथा विलाद्दीर्घभोगो भोगी निष्क्रामन्नप्यविच्छेदात्तत्रोपलभ्यते तथा दूर्वा अपीत्यर्थः ॥ अथवेति । भा । क्षणिकपक्षं द्रव्यान्तरारम्भपक्षं वा परिणामपक्षं वाश्रित्यैतदुक्तमित्याहुः ॥ ननु सतो वात्मायोगादसतश्च

---

इति पञ्चमीमुपष्टम्भिकामाहुः । अन्ये तु पुत्रात् प्रमोदो जायते इतिवत्तिवारणात् प्रकृतिशब्दकारणमात्रपर इत्याहुः । अस्मिंश्च पक्षे यतो वेति सामान्यशब्दोऽपि उपादानरूपविशेषपरः "त्यागो वा मन्त्रवर्णात्" ( मीमांसाद—अ ६ । पा ८ । सू ३१ ) इति वाक्यन्यायात् । "अहमेव

---

जन्मनः प्रागेव सत् किं जन्मना । अथैवमपि जन्म जायस्व जायस्व इत्येव घटो जायते । नाप्यसत् । असतः कर्तृत्वायोगात् । शशविषाणादेरपि जन्मप्रसङ्गाच्च ॥ उक्तमच—

"पूर्वावस्थामविजहत्संस्पृशन् धर्ममुत्तरम् ।
संमूर्छित इवार्थात्मा जायमानोऽभिधीयते ॥"

शुक्रशोणितादेर्यौवने उत्पत्तौ तृतीयप्रकृतावपि तदुत्पत्तिप्रसङ्ग इति बोध्यम् ॥ उत्तरम्

बुद्धीति ॥ (कै)

कारकरूपम् । (कै)

कारकत्वम् ॥

---

उपादानकारणविषय एवेति भाष्यमतम् । पुत्रात् प्रमोदो जायते इत्यादावुपादानत्वारोपेणापादानत्वं बोध्यम् ॥

---

कर्तृता सम्भवात् पञ्चान्तराभावाच्च कथमङ्कुरो जायते इति प्रयोगः । नैष दोषः । बुद्धिव्यवस्थापितस्यार्थस्य क्रियायां कारकरूपोपगमात् ॥

---

वक्ष्याम" इति सामानाधिकरण्यं श्रूयते तच्च चतुर्धा भमे । बाधायामभेदे तादात्म्ये च । प्रकृते तादात्म्ये । भिन्नत्वे सत्यभिन्नसत्त्वाकत्वं आविद्यकः सम्बन्धविशेषो वा तादात्म्यमित्याद्युत्तरमीमांसायां स्पष्टम् ॥

---

इति । एतच्च "आम्नहत" इत्यत्र उपपादयिष्यामः । किंच अस्माकमनेन दुस्तर्कैण । अस्ति तावच्छृङ्गाच्छरो जायत इति प्रयोगः स उपपादनीय इत्येतावत् । अयमपि प्रपञ्चः । लोके हि यद् यस्माज्जायते ततस्ततो निर्गच्छतीत्युच्यते । लोकप्रसिद्ध्यनुसारेण शब्दप्रयोगः । अर्थतत्त्वं तु तथाभवत्वन्यथा वा ॥

# भुवः प्रभवः । १ । ४ । ३१ ॥

भेद एवापायमिति । (कै)

सादृश्यमूलकोऽपि नाभेदाध्यवसाय इति भावः ॥

---

भुवः प्रभवः । १ । ४ । ३१ ॥ हिमवतो गङ्गा प्रभवति । प्रथमप्रकाशोऽत्र धात्वर्थः । तदाधारो हिमवदादिरत्रापादानम् । हिमवदपादानकं गङ्गाकर्तृकः प्रथमः प्रकाश इति बोधः । हिमवतो निःसरमाणा प्रकाशते इति वार्थः ॥ प्रासादात् प्रेक्षते इत्यादौ वाक्यैकदेशन्यायेन बोधः । पञ्च-

---

भुवः प्रभवः । १ । ४ । ३१ ॥ अयमपि योगः शक्योऽवक्तुम् । कथं

---

भुवः प्रभवः । १ । ४ । ३१ ॥ सन्ततत्वादिति । भा । सादृश्यनिबन्धन-

---

भुवः प्रभवः । १ । ४ । ३१ ॥ भूकर्तुः प्रभवः प्रागवत् । हिमवतो गङ्गा प्रभवति कश्मीरेभ्यो वितस्ता प्रभवति । तसु उपक्षये । भावे क्तः । विगतक्षा वितस्ता । अक्षोभ्या इत्यर्थः । अत्रोपलभतेः कर्मव्यापारे प्रभवतिर्वर्तते । प्रकाशत इत्यर्थः । भौवार्थानामित्यारभ्भोऽयं सत्सूत्रोभाष्ये

---

भुवः प्रभवः । १ । ४ । ३१ ॥ भवनं भूः । सम्पदादित्वात् क्विप् । अत्रापि प्रथमव्यक्तो ग्रहणः । न हि केवलस्य भवत्यर्थस्य प्रभवनेन योगः

---

न्यर्थः व्यवन्तार्थक्रियाकर्म ॥ आसनात् प्रेक्षते इत्यादावुपदिश्य इत्याद्यर्था-धिकरणं प्रथमार्थः। प्रासादादितो निःसरता चक्षुषा तद्वृत्त्या वा प्रेक्षत इति अर्थः। प्रासादस्थपुरुषान्निष्क्रमणमेव प्रासादावधिकत्वेनोपपद्यत इति भाष्यमतम्। वनाद् ग्रामो योजने योजनं वा। अत्राव्यवहितोत्तरत्वं पञ्चम्यर्थः। स्वाव्यवहितोत्तरवृत्तित्वं प्रथमासप्तम्योरर्थः। एवं च वनाव्यव-हितोत्तरयोजनाव्यवहितोत्तरदेशवृत्तिर्ग्राम इति बोधः। कार्त्तिक्या आग्र-

---

हिमवतो गङ्गा प्रभवतीति। अपक्रामन्ति तास्तस्मादापः। यद्यपक्रामन्ति

---

तत्त्वाध्यवसायादविच्छेदेन तासामुपलम्भादित्यर्थः॥ अथवेति। भा। वस्तु-तोऽत्र भेद एवापायमिति भावः॥

---

प्रत्याख्याता। तथाहि। चोरेभ्यो बिभेति। भयान्निवर्त्तत इत्यर्थः। त्रायते रक्षणेन चोरेभ्यो निवर्त्तयतीत्यर्थः। पराजयते। ग्लान्या। निवर्त्तत इत्यर्थः। वारयति। प्रवृत्तिम्प्रतिबध्नन् निवर्त्तयति। निलीयते। निलय-नेन निवर्त्तते इत्यर्थः। अधीते। उपाध्यायान्निःसरन्तं शब्दङ्गृह्णाती-त्यर्थः। शृङ्गाच्छरो जायते इत्यत्रापि। ततोऽपक्रामति। यथा वृक्षात् फलमिति। लोकप्रसिद्धाश्रयेणापायो बोध्यः। प्रभवतीत्यत्रापि भवनपूर्वकं निःसरणमर्थः। अत्रेदं वक्तव्यम्। निवृत्तिनिःसरणादिधात्व-न्तरार्थविशिष्टे स्वार्थे वृत्तिमाश्रित्य यथा कथं चिदुक्तप्रयोगाणां सम-

---

किं तर्हि सोपसर्गस्य भुवः। "कर्त्तेति"। भवत्यर्थस्य कर्त्तेत्यर्थः। भुवो वा धातोः। कथं पुनर्धातोर्नाम कर्त्ता स्याद् धातुर्वै शब्दः शब्देऽसम्भ-वेऽर्थे कार्यं विज्ञास्यते। तस्य उपपत्ये भावे क्तः। विगतौ अक्ता वितस्ता

---

हायणीमासे इत्यत्र सावयवकत्वं पञ्चम्यर्थः । साव्यवहितोत्तरकालवृत्तित्वं सप्तम्यर्थः । कार्तिक्यवयवकात्रिंशत्तिथ्यात्मकमासाव्यवहितोत्तरकालवृत्तिराग्रहायणीत्यर्थः । वनाद्गविः इत्य योजने गते ग्रामः प्राप्य इति बोधः । योजनमित्यस्य प्रथमान्तत्वे गतं चेदिति शेषः । कार्तिक्या इत्यादेरपि ततः प्रभृति गते मासे आग्रहायणीत्यर्थ इति भाष्यमतम् । अत्र सर्वत्र भाष्यसंमते एवार्थे साधुत्वं यथोत्तरं मुनीनां प्रामाण्यात् ॥ सर्वत्र तत्तत्कारकत्वाविवक्षायां षष्ठ्याः साधुत्वमिष्टमेवानभिधानं चेतितत्त्वम् ॥

---

किं नात्यन्तायापक्रामन्ति । सन्ततत्वात् । अथवाऽन्यास्चान्याश्च प्रादुर्भवन्ति ॥

---

थैनेऽपि मुख्यार्थपुरस्कारेण षष्ठीप्रयोगो दुर्वारः । नटस्य शृणोतीतिवत् । न ह्युपाध्यायनटयोः क्रियानुकूलव्यापारांशे विशेषो वक्तुं शक्यः । अनभिधानशास्त्रमाश्रित्य प्रत्याख्यानं तु नातीव मनोरमम् । एवं च जुगुप्साविराम इत्यादिवार्त्तिकमप्यावश्यारम्भणीयम् । तथाच सूत्रवार्त्तिकमतमेवेह प्रबलमिति यावद्बाधं साधु । तथा ध्रुवं भयहेतुरसोढ इत्यादिसंज्ञिनिर्देशोऽपि सार्थकः परत्वात् तत्तत् संज्ञाप्राप्तावपि शेषत्वविवक्षायां न मासायामश्नीयादित्यादाविव षष्ठ्या इष्टतया तत्रापादानसंज्ञाया वारणीयत्वादित्यवधेयम् ॥

---

इति । अश्नोत्येत्यर्थः । 'प्रथमत उपलभ्यत इति' । उपलभ्यतेः कर्मव्यापारे प्रभवतिः प्रवर्तत इत्यर्थः । प्रकाशत इति यावत् । एतेन अन्यर्थाभावात् पूर्वेणासिद्धं दर्शयति । अनेकार्थत्वाद् धातूनामस्मिन्नर्थे वृत्तिः । अन्यत्रापि प्रपञ्चः । कथं भवनपूर्वके निःसरणे प्रभवतिर्वर्तते ॥

# कर्मणा यमभिप्रैति स सम्प्रदानम्। १।४।३२॥

ननु सत्यस्मिन् कर्मण्यपि स्यादित्यत आह

उपाध्यायायेति॥ (कै)

---

कर्मणा यमभिप्रैति स सम्प्रदानम्।१।४।३२॥ कारकचतुर्थ्याः सम्प्रदानत्वप्रयुक्तिमानर्थः। सा प्रयुक्तिश्च तत्तद्धात्वर्थकर्मनिष्ठफलनिरूपकत्वेनेच्छाविषयो यस्तन्निष्ठा "कर्मणा यमभिप्रैति" इति सूत्रात्। कर्मनिष्ठेत्यनेन कर्मचतुर्थी निमित्तत्वप्रदर्शनात् कर्मश्रुत्यपेक्षया चतुर्थीश्रुतेर्बलवत्त्वं बोध्यते। अत एव क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीत्यादौ दण्डदानं न प्रतिपत्तिः किन्तु द्वितीयापेक्षया बलीयस्या चतुर्थी श्रुत्या मैत्रा-

---

कर्मणा यमभिप्रैति स सम्प्रदानम्। १।४।३२॥ कर्मग्रहणं किम-

---

कर्मणा यमभिप्रैति स सम्प्रदानम्।१।४।३२॥ कर्मग्रहणमिति। भा। उपाध्यायाय गां ददातीत्यत्र गोरुपाध्यायस्याप्यभिप्रेयमाणत्वम्।

---

कर्मणा यमभिप्रैति स सम्प्रदानम्।१।४।३२॥ कर्मणा करणभूतेन कर्त्ता यमभिप्रैति सम्बध्नाति ईप्सति वा तत्कारकं सम्प्रदानं स्यात्। न च युगपत् कर्मत्वं करणत्वं च कर्मेति वाच्यम्। क्रियाभेदेनाविरोधात्।

---

कर्मणा यमभिप्रैति स सम्प्रदानम्।१।४।३२॥ कर्मणा करणभूतेनेति कथं पुनरेकमेव वस्तु युगपत् कर्म च करणं च भवति क्रियाभेदात् दानक्रियायां करणम्। दीयमानया हि गवा शिष्य उपाध्यायमभिप्रैति

करणभूतयेति । (कै)

स्वरूपकथनम् ॥

अन्तरङ्गत्वादिति । (कै)

दानक्रियाभिप्रेतगम्योपाध्यायोऽभिप्रेत इति तस्य क्रियासम्बन्धो बहिरङ्ग इति भावः ॥

---

वदर्थसंस्कारकमिति मीमांसकाः । यत्तु तत्तद्धात्वर्थकर्मसम्बन्धजन्यफलं गोसाभक्तसुखादितद्भागित्वेन य इच्छाविषयः स सम्प्रदानमिति । तन्न । सूत्राक्षरैर्वाक्यत्योक्तार्थलाभात् । तथा शाब्दबोधाभावाच्च । यदपि इच्छाविषयत्वमेवोद्देश्यत्वमिति । तदपि न । देवो रूपवान् इत्यादौ उद्देश्यविधेयभावेनान्वयात् । देवे उद्देश्यत्वप्रतीतावपि इच्छाविषयत्वाप्रतीतेः । तस्मादुद्देश्यत्वमुद्देश्यादिपदशक्यतावच्छेदकतया सिद्धं पदार्थान्तरमेव । क्वचिद्

---

र्थम् । यमभिप्रैति स सम्प्रदानमितीयत्युच्यमाने कर्मण एव सम्प्रदानसंज्ञा

---

यतो गौर्दानक्रियया करणभूतयाऽभिप्रेयते गवा तूपाध्यायः । तत्र परत्वाद् गोः कर्मसंज्ञेति पारिशेष्यादुपाध्यायस्यैव सम्प्रदानसंज्ञा भविष्यतीति

---

दानक्रियायां हि कर्म । अभिप्रायणक्रियायां करणम् । दीयमानया गवा हि शिष्य उपाध्यायमभिप्रैति । उपाध्यायाय गां ददाति । अत्राभिप्रैतीति पदत्रयम् । न तु समासः । उदात्तवता गतिमता च तिङा गतेः समासो वक्तव्य

---

सम्भ्राप्ति ईप्सति वा अभिप्रपूर्वो हि इण् ईप्सतिना समानार्थः । अभिप्रेतमित्युक्ते ईप्सितमिति गम्यते । उक्तञ्च

"अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां वा लभते सम्प्रदानताम् ॥"

नन्वेवमिति। (कै)

दायोग एव सम्प्रदानत्वमित्यस्याश्रयणादिति भावः॥

प्रकर्षयोगः। (कै)

सामर्थ्यगम्यप्रकर्षयोगः॥

प्रत्याख्यातत्वादिति। (कै)

सिद्धान्तेऽप्यनुवादत्वेनेदानीमपि तत्त्वमेवेति भावः॥ अत्र

---

इच्छाविषयत्वसमानाधिकरणमित्यन्यत्। विप्राय गां ददाति इत्यादौ विप्राभिन्नसम्प्रदाननिष्ठोद्देश्यता निरूपकं दानमिति बोधः। स्वत्वस्योद्देश्यता-निरूपकत्वं सम्बन्धः। सम्प्रदानविप्रीयमिति विप्रसम्प्रदानकमिति वा बोधः। क्रियाकारकभावः सम्बन्ध इति द्वितीयोक्तदिशोचितम्। पितृभ्यः श्राद्धं दद्यात् इत्यादौ स्वत्वे पितृनिरूपितत्वस्य बाधेऽपि स्वत्वनिवृत्तिपूर्वकपरमान-

---

प्रसज्येत। कर्मग्रहणे पुनः क्रियामात्रे न दोषो भवति। कर्मनिमित्तत्वेनाश्री-

---

प्सः॥ कर्मण एवेति। भा। सत्यप्युभयसम्भवेऽन्तरङ्गत्वात् कर्मण एव गवादेः स्यादित्यर्थः। नन्वेवं कर्मसंज्ञानवकाशा स्यात् वचनसामर्थ्यात्

---

इति वार्त्तिकस्य छन्दोविषयत्वादिति हरदत्तः। भाषाविषयत्वे बाधकं तु तत्रैव वक्ष्यामः। अत्र वृत्तिकाराः। अन्वर्थसंज्ञेयं सम्यक् प्रदीयते यस्मै तत् सम्प्रदानमिति। तेनेह न। रजकस्य वस्त्रं ददाति। पतः हस्तं ददाति।

---

त्यागो दानं त्यागस्याङ्गं शेषभूतं कर्मणा गवादिनेप्सितमाप्तुमिष्टं सम्प्रदानतां लभते। अनिराकरणाद्वा। एवमस्त्विति अनुमानाद्वा। देवेभ्यः सुमनसो ददाति। याचकाय भिक्षां ददाति। उपाध्यायाय गां ददाति। न तु निराकुर्वन् सम्प्रदानं भवतीति श्लोकार्थः। अत्र केचिदाहुः। "कुमति-

कर्मणेति। (प्र)

निर्दिष्टस्य शेषत्वं "यमि"ति निर्दिष्टस्योद्देश्यत्वरूपत्वं शेषत्वं प्रतीयते इत्यजां ग्रामं नयतीत्यादौ ग्रामस्य न सम्प्रदानत्वमिति बोध्यम्॥ यदा तु ग्रामोऽजासंयुक्तो भवत्वित्युद्देशेनाजानयनं तदा भवत्येवाजां ग्रामं नयतीति॥ ननु संज्ञिनिर्देशार्थं तदावश्यकमत आह

अध्याहारेणापीति॥ (कै)

---

स्वस्वाम्यनुकूलत्यागरूपदानार्थे पितृणामुद्देश्यत्वसत्त्वान्न दोषः। परस्वत्वे हेतुश्च त्याग एव। अत एव विदेशस्थस्य पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणेऽपि उद्देश्य पुत्रादिभिरेव पितृदायत्वेन तद्धनं विभज्य गृह्यते नान्यैरिति व्यवहारः। प्रतिग्रहस्तु सत्पात्रगृह्णां पुण्यमित्युक्तेः। प्रतिग्रहीतधनदाने फलातिशयजनकः। अदृष्टार्थदत्तस्वीकार एव प्रतिग्रह इति परितोषदत्तनिजतुरगादिस्वीकारे न दोषः। संसृष्टिस्थले साधारण-

---

यते॥ अथ यं स ग्रहणं किमर्थम्। कर्मणाभिप्रैति सम्प्रदानमितीयत्युच्य-

---

तर्हि पर्य्यायः स्यात्। कारकप्रकरणे च प्रकर्षयोगो नाश्रीयते न त्वन्तरङ्ग-बहिरङ्गव्यवहारः॥ ननु पर्य्याये सति गत्यर्थकर्मणीत्यारम्भोऽनर्थकः स्यात्।

---

इह हि ददातिर्गौणः न तु वास्तवं दानमस्तीत्याहुः॥ भाष्ये तु नैतत् स्वीकृतं खण्डिकोपाध्यायस्तस्मै चपेटां ददाति। "न शूद्राय मतिं दद्यात्" इत्यादि प्रयोगात्। रजकस्य ददातीति तु शेषत्वविवक्षायां बोध्यम्। नन्वेवमजाग्नयति

---

प्रादयः" (२।२।१८) इत्यत्र वार्त्तिकम् "उदात्तवता तिङा गतेः समासवचनम्" इति। "यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत्। यो यः शम्बरमन्वविन्दत्। यस्मान्न ऋते किं विजयन्ते। यो वै

श्रुतेति । (कै)

तिङ् श्रुत्योपस्थापितेत्यर्थः ॥ एवं च यः स इत्येव लभ्यतेति भावः ॥

सार्थादिति । ( कै )

प्रधानधात्वर्थव्यापाराश्रयत्वेऽ“पादाने चाहीयरुहोः” ( ५ ।

---

स्वत्वोत्पादेऽपि ददातीत्यप्रयोगात् । परमान्नस्वत्वानुकूलेत्यपास्तम् । तत्रापि स्वत्ववति स्वत्वानुत्पत्त्या पूर्वस्वत्वनाशाङ्गीकारात् । उपेक्षा तु न नियमतः परस्वत्वोत्पादिकेति न तत्र ददाति इति प्रयोगः । विक्रयोऽपि न तथा । मूल्यदानपूर्वकस्वीकाररूपक्रयस्यैव स्वत्वजनकत्वात् । स्वत्वं च दानादि नाश्यं प्रतिग्रहादिजन्यमतिरिक्तपदार्थरूपम् । तच्च वहिरिन्द्रियवेद्यम् । स्वं

---

मानेऽभिप्रयत एव सम्प्रदानसंज्ञा प्रसज्येत । यं स ग्रहणे पुनः क्रियमाणे

---

तस्य प्रत्याख्यातत्वादित्यदोषः ॥ कथेति । भा । अध्याहारेणापि सर्वनाम-द्वयार्थो लभ्यत इति प्रश्नः ॥ अभिप्रायत एवेति । भा ॥ श्रुतपदार्थसम्बन्धे-

---

ग्राममिति नयति कर्मभिरङ्गैः सम्बध्यमानस्य ग्रामस्य सम्प्रदानत्वं स्यादिति चेन्न । यमभिप्रैतीत्युक्त्या हि यमिति निर्दिष्टस्य प्रेप्सितत्वं कर्मणेति निर्दिष्टस्य गवादेः प्रेप्सितत्वं च प्रतीयते । यथा कर्त्रभिप्राये क्रियाफल इति कर्तुः प्रेप्सितत्वं

---

प्रपचयतामप्येनं प्रतिपद्यते” इत्याद्युदाहरणानि चात्र सर्वत्र । “यद्वृत्ता-न्नित्यम्” ( ८ । १ । ६६ ) इति नित्यमिति निपातप्रतिषेधात् तिङन्त-मुदात्तवत् । ततश्चायमभिप्रैति इत्यत्रापि समासे सति प्रातिपदिकत्वात् विभक्त्युत्पत्तिः स्यादिति । नेति वयं तस्य छन्दोविषयत्वात् । यदि “कर्मणा यमभिप्रैति स सम्प्रदानम्” अजां नयति ग्राममिति अजैर्नयति शिवा

कर्मणेति। (प्र)

निर्दिश्यस्य शेषत्वं "यमि"ति निर्दिश्योद्देश्यत्वस्य च शेषित्वं प्रतीयते इत्यजां ग्रामं नयतीत्यादौ ग्रामस्य न सम्प्रदानत्वमिति बोध्यम्॥ यदा तु ग्रामोऽजासंयुक्तो भवत्वित्युद्देशेनाजानयनं तदा भवत्येवाजां ग्रामं नयतीति॥ ननु संज्ञिनिर्देशार्थं तदावश्यकमत आह

अध्याहारेणापीति॥ (कै)

---

स्वस्वत्वापत्त्यनुकूलत्यागरूपदानार्थे पितृणामुद्देश्यत्वसत्त्वान्न दोषः। परस्वत्वे हेतुश्च त्याग एव। अत एव विदेशस्थस्य पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणेऽपि उद्देश्य पुत्रादिभिरेव पितृदायत्वेन तद्धनं विभज्य गृह्यते नान्यैरिति व्यवहारः। प्रतिग्रहस्तु स्वत्वाङ्गग्राह्यं पुण्यमित्युक्तेः। प्रतिगृहीतधनदाने फलातिशयजनकः। अदृष्टार्थदत्तस्वीकार एव प्रतिग्रह इति परितोषदत्ततिलतुरगादिस्वीकारे न दोषः। संज्ञिस्थले साधारण-

---

यते॥ अथ यं स ग्रहणं किमर्थम्। कर्मणाभिप्रैति सम्प्रदानमितीयत्युच्य-

---

तर्हि पर्य्यायः स्यात्। कारकप्रकरणे च प्रकर्षयोगो नाश्रीयते न त्वन्तरङ्ग-बहिरङ्गव्यवहारः॥ ननु पर्य्याये सति गत्यर्थकर्मणीत्यारम्भोऽनर्थकः स्यात्।

---

इह हि ददातिर्गौणः न तु वास्तवं दानमस्तीत्याहुः॥ भाष्ये तु नैतत् स्वीकृतं खण्डिकोपाध्यायस्तस्मै चपेटां ददाति। "न शूद्राय मतिं दद्यात्" इत्यादि प्रयोगात्। रजकस्य ददातीति तु शेषत्वविवक्षायां बोध्यम्। नन्वेवमशान्नयति

---

प्रादयः" (२।२।१८) इत्यत्र वार्त्तिकम् "उदात्तवता तिङा गतेः समासवचनम्" इति। "यो जात एव प्रथमो मनस्वान्देवो देवा क्रतुना पर्य्यभूषत्। यो यः प्राक्षरमन्वविन्दत्। यजाम यते किं विकल्पो। यो वै

श्रुतेति । (कै)

तिङ् श्रुत्योपस्थापितेत्यर्थः ॥ एवं च यः स इत्येव लभ्येतेति भावः ॥

सार्थादिति । (कै)

प्रधानधात्वर्थव्यापाराश्रयत्वेऽ"पपादाने चाहीयरुहोः" ( ५ ।

---

स्वत्वोत्पादेऽपि ददातीत्यप्रयोगात् । परमात्रस्वत्वानुकूलेत्युपात्तम् । तत्रापि स्वत्ववति स्वत्वानुत्पत्त्या पूर्वस्वत्वनाशाङ्गीकारात् । उपेक्षा तु न नियमतः परस्वत्वोत्पादिकेति न तत्र ददाति इति प्रयोगः । विक्रयोऽपि न तथा । मूल्यदानपूर्वकस्वीकाररूपक्रयस्यैव स्वत्वजनकत्वात् । स्वत्वं च दानादिनाश्यं प्रतिग्रहादिजन्यमतिरिक्तपदार्थरूपम् । तच्च बहिरिन्द्रियवेद्यम् । स्वं

---

मानेऽभिप्रयत एव सम्प्रदानसंज्ञा प्रसज्येत । यं स ग्रहणे पुनः क्रियमाणे

---

तस्य प्रत्याख्यातत्वादित्यदोषः ॥ अथेति । भा । अध्याहारेणापि सर्वनामद्वयार्थो लभ्यत इति प्रश्नः ॥ अभिप्रायत एवेति । भा ॥ श्रुतपदार्थसम्बन्धे-

---

ग्राममिति नयति कर्मभिरजैः सम्बध्यमानस्य ग्रामस्य सम्प्रदानत्वं स्यादिति चेन्न । यमभिप्रैतीत्युक्त्या हि यमिति निर्दिष्टस्य प्रैषितत्वं कर्मणेति निर्दिष्टस्य गवादेः प्रैषत्वं च प्रतीयते । यथा कर्त्रभिप्राये क्रियाफल इति कर्तुः प्रैषितत्वं

---

प्रयच्छतामप्येनं प्रतिपद्यते" इत्याद्युदाहरणानि अत्र सर्वत्र । "यद्वृत्तान्नित्यम्" ( ८ । १ । ६६ ) इति नित्यमिति निपातप्रतिषेधात् तिङन्तमुदात्तवत् । ततश्चायमभिप्रैति इत्यत्रापि समासे सति प्रातिपदिकत्वात् विभक्त्युत्पत्तिः स्यादिति । नेति वयं तस्य छन्दोविषयत्वात् । यदि "कर्मणा यमभिप्रैति स सम्प्रदानम्" अजां नयति ग्राममिति अजैर्नयति क्रिया

(कर्मणा यमभिप्रैति स सम्प्रदानम् । १ । ४ । ३२ ।) (अ. १ । पा. ४ । आ. १)

४ । ४५ ) इति सूत्रेण कर्मप्रत्ययान्तक्रीधातुयोगेऽपादानलक्षणप्राप्तान् पञ्चमी चार्थेन त्यज्यते इत्यर्थं कोऽयं प्रयोगः ॥

आक्षिप्यत इति । (कै)

निराक्रियत इत्यर्थः ॥ भाष्ये

---

पश्यामि इत्यादि व्यवहारात् । तत् साक्षात्कारे च तदीय स्वत्वव्याप्यं तदीय यथेष्टविनियोज्यत्ववदिदमिति ज्ञानं हेतुः । सम्प्रदानमनेकधोक्तम् ।

"अनिराकरणात कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।

प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम्" इति ॥

आद्यं देवता । प्रेरणया याचकः । अनुमत्युपाध्यायः । खण्डिकोपाध्यायः तस्मै चपेटां ददातीत्यत्र संयोगानुकूलो व्यापारो ददात्यर्थः । चपेटा प्रकृत-

---

न दोषो भवति । यं स ग्रहणादभिप्रयतः सम्प्रदानसंज्ञा निर्भज्यते ।

---

नैव निराकाङ्क्षत्वेऽध्याहारानुपपत्तिरिति भावः । कर्तृसंज्ञायास्त्वकर्मको धातुरवकाशः स्यात् । ततश्चोपाध्यायाय शिष्येण गौर्दीयते इत्यत्रापि शिष्या-

---

क्रियाफलस्य प्रेषत्वं च । न चेह ग्रामं प्रत्यजा प्रेषभूता तथा च प्रयोजक-व्यापारे प्राप्तवन् मैत्रावरुणाय दण्डप्रदानमित्यधिकरणे श्रौते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति दण्डदानं न प्रतिपत्तिः । किन्तु द्वितीयापेक्षया

---

कर्मभिः सम्बध्यमानस्य ग्रामस्य सम्प्रदानतां प्राप्नोति । न प्राप्नोति । किं कारणम् कर्मणेति करणे तृतीयेत्युक्तम् । न च यथा शिष्यस्योपाध्यायसम्बन्धे गौः करणमेवमजाग्रामसम्बन्धे । ईप्सितेन समानार्थे तु सुतरामप्राप्तिः । तथा हि यमभिप्रैतीत्युक्ते यमिति निर्दिष्टस्य प्रेषितं कर्मणेति निर्दिष्टस्य गवादेः करणस्य प्रेषत्वञ्च प्रतीयते । यथा "कर्मभिप्राये क्रियाफले" इति

यं सम्प्रत्येतीति । (भा)

संनिहितसम्प्रदानपक्षे दानस्य तत्काले विप्रकर्षोपकल्पहृष्टकालेनापि कालवत्त्वात् तत्रैव स्याद् असंनिहितसम्प्रदानपक्षे विप्राय ददातीति प्रयोगो न स्यादिति भावः ॥ "उपाध्यायाय" इत्यत्र संनिहितायेति शेषः ॥ "अग्रे" विप्रकृष्टायेति शेषः ॥

---

करतलम् । "न शूद्राय मतिं दद्याद्" इत्यादौ बोधनार्थः । मतिशब्देन तज्जनकं वेदादिरूपं शास्त्रमुच्यते । रजकाय वस्त्रं ददातीत्यादौ अधीनीकरणं तदर्थः । शेषत्वविवक्षायां रजकस्य वस्त्रमित्यपि भवति । अजां ग्रामं नयतीत्यादौ परया कर्मसंज्ञया बाधान्न दोषः । पत्ये शेते इत्यादौ शयनादिक्रियाया अपि संदर्शनप्रार्थनव्यवसायजन्यारम्भक्रियानिरूपितं कर्मत्वम् । पिण्डीमित्यादौ गम्यमानक्रियापेक्षा कारकत्वदर्शनात् । हरिरप्याह

---

अथाभिग्रहणं किमर्थम् । कर्मणा यमेति स सम्प्रदानमितीयत्युच्यमाने यमेव

---

योपाध्यायस्य गौर्दीयते इति स्यात् ॥ ननु शिष्यस्य कर्तृत्वाभावे कथं गोः कर्मसंज्ञा । नैष दोषः । कर्मसंज्ञायां स्वातन्त्र्यस्य कर्तृग्रहणेनो-

---

क्तोयस्या चतुर्थीत्याऽर्थकर्मेत्युक्तम् । अत्र वार्त्तिकम् । "क्रियाग्रहणं कर्तव्यम्" पत्ये शेते । भाष्यकारास्तु सन्दर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियापि कृत्रिमं कर्म । तथा च सूत्रेणैव सिद्धम् । प्रतीयमानक्रिया-

---

कर्तुः शेषित्वं क्रियापत्नस्य शेषत्वं न चात्र शेषशेषिभावः प्रतीयते । किं च "नीवह्योः हरतेश्चापि" इति द्विकर्मकेषु नयतिः पठ्यतेऽतोऽपि ग्रामस्य न भविष्यति । अथ किमर्थं महती संज्ञा क्रियत इत्याह "अन्वर्थसंज्ञाविज्ञानाद्" इति । सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थत्वात्

**आभिमुख्यमात्रे इति।** (भा)

कर्मणा करणभूतेन क्रियारम्भे यमुद्दिश्यतीत्यर्थः। स चोद्देशः सर्वकारकीति भावः॥

**संख्यावदिति।** (कै)

अन्यथा विप्रेभ्यो गां ददातीति न स्यादिति भावः॥

---

"सम्प्रदानं प्रार्थनायां व्यवसायं तदनन्तरा।
व्यवसायस्तथारम्भे साधनत्वाय कल्पते॥
पूर्वस्मिन् या क्रिया सैव परस्मिन् साधने मता" इति॥

सम्प्रदानं फलविषयः सङ्कल्पः तत्प्रार्थनायां फलोपायविषयेऽभिलाषे साधनं व्यवसायः क्रियाविषयस्य फलसाधनत्वेन निश्चयः। तदानन्तरा प्रार्थना साधनम्। अभिलाषे सति निश्चयकरणात्। व्यवसायस्तारम्भे ऽमानस्या-

---

सम्भवेति तत्रैव स्यात्। उपाध्यायाय गां ददातीति। इह न स्यात्।

---

यत्नत्वात्। तथाच सार्थाद्दीयते इत्यत्र कर्मणि लकारोत्पत्तिः॥
निर्भर्त्स्यत इति। भा। आक्रुश्यत इत्यर्थः॥ अथेति। भा। कर्मणा

---

पेक्षोऽपि हि कारकभावो भवत्येव। प्रविश पिण्डीमिति वत्। सूत्रकारश्चाह "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" (२।३।१४) इति। न चैव-मपि अददाति कर्मत्वात् क्रियाग्रहणं कर्तव्यमेवेति वाच्यम्। भाष्ये अन्वर्थ-

---

संज्ञाया ददाति कर्मणा यमभिप्रैति स सम्प्रदानमित्यर्थः। एवमपि रजकस्य वस्त्रं ददाति प्रेतः पृष्ठं ददातीत्यत्र कस्मान्न भवति। अदानत्वात्। किं पुनर्दानम्। दानं किंचिदुद्दिश्य पुनर्ग्रहणाय संप्रयत्नानां। यथा रजकाय वस्त्रं ददाति। देवेभ्यः सुमनः। याचकाय भिक्षाम्। उपाध्याय

न्यायसिद्ध एवेति। (कै)

अयमभ्युपगमवादः॥

निन्दतीति। (कै)

गर्ह कुत्सायामिति स्मृतेः॥

---

प्रवृत्तौ साधनं तेन चाप्यमानत्वेन प्रकृतक्रियाकर्मत्वं लभते। पूर्वस्मिन् काले या क्रिया सापरस्मिन् उत्तरकालभाविनि साधनम्। सापेक्षतया सिद्धस्यैव ससाधनत्वात्। सन्दर्शनं तु न क्रियासाध्यं फलाभिलाषयोग्यताविशिष्टचैतन्यस्यैव तत्साधनत्वात्। एवं च "कर्मणा यमभिप्रैति" इति सूत्रेण सम्प्रदानत्वम्॥ पतिसम्प्रदानकमारम्भकर्मभूतं पत्नीकर्तृकं प्रयनमिति बोध इति स्पष्टं भाष्ये। कटं करोतीत्यादौ तु नैवं रीत्या तत्। अनभिधानात्। क्रियया

---

उपाध्यायाय गामदात्। उपाध्यायाय गां दास्यतीति। अभिग्रहणे पुनः

---

यमेति गच्छति प्राप्नोति सम्बध्नातीत्यर्थः॥ अभिप्रैतीत्युक्ते स एवार्थ इति प्रश्नः॥ आभिमुख्य इति। भा। उपसर्गद्वयोपादानसामर्थ्यात्

---

संज्ञात्वस्वीकारात्। नन्वेवं कटं करोतीत्यादावपि सम्प्रदानत्वं स्यात्। वचनबलाच्च कर्मसम्प्रदानत्वयोः पर्य्यायः। अत्राहुः। नेनं वार्त्तिकं सार्वत्रिकम्। किन्तु प्रयोगानुसारात् नियतविषयं धातूपात्तफलानाधार एव

---

गाम्। खण्डिकोपाध्यायस्तस्मै चपेटिकां ददाति। "न शूद्राय मतिं दद्याद्" इति। करतलप्रहारश्चपेटिका। एतके तु पुनर्ग्रहणाद्दानाभावः। उपमानात्तु ददाति प्रयोगः। तत्र कारकशेषत्वान्नटस्य शृणोति इति वत् षष्ठी। कर्मणेति किम्। याबता उपाध्यायाय गां ददातीत्यत्र गोवपार्थक-

निश्चयं करोतीति। (कै)

उद्देश्यत्वप्रदर्शनाय इदम्। एवमुत्तरत्र "उपसृत्य" इत्यपि। "उपाश्रित्य" इति पाठान्तरम्॥ भाष्ये

क्रियां हीति। (भा)

एवं बहुलक्ष्यसंस्कारानुरोधेन कर्मशब्देनोभयं गृह्यते॥ भाष्ये

---

यमभिप्रैति स सम्प्रदानमिति वार्त्तिकमते तु पतिसम्प्रदानकथनमिति बोधः। तत्तत्संज्ञासूत्रैस्तत्तदर्थे तत्तत्कारकशक्तिमत्त्वबोधनात्। पशुना रुद्रं यजते इत्यत्र पश्वाश्रयः करणत्वशक्तिमान्। उद्देश्यः कर्मता शक्तिमान्। कर्मणः करणसंज्ञा सम्प्रदानस्य कर्मसंज्ञेति वार्त्तिकात्। पशुकरणको रुद्र-कर्मको याग इति बोधः। असौ किल पशुः प्रक्षिप्यते। तद्रुद्रायोपाक्रियते इति भाष्यम्॥

---

क्रियामात्रे न दोषो भवति। अभिराभिमुख्ये वर्तते प्रशब्द आदि कर्मणि। तेन यं चाभिप्रैति यं चाभिप्रैषति यं चाभिप्रागादाभिमुख्यमात्रे सर्वत्र सिद्धं

---

कालानवच्छिन्ना क्रियाश्रीयत इत्यर्थः॥ ननु यथा तेन दीव्यतीत्यादौ संख्याकालयोर्न विवक्षा तथेहापि संख्यावत् कालस्याविवक्षा भविष्यतीति

---

प्रवृत्तेः। भाष्यमते तु यत्र सम्प्रदानत्वमिष्टं तत्र सन्दर्शनादीनां क्रियायाश्च भेदो विवक्ष्यते। ततश्च तैराप्यमाना क्रियापि कृत्रिमं कर्मेति सिद्धान्तया-ऽभिप्रेयमाणस्य सम्प्रदानत्वम्। यत्र तन्नेष्टं तत्र भेदो न विवक्ष्यते। ततश्चो-

---

भयस्य वाभिप्रेयमाणत्वं यतो गोदानक्रियया करणभूतयाभिप्रेयते गवा तूपाध्यायः। तत्र परत्वाद् गोः कर्मसंज्ञेति। पारिशेष्याद् उपाध्यायस्यैव सम्प्रदानसंज्ञा भविष्यति। नैतदस्ति। तत्राप्युभयोरभिप्रेयमाणत्वे ऽन्तरङ्ग-

न सिध्यतीति । (भा)

इचिमकर्तृत्वं क्रियाया न सिध्यतीत्यर्थः ॥ ननु पश्य धावति इत्यादौ क्रियाया अपि तत्त्वदर्शनादाह

क्रियान्तरेति ॥ (कै)

---

हरये रोचते भक्तिः । विषयतासम्बन्धावच्छिन्न प्रीत्यनुकूलत्वत् समानाधिकरणो व्यापारे रुचेरर्थः । तत् फलभूतप्रीतेः समवायेनाश्रयो हरिः सम्प्रदानत्वशक्तिमान् "रुच्यर्थानां प्रीयमाणः" ( १ । ४ । ३३ । ) इत्यनुशासनात् । समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलव्यापारः प्रीधातोरर्थः । अत एव हरिं प्रीणयतीत्यादिसिद्धिः । एतदभावे हि हरौ षष्ठी प्राप्तेति विशेषषष्ठ्यपवादोऽत्र चतुर्थी । केचित्तु प्रीतिविषयता-

---

भवति ॥ क्रियाग्रहणमपि कर्तव्यम् । इहापि यथा स्यात् । श्राद्धाय निगर्हते । युद्धाय सन्नह्यते । पत्ये शेते इति ॥ तत्तर्हि वक्तव्यम् । न वक्तव्यम् ।

---

किमुपसर्गद्वयोपादानेन । एवं तर्हि न्यायसिद्ध एवार्थ उपसर्गद्वयोपादानेन प्रदर्श्यत इति भाष्यकारस्याभिप्रायः ॥ श्राद्धायेति । भा । श्राद्ध

---

त्पत्तिविक्लित्याद्येकफलावच्छेदेनैकीभूततया क्रियया व्याप्यमानस्य कर्मत्वमेव भविष्यति । कटं करोत्योदनं पचतीति गत्यर्थेषु तु भेदोऽभेदश्चेत्युभयं विवक्ष्यते तत्र भेदविवक्षायां ग्रामाय गच्छतीति प्रयोगः । अभेदविवक्षायां

---

त्वात्कर्मण एव गवादेः स्यात् । कर्मसंज्ञा तु ददाति कर्मणोऽन्यत्र सावकाशा । कारकप्रकरणे च प्रकर्षो नाश्रीयते न त्वन्तरङ्गवहिरङ्गभावोऽपि । यं स ग्रहणेऽक्रियमाणेऽभिप्रेतुरेव सम्प्रदानसंज्ञास्याच्छ्रुतपदार्थसम्बन्धे सति तेनैव निराकाङ्क्षत्वादध्याहारोनुपपत्तेः । सत्यपि वा अध्याहारे यः स

भिन्नकाले भिन्नरूपेण च कर्तृकर्मताया एकस्मिन्नपि दर्शना-दाह

एकदा एकात्मन्ये वेति । (कै)

अनत्यं भाष्यं कर्त्तरि कर्म इत्यत्र व्याख्यातम् ॥ ननु सन्दर्श-नादीनां सर्वत्र भावात् सर्वत्र सम्प्रदानत्वं स्यादत आह

---

मायच्छमानं मोदकं लौल्याद्देवदत्तः प्रयुङ्क्ते तदानुगुण्यमाचरतीति हेतुत्वे प्राप्ते इदम् । एवं च हेतुसंज्ञाभावे णिचोऽभावाद् हेतुगतव्यापाराप्रतीतेर्मोदकः स्वक्रियायां कर्त्ता भवति न तु देवदत्तः उपात्तक्रियायां तस्य स्वातन्त्र्याभावादित्याहुः । हरिसम्प्रदानिका भक्तिकर्त्तृका रुचिरिति-बोधः । हरिनिष्ठा या भक्तिविषया प्रीतिस्तदनुकूलो भक्तिनिष्ठो व्यापार इति यावत् । ये तु प्रीत्समानार्थो रुचिः कर्मसंज्ञापवादस्तेदं सम्प्रदा-

---

कथम् । क्रियां हि लोके कर्म इत्युपचरन्ति । कां क्रियां करिष्यसि । किं

---

निन्दति नास्तिकत्वादित्यर्थः । युद्धायेति । भा । युद्धविषयं संनहनपूर्वकं

---

तु ग्रामं गच्छतीति तथा च "गत्यर्थकर्मणि" ( २ । ३ । १२ ) इति सूत्रं प्रत्याख्यास्यते । उक्तञ्च हरिणा

"भेदस्य च विवक्षायां पूर्वां पूर्वां क्रियां प्रति ।

परस्याङ्गस्य कर्मत्वात् तत्क्रिया ग्रहणं कृतम् ॥

---

इत्येवाध्याहारात् । तत उपाध्यायाय शिष्येण गौर्दीयते इत्यत्रार्थे शिष्यायो-पाध्यायस्य गौर्दीयत इति स्यात् । कर्मसंज्ञायां हि कर्तृग्रहणं स्वतन्त्रोप-लक्षणार्थमिति तेन शिष्यस्य कर्तृत्वाभावेऽपि गोः कर्मसंज्ञा युज्यत एव । तथा च साधोर्द्दीयत इति कर्मणि लकारोत्पत्तिः । अभिप्रग्रहणं किम्

## यदात्विति। (कै)

एवं च "पत्ये शेते" इत्यादेर्दर्शनादिपूर्वकारम्भकर्मपत्युद्देश्यकं शयनं करोतीत्यर्थः॥

## भेदेनेति। (कै)

तत्तद्रूपेण बोधविषयतया विवक्ष्यत इत्यर्थः॥

---

नत्वमितीच्छन्ति। तेषां प्रीयमाण इति सूत्रनिर्देशात् प्रीधातुयोगेऽस्याः प्रवृत्तिः कल्प्येति गौरवम्। अभिलषतेश्च विषयतासम्बन्धावच्छिन्न-प्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारोऽर्थ इति न तस्य रुच्यर्थत्वमिति हरिर्भक्तिमभिलष्यतीत्यादौ न हरेः सम्प्रदानत्वम्॥ गोपीस्मरात् कृष्णाय श्लाघते। अत्र श्लाघतेर्बोधविषयस्तुतिरर्थः। बोधस्य फलतावच्छेदकः

---

कर्म करिष्यसीति। एवमपि कर्तव्यम्। कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययो

---

निस्वयं करोतीत्यर्थः॥ पत्ये शेत इति। भा। पतिमुपस्पृत्य शेते इत्यर्थः॥
न सिध्यतीति। भा। क्रियान्तरानुपादाने एकस्या एव क्रियायाः कर्म-

---

क्रियायां समुदाये तु पदैकत्वं विवक्षितम्।
तदा कर्मक्रियायोगात् साध्ययैवोपपद्यते॥
भेदाऽभेदविवक्षा च स्वभावेन व्यवस्थिता।
तस्माद् गत्यर्थकर्मत्वे व्यभिचारो न दृश्यते॥

---

यावता कर्मणा यमेति गच्छति प्राप्नोति सम्बध्नातीत्यर्थः। अभिप्रैतीत्युक्ते स एव। अभिप्रग्रहणेऽक्रियमाणे कारकविवक्षा स्यात्। ततश्च यमेव संप्रत्येति तत्रैव स्यात्। यमगात् यं चेष्यति तत्र न स्यात्। अभिप्रग्रहणे पुनः क्रियमाणे न दोषो भवति। अभिराभिमुख्ये वर्तते प्रशब्दश्चादिकर्मणि।

## यथा कटं करोतीति । (कै)

तत्र हि कटकर्मकक्रियेत्येव बोधो न तु तस्याः क्रियायाः विद्यमानमपिसंदर्शनादिपूर्वकारम्भकर्मत्वं तत्तद्रूपेण बोधविषय इति भावः ॥

---

सम्बन्धो वृत्तितात्स्तुतिश्च गुणवत्त्वप्रतिपादकशब्दप्रयोगादिः । स्मरादिति हेतौ पञ्चमी । बोधाश्रयस्य "श्लाघह्नुङ्स्थाशपां ज्ञीप्समानः" (१ । ४ । ३४ ) इति सम्प्रदानत्वम् । ज्ञीप्समानपदेन प्रधानभूतण्यर्थकर्मणो ग्रहणम् । तन् स्मारस्याद् यद्विषयकज्ञानानुकूलव्यापारस्तस्य प्रकृत्यर्थकर्मणोऽपि तेन पदेन ग्रहणम् । स अन्यथा ज्ञाप्यमान इत्येव वदेत् । तत्राद्ये गोपीकर्त्तृका स्मरहेतुकृष्णसम्प्रदानकार्यात् कृष्णवृत्तिबोधविषया-

---

भवति ॥ क्रियापि कृत्रिमं कर्म । न सिध्यति । "कर्तुरीप्सिततमं कर्म"

---

करणभाव एकदा एकात्मन्येव नोपपद्यत इति भावः ॥ क्रियापीति । भा । प्रतीयमानक्रियापेक्षः कारकभावः । प्रविश पिण्डीमित्यादाविवाने-

---

विकल्पेनैव सर्वत्र संज्ञे स्यातामुभे यदि ।
आरम्भेण न योगस्य प्रत्याख्यानं समं भवेद्" इति ॥

अस्यार्थः । कर्म स्वाप्ययैव क्रियेप्सितत्वप्रयुक्तकर्मसंज्ञयैवोपचर्यते व्यवक्रियते । न तु सम्प्रदानसंज्ञयागत्यर्थकर्मणि तु भेदाभेदौ द्वावपि

---

ततश्चोपसर्गद्वयोपादानसामर्थ्यात् कालान्तरावच्छिन्ना क्रियानाश्रीयते ॥ ननु यथा "तेन दीव्यती" ( ४ । ४ । २ ) त्यादौ सङ्ख्याकालयोरविवक्षा सिद्धा । सत्यम् । अयमेव न्यायसिद्धोऽर्थ उपसर्गद्वयोपादानेन प्रदर्श्यते यदात्वभिप्रेतीत्यस्य ईप्सतीत्यर्थस्तदाभिग्रहणं कर्तव्यमेव । क्रियाग्रहणमपि कर्त्तव्यमिति

पशुं रुद्राय ददातीति (भा)

भाष्यप्रयोगानुपपत्तेराह

एतच्छन्द इति ॥ (कै)

ननु पूजायां पशोः करणत्वाद्रुद्रस्य च कर्मत्वात् किमुपसंख्यानेन इत्यत आह

---

स्तुतिरिति बोधः । स्तुतिश्चात्मनः परस्य वेति तु प्रकरणादिगम्यम् । अत एव कृष्णाय गोप्यात्मानं परस्माच्च्छं कथयतीत्यर्थ इति प्राहुः । कर्मसंज्ञापवादोऽयम् । कृष्णस्यैवस्तुत्यत्वे तु परत्वात् कर्मत्वमेव । यदा गुणोत्कर्षेण श्लाघ्यमानः कृष्णो गुणवत्तया तत् समर्थाचरणेनाध्यारोपितप्रेरणत्वाद्द हेतुरिति हेतुत्वापवाद इयम् । हुते इत्यत्र

---

( १ । ४ । ४९ ) इत्युच्यते कथं च नाम क्रियया क्रियेप्सिततमा स्यात् ।

---

त्यर्थः । यदा तु सन्दर्शनादयो धात्वर्थाद्भेदेन विवक्ष्यन्ते तदा सम्प्रदानसंज्ञैव यथा कटं करोतीति । सा च भेदाभेदविवक्षा प्रयोगदर्शनवशेन नियत-

---

विवक्ष्यते । इति रूपद्वयसिद्धिः । व्यभिचारोऽतिप्रसङ्गस्तु न दृश्यते । विवक्षाया व्यवस्थितत्वादेव । एतदेव द्रढयति विकल्पेनेति । समं तुल्यफलकम् । तस्मात् सूत्रं प्रत्याचक्षाणस्य भगवतो विवक्षानियमोऽभिमतः । गत्यर्थेषु विवक्षाद्वयम् । पत्ये शेते इत्यादौ तु भेदविवक्षैव । ओदनं पचती-

---

वार्त्तिकम् एतद्व्याचष्टे "क्रियाः इत्यादि" ॥ ननु क्रियामपि लोके कर्मत्वुपचरन्ति । किं कर्म करिष्यसि कां क्रियामिति । तत्र कर्मणा यमभिप्रैतीत्येव सिद्धम् एवमपि कर्त्तृं "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति" सन्दर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियापि कृत्रिमं

**यद्यपि तस्य** (भा)

इत्यादिना ॥ ननु प्रेषयितुरुभयेप्सायामपि न प्रेषयेति तदीयप्रयोगे तयोः कर्मत्वानापत्तिस्तथैव इत्यत आह

**प्रयोजक** (कै)

इत्यादि ॥

**स्वार्थः।** (कै)

वेतनलाभः ॥

---

संज्ञोपयोगीति स्पष्टं चेदं सर्वं भाष्ये सूक्ष्मदृशाम्। ये तु क्रियान्वयित्वं कारकत्वमिति वदन्ति। तेषां कर्तृसमवायोऽपि करणं कारकमित्यादेरनुपपत्त्यभावात् तत्र तदाशङ्कासमाधानपरभाष्यासङ्गतिः। तदर्थे कारकशब्दस्य साधुत्वानुपपत्तिश्चेतिबोध्यम् ॥

---

घटो मया आहृत इति। तस्य क्रियामात्रमीप्सितम्। यद्यपि तस्य क्रियामात्रमीप्सितं यस्त्वसौ प्रेषयति तस्योभयमीप्सितमिति ॥

---

व्यस्य कर्तुरनीप्सितमपि कर्मत्वाचक्षते। तत्तु प्रयोजकव्यापारस्य अशब्दार्थत्वात् पूर्वोक्तोदाहरणेऽयुक्तमिति न्यायविदो मन्यन्ते ॥

---

नामार्थेऽभेदान्वयानुरोधादाधार एवार्थः पक्षभावनयोस्तु विशेषणविशेष्यभावो विपरीत इत्यवधेयम् ॥

---

प्रकृत्युच्छेदसम्भूतं किंचित् काष्ठादिभस्मवत्।
किंचित् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते" इति ॥

# तथा युक्तं चानीप्सितम् । १ । ४ । ५० ॥

तथेति भिन्नं पदम् । ईप्सिततमवत् क्रियाजन्यफलाश्रय इत्यर्थः ॥ भाष्ये

**किमुदाहरणमिति ॥** (भा)

पूर्वेण सिद्धिं मन्वानस्य प्रश्नः ।

**कस्य च नामेति ॥** (भा)

स्वनेच्छाविषयत्वस्य बोधनात् प्रश्नः ।

**तदा विषमपीति ।** (कै)

---

तथा युक्तं चानीप्सितम् । १ । ४ । ५० ॥ किमुदाहरणम् । विषं भक्षयतीति । नैतदस्ति । पूर्वेणाप्येतत्सिध्यति । न सिध्यति । कर्तुरीप्सिततमं कर्म ( १ । ४ । ४९ ) इत्युच्यते कस्य च नाम विषभक्षणमीप्सितं स्यात् । विषभक्षणमपि कस्य चिदीप्सितं भवति । कथम् । इह य एष मनुष्यो

---

तथा युक्तं चानीप्सितम् । १ । ४ । ५० ॥ कस्य च नामेति । भा । विषमिति वक्तव्ये विषभक्षणमिति किमर्थमुच्यते यदि भक्षणमीप्सितं तदा विषमीप्सितं विषभक्षणस्य त्वनीप्सितत्वे विषमपि प्राणहरत्वादनीप्सितं भवति । भक्षणक्रियया च विषं नेप्सितं परिहारादिक्रियापेक्षया तदीप्सितं

कर्मणानीप्सितभक्षणस्याभावादित्यर्थः ॥ ननु सर्व स्व साधने एव लोके ईप्सितत्वं प्रसिद्धं न चेदं तथा अत आह

यथेति । (कै)

दुःखनिवृत्तिसाधनमपि तथेति भावः ॥ क्रियाशब्द ईप्सितशब्दः सता तत्क्रियोद्देश्यत्वमात्रमुपलक्षयत इत्याशयेन समाधत्ते भाष्ये

आतश्चेति । (भा)

एवं पराधीनतया द्वेष्यमपि विषं भक्षयत्युपपन्नः प्रयोग इति भावः ॥

अनिष्टतमा अपीति । (कै)

अनुद्देश्या इत्यर्थः । भयजनकत्वादिदमपि द्वेष्यं कर्मेति भावः ॥ ननु प्रसज्यप्रतिषेधे ईप्सितं कर्म न इत्यर्थः स्यात् स चायुक्तः पूर्वेण कर्मत्वस्य इष्टो ऽत आह

---

दुःखार्त्तो भवति सोऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव न्याय्यो मन्यते । आतश्चेप्सितं यत्तद्भक्षयति । यत्तद्धान्यत् करिष्यामीत्यन्यत् करोति तदुदाहरणम् । किं पुनस्तत् । ग्रामान्तरमयं गच्छंश्चौरान् पश्यति अहिं लङ्घयति कण्टकान् मृद्नाति ॥ इहेप्सितस्यापि कर्मसंज्ञारभ्यतेऽनीप्सितस्यापि । यदिदानीं नैवेप्सितं नाप्यनीप्सितं तत्र कथं भवितव्यम् । ग्रामा-

---

भवत्येवेति भव्यशब्दप्रयोगेन प्रदर्श्यते ॥ विषभक्षणमपीति । भा । तथा लोकस्य सुखप्राप्त्यर्थाक्रियायां प्रवृत्तिस्तथा भयादिभ्यो दुःखनिवृत्त्यर्थापि विवादिश्वि-त्यर्थः ॥ चोरान् पश्यतीति । भा । विषयेन्द्रियसम्बन्धसामर्थ्याद्दर्शनेनानुम-नितमा अपि चोरास्तथा युक्ताः पूर्वेणासिद्धकर्मभावा अनेन कर्मसंज्ञा

यथेति । (कै)

एवं च नायं प्रसज्यप्रतिषेध इत्यस्य नायं प्रतिपक्षवाचीत्यर्थः। प्रतिषेधस्य भावविरोधित्वात् तेन तदर्थलक्षणाद्वा। ईप्सितं नेत्यस्य च यदीप्सितप्रतिपक्षभूतं तदेव नोच्यते इत्यर्थः। किं तर्हीत्यादेश्च भिन्नमात्रमस्यार्थ इतीति भावः॥

तत्प्रतिषेधद्वारेणेति । (कै)

आरोपितं त्वबोधद्वारेणेत्यर्थः। धर्मभिन्नबोधेऽपि प्रतिपक्षभूतमेव धर्मभिन्नं गृह्यते तथात्र नेत्यर्थः॥

---

नरमयं गच्छन् वृक्षमूलान्युपसर्पति कुड्यमूलान्युपसर्पतीति। अत्रापि सिद्धम्। कथम्। अनीप्सितमिति नायं प्रसज्यप्रतिषेध ईप्सितं नेति। किं तर्हि पर्युदासोऽयं यदन्यदीप्सितात्तदनीप्सितमिति। अन्यच्चैतदीप्सिताद्यन्नैवेप्सितं नाप्यनीप्सितमिति॥

---

समबध्यन्ते॥ ईप्सिततमस्यापीति। भा। ईप्सिततमस्यापीत्यर्थः॥ नायं प्रसज्यप्रतिषेध इति। भा। यथाऽधर्मानृतादिभिन्नतरपदार्थप्रतिपक्षभूतं वस्तु तत्प्रतिषेधद्वारेण प्रतिपाद्यते तथाऽनीप्सितशब्देनापि द्वेष्यं वस्तु यदभिधीयते तदेव न गृह्यते किं तु सर्वमीप्सितादन्यदित्यर्थः॥

# अकथितं च। १। ४। ५१॥

कथ वाक्यप्रबन्धे इत्यस्माण्णिजन्तः क्रियाशब्दोऽयम्। अत्र कथनस्य करणाकाङ्क्षत्वाद् इयोश्चोपस्थितत्वादाह

किमिति॥ (कै)

करणस्यापि कर्तृत्वेन विवक्षामभिप्रेत्याह

---

अकथितं च। १। ४। ५१॥ अत्र प्रधानकर्मणि लादयः॥
"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्"

---

अकथितं च। १। ४। ५१॥ केनाकथितम्। अपादानादिभि-र्विशेषकथाभिः। किमुदाहरणम्।

---

अकथितं च। १। ४। ५१॥ केनेति। भा। किं साधारण्या कारकसंज्ञया अथ विशेषसंज्ञाभिरपादानादिभिरितिप्रश्नः। अपादाना-दिभिरिति। भा। कर्तरि करणे वा अत्र तृतीया। भूतकालस्यात्र न

---

अकथितं च। १। ४। ५१॥ अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्। नटस्य शृणोतीत्यादावतिप्रसङ्गं वारयितुं परिगणनं कर्तव्यम्।
दुह्याचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना॥

---

अकथितं च। १। ४। ५१॥ अकथितशब्दोऽयमस्यप्रधाने रूढः, तद्यथा ऽकथितोऽहमस्मिन् ग्रामे। ऽप्रधानभूत इति गम्यते अस्ति च क्रियाशब्दो ऽकीर्तितपर्यायः। कथ वाक्यप्रबन्धे। चुरादावदन्तः पठ्यते। तत्र पूर्वस्य ग्रहणे पाणिना कांसपात्र्यां दोग्धि पय इत्यत्र पाणिकांसपात्र्योरपि स्यात्।

कर्त्तरीति ॥ (कै)

भूतकालस्थाय न विवक्ष्यत इति । (कै)

तत्फलं तु निवृत्तैकप्रेषणादुहादिभ्यो णिचि दुह्यमानार्थत्वेन गत्यादिनियमात् "कर्त्तुरीप्सिततमम्" इत्याद्यप्राप्तौ प्रयोज्यकर्त्तुर्गवादेः कर्त्तृत्वात् तदविवक्षया प्रकृतजनकत्वविवक्षायां बोध्यम् । न च प्रयोज्यकर्त्तृत्वाविवक्षायां कर्त्तुः प्रयोजकत्वाभावात् णिजनापत्तिः । अन्तरङ्गत्वात् पूर्वं णिचि तत्कर्त्तृत्वाविवक्षणात् तत्प्रयोजक

---

इति भाष्योक्तेः ॥ प्रधानकर्मत्वं च कर्तृप्रत्ययसमभिव्याहारे प्रधानभूतव्यापारविशेषणपदार्थाश्रयत्वम् । अन्तविषये ईदृशप्राधान्यस्यैव ग्राह्य-

---

दुहि याचि रुधि प्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुवि शासि गुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥

---

विवक्ष्यते । यथा "पराजेरसोढः" ( १ । ४ । २६ ) इत्यात्रासहिष्यमाणस्याप्यपादानसंज्ञा भवति ॥ अध्ययनात् पराजेष्यत इति । तेन हेतुकर्त्तृसंज्ञाभ्यां कथयिष्यमाणस्यापि कर्मसंज्ञा न भवति । इह "कारके" इत्यनुवर्तनात् सत्येव कारकत्वे अकथितस्य कर्मसंज्ञया भाव्यमिति सामर्थ्या-

---

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं कर्तव्यमिति निश्चयः ॥

इह प्रकोत्यत्र "छ्चेति" (६ । १ । ७३ ) तुङ् न कृतः । आगमशासनस्यानित्यत्वात् "सनाद्यन्ता धातवः" ( ३ । १ । ३२) "इको यणचो"तिवत् । उपयुज्यतइत्युपयोगो मुख्यं कर्म क्षीरादि तस्य निमित्तं गवादि दुहादीनां

---

करणाधिकरणसंज्ञयोस्तु पचत्यादिरवकाशो । नहि तत्रास्य प्रसङ्गः दुहियाचीति परिगणनात् । अतो द्वितीयस्य ग्रहणं तदाह । 'केनाकथितमपादानादिभिर्विशेषकथाभिरिति' । किमत्र प्रमाणं तदाह । केनेति करण-

इत्यत्र तत्पदेन स्वतन्त्रस्योपलक्षणाद्वा। अत एव ग्रामं गमयतीत्यादिसिद्धिरिति भावः। परं त्वत्र मानं चिन्त्यम्। किं च गत्यादिनियमेन परत्वादस्यापि बाधो दुर्वार इति दिक्॥ "न भवती"ति क्वचित् पाठः। पूर्वोक्तविषयाभावेन कर्तृत्वविवक्षायामपि स्यात्। अधुना तु नेत्यर्थः। परया कर्तृसंज्ञया बाधाच्चिन्त्यमिदम्। कर्मसंज्ञा भवतीति पाठे तत्त्वाविवक्षायामित्यादिः। परं तु स पाठोऽप्युक्तरीत्या चिन्त्य एव॥ नन्वेवमपि कारकसंज्ञयाऽकथितत्वमेव किं नाश्रीयते ऽत आह

---

त्वात्। तथोक्तोदाहरणयोः निर्वर्त्यमानौदनभक्षणयोरेव तन्निष्ठफलविशेषव्यापारस्यैव तत्सूत्रस्थभाष्येण शब्दप्राधान्यप्रतीतेः। तण्डुले रूपे कर्मणि

---

दुहि। गां दोग्धि पयः॥ नैतदस्ति। कथिताच्च पूर्वापादानसंज्ञा

---

विशेषकथाभिरकथितत्वमाश्रीयते। प्रश्नप्रतिवचनाभ्यां चासंकीर्तितवचनोऽकथितशब्दो न त्वप्रधानवाची रूढिशब्दोऽत्राश्रित इति दर्शितम्। रूढिषु हि व्युत्पत्त्यर्थमेव क्रियोपादीयते। न तु प्रवृत्तिनिमित्तत्वेन। तथा

---

मुख्यकर्मणा सम्बध्यमानमिति यावत्। तथा श्रुविशास्योर्गुणेन कारकेण कर्मणेति यावत्। कारकाणां क्रियां प्रति विशेषणत्वात्। तत्रापि कर्मण एव प्रकृतत्वात्। यत्सचते सम्बध्यते। षच समवाये। स्वरितेत्। केचित्तु परस्मैपदिभिः सहैनं धातुं पठन्ति। षच समवाये। इय

---

निर्देशः। रूढिशब्द एष हि व्युत्पत्त्यर्थमेव क्रियोपादीयते न तत्र कारणादिसम्बध्यते नहि गच्छतीति गौरित्यत्र केनेति प्रश्नो रथेनेति प्रतिवचनं वा भवति। इह "कारक" इत्यनुवर्तनात् सत्येव कारकत्वे कथितस्य संज्ञया भाव्यमिति सामर्थ्याद्विशेषकथाभिरित्युक्तम्। 'परिगणनं कर्तव्यमिति'।

इहेति ॥ (कै)

नत्वप्रधानवाचीति । (कै)

तद्ग्रहणे हि दुह्यादिव्यतिरिक्तविषये यावकाशाधिकरणापादानविषये गोर्दोग्धि पय इत्यादाववधित्वविवक्षायामपि परत्वादनेन कर्मत्वापत्तिरिति भावः ॥ प्रश्नप्रतिवचनाभ्यां रूढीग्रहणं कथमिति व्युत्पादयति

---

चादय इति तु बह्वानां प्रमाद एव ॥ दुह्यादिषु भाष्ये गणनाभावाच्च ॥ नीहृ-कृष्वहामुत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारार्थकानामनेनैव द्विकर्मकता । संयोगस्य फलतावच्छेदकः सम्बन्धो ग्रामनिष्ठस्तदनुकूलव्यापा-

---

( १ । ४ । २४ ) ॥ दुहि ॥ याचि । इदं तर्हि । पौरवं गां याचते इति ॥

---

च गच्छतीति गौरिति व्युत्पत्तावपि यथा गच्छतीत्युक्ते केनेतिप्रश्ने रथेनेति प्रतिवचनं भवति तथा गौरित्युक्ते प्रश्नप्रतिवचने न भवतः ॥ किमुदाहरणमिति । भा ॥ नटस्य शृणोतीत्यादावपि कर्मसंज्ञाप्रसङ्ग इति प्रश्नः । अथवा अपादानादिभिः सर्वस्य विषयस्य व्यापनादुदाहरणासम्भवं मत्वा

---

वाप व्यक्तायां वाचीति । तन्मते षच सेवन इत्यस्यानुदात्तेतो धातूनामनेकार्थत्वात्समवाये वृत्तिर्बोध्या । उभयथापि सम्बध्नातेः कर्मव्यापारे सचिर्वर्तते । अत एव कर्तृपदस्य कर्मपदेनार्थकथनं न विरुध्यते । राध्यत्योदन इत्यस्य पच्यत इत्यनेन यथा उभयत्राप्योदननिष्ठविक्लित्तेर्भानाविशेषात् । कविना

---

नटस्य शृणोतीत्यादौ धात्वन्तरप्रयोगे मा भूत् । प्रच्छिभिच्छीत्यत्र 'छे च' ( ६ । १ । ७३ ) ति तुक् प्राप्तो ऽनित्यत्वादागमशास्त्रस्य स न कृतः । 'सनाद्यन्ता धातवः' ( ३ । १ । ३२ ) 'इको यणचि' तिवत् । 'उपयुज्यत-इत्युपयोग इति' । असंज्ञायामपि कर्मणि घञ् । 'तस्य निमित्तं

रूढिषु ह्वीति । (कै)

रूढ्यात्यन्ततिरस्कारात् योगार्थस्य तत्र भानमेव नास्तीति भावः ॥ न च रूढिर्योगमपहरतीति न्यायाद्यौगिकार्थस्यैव कथं ग्रहणम् । न चानिष्टनिवारणाय तत् लक्षणैकशरणानां लक्ष्यायत्तप्रमाणस्थितेरभावादिति वाच्यम् । लक्ष्यैकशरणभाष्यकारादिव्याख्यानेन तस्यैव ग्रहणादित्याहुः ॥ अथवेत्यादि चिन्त्यम् । नटस्य शृणोतीत्यादेः सम्भवात् । नटाज्ञिः सरन्तं शब्दं शृणोतीत्यर्थे ह्युपयोगे इत्यस्य वैयर्थ्यापत्त्याऽनभिधानेन तस्य प्रयोगस्याभावात् । अत एव प्रत्याख्यानेन फलैक्यसिद्धिः ॥

---

रथाङ्गनिष्ठः प्रधानजन्यफलाश्रयत्वाद् अजा प्रधानं तत्र नादय उक्तभाष्यात् । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा" इत्यत्र

---

नैतदस्ति । कथिताऽपि पूर्वापादानसंज्ञा ॥ न याचनादेवापायो भवति ।

---

एच्छति । उपयोगनिमित्तमिति । भा । उपयुज्यते इत्युपयोगः पयः पयादि तस्य निमित्तं गवादि । अनेन गां दोग्धि पय इत्यत्र पयस उपयुज्यमानत्वादीप्सिततमत्वं गोस्तु पयोऽर्थत्वादुपादानस्यानीप्सिततमत्वं दर्शयति । तथा युक्तत्वाभावाच्च गोस्तथायुक्तमित्यनेनापि कर्मसंज्ञा न सिध्यति ॥

---

मेधाविना सूत्रकारेण तदकीर्तितमित्याचरितं व्यवहृतमित्यर्थः । अपूर्वविधाविति । पूर्वोक्तानामपादानादिसंज्ञानां विषयस्तेनास्तीत्यर्थः । न चैवं वक्ष्यमाणयोर्हेतुकर्तृसंज्ञयोर्विषयेतिप्रसङ्गः स्यादिति वाच्यम् । एकसंज्ञा-

---

गवादीति' । अनेन गां दोग्धि पय इत्यादौ पयःप्रभृतेरुपयुज्यमानत्वादीप्सिततमत्वं गवादेस्तु तदर्थत्वादुपादानस्यानीप्सिततमत्वं च दर्शयति । तथायुक्तत्वाभावाच्च गवादेस्तथायुक्तमित्यनेनापि न सिध्यति ।

## तस्य निमित्तमिति । (कै)

कर्मनिष्ठधात्वर्थविशिष्टस्य कर्मणा निमित्ततया सम्बन्धीत्यर्थ इति वदन्ति । स्पष्टमिदं सूत्रशेषे भविष्यति । एतत् फलं तु करणभूतपाण्यादिनिवृत्तिः । तस्य दोग्धृव्यापारजनकतयाऽन्यथासिद्धत्वेन विभागविशिष्टपयोरूपकर्मणोऽनिमित्तत्वात् । यत्तु वृत्तिकृता तस्याप्युपयोगनिमित्तत्वमुपेत्यापूर्वविधावित्यनेन करणं कृतं विहिता तत्र करणादिसंज्ञेति । तन्न । गवादीनामपादानत्वाद्यविवक्षायामिवास्यापि करणत्वाद्यविवक्षायां कर्मत्वापत्तेर्दुर्वारत्वात् । उपयोगपदेन मुख्यकर्मयुक्तं तस्य निमित्तमित्यनेन धात्वर्थव्यापारात् प्राक्

---

दध्यानयनेन पयसः संस्कार्यतया अर्थप्राधान्यमादायतच्छब्देन पयसः परामर्श इति मीमांसकग्रन्था नेयाः । दधिनिष्ठ संयोगानुकूलव्या-

---

याचितोऽसौ यदि ददाति ततोऽपायेन युज्यते । याचि ॥ वधि । अन्य-

---

अपूर्वविधाविति । भा । पूर्वत्वमगत्योपलक्षणमिति परविधावपीयं संज्ञा भवति ॥ ब्रुवि शासि गुणेनेति । भा । ब्रुविशास्योर्गुणः साधनं प्रधानकर्मधर्मादिकं तेन च यत्सचते संबध्यते इत्यर्थः । क्रियायाः साध्यत्वात् प्राधान्यं

---

धिकारेण पराभ्यां हेतुकर्तृसंज्ञाभ्यां कर्मसंज्ञाया बाधात् । प्राचस्तु पूर्वग्रहणमन्यमात्रोपलक्षणं तेन वक्ष्यमाणयोर्हेतुकर्तृसंज्ञयोर्विषये नातिप्रसङ्गः । सूत्रेऽप्यकथितमिति' कथननिवृत्तिपरायाश्चोदनायां भूतकाणो न विवक्ष्यते । यथा पराजेरसोढ इत्यत्रासहिष्यमाणस्याप्यपादानसंज्ञा भवति अध्ययनात्पराजेष्यत इति तथेहापीत्याहुः । तच्चिन्त्यम् ।

---

एतदेव दर्शयति । 'तस्यैवमित्यादि' । उपयुज्यमानस्य पयःप्रभृतेर्यन्निमित्तं गवादि तस्येत्यर्थः । पाण्यादिकमप्युपयोगनिमित्तमिति तेनापि विनोप-

तत् संबद्धत्वमुक्तम्। अन्यवत्यद्धि गां व्रजम् इत्यत्रापि पुनर्निर्गम-प्रतिबन्धेन स्थितिस्थैर्य्यमर्थः। एवं च तत्र प्रतिबन्धानुकूलव्यापारात् प्राक् व्रजस्य गोसम्बन्धोऽस्त्येव। उपयोगसाहचर्य्याभावे गुणपदेनाप्य-स्येव ग्रहणं तेन सम्बध्यते धात्वर्थव्यापारान्तरमित्यर्थं बहवः॥

## अनीप्सिततमत्वं दर्शयतीति। (कै)

इदं च विभागजन्यवहिर्देशसंयोगानुकूलव्यापारार्थत्वे दुहधातो-र्बोध्यम्। यदा तु त्याजनार्थस्तदा प्रयोजकव्यापारेणेप्सिततमत्वम-स्त्येवेति बोध्यम्। इदं च "आकडार" (१ । ४ । १) सूत्र-भाष्ये ध्वनितम्॥

---

पारार्थकत्वाद्धातोः पयसः सप्तमी। दुहेरप्यन्तः स्थितद्रवद्रव्यविभागानु-कूलव्यापारानुकूलव्यापारार्थत्वे गां दोग्धि पयः इत्यत्र गोपयसोरभ-

---

वरुणद्धि गां व्रजम्॥ नैतदस्ति। कथिताच्च पूर्वापादानसंज्ञा॥ (१ । ७५ ।)

---

तदर्थत्वात् प्रकृतेः कारकाणां गुणत्वम्॥ कविनेति। भा। कविशब्दो मेधाविवचनः। क्रान्तदर्शनात्। दुह्यादीनां चार्थोपलक्षणाय उपादानात् पर्यायप्रयोगेऽपि कर्मसंज्ञा भवति॥ ननु गां दोग्धि पय इत्यस्यायमर्थः।

---

उद्धरीत्वा यथाश्रुतेपि सर्वासामप्युक्तत्वात्। नीवह्योरिति श्लोके गत्यर्था-नामित्युत्तरसूत्रोपात्तानामुपलक्षणम्। चकारेण नयत्यादयो प्रयुक्त-इति कैयटः। माधवोऽप्याह। नयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेःपचेः।

---

योगस्य पयसोसम्भवात्। 'तदर्थमाहेति'। तस्य करणादेः कर्मसंज्ञानि-त्यर्थमित्यर्थः। प्रयोजनवचन एव चार्थशब्दो निवर्तमानतया तु प्रयोजनत्वं गुणमुख्यारोपचाराः प्रयोजनमितिवत्। 'अपूर्वविधाविति'। यथाण्वो

तथायुक्तत्वभावाच्चेति । (कै)

फलाश्रयत्वाभावादित्यर्थः ॥

अपूर्वविधाविति । (भा)

कर्मसंज्ञापेक्षया पूर्वसंज्ञानां विधिविषयाभावे इत्यर्थः । यत्त्वेतत् विधेयकर्मसंज्ञापेक्षया पूर्वसंज्ञाविषयाभावे इत्यर्थ इति तन्न । अनेन वा पूर्वेण वा कर्मत्वे विशेषाभावात् । न च पूर्वविषयकर्मत्वाविवक्षायां कर्मत्वार्थमिदं षष्ठ्यपवाद एवं च सम्बन्धत्वेन बोध्यार्थमिदमिति वाच्यम् । सर्वसूत्रबोधिते कर्मसंज्ञकेऽर्थे

---

योरप्यनेन कर्मत्वम् । गौः कर्तृव्यापारजन्यफलाश्रयत्वात् पयसस्तत्प्रयोज्य फलाश्रयत्वाद् गोर्विभागाश्रयत्वेन तु न कर्मत्वं पयो निरुद्विभा-

---

वधिं ॥ प्रच्छि । माणवकं पन्थानं पृच्छति । नैतदस्ति । कथिताच पूर्वापादानसंज्ञा ॥

---

गौः पयस्त्यजति देवदत्तो गवा पयस्त्याजयति । तत्र प्रयोजकव्यापारेणाप्यमानत्वाद् गोः कर्मत्वं सिद्धम् ॥ नैतदस्ति । भा । यथाण्यन्तेषु धातुषु क्रियाविशिष्टः प्रयुज्यते इति प्रतीतिः । नैवमिह निष्क्रियस्यापि गवादेर्दोहनादिषु विनियोगात् ॥ गां दोग्धीति । भा । दोहेनाप्यमानत्वेऽपि

---

तारेर्याचेत्वया मोचेस्त्यनेर्दापेस्र सङ्ग्रहः ॥ कारिकायाञ्चशब्देन सुधाकरमुख्यैः ज्ञात इति । एतन्निष्कर्षस्तु करिष्यते । क्रमेणोदाहरणानि । गां दोग्धि पयः । अविनीतं विनयं याचते । गामवरुणद्धि व्रजम्

---

विभिन्नीति तत्रेत्यर्थः । पुर्वग्रहणमन्यमान्नोपलक्षणं तेन वक्ष्यमाणयोर्गत्युकर्तृसंज्ञायोरपि विषये कर्मसंज्ञा न भवति । सूत्रे कथितमिति कथनमिदन्तिपरायां चोदनायां भूतकालो न विवक्ष्यते यथा 'पदाजेरयोग'

विहितप्रत्ययानां कर्मत्वशक्तेरेव कर्मबोधकत्वात्। किं च कर्त्तुरि-त्यादेरपि षष्ठ्यपवाद एव तदभावे तद्विषये षष्ठ्या एव प्राप्तेः। अनेनापादानत्वाद्यविवक्षायां सर्वथा तदप्राप्तौ वा गवादेर्जनकत्व-समानाधिकरणशक्तिविशेषेणान्वयविवक्षायामनेन कर्मत्वं भवतीत्युक्तं परविधावपीत्याद्ययुक्तमुक्तमितीतेः॥

## गुणः साधनमिति। (कै)

क्रियानिरूपितं प्राच्यं गुणत्वमार्थमुद्देश्यत्वात् प्राधान्यमिति बोध्यम्॥

## सचते इति। (कै)

धात्वर्थव्यापारादनन्तरमिति शेषः। "षच सेचने" इत्यतो-ऽनुदात्तेतः संवध्नातेः कर्मव्यापारे वर्त्तमानादात्मनेपदम्। "षच समवाये" इत्ययं तु परस्मैपदी॥ भाष्ये

---

गीयसम्बन्धस्यैव फलतावच्छेदकत्वात् तत्त्वेनानुद्देश्यत्वाच्च। उक्तप्राधान्यं च गौरिति तत्र आदयः। एवमन्येषामपि दुहादीनां दण्ड्यादीनां च

---

न प्रश्नादेवापायो भवति। एतोऽसौ यद्याचष्टे ततोऽपायेन युज्यते।

---

गोरीप्साप्रकर्षाभावात् तमप उपादानात् प्रकर्षस्य विवक्षितत्वात् अप्राप्ता कर्मसंज्ञानेन विधीयते। दुह्यादिपरिगणनात् नटस्य प्रख्योतीत्यादौ न

---

माणवकं पन्थानं पृच्छति। पौरवं गां भिक्षते। वृक्षमवचिनोति फलानि। माणवकं धर्मं ब्रूते शास्ति वा। अजां नयति ग्रामम्।

---

इत्यत्राविवक्षितमाचार्यस्याप्यपादानसंज्ञा भवति अध्ययनात् पराजेष्यत इति। गुणत्वादपि साधनमिति। साधनं हि प्रधानभूतां क्रियामपेक्ष्य गुणो भवति।

आचरितम् । (कै)

व्यवहृतमित्यर्थः ॥

क्रान्तदर्शनादिति । (कै)

क्रान्तदर्शनत्वादित्यर्थः । "[१]कविः क्रान्तदर्शनो भवतीति" निरुक्तादिति भावः । क्रान्तानि दर्शनानि येनेति विग्रहः । स चात्र पाणिनिरिति बोध्यम् ॥

---

१ विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।
वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति ॥

सर्वाणि प्रज्ञानानि प्रतिमुञ्चते मेधावी कविः क्रान्तदर्शनो भवति कवतेर्वा प्रसुवति । निरुक्त— दैवतकाण्ड— उत्तरषट्क— अ १२— पा २— ख २॥ "तान्मन्धेदाः कवयश्चक्रुः" निरुक्त— नैगमकाण्ड— पूर्वषट्क— अ ६– पा ५– ख ४ ॥ कविः । क्रामतेः कवतेर्वा गतिकर्मण इति रूपम् । क्रमतेः कवतेश्च "इन् सर्वधातुभ्यः" ( उ– ४ । ११४ ) इतीन् प्रत्ययः क्रमतेर्मकारस्य वत्वं रेफलोपश्च बाहुलकात् । क्रान्तमस्यास्तीति मत्वर्थीयस्य लुक् । कविः क्रान्तदर्शनः । अतीतानागतविप्रकृष्टविषयं युगपज्ज्ञानं यस्य स क्रान्तदर्शनः ॥

"कवी नो मित्रावरुणा" ऋ–सं–१–१–४–३ ॥

कविशब्दो मेधाविनामसूक्तं भगवता यास्केन ॥

---

दिकर्मत्वं बोध्यम् । गर्गाः शतं दण्ड्यन्ताम् इत्यत्रोक्तम् "प्राधान्यं

---

प्रच्छि । भिक्षि । पौरवं गां भिक्षते ।' नैतदस्ति । कथितात्र पूर्वमादान-

---

भवति ॥ कथितात्रेति । भा । गोः पयः आदत्ते इत्यर्थावगमात् ॥ पौरवं

---

वहति भारं ग्रामं हरति वा गमयति ग्राममित्यादि । नयतेः ।

---

'प्रधानकर्म्म धर्मारीति' । 'तस्य तु प्राधान्यन्तदर्थत्वात् प्रकृतेः । 'समञ्जत-

## अर्थोपलक्षणायेति। (कै)

अत एव "अकारमसि चोदितः" इति "परस्मैपदानाम्" ( ३ । ४ । ८२ ) इति सूत्रे भाष्ये पृच्छिपर्य्यायस्य चुदेर्द्विकर्मक-प्रयोगः सङ्गच्छते। केचित्तु चुदेर्व्यापारद्वयार्थत्वे "कर्त्तुः" ( १ । ४ । ४९ ) इत्यनेन द्विकर्मकत्वे प्रधानव्यापारजन्यफलाश्रयत्वेन प्रधान-कर्मणि क्तेनोक्तप्रयोगोपपत्तेरर्थपरत्वे मानं चिन्त्यमित्याहुः॥

## गवा पयः इति। (कै)

इदं चिन्त्यम्। "त्याजितैः फलमुत्खातैः" इत्यादि प्रयोगात्।

"तारेर्ग्राहेस्तथा मोचेस्त्याजेर्दापेश्च सङ्ग्रहः।
कारिकायाश्च शब्देन सुधाकरमुखैः कृतः"

इत्युक्तेश्च। गत्यादि ( १ । ४ । ५२ ) सूत्रे एषामुपसङ्ख्याना-वश्यकतया कर्त्तरि तृतीयाया दुर्लभत्वादिति केचित्। वस्तुतस्तु भाष्याननुक्तत्वेन गमकाभावेन च गत्यादिसूत्रे नोपसङ्ख्यानं त्याजि-तैरित्यादि प्रयोगाश्च चिन्त्या एव कैयटस्वरसादित्याहुः॥

---

गर्गाणामिति" तत्रैव वादयः॥ उद्देश्यत्वरूपमार्थप्राधान्यं तु शतस्य

---

संज्ञा। न भिक्षणादेवापायो भवति। भिक्षितोऽसौ यदि ददाति ततोऽपा-

---

गामिति। भा। पौरवेश गां दिदापयिषत इत्यर्थः प्रतीयते गोश्चेप्सित-

---

शतं जयति देवदत्तम्। कर्षति शाखां ग्रामम्। क्षीरनिधिं सुधां मथ्नाति। मुष्णाति शतं देवदत्तेन। गर्गान् शतं दण्डयति।

---

इति'। सचत इत्यस्यार्थकथनमेतत्। षच समवाये स्वरितेत्। केचित्तु परस्मैपदिभिः सह धातुमेनं पठन्ति षच समवाये रप लप व्यक्तायां

## सिद्धं कर्मत्वमिति ।

"कर्तुरीप्सिततमम्" ( १ । ४ । ४९ ) इत्यनेन ॥

## निष्क्रियस्यापीति । (कै)

तद्व्यापाराप्रतीतावपि दोहनादिविषयेऽस्य प्रयोगादित्यर्थः । एवं च विभागजन्यसंयोगानुकूलव्यापारमात्रस्य धात्वर्थत्वे गौरवधित्वात् तदविवक्षायामिदमावश्यकमिति भावः ॥

## दोहनाप्यमानत्वेऽपीति । (कै)

दुहधात्वर्थगोपनिष्ठव्यापाराजन्यगोनिष्ठव्यापाररूपफलाश्रयत्वेऽपीत्यर्थः ॥

## ईप्साप्रकर्षेति । (कै)

विभागजन्यसंयोगानुकूलव्यापारस्य दुह्यर्थत्वे इदम् । उद्देश्यत्वाभावाद् व्यापारद्वयजन्यफलाश्रयत्वाभावाच्च तत्तु परस्यैवेति भावः ॥

---

इत्यनुद्देश्यत्वेनाप्रधानगर्गानुरोधेन न प्रतावृत्तिरिति न "वृद्धि" सूत्रस्य-

---

येन युज्यते । भिद्धि ॥ चिञ् । वृक्षमवचिनोति फलानि । नैतदस्ति । कथितात्र पूर्वापादानसंज्ञा ॥

---

तमत्वं न पौरवस्य ॥ कथितावेति । भा । पौरवाद् गां भिक्षत इत्यर्थसम्प्रत्ययात् ॥ न याचनादेवेति । भा । याचितापि याचनकाले नाध्यव-

---

तण्डुलानोदनं पचति । तारयति कपीन् समुद्रम् । ग्राहयति बटुनेदम् । मोचयति त्याजयति वा कोपं देवदत्तम् । दीपयति शास्त्रार्थं

---

वाचोति । तत्राङः । षच सेचन इत्यस्यानुदात्तेतोनेकार्थत्वात्समवाये प्रवृत्तिरिति । सम्भ्रातेश्च कर्मव्यापारे वर्त्तिवर्त्ततइति कर्तृपदस्य कर्मपदेनार्थकथनं

अप्राप्तेति। (कै)

"तथायुक्तम्" इत्यपि नेप्सितत्वस्य सत्त्वेनानीप्सितत्वाभावादिति बोध्यम् ॥ चिन्त्यमिदम्। गां दोग्धि पयः परत्वात् "कर्तुरीप्सिततमम्" इति कर्मत्वमिति "आकडार" सूत्रस्थभाष्यविरोधात् तत्र सूत्रे धातूपात्तकालाश्रयत्वरूपस्यैवेप्सिततमत्वस्य ग्रहाच्च। तस्मात् पयो निष्ठविभागजसंयोगानुकूलव्यापारस्यैव धात्वर्थत्वे इदं भाष्यमिति तत्त्वम्। एवमग्रेऽपि ॥ एवं रूपेऽर्थेऽपादानत्वाविवक्षाभिप्रायेण सिद्धान्तिन उदाहरणदानं तदजानतः पूर्वपक्षिणः खण्डनमित्येव सारम्। किं च तण्डुलान् ओदनं पचतीत्यत्र द्व्यर्थत्वेन द्वयोरपि कर्तुरित्येव कर्मत्वमिति तत् सूत्रस्थभाष्यविरोधः। त्वद्रीत्या गवीव तण्डुलेष्वपीप्सा प्रकर्षाभावात् ॥ ननु विभागजसंयोगानुकूलव्यापारानुकूलव्यापारार्थकत्वेऽपादानत्वाप्राप्तेराह

---

भाष्यविरोधः। "अमृतमम्बुनिधिर्ममन्थे" इत्याद्यप्येवमेव। मासमास्ते इत्यादावास्यादेरासनादिकरणके व्यापने वृत्तिर्व्याप्तिर्मासादिनिष्ठं फलम्।

---

अविश्वासितगुणेन च यत्स्यचते तदकीर्तितमाचरितं कविना ॥

---

स्यति नूनमस्मादिदं वस्तु निर्गत्य मां प्राप्नोतीति भावः ॥ व्रजमवरुणद्धीति। भा। गौर्व्रजं प्रविशति गवा व्रजं प्रवेशयतीत्यर्थः ॥ कथितेति। भा।

---

शिष्यात्। स्यादेतत्। दुहादीनामर्थनिबन्धनेयं संज्ञा न तु स्वरूपाश्रया अहमपीदमचोद्यं चोद्यं इति तद्राजसूत्रभाष्ये एव्क्षिपर्या-

---

गानुपपन्नम्। यथा राध्यत्योदनइत्यस्य पच्यतइति। 'उक्तमिति'। आचरितमित्यस्य विवरणम्। 'सूत्रकारेणेति'। कविशब्दो मेधाविमात्रवचनोऽपि

**गोः पय इति । (कै)**

एवं चेद्दुग्धार्थकदुहधातुयोगेऽपादानत्वप्राप्त्याऽस्याप्रवृत्तिः । पूर्णीकार्थे'तु सिद्धमेव कर्मत्वमिति भावः । एवमग्रेऽपि बोध्यम् । अत एव सिद्धान्तकर्मसंज्ञेति कथिता पूर्वा कर्मसंज्ञेति वा नोक्तं कर्मसंज्ञाया विधेयत्वात् तदतिरिक्तपूर्वविधेरेवापूर्वविधावित्यच ग्रहणौचित्यादिति तात्पर्य्यम् । तदविवक्षायामुदाहरणत्वं लघौ न जानाति ॥ ननु बुद्धिकृतापायमादाय संज्ञा स्यादत आह

**याचितापीति । (कै)**

एवं च बुद्धिकृतस्यापि तस्याभाव इति भावः ॥

**गवा व्रजमिति । (कै)**

बलात्कारेण प्रवेशनस्यैवावरुद्ध्यर्थतया नायं समानार्थो रुधेरिति

---

मासमासनेन व्याप्नोतीत्यर्थः । यद्वा व्यापनपूर्वके आसने वृत्तिः । मासं व्याप्नुवन् आस्ते इत्यर्थः । उभयथापि "कर्तुः" इतिसूत्रेण कर्मत्वम् ॥

---

भुवि प्रासि गुणेन च यत्सचते सम्बध्यते तत्चोदाहरणम् । किं पुनस्तत् ।

---

गां व्रजे स्थापयतीति सम्प्रत्ययात् व्रजस्य स्थानक्रियापेक्षमाधारत्वम् । माणवकमिति । भा । अभिस्थापयिष्यति पश्चात् माणवकेन इत्यर्थः ॥

---

'यस्य बुदेरपि द्विकर्मकत्वदर्शनात् । तथा च भट्टिः । स्थास्नुं रवेरेसुतो जगाद मारीचमुच्चैर्वचनं महार्थम् । कालिदासोपि, श्रिलोकयोमि क्षितिपालमुच्चैः । प्रीत्या तमेवार्थमभाषतेवेति भारविश्च ।

---

प्रकरणात् सूत्रकारे प्रयुक्त इति दर्शयति । 'गां दोग्धि पय इति' । ननु सामान्यमर्थो गौः पयस्त्यजति । दोग्धा गवा पयस्त्याजयतीति तत्र प्रयोजक

भावः ॥ गौर्व्रजे तिष्ठति गाम् व्रजे निर्गमप्रतिबन्धेन स्थापयती-
त्यर्थाभिप्रायेणैवोदाहरणम् । अधिकरणत्वाविवक्षाभिप्रायेण तदज्ञा-
नतस्तु खण्डनं पूर्ववत् । बुद्धिकृतोऽप्यपायो नास्तीत्याह

**प्रश्नमात्रमिति ।** (कै)

एवं प्रश्नस्य विश्लेषाजनकत्वेन पृच्छिं प्रति माणवकस्यापादानत्वं
न प्रसक्तमिति भावः ॥

**अनुनयार्थस्यापि याचेरिति ।** (कै)

भिक्षेरपि उभयार्थत्वेन विनिगमनाविरहात् चिन्त्यमिदम् । किं
चोभयार्थकयाचिग्रहणेनैव सिद्धे भिक्षिग्रहणम् अर्थग्रहणाभावे
लिङ्गमेवोचितम् । एवं वृक्षमवचिनोतीत्यपि वृक्षात् फलान्यादत्ते
इत्यर्थ एवोदाहरणम् । तदविवक्षायामुदाहरणमिति तु न जानाति

---

प्रसनजन्यत्वस्य व्यापारावारोपेण तस्याः फलत्वम् । अनया रीत्या मासमोदनं
पचतीत्यपि भवत्येव आसनादिमात्रवृत्तौ त्वधिकरणत्वात् सप्तमी "समायां

---

पुत्रं ब्रूते धर्मम् । पुत्रमनुशास्ति धर्ममिति ॥ नैतदस्ति । कथिताच्च पूर्वा-

---

कथितेति । भा । माणवकान् मार्गोपदेशं जिज्ञासत इति सम्प्रत्ययात् ॥ न
प्रश्नादेवेति । भा । प्रश्नमात्रमनङ्गीकृतापायं धात्वर्थ इत्यर्थः भिक्षिर्याचि

---

उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्र इति । तथा च
भिक्षेर्यमरत्वाद्याचेरपि सिद्धम् । तुल्यार्थत्वात् । पौरवं गामर्थयत
इति यथा । तत्किं याचेः पृथग्ग्रहणेनेति चेत्, अत्राहुः । अनुन-

---

व्यापारेणाप्यमानत्वात् सिद्धा गोः कर्मसंज्ञा । न च वाच्यं प्रयोजकव्यापारेणा-
प्यमानस्य यदि भवति गत्यर्थादिष्वेवेत्युत्तरसूत्रे नियमादत्र न प्राप्नोति यथा

पूर्वपक्षी विषयतासम्बन्धावच्छिन्नं ज्ञानानुकूलो वचनरूपो व्यापारो ब्रूञादेरर्थः । सम्प्रदानत्वाविवक्षायामुदाहरणमिति तु न जानाति । कैयटोक्तार्थं तु कर्त्तुरिति सिद्धमेव कर्मत्वम् ॥ भाष्ये

तस्मान्नीह्येवेति । (भा)

यदि तेष्वपायाप्रतीतिस्तदा त्रीणि । अकथितत्वं च सर्वथाऽप्राप्तापादानत्वादिकमेव । याचतेश्च स्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्यनुकूलो व्यापारविशेषोऽर्थः । तत्र स्वत्वे पौरवस्य जनकतासमानाधिकरणनिरूपकत्वेनान्वयः । पृच्छेस्तु जिज्ञासाविषयार्थज्ञानानुकूलव्यापारोऽर्थः । व्यापारे च माणवकस्य जनकत्वमात्रेणान्वयः इत्यप्राप्तकर्मत्वार्थमिदम् । यदि तु तेष्वप्यपायप्रतीतिस्तदा तेष्वपि पूर्वविधिविषयत्वा तान्यपि नोदाहरणानि परिगणितातिरिक्ते च तत्राप्येतत् प्रवृत्तिरनिष्टेति सूत्रमिदमसङ्गतमित्येतत् तात्पर्य्यम् ॥

---

समायां विजायते" ( समां समां विजायते । ५ । २ । १२ ) इति यथा ॥ ननु यद्यपि पराधीनतया विषं भुङ्क्ते इत्यादौ भुजिक्रिया फलाश्रयत्वेन

---

पादानसंज्ञा ( १ । ४ । ३२ ) ॥ तस्मात् त्रीण्येवोदाहरणानि । पौरवं गां

---

वद याच्येयः । अथ याचिभिक्षोरेकार्थत्वात् किमर्थमुभयोरुपादानम् । उच्यते । अनुनयार्थस्यापि याचेर्ग्रहणार्थम् । तेनाविनीतं विनयं याचते

---

याचोऽत्र याचतिः । विनयं याचते । विनयायानुनयतीत्यर्थात् । अस्तु तर्हि याचेरेव ग्रहणम् । तस्यानेकार्थत्वाद्भिक्षेरपि सिद्धमिति चेन्न ।

---

पचन्तं देवदत्तं प्रयुङ्क्ते पाचयति देवदत्तेनेत्यत्रेति । ण्यन्तेष्वेव स नियमोऽयं तु प्रकृत्यन्तः । नैतदस्ति । यथा ण्यन्तेषु धातुषु क्रियाविशिष्टस्य प्रयुक्तिः

## उदाहरणाच्चयवादिनमिति । (कै)

सूत्रासङ्गतिवादिनमित्यर्थः ॥

## विवक्षाभेदादिति । (कै)

अपादानत्वविवक्षायां पञ्चमी तदविवक्षायामनेन कर्मत्वमित्यर्थः ॥

## कर्मसंज्ञैवेति । (कै)

तत्र चितययोगे सर्वदापायप्रतीतेरितिभावः । न हि याचनादेवेत्यादेर्भाष्ये पूर्वं सिद्धान्त्युक्तित्वाद् याचितापीत्यादिना बौद्धापायाभावस्यापि स्वयं कथनादिति तात्पर्य्यम् ॥

## एषा व्यवस्थेति । (कै)

सिद्धान्तिनः संमतेति भावः ॥

---

उद्देश्यत्वाद् अनेन सिद्धम् ॥ "आतस्य विषमीप्सितं यत्तद् भक्षयतीति" भाष्योक्तेः । तथापि "चोरान् पश्यति ग्रामं गच्छन् तृणं स्पृशती" त्यादौ

---

याचते । माणवकं पन्थानं पृच्छति । पौरवं गां भिक्षते इति ॥ अथ ये

---

इत्यत्रापि कर्मसंज्ञा भवति ॥ वृक्षमिति । भा । वृक्षेण त्याजयति फलानीत्यर्थः ॥ कथितेति । भा । वृक्षात् फलान्यादत्ते इत्यर्थावसायात् ॥ पुत्रमिति । भा । पुत्रो धर्मं प्रतिपाद्यते । पुत्रं धर्मं प्रतिपादयतीत्यर्थः ॥

---

अर्थभेदेन शब्दभेद इति दर्शनमाश्रित्यानुनयार्थस्यैव याचेरिह ग्रहणात् । अत एव हि नयतिग्रहणेनानुनयार्थस्यापि न गतार्थता । स्पष्टार्थं

---

प्रतीयते गमयतीति । नैवमत्र निष्क्रियस्यापि गवादेर्दोहननयनादिषु विनियोगात् । तथा शब्ददुहानापि गौर्दुह्यते अगच्छन्तो भारादयः शिरसा

अपादानसम्प्रदानसंज्ञे इति । (कै)

अपादानत्वादिविवक्षायामपीति भावः । अन्ववरुणद्धि गां व्रजमित्यत्राधिकरणसंज्ञाबाधस्येदमुपलक्षणं यदि तु व्रजोऽपि प्रधानं तदा तत्र नैव कर्मत्वं स्यादित्यस्योपलक्षणं बोध्यम् ॥

कर्मसंज्ञैवेति । (कै)

"तथायुक्तम्" इत्यस्यात्र सम्बन्धो नास्तीति भावः ॥

प्रश्न इति । (कै)

सर्वोदाहरणवादिन इति भावः ॥ सूत्रासङ्गतिवादिन उत्तरम् ।

---

कर्मत्वं न स्यात् तेषामनुद्देश्यत्वाच्चौराविषयेन्द्रियसम्बन्धाद् दृश्यमाना अपि न दर्शनोद्देश्या अपितु निष्ठादर्शन एवेति द्वेष्याः । इष्टो चौदासीन्यादनुद्देश्यत्वमिति चेन्न "तथायुक्तं चानीप्सितम्" इत्यनेनैव सत्त्वात् ।

---

धातूनां द्विकर्मकाणां तेषां किं कथिते लादयो ( १ । ४ । ६९ ) भवन्त्याहोस्विदकथिते । कथिते लादयः ॥ कथिते लादिभिरभिहिते गुणकर्मणि वा कर्त्तव्या ।

---

कथितेति । भा । धर्मेण वचनानुशासनकर्मणा पुत्रस्याभिप्रेयमाणत्वात् । अथेति । भा । सर्वोदाहरणवाद्याचार्यस्याकथितशब्दस्य ग्रहणे विवक्षाभेदाद् गां दोग्धि पय इत्याद्यपि भवति गोर्दोग्धि पय इत्याद्यपि । पूर्वोक्ते

---

भिन्नोः पृथग्ग्रहणमित्यन्ये । चकारेण पचेर्ग्रह इति यन्माधवादिभिरुक्तं तन्मतभेदेन । तथा च "कर्मवत्कर्मणेति" सूत्रे "दुहिपच्योर्बहुलं सकर्मकयोरि"तिवार्तिकव्याख्यावसरे पचेर्द्विकर्मकता कैयटेन स्फुटीकृता । यत्तु

---

गौयन्ते तस्माद्दोग्धीत्येकस्या एव क्रियायाः श्रवणाद् गोपयसोर्भेदेन कर्मत्वं न भवति । णिचि तु सति प्रकृत्यंशस्य प्रत्ययांशस्य च भेदेन द्वे क्रिये वाच्ये

**कथित इति ।** (भा)

"कर्तुरीप्सिततमम्" इत्यादिना कृतकर्मसंज्ञे इत्यर्थः ॥ तद्व्याचष्टे

**प्रधाने इति ॥** (कै)

तत्र हेतुमाह

**प्रधानेति ॥** (कै)

**कारकत्वाभावादिति ।** (कै)

कर्त्रादिषट्कान्यतमत्वाभावादित्यर्थः । इदं तु सूत्रं सूत्रमेवा-पूर्वविधायित्युक्तेरिति भावः ॥ सर्वोदाहरणवादी एतत् सूत्रोदाहरणत्वेन संमते गुणकर्मणि का कर्मसंज्ञा इति सूत्राप्रवृत्तिवादिनं पृच्छति

---

ईप्सिततमत्वमनुद्देश्यत्वम् । तत्त्वं च प्रत्यासत्त्या यद्धात्वर्थफलाश्रयत्वेन कर्मत्वं तद्धात्वर्थकर्त्तुरेवेति बोध्यम् । तेन वारयति योगे अग्न्यादेर्मा-नेनापि कर्म वा । तथायुक्तत्वं प्रकृतधात्वर्थप्रयोज्यफलाश्रयत्वम् । यत्तु

---

कथिते लादयश्चेत्स्युः षष्ठीं कुर्यात्तदा गुणे ।

---

तूदाहरणत्रये कर्मसंज्ञैवेत्येषा व्यवस्था । अप्रधानवचनाकथितशब्दोपादाने त्वपादानसम्प्रदानसंज्ञे बाधित्वा दुह्यादिषु कर्मसंज्ञैव स्यादित्यसंकीर्तित-मकथितमिह्याश्रितम् । तत्र कर्मणि लादय उत्पद्यमानाः प्राधान्याप्राधा-

---

कर्तुरीप्सिततममिति सूत्रे ह्यर्थः पश्चिरित्यादिभाष्यन्तु मतान्तरेण । अन्यथा तण्डुलानोदनं पचतीति प्रयोगस्य यथाश्रुतस्योपपत्तौ किं मुधा क्लेशेन । अत एव अकथितशब्दो यद्यप्रधानार्थो गृह्येत तदा पाणिना

---

इति कर्मभेदोपपत्तिः । 'गमयति ग्रामं देवदत्तमिति' । यदा तु दुहेः क्षरणमर्थः क्षरति गौः क्षीरं क्षीरं क्षारयति देवदत्त इति तदा यद्यपि

**कथिते लादिभिरिति॥** (भा)

मुख्याप्रकृतिवादी किं गवादि तत्रापादानत्वादिना न विवक्षित-मुत विवक्षितमिति विकल्प्याद्ये आह

**षष्ठीमिति।** (कै)

गुणे तत्र गुणकर्मत्वेनाभिमते यदि तूदाहरणद्वयमस्य वादिनोऽभिमतं स्यात्तदा पौरवस्य याच्यते इति षष्ठीकरणमयुक्तमनेन कर्मत्वे शेषत्वाभावादिति बोध्यम् ॥ षष्ठ्या हेतुमाह

**अकारकं हीति ॥** (भा)

**अकथितादिति।** (भा)

भावप्रधानो निर्देशः। क्वचित् "अकथितत्वात्" इत्येवपाठः।

---

परसमवेतक्रियाजन्यधात्वर्थफलाश्रयत्वं कर्मत्वम्। परसमवेते विशेषणाच् चैत्रश्चैत्रं गच्छतीति न प्रयोगः। तत्र द्वितीयया स्वप्रकृत्यर्थापेक्षया परत्वं

---

कथिते लादयश्चेत्स्युः षष्ठी गुणकर्मणि तदा कर्त्तव्या ॥ दुह्यते गोः पयः। याच्यते पौरवस्य कम्बल इति ॥ कथम्

---

न्याभ्यां भिन्नकाल्यमनेकं कर्म युगपदभिधातुमसमर्थाः किं प्रधान-कर्मण्युत्पद्यन्ते अथ गुणकर्मणीति प्रश्नः। कथित इति। भा। प्रधाने

---

कांस्यपात्र्यां दोग्धि पय इति व्याप्तिकांस्यपात्र्योरतिप्रसङ्गः करणाधि-करणयोश्च पचत्यादिरवकाशः। न हि तत्रास्य प्रसङ्गो दुहादिपरि-गणनादित्यकथितसूत्रे कथयतः कर्मवत्सूत्रे तु पचेर्द्विकर्मकता ब्रुवतो

---

गोरपायेऽवधिभावो विद्यते तथाप्यविवक्षिते तस्मिन्निमित्तत्वमात्रापेक्षा-यामुदाहरणोपपत्तिः। एवं चावधित्वविवक्षायामपादानसंज्ञायां भवत्येव

अपादानादिविवक्षात्वाभावात् कारकशेषत्वमित्यर्थः। अस्य सूत्रस्यावकृत्याऽनेन कर्मत्वस्याप्राप्तेरिति भावः॥ तदेवाह

**अपादानादिष्वेवेति॥** (कै)

एतदेव व्यतिरेकमुखेनोपपादयति भाष्ये

**कारकं चेत्तुना कथेति।** (भा)

एवं चेदं सूत्रमनर्थकमेवेति भावः॥ अपूर्वविधावित्यस्य च पूर्वविधिविषयाभावे इत्येवार्थो न तु तद्विषयाविवक्षायामितीत्यभिमानः। अपादानत्वादिरूपेण विवक्षारूपे द्वितीयपक्षे आह

**अथ कारके इति॥** (भा)

तद्व्याचष्टे

---

बोध्यते। आख्यातेन तु स्वार्थसंख्यान्यव्यपेक्षया परसमवेतत्वं च धात्वर्थक्रियान्वयि। गमिपत्योः पूर्वदेशे त्यजेरुत्तरदेशे स्यन्देश्च पूर्वोत्तरयोः

---

अकारकं ह्यकथितत्वात्

अकारकं ह्येतद् भवति। किं कारणम् अकथितत्वात्।

---

ईप्सिततमे इत्यर्थः॥ प्रधानाप्रधानसन्निधौ प्रधानस्यैवाभिधानस्य न्याय्यत्वात्। अथवा अपरः कथितस्यैवाभिधानं मन्यते अकथितस्य तु कारकत्वाभावादभिधानासम्भवमेवेति वक्ष्यति "प्रधाने कुर्यात्तदा गुणे" इति॥

---

हरदत्तस्य न पूर्वापरविरोधः। मतभेदपरत्वात्। अत एव पचिधातुनिरूपणे तण्डुलानोदनं पचतीति प्रयोगं द्विकर्मकतयैव माधव उदाहृतवानिति दिक्। तथा ग्राहेर्द्विकर्मकत्वं बहवो न मेनिरे।

---

गोर्दुह्यते पय इति। यदा तु पयस एव विशेषणं गौः तदा षष्ठी गोः पयो दोग्धीति। 'पौरवं गां याचत इति'। पुरोरपत्यं पौरवः। ननु विहिता-

यद्वा विशेषेति। (कै)

यदि सामान्यमित्यस्य तदा का कर्त्तव्या इति शेषस्तदा च शेषत्वमिति भावः॥

कर्मत्वमिच्छत्येवेति। (कै)

कर्मत्वमेवेच्छतीत्यर्थः॥

ततो बुद्धिकृतस्येति। (कै)

एवं च सूत्राप्रकृतिरेकस्य मते इति भावः॥

तस्मात् षष्ठ्येवेति (भा)

---

कर्मत्ववारणाय धात्वर्थेति। तत्र क्रियायाः फलस्य च धातुनैव लाभाद् आधेयत्वं भेदश्च द्वितीयार्थः। तत्र फले आद्यान्वयः। अन्त्यस्य सामानाधिकरण्येन व्यापारे। भेदे प्रकृत्यर्थस्य फलान्वयि व्यक्तिविशेषावच्छिन्न

---

कारकं चेत्तु का कथा।

अथकारकं नाकथितम्॥ अथ कारके सति का कर्त्तव्या।

कारकं चेद्विजानीयाद् यां यां मन्येत सा भवेत्॥

---

अकारकमिति। भा। अपादानादिष्वेव विशेषेषु कारकत्वं सामान्यं स्थितं न तु विशेषरहितस्य सामान्यस्य स्थितिरस्तीति भावः॥ अथ कारक इति। भा। यद्वा विशेषाश्रयणादपि सामान्यमित्यर्थः॥ यां यामिति।

---

अत एव "तमादौ कुलविद्यानामर्थमर्थविदां वरः। पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पितेति" कालिदासश्लोके पूर्वार्धे ग्रहेर्दुहार्थतया गतिबुद्धीति सूत्रेणाप्राप्तौ कर्तुर्णौ कर्मत्वाप्तमिति योजयित्वा उत्तरार्धे तेनेति

---

व्याख्यानवसंघा पौरवाकबौ समाधत्ते। न चाचनादेव तत आदरे याचितोऽसौ यदि स्वरति तव श्रायते॥ ननु मा माणवकादिना ऽऽदिश्यते तावत् तस्यापि

भाष्ये मदुक्तरीत्या व्याख्येयम्। एवं च भाष्ये षष्ठ्युच्चारण-वदेवेदं पञ्चम्युच्चारणं पूर्वपक्षिणो न त्वेतद् बलाद् सिद्धान्ते याचि-योगे पञ्चम्यभिमतेति भ्रमितव्यम्। न याच्ञादेव इत्यादेः पूर्वं सिद्धान्त्युक्तित्वात्। अत एवापादानत्वं मन्यत इत्युक्तम्॥ सर्वोदा-हरणव्याप्त्याह भाष्ये

कथिते अभिहिते इति। (भा)

प्रधानकर्मणि लादिभिरभिहिते गुणकर्मणि लस्य अन्यस्य षष्ठ्यादेर्विधिरिति तत्रान्यस्य संसारविलक्षणस्य मतिरित्यर्थः॥

चतुर्थीपञ्चम्याविति। (कै)

---

प्रतियोगित्वयान्वयः। एवं च ग्रामं गच्छतीत्यादौ ग्रामाधेयफलानुकूल-ग्रामभेदसमानाधिकरणव्यापारवानिति बोधः। एतेन प्रतियोगिता

---

कारकं चेद्विजानीयाद् या या प्राप्नोति सा सा कर्त्तव्या। दुह्यते गोः पयः। याच्यते पौरवात् कम्बल इति॥

---

भा। उद्देश्य एव वीप्साप्रतिपन्नेति सा भवेदिति प्रतिनिर्देशेन विवक्षिता॥ दुह्यते गोरिति। भा। अपदानं गौः॥ याच्यते पौरवादिति। भा। ननू-दाहरणान्तरवादौ पौरवस्य कर्मत्वमिष्यत्येवेति कथं पौरवादित्युक्तम्। अत्रोच्यते। न्यायस्य सामान्यत्वादत्राप्यपादानत्वं मन्यते। तथा हि। याच्यते

---

विभक्तिविपरिणामेन व्याख्येयम्। अत एव च "अविग्रहत्वं जनकौ मनुस्त्येनादिदंहेतुदुरं विनाकौ। जिह्मासमाको वलमस्य कषोर्डं-सम्भाव्योऽघुनन्दनस्तदि" तिभक्तिप्रयोगो जयमङ्गलायामित्थं व्याख्यातः।

---

च। यतः कथावं परिच्छित्तुरवादित्समानोऽपि याच्यते। 'मासमवचाज्ञि मर्पासिति'। मनु च मां नकं प्रवेश्यतीत्यमभक्तार्थः। ततश्च सिद्धं मनस

चतुर्थ्युक्तिस्तु ग्रामाद्यभिप्रायेणेदमुपलक्षणम् । व्रजमवरुणद्धि इत्यत्र अध्यन्यपीति बोध्यम् ॥ ननु तत्र विधिरित्ययुक्तमत आह

अस्वपदेनेति ॥ (कै)

युष्मच्छब्दोऽयमहंकारानास्पदचेतनत्वेनान्यमेवाह इत्याह

युष्मदर्थस्येति ॥ (कै)

तदुपनयन् वक्ष्यति भाष्ये

नैवमन्ये मन्यन्त इति ॥ (भा)

---

सामान्येनान्वये द्वित्वावच्छिन्न प्रतियोगिताकचैत्रभेदस्य चैत्रे सत्त्वेन चैत्रश्चैत्रं गच्छतीत्यस्यापत्तिः। अन्वयितावच्छेदकावच्छिन्नप्रतियोगितयाऽन्वये देवदत्तो ग्रामं गच्छतीत्यस्यानापत्तिरितिनिरस्तमिति । तन्न । परस्या

---

कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे ।

---

गौरवात् कर्मण आदित्स्यत इत्यर्थः। ततो बुद्धिकृतस्यापायस्यात्र सम्भवः । कथित इति । भा । प्रधानकर्मणि लादिभिरभिहिते तदेयं मतिर्यदुक्तं गुणे षष्ठी भवति चतुर्थी पञ्चम्यौ चेति । तत्र विधिस्त्वमतिरिति । अस्वपदेन विग्रहः । त्वच्छब्दास्त्वन्यवाची । यथोक्तः प्रयुक्तमिति

---

अभिग्रहवत् । अनेन धनुषा भगवता त्रिपुरदाहः कृत इति बोधितवानिति । युक्तं चैतत् । औरसुपतिं प्रति नियोगकथनानौचित्येन स्वरूपोपन्यासमात्रस्यैव कर्तव्यत्वात् । एतेन "अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाकेति" व्याख्यातम् ग्रहेर्बुद्ध्यर्थत्वात् । यद्वा ।

---

कर्मत्वम् । अथ व्रजे गामवस्थापयतीत्यर्थे तर्हि कथिताभावादधिकरणसंज्ञा यदा तत्रावरोधनक्रियां प्रति निमित्तत्वमात्रं विवक्ष्यते न कर्मत्वं नाधिकरणत्वं तदेदमुदाहरणं व्रजेन हेतुनाऽवस्थापयतीत्यर्थः। 'माणवकं पन्थानं

अनेनेति। (कै)

परसूत्रघटितैतत् सूत्रविषये दुहादौ गुणकर्मणीत्याचार्योक्त्या अप्रधाने दुहादीनाम् इत्याचार्यान्तरोक्त्या च सर्वेषामेवैतदुदाहरणत्वमपूर्वविधावित्यस्य च पूर्वविधिविषयाभावे तद्विषयाविवक्षायां चेत्यर्थ इति भावः। अत्र गुणकर्मत्वं प्रधानकर्मभिन्नत्वम् प्रधानकर्मत्वं प्रधानकर्तृनिष्ठव्यापारजन्यफलाश्रयत्वं तद्भेदश्च एकव्यापारार्थकदुहादिष्वनेन कर्मत्वे फलाश्रयत्वाभावात् पक्षे तु धर्मादेः प्रधानकर्तृव्यापारजन्यफलाश्रयत्वाभावादिति बोध्यम्। ये तूद्देश्यत्वानुद्देश्यत्वरूपे व्यापारद्वयजन्यफलाश्रयत्वतदभावरूपे वा प्राधान्याप्राधान्ये वदन्ति तेषां दुहादीनां द्व्यर्थतायामपि गवादावुद्देश्याप्राधान्यसत्त्वेन पयसि च प्राधान्यसत्त्वेन तदादायैव एतदुपपत्तावस्य भाष्यस्य सर्वोदाहरणत्वतात्पर्यानुपपत्तिरेवेति दिक्॥

---

कर्तृसंज्ञया बोधेनोद्देश्यत्वाभावेन च तत्प्रयोगापत्तेरसम्भवेन भेदेप्सितकल्पनस्य व्यर्थत्वात्। न च ततो बोधव्यावृत्त्यर्थं तत्कल्पनम्। तथा

---

कथिते लादिभिरभिहिते लविधिरेष भवति। किमिदं लविधिरिति।

---

षष्ठ्यपवादमुक्तम्। युष्मदर्थस्यापि त्वपेक्षावशादन्यत्वमस्तीत्येवमुक्तम्। इदानीं न्याय्यं पक्षं दर्शयति गुणकर्मणीति लादयो "लकृत्यक्तखलर्थाः"।

---

इषिप्रच्छ्योस्तुमुन्नन्तसमभिव्याहृतयोर्द्विकर्मकताया भाष्ये स्थितत्वात्सिद्धमेतदिति माधवः। प्रच्छेर्द्विकर्मताभ्युपगमपक्षे तु "मायाप्रतिप्राच्छिवमत्स-

---

पृच्छतीति'। प्रच्छ ज्ञीप्सायां तुदादिः। "ग्रहिज्या"दिना संप्रसारणम्।
ननु च कथितापादानसंज्ञा स हि तस्मादुपदेशमादत्ते न प्रश्नमाभादत्ते

निमित्तभावमात्रविवक्षेति । (कै).

क्रियाजनकत्वमात्रविवक्षेत्यर्थः ॥ परिगणनं फलं दर्शयति

अपादानादिविशेषेति ॥ (कै)

गुणकर्मणि ल्यादिविधिरित्यर्थस्य न्यायसिद्धत्वं दर्शयति

यतश्चेति ॥ (कै)

नन्वेवं पूर्वेणैव सिद्धं स्यादत आह

सत्यपि चेति । (कै)

वस्तुत ईप्सिततमत्वत्वेऽपि न क्षतिः "आकडार" सूत्रस्य भाष्योपपत्तिश्च प्रागुक्तैवेति न विस्मर्त्तव्यम् । किं च विभागजनसंयोगानुकूलव्यापारानुकूलव्यापारार्थकत्वं तदुदाहरणे आवश्यकमुभयोः

---

व्युत्पत्तिमतस्ततो बोधस्य दुर्वारत्वात् । किंच द्वितीयार्थाधेयत्वान्वितफलप्रकारकबोधं प्रति द्वितीयान्तार्थवृत्तिभेदप्रतियोगितावच्छेदकव्यापारो-

---

तत्र विधिस्त्वविधिः । त्वमतिः । किमिदं त्वमतिरिति । तत्र मतिस्त्वमतिरिति । नैवमन्ये मन्यन्ते ॥ कथं तर्ह्यन्ये मन्यन्ते । गुणकर्मणि ल्यादिविधिः

---

गौर्दुह्यते पयः । गौर्दोग्धव्या पयः । गौर्दुग्धा पयः । गौः सुदोहा पयः । अनेन दुह्यादयः सर्वत्रोदाहरणानीति दर्शितम् । तत्र सत्यप्यपायो यदा न विवक्ष्यते निमित्तभावमात्र विवक्ष्यैव तु गोस्तदानेन कर्मता । अपादानादिविशेषविनिर्मुक्तं च विद्यते कारकं यथा नटस्य शृणोतीति ।

---

माख्यामि"ति न सिध्येत् । तत्र हि "ण्यन्ते कर्त्तुश्च कर्मणः" इति प्रयोज्ये धेनुरूपे कर्मणि क्तः स्यात् । तथा च जायया गन्धमाल्ये प्रतिग्राहिता चेति विग्रहे बहुव्रीहिरेव न स्यात् । त्रिकतः शेषस्य भाष्ये खिलत्वात् ।

---

एषोऽसौ वस्तुपदिशति तत आदत्ते । मा मामादिता आदित्सते तावत्

प्राप्तये तत्र विभागस्य सम्बन्धित्वयाकाङ्क्षत्वेन पयसोऽविवक्षेति वक्तुमप्यशक्यं प्रसिद्धेरप्रयोग इति तु अन्यत् । किं च व्यापाराद्यर्थत्वे मुख्यगोपालव्यापारजन्यफलाश्रयत्वरूपं गोः प्राधान्यमादाय तत्रैव कर्मणि लादयस्तत्र प्रधानकर्मण्याख्येये इत्यादिना वक्ष्यति । यदात्वेकव्यापारार्थत्वं दुहादीनां तदाऽनेन कर्मत्वे तादृशप्राधान्यस्य गव्यभावात् तत्र लाद्यप्राप्तौ गुणकर्मणि लादय इत्युक्तम् । गम्यते ग्रामं देवदत्त इत्यादौ देवदत्तस्य मदुक्तमेव प्रधानकर्मत्वमिति दिक् ॥

---

पस्थितेर्हेतुत्वकल्पनेन तद्वारणात् । फलान्वयानुरोधेन तवाप्यावश्यके कार्य्यकारणभावे तादृशव्यापारप्रवेशेन न मे गौरवम् । तव तु भेदे शक्तेः सामानाधिकरण्येन तत्प्रकारकबोधे धातुजन्योपस्थितिः कारणमिति

---

सपरे । गुणकर्मणि लादिविधयो भवन्ति सह परेण योगेन । "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ" ( १ । ४ । ५२ ) ॥

---

यतस्य पयोऽर्थी प्रथमं गवि प्रवर्त्तते ततोऽन्तरङ्गत्वात् दुह्यादिषु गुणकर्मणि लादयो भवन्ति । सत्यपि चान्तरङ्गत्वे गवादीनामीप्सिततमत्वाभावोऽन्यार्थत्वात् तत्र क्रिया प्रवृत्तेः । पयसस्त्वविवक्षायां गौरेवेप्सिततमत्वम् । यथो-

---

सत्यपि वा तस्मिन् पुंवद्भावो दुर्लभः । सिद्धान्ते तु प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहः । जायानिष्ठप्रेरणविषयीभूतं गन्धमाल्यकर्मकं यत्प्रतिग्रहणं तत्कर्त्रीमित्यर्थः । अन्यपदार्थान्तर्भावेणैव विशेषणविशेष्यवैपरीत्येनैवैकार्थीभावकल्पनात् । मासजातादिवत् । व्यपेक्षापक्षे

---

तदपि न । अनादित्समानोपि स्वभावपरिज्ञानाय पृच्छति । भिक्षितर्याचिवद्व्याख्येयः । किमर्थं पुनर्याचिभिक्ष्योरुभयोरुपादानं नह्यनयोरर्थे भेदोऽस्ति । अर्थाश्रया चेयं संज्ञा न दुह्यादिस्वरूपाश्रया समानार्थोपि हि पठ्यते देवदत्तं

अन्तरङ्गत्वादिति । (के)

प्रधानन्यायान्तरङ्गन्याययोः समत्वात् "गतिबुद्धी"ति सूत्रस्य नियमत्वपरात् "हेतुमति च" इति सूत्रस्थभाष्यादन्तरङ्गन्यायात् प्रधानन्यायस्य बलवत्त्वाच्चास्यार्थस्य वाचनिकत्वमेवेत्यपरे ॥

---

कार्यकारणभावान्तरस्य च कल्पने गौरवं स्पष्टमेव । चैत्रमैत्रौ परस्परं गच्छत इति तु उभयोः समम् । तव चैत्रमैत्रयोः परस्परपदार्थभेदवन् मम परस्परपदार्थे व्यापारवच्छेदस्य सत्त्वात् किं च घटं जानातीत्यादौ

---

ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरत ॥

---

कर्मपादानमुत्तराणि गां दोग्धीति । पयो विवक्षायां च प्राधान्येऽप्यन्तरङ्गत्वाद् गुणे लादयः । उक्तं च । गुणकर्मणि वादिविधिः पूर्वं गुणकर्मणा भवति योगात् । मुख्यं कर्मप्रेप्सुर्यस्माद् गच्छेव यतते प्राक् । तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव सम्बन्धः । गोर्दुहिना पयसस्तु प्राक् तस्माल्लादयस्तस्मिन्निति । अपादानविवक्षायां तु पञ्चमी भवति ॥ गोर्दुह्यते पय इति । भा । यदा तु पयो विशेषणत्वेन गोर्विवक्षा तदा षष्ठी गोः पयो

---

तु अषष्ठीविभक्त्यर्थे षड्भेदौ सर्वत्र शक्त्यन्तरकल्पनास्त्येव । प्राप्तोदकमित्यस्य हि उदककर्तृकप्राप्तिकर्मीभूतमर्थः । ऊढरथः । रथकर्मकवहनकर्ता । उपहृतपशुः । पशुकर्मकोपहारसम्प्रदानम् । उद्धृतौदनः । ओदनकर्मकोद्धरणापादानम् । वीरपुरुषकः । वीरपुरुषकर्तृकस्थित्यधिकरणमिति दिक् । स्यादेतत् । अपादानाद्यविवक्षायां द्विकर्मकतास्तु तद्विवक्षायान्तु याचाप्रतिग्राहितेत्यादि सेत्स्यति । नैवम् । चरतेश्चेति चकारेण

---

पृतं प्रार्थयत इति । उच्यते । अनुनयार्थस्य याचतेर्ग्रहणार्थम् । तेनाविनीतं विनयं याचते कुद्धं प्रसादं याचत इत्यपि भवति । तद्वदुपालस्य बोध-

उक्तं चेति ।

इत्यिणेति शेषः ॥

पूर्वं गुणकर्मणा (कै)

इत्यस्य यत इति शेषः ॥ एवं गुणकर्मयोगे हेतुमाह

मुख्यं कर्मेति ॥ (कै)

गृहस्य दुहेः पयोऽनन्वितस्य दुहेस्तदेवाह

---

द्वितीयानापत्तिः उक्तकर्मत्वाभयात् । न च तत्र विधत्ते लक्षणा । कर्मण्येव द्वितीयेत्यादिनियमैरन्यत्र लक्षणायाप्यसाधुत्वात् । अत एव सुब्विभक्तौ न

---

ध्रुवयुक्तिषु चेष्टितयुक्तिषु चाप्यगुणे कर्मणि लादयो भवन्ति । एतद-ल्पमतेराचार्यस्य वचनं स्मर्यताम् ॥ अपर आह

---

दोग्धीति । माणवकाय धर्मं ब्रूते इत्यपि भवति यदा धर्मेण कर्मणा माणवकस्याभिप्रेयमाणत्वं लक्ष्यते । तदविवक्षायां त्वनेन कर्मत्वम् ॥ स पर इति । भा । उत्तरसूत्रेऽप्ययमेव विधिरित्यर्थः । बोध्यते माणवकधर्मः श्राव्यते माणवकं श्लोकः भोज्यते माणवकमोदन इति । प्रयोजकव्यापारेणाप्यमानत्वात् माणवकस्य प्राधान्यं धर्मादेस्तु गुणभावः ॥ ध्रुवेति । भा । अगुणे प्रधानकर्मणि ध्रुवयुक्तिष्वकर्मकेषु चेष्टितयुक्तिषु च गत्यर्थेषु

---

समुच्चितानां अयत्यादीनामकथितसूत्रविषयत्वेपि तथैव चेति समुच्चितानामणौ कर्तुर्णौ कर्मताभ्युपगमात् । गत्यर्थैः साहचर्यात् । अत एव तार्किकाः पृथगेव सङ्गृहीताः । युक्तश्चैतत् । ग्रहणकर्तृत्वस्याविवक्षायां प्रयोजकस्य हेतुत्वाभावे णिचो दुर्लभत्वात् । न चैवं दीपिग्रहणवैयर्थ्यमकर्मकत्वादेवाणौ कर्तुर्णौ कर्मत्वसिद्धेरिति वाच्यम् । ज्ञानार्थिषि तत्प्रार्थकत्वात् । शिष्याः तत्त्वं दीपयन्ति तानसौ प्रेरयतीत्यर्थः । नन्वेवं

---

सकर्मकत्वानुपपत्तेः शिष्यानपि गृहीतः । 'इत्यमवच्छिनोति जनानीति' । अप्रत्ययविषयम् इत्याम् अवमानकतृत्वप्रादानसंज्ञाया अयं विषयस्तथापि यदा

## पूर्वमेवेति । (कै)

पयः सम्बन्धात् पूर्वमेवेत्यर्थः । गोर्दुहिना गवाम्बितदुहिना तु यतः प्राक् गवा सम्बन्धस्तस्मात्तस्मिन् लादयः इत्यर्थः ॥

## उत्तरसूत्रे इति । (कै)

"गतिबुद्धी"ति सूत्रे "हृक्रोः" इति सूत्रे चेत्यर्थः ॥

---

लक्षणया इति लद् इद्व्यवहारः ॥ वुकुण्ठमधितिष्ठतीत्यादौ अथाविस्य लदु- ल्लालक्षणस्य । संज्ञाया एव तदनियामकत्वे तु किं भेदनिवेशेनानया रीत्या व्यापारव्यधिकरणधात्वर्थफलाश्रयत्वं कर्मत्वमित्यादिखण्डनीयमित्यलम् ।

---

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।

---

लादयो भवन्ति । पूर्वाचार्य्यप्रसिद्धा ध्रुवयुक्तायोऽकर्मका उच्यन्ते । तेन मासमास्यते देवदत्तःग्राम्यते क्रोशं देवदत्त इति प्रयोज्ये देवदत्ते प्रयोज- कव्यापारस्य तत्रैव पूर्वं संनिपातात्लादयो भवन्ति तथा गम्यते ग्रामं देवदत्त इत्यत्रापि ॥ अनल्पमतेरिति । भा । मेधाविन आचार्य्यस्य इत्यर्थः ॥ स्मर- तेति । भा । आगमस्याविच्छेदमनेन दर्शयति । आगम एवायं न स्वमति- परिकल्पनेति दर्शयितुमाह । अपर इति । भा । अजा नीयते इति । भा ।

---

त्याजेः सकृद्दीतत्वाद्यद्यपि त्याजितैः फलमुत्खातैः । "मुक्ताहारश्चिरपरि- चितं त्याजितो दैवगत्ये"त्यादि सिद्धम् । तथापि गवा पयस्त्याजयतीत्यर्थ इति कैयटहरदत्तादिग्रन्थो विवध्येतइति चेत्रविशेषाविवक्षायां कर्मत्वेपि कर्तृत्वविवक्षायां तस्य निर्बाधत्वात् । स्यादेतत् । "कर्तुरीप्सिततमं कर्म" "तथायुक्तञ्चानीप्सितमिति" सूत्राभ्यां सर्वमिदं सिद्धम् । तथाहि । यथा विश्लिष्यपरत्वं विश्लेदनं पचेरर्थः । न्यग्भावनं वहेः । द्विधाभावनं भिदेः ।

---

इत्तो गावधित्वेन विवक्ष्यते निमित्तरूपेणैव तु विवक्ष्यते तदेदमुदाहरणम् । 'शृते ऽनुशास्तीति' । शृन्_ थक्तायां वाचि । शास् अनुशिष्टौ । आदादौ । यद्यप्यत्र धर्मं वचनानुशासनकर्मणा माणवकस्याभिप्रेयमाणत्वं तथापि

**अयमेव विधिरिति। (कै)**

अयमेव प्रकार इत्यर्थः।

**माणवकस्य प्राधान्यमिति। (कै)**

एवं च प्रयोज्यव्यापारजन्यफलाश्रयो गुणकर्मेत्यर्थः। स्वात्मन्येव स्ववानात्मा यस्य तस्मिन्कर्त्तरीत्यर्थः। स्वसमानाधिकरणफलार्थेति यावत्॥

---

यद्यपि मीमांसकाः साध्यत्वं द्वितीयार्थः "व्रीहीनवहन्ति" इत्यस्यावहननेन व्रीहीन् भावयेदित्यर्थः। यद्यपि व्रीहयः सिद्धा एव क्रियायाः साधनानि च तथाप्यदृष्टविशेषसाधनत्वरूपसंस्कार्यत्वमेवात्र साध्यत्व बोध्यम्। "सक्तून्

---

प्रधानकर्मण्यभिधेये द्विकर्मणां धातूनां कर्मणि लादयो भवन्तीति

---

अजायाः धान्यान्नेतुश्च अस्यामेव पूर्वं क्रिया प्रवर्त्तनादन्तरङ्गत्वाच्च तस्यामेव लादयः॥ ण्यन्ते कर्त्तुश्च कर्मण इति। भा। कर्त्तुः सतो ण्यन्ते धातौ कर्मणो वाचका लादयो भवन्ति। "गतिबुद्धि" ( १ । ४ । ५२ ) इत्यनेन यस्य प्रयोज्यस्य कर्मसंज्ञा विधीयते तस्मिन् वाच्ये सर्वेषु गत्यर्थादिषु धातुषु लादयो भवन्तीत्यर्थः। पूर्वश्लोके तु भेदेनोक्तं गत्यर्थाकर्मकेषु प्रधाने कर्मणि

---

तथा त्यजनोपसर्जनं त्याजनं दुहेः। दापनं याचेः भिक्षेश्च। अङ्गीकारणमपि याचेः। प्रवेशोपसर्जनमवस्थापनं रुधेः। आख्यापनं पृच्छेः। मोचनं चिञः। प्रतिवादनं ब्रूञः। तद्विशेषस्तु शासेरित्यादि। एवञ्च धातूपात्तव्यापारविषयाश्रयत्वं गवादेःस्पष्टमेवेति। अत एवाकडारसूत्रेऽपादानमुत्तराणि। गान्दोग्धीत्यत्र परत्वात्कर्मसंज्ञेति भाष्यं सङ्गच्छते।

---

ददातिकर्माभावात्संप्रदानसंज्ञाया अप्रसङ्गः। ये तु तत्र ददातिकर्मणेति नाश्रयन्ति तेषामपि निमित्तत्वमात्रं विवक्षितं नाभिप्रेयमाणत्वमित्युदाहरणोपपत्तिः॥

**न तु कर्मार्थेति । (कै)**

न कर्मनिष्ठफलार्थेत्यर्थः ॥

**अकर्मको धात्वर्थ इति । (कै)**

तेन युक्तिः सम्बन्धो येषामित्यर्थः । एवं चेष्टितयुक्तिपदमपि व्याख्येयम् ॥

---

जुहोति" इत्यत्र तु सक्तूनां भूतभाव्युपयोगाभावेन प्रागुक्तसाध्यत्वासम्भवेन तत्र "व्यत्ययो बहुलम्" इति वचनात् तृतीयार्थे द्वितीया "सक्तुभिर्भावयेद्" इत्यर्थ इत्याहुः । तेषामयं भावः । वेदे कर्मत्वप्रसक्तिः प्रागुक्तसंस्कार्य-त्वसमानाधिकरणैवेत्येतावता तस्य द्वितीयार्थत्वमिति । दुहि याचि रुधि

---

वक्तव्यम् । अजां नयति ग्रामम् । अजा नीयते ग्रामम् । अजा नीता ग्राममिति ॥

---

बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु तु सपर इत्यनेन वचनेन लादयो गुण-कर्मणि प्रयोज्यकर्मण्येव लादयो दृश्यन्त इत्येकेषां मतम् । माणवकं धर्मं बोधयतीत्यादावनियतो गुणप्रधानभाव इत्याहुः । धर्मप्रतिपादनपरत्वे वाक्यस्य धर्मस्य प्राधान्यं माणवकस्य गुणभावः ॥ माणवकसंस्कारपरायां तु प्रवृत्तौ माणवकस्य प्राधान्यं धर्मस्य गुणभावः । तथाऽभिधानव्यापारेण प्रयोजकव्यापारस्य प्राधान्यात् प्रयोज्यस्यैव कर्मणः प्राधान्यम् । गुणभूत-

---

पञ्चकं प्रातिपदिकार्थ इति पक्षे ऽवधित्वफलाश्रयत्वयोर्युगपद्विवक्षायां चेदम् । अवधिभूता या गौस्तन्निष्ठो यः क्षरणानुकूलव्यापारस्तद्विषयिणी ग्रोपनिष्ठा प्रेरणेत्यर्थात् । अत्रोच्यते । कर्मणः शेषत्वेन विवक्षायां न माणवकमन्नीयादितिवत् षष्ठीं बाधितुं सूत्रम् । अपादानत्वमात्रविवक्षायां तु पञ्चम्येव । गोः क्षीरविशेषणत्वे तु षष्ठी भवत्येवेति न कश्चिद्दोषः

---

अथान्येऽपि द्विकर्मकाः ।

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।

द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥

तथैव पूर्वमिति। (कै)

अनेनान्तरङ्गत्वमपि तस्य दर्शितमनया युक्त्या बुद्धिप्रत्ययवशात्तार्थे-
अपि प्रधान एवापत्तिरित्यस्यार्थस्य वाचनिकत्वमेव युक्तम्॥ आगमस्य
परम्परोपदेशस्य प्रधानकर्मणि प्रवृत्तौ युक्तिमाह

---

प्रच्छि भिक्षि चि ब्रूञाणां योगे अपादानत्वसंप्रदानत्वाधिकरणत्वानां विवक्षा-
भावे कारकं कर्म। "अकथितं च" इति सूत्रात्। तद्विषयाभावश्च सर्वथा
तदप्राप्त्या प्राप्तस्याविवक्षया चेति बोध्यम्। तत्र ण्यन्तानां योगे कर्तुरिति
विहितकर्मसंज्ञकेन धात्वर्थव्यापारोत्तरं यदुक्तकर्मणा सम्बद्धं तत्कर्म।

---

अप्रधाने दुहादीनाम्।

अप्रधाने दुहादीनां कर्मणि लादयो भवन्तीति वक्तव्यम्। दुह्यते
गौः पयः॥

---

प्रयोज्यव्यापारकर्मणस्तु गुणभावः। आर्थेन तु न्यायेन प्रयोज्यव्यापारस्य
प्राधान्यम्। तदर्थत्वात् प्रयोजकव्यापारस्य तत् प्राधान्यात् तत् कर्मणोऽपि
प्राधान्यमिति वदन्त आचार्याः॥ दुह्यादिपरिगणनात् अन्यत्र द्विकर्मकत्वं।
न प्राप्नोति दृश्यते चेति मत्वा पृच्छति। के पुनरिति। भा॥ गत्यर्था-
नामिति। भा। उत्तरसूत्रोपात्तधातूपलक्षणं गत्यर्थग्रहणम्॥ तथैव चेति॥

---

तथा चेह षष्ठीसम्बन्धमात्रं द्वितीयार्थ इति स्थितम्। अथेदं विचा-
र्यते। कर्मणि विधीयमाना लकृत्यक्तखलर्थाः किं द्विकर्मकेभ्यो मुख्ये
कर्मणि स्युर्गौणे वेति। अत्र भाष्यम्। "प्रधानकर्मण्याख्येये लादीनाहु-
र्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण इति।"
अभिधाने इति शेषः। अत्र द्विकर्मणामित्यनेन नीवह्योर्हरतेश्चेति चकारान्वय-
सुचितः कृषिनयत्यादयश्च त्रय उच्यन्ते। अन्येषां विशेषस्य वक्ष्यमाण-

---

गत्यर्थानामित्युत्तरसूत्रोपलक्षणं, नी, अजां नयति ग्रामम्। वहि,
वहति भारं ग्रामं, हरति, भारं हरति ग्रामं, चकारेण कृषादयः कृषुयो-

अजाया इति । (कै)

भुवचेष्टितयुक्तिष्विति पूर्वश्लोकेऽपि चेष्टितयुक्तिलेन नयत्यादीनामपि ग्रहणमिति न तस्य न्यूनता प्राधान्यं चाजायाः कर्तृव्यापारजन्यफलाश्रयत्वादच व्यापारद्वयार्थकतया "कर्तुरीप्सिततमम्"त्यनेन येषु द्वयोः कर्मत्वं ते ऽत्र द्विकर्मका उच्यन्ते ऽन्यादीनां चैव द्विकर्मकतेति बोध्यम् ॥ भाष्ये

---

एतद्विहितं कर्म गौणं कर्म इत्युच्यते । पूर्वोक्तप्राधान्यानाश्रयत्वात् । गां दोग्धि पयः । द्रवद्रव्यविभागानुकूलव्यापारो दुहेरर्थः अपादानत्वगोः तदविवक्षायामनेन कर्मत्वम् । अत्र गौणकर्मणि गवादौ लादयः । बलिं याचते वसुधाम् । स्वामि स्वत्वनिवृत्तिस्वत्वोत्पत्त्युभयानुकूलो दीयतामित्यभिधा-

---

यन्ते कर्त्तुस्च कर्मणः ॥

लादयो भवन्तीति वक्तव्यम् । गम्यते देवदत्तो ग्रामं यज्ञदत्तेन ॥ के पुनर्धातूनां द्विकर्मकाः ।

---

भा। चकारेण नयत्यादयः समुच्चीयन्ते इत्याहुः ॥ घृतं नयति देवदत्तम् । घृतं मुष्णाति देवदत्तम् । घृतं दण्डयति देवदत्तम् ॥ सिद्धं वेति । भा। अन्यस्याश्रूयमाणस्य क्रियाविशेषस्य कर्मणः सम्भवादित्यर्थः । अथवा कर्मशब्देन कर्मत्वमुच्यते । अन्यकर्मत्वादित्यर्थः । "विभाषा गुणे" (२ । ३ । २५) इति पञ्चमी । यथा प्रविश पिण्डीमिति भक्षणापेक्षां पिण्ड्याः कर्मत्वं

---

त्वात् । तथा दुह्यादीनामित्यनेन कारिकोपात्ताः । चशब्दसमुच्चितेश्च हेतुमण्ण्यन्ता दण्डादयश्चोच्यन्ते । ण्यन्तइत्यनेन तु गत्यादिसूत्रोपात्ताश्चशब्दसमुच्चितास्तार्यादयश्च । तत्र अणौ कर्म तस्याभिधाने लादय इत्यर्थः । तत्रापि बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणीति मतांतरम् । तथा

---

यन्ते । घृत नयति देवदत्तम् । घृतं मुष्णाति देवदत्तम् । घृतं दण्डयति देवदत्तम् । कर्मेति ग्रामं शाखाम् । इदं विचार्यते । द्विकर्मकेभ्यो धातुभ्यः कर्मणि

ण्यन्ते कर्तुश्चेति । (भा)

यद्यपि प्रधानकर्मण्यीत्यनेनैवेदं सिद्धं तथापि गुणकर्मणि लादिविधिः सपरे इत्युक्तेर्दुहादीनामित्यनेन तस्य ग्रहणमिति भ्रमवारणार्थं पुनरिदमुक्तं तच्च सामान्योक्तेर्बुद्ध्यादिविषयमपि भ्रमयन्नाह

पूर्वश्लोके त्विति । (कै)

प्रधाने कर्मणि प्रयोज्यरूपे कर्मणि गुणकर्मणि प्रयोज्यनिष्ठ-व्यापारजन्यफलाश्रये प्रयोज्यकर्मण्येवेति बुद्धिप्रत्यवसानार्थादिष्व-णीत्यादिः ॥

---

पादिरूपो व्यापारो दिदापयिषा व्यञ्जको याचेरर्थः । अत्र बलौ पूर्वविषयस्य कस्यापि न प्राप्तिरिति कर्मत्वम् । याचनामात्रादपायाभावेन बलेर्वसुधां

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥

तथाऽजां ग्रामं नयतीत्यत्र ग्रहणापेक्षमजायाः कर्मत्वम् ॥ नयतिस्तु प्राप्ति-मात्र वाची तेनाजां गृहीत्वा ग्रामं प्राप्नोतीति वाक्यार्थः सम्पद्यते ॥ पर-साधन इति । भा । नीयते इति नयतेः परेण लकारेण नयति कर्मैवा-भिधानीयम् । ग्रहणस्य त्वजा कर्म न नयतेरिति कथं सा तेनाभिधीयते

ष भाष्यम् । "कथतेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे । ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरतेति" ॥ अत्र प्रधान-कर्मणि लादिभिरभिहिते गुणकर्मणि षष्ठीत्येकीयमतदूषणपरः प्रथमः पादः । तस्याः षष्ठ्याः विधिरितीयं तस्य अन्यस्य मतिर्न तु ममेत्य-र्थात् । सपरे गत्यादिसूत्रोपात्तासहिते दुह्यादौ गुणकर्मणि लादयः । लादय उत्पद्यमानाः किमीप्सिततमे कर्मणि प्रधान उत्पद्यन्ते आहोस्विद-नेन यस्य कर्मत्वं तस्मिन् गुणकर्मणीति । तत्रोक्तम् ।

## एकेषां मतमिति । (कै)

एवं च बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु विकल्पः फलित इति भावः ॥ तत्र विकल्पे युक्तिमाह ॥

## माणवकमित्यादिना । (कै)

वस्तुत इदं सर्वं वाचनिकमिति तत्त्वम् ॥

## अभिधानव्यापारेणेति । (कै)

शाब्देनेत्यर्थः । एतच्च द्वैविध्यं गत्यर्थण्यन्तव्यतिरिक्तविषयमिति नातिप्रसङ्गः । इदमत्रावधेयम् । अकर्मकव्यतिरिक्तद्वहप्रकृतिकण्यन्त-

---

याचते इति नेष्टमिति स्पष्टं भाष्ये इत्यन्यत्र निरूपितम् । यत्तु सोद्देश्यक-दानेच्छा याचनमिति । तन्न । पुत्रार्थं कन्यां याचते इत्यनापत्तेः । स्वसम्प्र-

---

अजां नयति ग्रामम् । भारं वहति ग्रामम् । भारं हरति ग्रामम् । गत्यर्थानाम् । गमयति देवदत्तं ग्रामम् । यापयति देवदत्तं ग्रामम् ॥

---

तस्मादन्यकर्मत्वमनायत्या नेष्टव्यम् ॥ कालेति । भा । मासादय एव काल-वाचित्वेन लोके प्रसिद्धाः न तु गोदोहनपाकादय इति तत्त्वमि भावस्य । कालत्वे पृथगुपादानं कृतम् । निर्ज्ञातपरिमाणा हि क्रिया अनिर्ज्ञात-परिमाणायाः क्रियायाः परिच्छेदायोपदीयमाना मासगोदोहादिशब्द-वाच्या काल इति दर्शनम् । अध्वा नाम गन्तव्योऽध्वगन्तव्यः । अत एव

---

गुणकर्मेति । पुत्रप्रवृत्तेः पयःप्रभृत्यर्थत्वाद् दुहादावप्रधानं मवादुच्यते । णयन्ते तु शब्दतः प्रयोजकव्यापारस्य प्राधान्यम् । प्रयोज्यव्यापारस्य त्वप्रधान्यमिति तदार्थधर्मोच्यते । ' ध्रुवयुक्तयो ऽकर्मकाश्चेष्टितयुक्तयो गत्यर्थाः । एष्वगुणे प्रयोग ण्ये । न च बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मैव स्यात् णयन्ते कर्तुरित्यस्य सपरत्वानेन बाधादिति वाच्यम् ।

---

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥

योर्हारयतिकारयत्योर्द्विकर्मकत्वे पूर्वमते गौणे प्राप्नोति। अपर आहेति मते प्रधाने प्राप्नोतीत्यत्रापि विकल्प एवेत्येके। अन्ये तु ध्रुवचेष्टितयुक्तिषु चापीत्यत्र चकारेण चेष्टितयुक्तिपदेन ह्रक्रोर्ग्रहणेन वा तयोरपि प्रयोज्यकर्मण्येवेत्याहुः॥ अत्र निश्चयो बहुदृष्टृभिः कार्यः॥ ननु दुहादिव्यतिरिक्ता द्विकर्मका अप्रसिद्धा इति प्रधानकर्मणीत्याद्यसंगतमित्याशयेन पृच्छति

**के पुनरिति॥** (भा)

---

दानरूढदानेच्छावति माणवकाभाववृत्त्या देहीत्यवदत्यपि तथा प्रयोगापत्तेश्च। अविनीतं विनयं याचते। स्वीकारानुकूलो व्यापारोऽत्र याचेरर्थः।

---

सिद्धं वाप्यन्यकर्मणः।

सिद्धं वा पुनरेतद्भवति। कुतः। अन्यकर्मणः। अन्यस्याजा कर्मान्यस्य ग्रामः। अजामसौ गृहीत्वा ग्रामं नयति॥

---

निपातनाद् विशेषणस्यापि परनिपातः। गन्तृतया लोके यः प्रसिद्धः क्रोशयोजनादिनियतपरिमाणः तस्यैव कर्मत्वं नान्यस्य इत्यध्वानं व्याप्नोतीति न भवति। केचिदध्वगन्तव्या इति पठन्ति। तत्रायमर्थः गतेरन्तो निष्ठा निश्चयो वा येषु ते गन्ता क्रोशयोजनादयः। अध्वनो गन्तव्या

---

अपर आहेति भाष्येण मतान्तरत्वाद्यवसायात्। अत्रायं संग्रहः। "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्। बुद्धिभक्षार्थयोः शब्दकर्मेषु येच्छया॥ प्रयोज्यकर्मण्यन्येषां ण्यन्तानामिह निश्चितः। लकृत्य-क्तखलर्थानां प्रयोगो भाष्यपारगैः"॥ तत्र नीप्रभृतीनां प्रधानकर्मत्वम-

---

अयमर्थः। ये द्विकर्मका धातवस्तेषां प्रधाने कर्मण्युप्सिततमे वाच्ये लादीनाहुः, लादयो भवन्तीत्याहुः। लादयो लकृत्यक्तखलर्थाः। प्रधानाप्रधानयोर्भिन्नकक्षयोर्युगपदभिधानासंभवे प्रधानस्यैवाभिधानं न्याय्यम्। प्रधान-

नी (भा)

इत्यादि। इदं व्यापारद्वयार्थकधातूपलक्षणमेषां च कर्तुरीप्सिततममिति द्विकर्मकत्वं न त्वेषां दुह्यादिषु पाठे मानमस्ति। एवं च जिदण्ड्यादीनामपि सिद्धं द्विकर्मत्वम्। अत्र प्रधानव्यापारजन्यफलाश्रयत्वरूपप्रधानकर्मत्वाद्देवदत्तादौ लादेः उद्देश्यतालक्षणं प्राधान्यं तु ग्रतस्येति। अनुद्देश्यगर्गानुरोधाद् नोद्देश्यग्रतावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोध इत्याहुः॥ भाष्ये

अन्यस्येति। (भा)

अश्रूयमाणस्य ग्रहणादेरित्यर्थः। व्यधिकरणे षष्ठ्यौ।

परसाधने इति। (भा)

---

स्वीकारस्त्वेदमवश्यं करिष्यामीत्यभिलापादिजनको ज्ञानविशेषः। फलताव्वच्छेदकसम्बन्धो विषयता। अत्रापादानादिविषयाभावात्। अनेन कर्मत्वम्।

---

अन्यकर्मेति चेद् ब्रूयाल्लादीनामविधिर्भवेत्॥

---

इति षष्ठी समासः॥ कर्मसंज्ञाहीति। भा। ननु कालाध्वनोरिति द्वितीया सिद्धेति किं कर्मसंज्ञाया। गोगोदोहादीनां कालत्वेनाप्रसिद्धत्वाद्द्वितीया न प्राप्नोतीति भावस्य तावत् कर्मसंज्ञा विधेया। कालाध्वनोरपि लादिविधानार्थं कर्मत्वमेषितव्यम्॥ आस्यते मासः। आसितव्यो मासः। आसितो

---

न्योऽन्तरङ्गः। दुह्यादीनान्तु विपरीतम्। तेन तदंशे न्यायसिद्धो नियमः। इतरत्तु सर्वं वाचनिकम्। क्रमेणोदाहरणानि। गौर्दुह्यते पयः दोग्धा दुग्धा सुदोहा। अजा ग्रामं नीयते नेया नीता सुनया। बोध्यते माणवकं धर्मः माणवको धर्ममिति वा। देवदत्तो ग्रामं गम्यते

---

त्वादेवेति भावः। नी, नीयते ग्राममजा। नेया, नीता, सुनया। वहि, उह्यते भारो ग्रामम्। वोढव्यः, ऊढः, सुवहः। क्रियते भारो ग्रामम्। हर्तव्यः, हृतः,

नयति साधने ग्रामादावित्यर्थः ॥ तदयं निष्कर्षः

"गौणेकर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ।
बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ।
ह्रक्रोर्निजेच्छया किं वा प्रयोज्ये वहुदर्शिभिः ॥
लक्ष्ये दृष्ट्वा निर्णयोऽत्र कर्त्तव्यो भाष्यपारगैः" ।

इति ॥ नन्वकर्मकाणां ण्यर्थकर्मसत्वेऽपि द्विकर्मकत्वाभावाद् ध्रुवयुक्तिष्वगुण इत्यसंगतमतो भाष्ये

---

साधनमात्रेण विषयसम्बन्धाभावान्नात्र सम्प्रदानत्वमिति स्पष्टं भाष्ये। विनये न च तद्विषयज्ञानवत्वं सम्बन्धः। अजमवरुणद्धि गाम्। निर्गमप्रति-

---

अन्यकर्मेति चेद् ब्रूयाल्लादीनामविधिरयं भवेत्। अजा नीयते

---

मासः। आस्यते मासः। एवं शय्यते क्रोश इत्यादिकमूह्यम्। यदा त्वक्री-कृतसकर्मकधात्वन्तरार्थे आसनादावास्यादयो वर्त्तन्ते तदा पूर्वेणैव कर्मत्वं सिद्धम्। तथा हि। मासमास्त इत्यस्यायमर्थः। मासमासनेन व्याप्नोतीति।

---

गमयितव्यः गमितः सुगम इति। यत्तु कौमुद्यां दुह्याच्पच्यर्थेत्यादिना दुह्यादीन् न्यादींश्च द्वैराश्येन पठित्वा न्यादयो मुख्ये दुह्यादयो गौण-इत्युक्तम्। तत्र शब्दैः पाठो निर्मूल एव। नयाह कृतवं शक्तमित्युदा-हरणस्यायुक्तम्। इतरेषान्तु द्विकर्मकतामात्रतात्पर्यकः पाठः। न्यादयो दुह्यादयश्चेत्युभयत्राप्यादिशब्दः प्रकारे' इति सिद्धान्ताविरोधेन व्याख्ये-

---

यहरः। कृष्, कृष्यते शाखा ग्रामम्। कष्टव्या, कष्टा, सुकर्षा। अप्रधाने दुह्यादीनामिति। अत्र दण्डिप्रभृतयोऽपि गृह्यन्ते न तु दुहियाचीति श्लोक-पठिता एव, एतेषां दुह्यादीनामप्रधाने कर्मण्याख्येये लादीनाङः। एतदपि न्यायसिद्धम्। यतः पयोर्थी पूर्वं गवि प्रवर्त्तते ऽतः मुख्यस्य दुहेर्गवाभिसम्बन्धो

काशेति॥ (भा)

ननु गोदोहादीनामपि कालत्वादेव सिद्धिरत आह

मासादय एवेति। (कै)

गोदोहमास्ते इत्यस्य यावन्तं कालं गौर्दुह्यते तावदास्ते इत्यर्थः॥

पानादय इति। (कै)

गवामित्यादिः। गोपानमास्त इत्यस्य यावत्कालं गावो जलं पिबन्ति तावदास्ते इत्यर्थः। क्वचित् "पाकादय" इति पाठः॥

---

बन्धद्वारा व्रजाद्यधिकरणकचिरस्थित्यनुकूलव्यापारो रुधेरर्थः। व्रजे गौस्तिष्ठति तत्र तां निर्गमप्रतिबन्धेन चिरं स्थापयतीति सम्प्रत्ययात्। तस्याधिकरणत्वविवक्षायां अनेन कर्मत्वम्। माणवकं पन्थानं पृच्छति। जिज्ञासाविषयामिति। परसाधन उत्पद्यमानेन तेनाज्ञाया अभिधानं न प्राप्नोति॥

तथा च वक्ष्यति। प्राकृतमेवेदं कर्म यथा कटं करोतीति। अत्र दर्शने न केवलमकर्मकाणां कालादयः कर्मत्वं प्रतिपद्यन्तेऽपि तु सकर्मकाणामपि। न्यायस्य तुल्यत्वात्। देशश्चेति। भा। संख्यायविशेषः कुरुपाञ्चालम्। यथाश्रुते हि दक्षिणपश्चिमाभ्यां मुख्ये स्यात्। तथा च गर्गाः शतं दण्ड्यन्तामिति भाष्यं विरुध्येत शतं तत्र प्रधानं गर्गाः अर्थिनश्च राजानो हिरण्येन भवन्तीति वाक्यशेषात्। दक्षिणैवेह ग्रहणार्थो न तु

---

गोदोहेन तु पयस इत्यन्तरङ्गत्वादकथितकर्मण्यत्वेनैव कादयो भवन्ति। एवं सर्वत्र। दुहि, गौर्दुह्यते पयः, दोग्धा, दुग्धा, सुदोहा। याचि, पौरवो गां याच्यते, याच्यो, याचितः, सुयाचः। रुधि, गजो ऽवरुध्यते गाम्, अवरोध्यः, अवरुद्धः, स्ववरोधः। प्रच्छि, माणवकः पन्थानं पृच्छ्यते, प्रष्टव्यः, पृष्टः, सुप्रच्छः। भिक्षि, पौरवो गां भिक्ष्यते, भिक्षितव्यः, भिक्षितः, सुभिक्षः। चिञ्, वृक्षो ऽवचीयते फलानि, अवचेतव्यो, ऽवचितः, स्ववचयः। ब्रूञ्, उच्यते माणवको

## निर्ज्ञातपरिमाणेति । (कै)

इदं "कालाः परिमाणिना" ( २।२।५) इति सूत्रस्थभाष्य-विरुद्धम् ॥

## त्वादिविधानार्थमिति । (कै)

अनत्यन्तसंयोगे द्वितीयार्थमित्यपि बोध्यम् ॥ द्वितीयाविधानमपि मासं गुडधाना इत्यादावक्रियायोगे चरितार्थम् ॥ इदमपूर्वकर्मसंज्ञाविधायकमिति मत्वाह

## यदा त्विति । (कै)

पूर्वेणैव "कर्तुरीप्सिततमं कर्म" (१।४।४९) इत्यनेन ॥

---

गार्थज्ञानानुकूलः केन यथा गन्तव्यमित्यभिलाषादिरूपो व्यापारः पृच्छेरर्थः । माणवकस्य व्यापारे सम्बन्धसामान्येनान्वयः । ज्ञानविषयत्वेन पथः कर्मत्वम् माणवकेन च तज्ज्ञानाश्रयत्वं सम्बन्धः । कस्यापि पूर्वविषयस्याप्राप्तावनेन कर्मत्वम् । भिक्षिर्याचिना व्याख्यातः । वृक्षमवचिनोति फलानि । विभाग-

---

कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ।

---

त्वादिर्देश इह गृह्यत इति भाष्य उदाहरणादिह्यायते । इदानीमकथितस्य पूर्वाचार्यकृतं संज्ञान्तरं दूषयितुमुपन्यस्यति । विपरीतमिति । भा । कर्मधर्मणां विपर्ययस्तत्वाद्विपरीतमुच्यते । ईप्सिततमं द्वेष्यमितरच्चेति पूर्वं

---

निर्देशार्थः । अत एव द्वन्द्व समुदाये वाक्यसमाप्तिः । गुणानुरोधेन प्रधानाद्वतेः सम्भवात् । तथा मन्त्रेरपि प्रधाने स्यात् । इष्यते तु गौणे । तथा च भारविः । "येनापविद्धसलिलः स्फुटनागसद्मा देवासुरैरमृतमम्बु-

---

धर्मम् । वक्तव्यः, वक्ता, सुवचः । शास, अनुशिष्यते माणवको धर्मम्, अनुशासितव्यः, अनुशिष्टः, सुनुशासः । दण्डि, गर्गाः शतं दण्ड्यन्ते, दण्ड्याः, दण्डिताः सुदण्डाः । जि, शतं जीयते देवदत्तः, जेतव्यो, जितः, सुजयः ।

वक्ष्यतीति । (कै)

कालाध्वनोः ( २ । ३ । ५ ) इति सूत्रे इति शेषः । यथा कटमिति दृष्टान्तेन कर्तुरित्येव तत्र प्राकृतशब्देन विवक्षितमिति भावः ॥ अस्य प्रकारस्यावश्यकत्वमित्याह

सकर्मकाणामपीति ॥ (कै)

न चेयमपि कल्पना अकर्मकविषयैव न सकर्मकविषयेति वाच्यम् । अनया रीत्या सकर्मकाकर्मकसाधारणकालाध्वनोरित्येतद्विषयस्य न तर्हीदानीमिदं वाच्यमितिप्रश्नस्य यत्नाक्रियया ऽत्यन्तसंयोगस्तदर्थमित्युत्तरस्य च "कालाध्वनोः" ( २।३।५ ) इतिसूत्रभाष्यस्यासंगत्यापत्तेः । दृश्यते च मासमधीते इत्यादौ कालस्य कर्मत्वमनया

पूर्वकमादानं चेरर्थः । वृक्षात् फलान्यादत्ते इत्यर्थात् । अवधित्वाविवक्षायामनेन कर्मत्वम् । माणवकं धर्मं ब्रूते शास्ति वा । ब्रूञो विषयतया ज्ञानानुकूलशब्दप्रयोगरूपो व्यापारोऽर्थः । प्रवृत्तिपर्यवसायी शासेः अर्थः स च

कालभावाध्वगन्तव्या अकर्मकाणां धातूनां कर्मसंज्ञाभवन्तीति

त्रिविधं कर्म निर्दिष्टमिदं तद्विपरीतम् । कम्पिलकादित्वाच्च लत्वे कल्पेति भवति ॥ अपरिसमाप्तमिति । भा । ईप्साप्रकर्षाभावादित्यर्थः ॥ नवेति । भा । शक्तयलक्षणार्थानामविधानात्प्रधानकर्मण्यभिधेये इति पूर्वमुक्तत्वात् ।

निर्धिमंमस्य"इति । अस्तं इत्रचोद्देश्यतया मुख्यम् । अन्युनिर्धिस्तु गौणः । यदपि अन्ये तु यथाशयोत्तुक्ता गौणेच्छावमकार्यतभावस्येनामनन्तेनेमुदाहृतम् । तदपि न । यन्ते कर्तुश्च कर्मणः इति सिद्धान्तात् । यदा ह्रविधाने इतिमुरादावात्मनेपदी बोपदेवेन पठितः । तस्येदमुदाहरणम् ।

मुषिः, मुष्यते देवदत्तः शतं, मोषितव्यो, मोषितः, सुमोषः । ण्यन्ते कर्तुश्च कर्मणः इति । अभिधानइति शेषः । अण्यन्तावस्थायां कर्तुर्ण्यन्तावस्थायां कर्मणः सतोऽभिधाने लादीनामाहुरित्यर्थः । एतदुक्तं भवति । ये गत्यर्थादयो

रीत्या ऽकर्मकधातुयोगे कटादीनां कर्मत्वं तु नापाद्यमनभिधाना-
दित्याहुः। वस्तुतो ऽन्यथैव कल्पनयैषां सकर्मकत्वं न लभ्यमिदं
वचनं विधायकं हिमवद्द्योगात्। व्याख्यानभाष्यस्यापि कालादयो
ऽकर्मकधातूनां कर्मसंज्ञा यथा भवन्ति तथा धात्वर्थरूपं वक्तव्यमुक्त-
युक्तेरिति भुवयुक्तिष्वगुण इति सम्यगेवेत्यर्थ इति युक्तमाभाति।
अन्यथा वचनस्य "यदा लि" त्यादिनोक्तया "कालाध्वनो"रिति
सूत्रभाष्यसंमतया रीत्या प्रत्याख्याने आरम्भप्रत्याख्यानयोः फलभेदा-
प्रसक्तिः। आरम्भेऽपि तदावश्यकत्वे नानारम्भपरतयैवैतद्ग्रन्थव्याख्याया
न्यायत्वात्॥

---

धर्मं ब्रूते इत्यादि विधिघटितोपदेशरूपः। अत्रोभयत्रापि कर्तृव्यापारा-
नन्तरं तज्ज्ञानाश्रयत्वरूपो माणवकेन सम्बन्धः। वचनादि कर्मणा धर्मेण
माणवकस्याभिप्रेयमाणत्वात् प्राप्तसम्प्रदानत्वाविवक्षायामनेन कर्मत्वमिति

---

वक्तव्यम्। काल। मासमास्ते। मासं स्वपिति॥ भाव। गोदोहमास्ते।

---

दुहादीनां स्वप्रधानकर्मणि लादिविधानात् तुच्छ एवायं पक्षः। तथा च
परस्तादुद्भावयिष्यते। तस्यैव विपरीतकर्मणो लक्षणं दर्शयति यस्मिन्निति।
भा। यस्मिन् गवादौ कर्मणि सत्यन्यत् पयः प्रभृत्युपजायते तत्कर्म वाच्य।

---

बुध्यर्थेषु पक्षद्वयस्योपपादितत्वात्। यत्तु श्रीहर्षः प्रयुङ्क्ते। "स्वक्रीडाहंस-
मोहयन्ति किन्निन्नुभक्ष्यप्रार्थितोन्निद्रचन्द्रेति" तच्चिन्त्यम्। भिक्षुणा चन्द्रं
प्रार्थितेत्यप्रधाने क्तप्रत्यये बकद्रोहयोगात्। वक्ष्यति हि।

---

ऽण्यन्तावस्थायामपि सकर्मका ण्यन्तावस्थायामुत्तरसूत्रेण द्विकर्मका जाता-
स्तेषु ण्यन्तावस्थायां यदुत्तरसूत्रेणोपजातं कर्म तत्र लादयो भवन्तीत्यर्थः।
गमयति ग्रामं देवदत्तम्। गम्यते ग्रामं देवदत्तः, गमयितव्यः, गमितः,
सुगमः। बुध्यर्थ, बोध्यते माणवको धर्मम्। बोधयितव्यः, बोधितः, सुबोधः।

संस्त्यायविशेषः। (कै)

ग्रामादीनां समूहविशेषः॥

इतरदिति। (कै)

उदासीनमित्यर्थः॥

इदं तद्विपरीतमिति। (कै)

धात्वर्थफलाश्रयत्वाभावादिति भावः॥ श्लोकस्थविपरीतशब्दं व्याचष्टे भाष्ये

अपरिसमाप्तमिति॥ (भा)

अपरिसमाप्तत्वं व्याचष्टे

---

स्पष्टं भाष्ये। अनयोर्योगे सर्वथा पूर्वविधिविषयाप्राप्तियोग्ये विषयेनानेन कर्मत्वमनभिधानात्। तेन माणवकाय धर्मोपदेशकाले शूद्रेणापि श्रवणे शूद्रं धर्मं ब्रूते इति न प्रयोगः। अनभिधानं च ततः शिष्टलोकस्य बोधा-

---

गोदोहं स्वपिति॥ अध्वगन्तव्य। क्रोशमास्ते। क्रोशं स्वपिति॥ देशस्था-कर्मणां कर्मसंज्ञो भवतीति वक्तव्यम्। कुरून् स्वपिति। पञ्चालान् स्वपिति॥

---

धात्वर्थयोगेति। भा। धातुशब्देन धात्वर्थ उच्यते। तस्यार्थः प्रयोजनं पयः प्रभृति तेन योगो यस्याः सा षष्ठी यत्र भवति गोर्दुह्यते पयः पौरवस्य कम्बलो याच्यते इति प्रधाने तु न भवति षष्ठी दुह्यते पयसो गौरिति।

---

अप्रथमाविभक्त्यर्थे चायमिति। न च चन्द्रे क्तः। अप्रधाने दुहादीना-मित्युक्तः। अत एव काकपक्षधरमेत्य याचित इति कालिदासः। तत्रर्षस्थो गुणमुख्याभ्यां कर्मभ्यां प्राप्यते पृथक्। अविशेषाद् द्वितीयावशेता

---

प्रत्ययसामार्थः, भोज्यते माणवक ओदनम्, भोजयितव्यो, भोजितः, सुभोजः। शब्दकर्म, पाठ्यते माणवको वेदम्। पाठयितव्यः, पाठितः, सुपाठः। अकर्मकः, आस्यते माणवको मासम्, आसयितव्यः, आसितः, सासः। बुद्धिप्रत्ययसामार्थशब्दकर्मकेषु गुणकर्मणि लादय इति मतान्तरम्। बोध्यते

**नवेति ।** (भा)

कल्प्यकर्मणोर्द्वितीयेतिकार्थम् । अत्र पक्षे ईप्सितप्रकर्षाभावाद्-परिसमाप्तत्वं तु न युक्तमुदासीनेऽपि तथात्वापत्तेः । भाष्येऽन्यस्य वोक्तेश्च ॥ सर्वकर्मकार्याभावे हेतुमाह

**प्रधानकर्मणीति ॥** (कै)

**कथिते लादय इति ।** (भा)

येनोक्तं स एवायं वादीति भावः ॥ तदेतत्स्वयं दूषयति ।

---

ाविकल्पमिति "तदस्य तस्मिन् स्यादिति" ( ५ । १ । १६ ) इति सूत्रे भाष्ये ाष्टम् । तत्र हि "[1] द्वयी विवक्षा प्रायोक्ती लौकिकी च" इत्युक्तम् ।

विपरीतं तु यत् कर्म तत् कल्प्य कवयो विदुः ।

ादानीं संख्यान्तरमनारभ्यमाण आह कल्प्य नोक्तमिति । यस्मात् तत् कर्मैव तस्मात् पृथक् कल्प्येति नोक्तमस्मिन् शास्त्रे दुह्यादीनामप्रधाने कर्मणि लादि-

---

यामस्य गोरिति ॥ यत्रत्वेकेन शब्देन भिन्नकक्ष्यद्वयाभिधा । न शक्यते तत्र युक्तमेकस्यैवोपजीवनम् ॥ प्रधाने नियता षष्ठी गुणे स्युभयथा भवेत् । इत्याह गोश्चिकापुत्र इति भाष्याद् गुणद्वयम् ॥ नेतास्वस्य

---

वकं धर्मः भोक्ष्यते माणवकमोदनः, पाठ्यते माणवकं वेद इत्यादि । यमत्र निर्णयः । नीवह्निकृषिभ्यः प्रधानकर्मणि लादयः, तत्सम्बन्धस्य

---

१ विवक्षा च . . । । अस्त्येव प्रायोक्ती विवक्षास्ति लौकिकी । प्रायोक्ती ावक्षा । प्रयोक्ता हि मृद्व्या स्निग्धया श्लक्ष्णया जिह्वया मृदून् स्निग्धान् ाक्ष्णान्शब्दान् प्रयुङ्क्ते । लौकिकी विवक्षा यत्र प्रायस्य संप्रत्ययः । प्राय ति लोको व्यपदिश्यते । न च प्रासादो देवदत्तस्य स्यात् प्राकारो नगरस्य ादित्यत्र उत्पद्यमानेन प्रत्ययेन प्रायस्य संप्रत्ययः स्यात् ॥ यद्येवं नार्थः ाद ग्रहणेन । न हि प्रासादो देवदत्तस्य प्राकारो नगरस्य इत्यत्रोत्प-मानेन प्रत्ययेन प्रायस्य सम्प्रत्ययः स्यात् ।

दुहादीनां च (कै)

इत्यादिना॥

अन्यत्पयःप्रभृतीति। (कै)

ननु पौरवं विनापि गोरूपजननात्तद्व्याप्तमिदं याचादिकर्मत्वविशिष्टस्य तत्वे एवोपजननेनादोषात्। एवं चोपजायत इत्यस्य प्रकृतधात्वर्थकर्मताविशिष्टमित्यर्थः॥

---

प्रयोक्तृशब्देन व्यवहारार्थं प्रयोगकर्त्तारः ते चापभ्रंशानपि प्रयुञ्जते अतस्तद् विवक्षा न शास्त्रप्रवृत्तौ नियामिका। लोकशब्देन शिष्टलोकः स हि यथार्थे यं शब्दं धर्मबुद्ध्या परशिष्टबोधनाय प्रयोक्तुमिच्छति तद्विवक्षा

---

किमिदं कल्मेति। अपरिसमाप्तं कर्म कल्म। न वा अस्मिन् सर्वाणि कर्मकार्य्याणि क्रियन्ते। किं तर्हि द्वितीयैव॥

---

दर्शनात् सर्वकर्मकार्य्योपपत्त्याऽपरिसमाप्तत्वाभावाद् भेदेन च कल्मसंज्ञा विधाने कर्मकार्य्याप्रसङ्गादितिभावः॥ धातोर्हि वृत्तिरिति। भा। रेफस्य लत्वमात्रेण धातोरर्थान्तरे वृत्तिर्नास्तीति एतदुक्तं भवति। वर्णविकारेऽपि सति कर्मकल्मशब्दयोः पर्य्यायतेव। यथा पांसुरपांसुलशब्दयोः तत्र किं

---

शुभस्य शुभं वा। इह प्रधाने कर्मणि नित्या षष्ठी। भाष्यकारवचनात्तु गुणकर्मणि वैकल्पिकीति स्थितम्। नन्वकर्मकाणां प्राकृतकर्माभावात्कथं द्विकर्मकता। तथा च ण्यर्थकर्मणि प्रत्ययस्तु आस्यते माणवक इति। मासमिति तु प्रयोगोऽसङ्गतः। ध्रुवचेष्टितयुक्तिषु

---

पूर्वभावित्वात् दुह्यादिभ्यो णिदधिदुमुषिभ्यश्चाप्रधाने, तत्सम्बन्धस्यानन्तरकृत्वात्। बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणि प्रयाने वा यथेष्टं, गत्यर्थाकर्मकयोः ह्रक्रोश्च ण्यन्तयोः प्रयोज्ये कर्मणीति। प्रयोज्यस्य च प्राधान्येनाभिधीयमानप्रयोजकव्यापारेणाप्यमानत्वात् प्राधान्यं, गुणभूत-

तेन योग इति । (कै)

तेन योगो वाच्यो यस्याः सा षष्ठीत्यर्थः । धात्वर्थव्यापारप्रयोजनफलविशिष्टपय आदिनिरूपितसंबन्धार्थिका यत्र षष्ठीत्यर्थः । एवं च दुहादियोगे पयसो गव्यन्वयं कृत्वा षष्ठीप्रयोगो न दृश्यते किं तु गोः पयस्यन्वये सा दृश्यते इति भावः ॥

---

शास्त्रप्रवृत्तौ प्रयोजिकेति तदर्थं इति तत्र कैयटे स्पष्टम् । [1]शिष्टाश्च शब्दतत्वविदः साक्षात् कृतपरावरा इति "पृषोदरादीनि" ( ६ । ३ । १०९ )

---

यस्मिंस्तु कर्मण्युपजायतेऽन्यद् धात्वर्थयोगापि च यत्र षष्ठी ।
तत् कर्मकल्पेति च कल्पनोक्तं धातोर्हि वृत्तिर्न रसात्मतोऽस्ति ॥

---

संज्ञाभेदेनेत्यर्थः ॥ एतेनेति । भा । अकथितं कर्म इत्येवास्तु माभूत् पूर्वत्र द्वयं तद्विषयेऽनेनैव कर्मसंज्ञायाः सिद्धत्वात् परिगणनं च न करिष्यत इति

---

वाप्यगुण इति श्लोके ध्रुवग्रहणस्य व्यर्थमिति चेन्न । कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् । देशश्चाकर्मकाणामिति भाष्याद्गन्तव्योऽध्वा अध्व गन्तव्यः । अस्मादेव निपातनाद्गन्तव्यशब्दस्य परनिपातः । गन्तव्यतया

---

प्रयोज्यव्यापारकर्मणस्तु गुणभाव आर्थेन न्यायेन प्रयोज्यव्यापारप्राधान्यं, तदर्थत्वात् प्रयोजकव्यापारस्य । तत्प्राधान्याच्च तत्कर्मणोऽपि प्राधान्यमित्यन्ये । सर्वथा सादयः प्रयोज्यकर्मणीति स्थितम् । अकर्मकाणां च धातूनां काल-

---

१ के पुनः शिष्टाः । वैयाकरणाः कुत एतत् । शास्त्रपूर्विका हि शिष्टिर्वैयाकरणाश्च शास्त्रज्ञाः । यदि तर्हि शास्त्रपूर्विका शिष्टिः शिष्टिपूर्वकं च शास्त्रं तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते । एवं तर्हि निवासत आचारतश्च । स चाचार आर्य्यावर्त्त एव । कः पुनरार्य्यावर्त्तः प्रागादर्शात् प्रत्यक् कालकवनाद् दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम् । एतस्मिन् आर्य्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किं चिदन्तरेण कस्याश्चिद् विद्यायाः पारङ्गतास्तत्र भवन्तः शिष्टाः ।

कर्मकार्येति । (कै)

द्वितीयादीत्यर्थः ॥

रसत्वत इति । (भा)

सार्वविभक्तिकस्तसिः । रस्य लत्वमार्षमित्यर्थः ॥ ननु परिगणनस्य सत्त्वात्सर्वं न सिध्यतीत्यत आह

अकथितम् इत्यादि । (कै)

एवं चाकथितेन "अकथितं च" इति सूत्रेणैव सर्वा सर्वविषया कर्मसंज्ञा सिद्धा किं पूर्वसूत्रद्वयेनेति श्लोकार्थः । अनेन

---

इति सूत्रे भाष्ये स्पष्टमिति भाष्यप्रदीपोद्योते विस्तरः । अत्रापि कर्मत्वशक्तिमत्त्वेनैव द्वितीयया बोधः । कर्मसंज्ञा विधायकशास्त्रैस्तत्तदर्थे कर्मत्व-

---

एतेन कर्मसंज्ञा सर्वा सिद्धा भवत्यकथितेन ।
तत्रेप्सितस्य किं स्यात् प्रयोजनं कर्मसंज्ञायाः ॥

---

प्रश्नार्थः ॥ वस्त्विति । भा । यवेभ्यो गां वारयतीति गवां कथितत्वात् कर्मसंज्ञा न स्यात् वारणार्थानामित्यपादानसंज्ञैव तु स्यादिति "कर्तुरीप्सिततमम्" इत्यारब्धम् । तस्मिन् आरब्धे अनीप्सितस्य कर्मसंज्ञा न प्राप्नो-

---

लोके प्रसिद्धस्य नियतपरिमाणस्य क्रोशयोजनादेरेव ग्रहणम् । तेनाध्वानं स्वपितीति न भवति । मासमास्ते । गोदोहमास्ते । यावता कालेन गौर्दुह्यते तावन्तं कालमास्त इत्यर्थः । क्रोशमास्ते । कुरून् स्वपिति । जन्यमात्रं कालोपाधिरिति पक्षे गोदोहादेर्यद्यपि कालत्वात्सिद्धं तथापि

---

भावाध्वगन्तव्यदेशाः कर्मसंज्ञका इष्यन्ते । उक्तं च, "कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् । देशश्चाकर्मकाणां तु कर्मसंज्ञो भवतीति वक्तव्यमिति" । अध्वगन्तव्येति, गन्तव्योऽध्वा ऽध्वगन्तव्यः, कडारादित्वात्पूर्वो

सूत्रत्रयविहितसंज्ञासंज्ञिनी शक्तिरेकैवेति सूचयति । आद्यसूत्रद्वये फलाश्रयताजनकतोभयसमानाधिकरणा इह तु जनकतामात्रसमानाधिकरणेत्यन्यत् ॥ उत्तरमाह

यस्त्विति । (भा)

यत्पुरस्ताद्"वारणार्थानामि"ति सूत्रेण कीर्त्तितं यदीप्सितेन यवादिना युक्तं गवादि तस्य संज्ञार्थमाद्यं सूत्रमावश्यकमित्यर्थस्तद्व्याचष्टे ।

---

शक्तिबोधनात् । अत एव "अकथितं च" इति सूत्रशेषे भाष्ये अनेनैव सर्वत्र कर्मत्वे सिद्धे आद्यसूत्रद्वयवैयर्थ्यमाशङ्क्यैवं सति "वारणार्थानाम्" (१ ।

---

यस्तु कथितं पुरस्तादीप्सितयुक्तं च तस्य सिद्ध्यर्थम् ।

ईप्सितमेव तु यत्स्यात् तस्य भविष्यत्यकथितेन ॥

---

तीति तथा युक्तमित्यारब्धम् ॥ ननु तथा युक्तस्यानेन भविष्यति । नैतदस्ति । दुह्यादिपरिगणनं नटस्य शृणोतीत्यादावतिप्रसङ्गनिवृत्त्यर्थमवश्यं वक्तव्यम् ॥ ईप्सितयुक्तं चेति । भा ईप्सितेन यवादिना युक्तं यद् गवादिवार्यमाद्यं तस्य कर्मसंज्ञा सिद्ध्यर्थं पूर्वसूत्रं कर्त्तव्यमित्यर्थः । चशब्दात् कर्मा·

---

लोके मासादेरेव तथात्वेन प्रसिद्धत्वात्पृथग्भावग्रहणम् । देशशब्देन च ग्रामसमुदायविशेषाः कुरुपञ्चालादयो गृह्यन्ते इति कैयटः । तेनाधिशेऽस्यासामित्यादेर्वैयर्थ्यं नेति ध्येयम् । कालाध्वनोरत्यन्तसंयोगइति तु गुणद्रव्ययोरर्थे आरम्भणीयम् । क्रोशं कुटिला । मासङ्गुडधानाः ।

---

मद्रव्यः । गन्तव्यत्वेन प्रसिद्धस्य नियतपरिमाणस्य क्रोशादेर्ग्रहणार्थं गन्तव्यग्रहणम् । तेनाध्वानं स्वपितीति न भवति । ननु च कालाध्वनोरिति विशा द्वितीया किं कर्मसंज्ञया, देशस्य तावद्वक्तव्यः । कालाध्वनोरपि वादिविधा-

यवेभ्य (कै)

इत्यादिना ॥

अवश्यंवक्तव्यमिति। (कै)

यति परिगणने ओदनं पश्यतीत्याद्यसिद्धेः। पूर्वयोगारम्भ आवश्यकः। परिगणनत्वं चाख्यातोपयोगइति सूत्रे भाष्ये उक्तम् ॥ ननु "वारणार्थानामीप्सित" (१।४।१७) इत्यनेनेप्सितस्यापादानत्वेऽपीप्सिततमस्याकथितत्वात्सिध्यत्येवानेन कर्मत्वमित्यतो भाष्ये

---

४। २०) इति सूत्रस्यानवकाशत्वेन माषवकादपि पञ्चमीस्याद् इतीप्सिततममित्यारब्धव्यमित्युत्तरितम्। एवं वैकुण्ठमधितिष्ठतीत्यादावपि

---

अथेह कथं भवितव्यम्। नेताश्वस्य स्रुघ्नमिति॥ आहोस्विन्नेताश्वस्य स्रुघ्नस्येति। उभयथा गोणिकापुत्रः॥

---

पादानसंज्ञयोर्विषयविभागसिद्ध्यर्थं चेत्युक्तं भवति॥ ईप्सितमेवेति। भा। अवधारणेनेप्साप्रकर्षाभावं दर्शयति। अकथितेनेति। भा। सूत्रैकदेशानु-

---

सकर्मकार्थश्च। मासं वेदमधीते। यदा आस्यादयस्तत्पूर्वके व्यापने वर्तन्ते तदा चोत्सर्गेणैव सिद्धम्। मासमासनेन व्याप्नोतीत्यर्थात्। तथा च द्वितीये भाष्यम्। प्रकृतमेवेदं कर्मेति। न चैवं सकर्मकेष्वप्यतिप्रसङ्गः। भाष्यानुरोधेनाकर्मकाणामेवोक्तप्रकाराभ्युपगमात्। आह च। कालभावा-

---

नार्थं कर्मत्वमेषितव्यम्। आस्यते मासः, आसितः, आसितव्यः, आसः। एवं शय्यते क्रोशः इत्यादि, भावः। गोदोहमास्ते। यावता कालेन गौर्दुह्यते तावन्तं कालमास्त इत्यर्थः। गोदोहादीनां मासादिवत्कालत्वेनाप्रसिद्धत्वाद्भावस्य पृथग् ग्रहणं, देशः, कुरून् स्वपिति, कुरवः सुप्यन्त इत्यादि, 'कालाध्वनोरत्यन्तसंयोग' इति तु सूत्रमक्रियात्यन्तसंयोगार्थम्।

चेति ॥ (भा)

तद्व्याचष्टे ।

चशब्दादिति ॥ (कै)

विषयविभागेति ॥ (कै)

विशेषेति पाठान्तरम् । ईप्सितमपादानत्वविषय ईप्सिततमं कर्मत्वस्य विपरीतं वेत्यत्र विनिगमकाभावादिति भावः ॥ तदेवाह भाष्ये

---

बोध्यम् । "अधिशीङ्स्थासाम्" ( १ । ४ । ४६ ) इत्यादिभिराधार इत्यनुवृत्त्या तस्य कर्मत्वशक्तिमत्त्वबोधनात् । दिव् धातुयोगे "दिवः कर्म च"

---

करणमेतत् । अनेन सूत्रेणेत्यर्थः ॥ अथेहेति । भा । "प्रधाने कर्मण्यभिधेये लादीनाहुः" इत्युक्तम् । तत्र लादिग्रहणेन किं यद्यपि गृह्यते उत न । यद्यादिशब्दो व्यवस्थायां तदा "लः कर्मणि च भावे चाकर्मकेभ्यः" ( ३ । ४ । ६९ ) "तयोरेव कृत्यक्तखलर्थाः" ( ३ । ४ । ७० ) इत्येतेषां

---

च्वेदेशानामन्तर्भूतक्रियान्तरैः । सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते इति ॥ हेलाराजस्त्वाह । सकर्मकेष्वपि मासमोदनं पचतीति भवत्येव । अत एवोक्तं सर्वैरिति । अकर्मकैरिति त्वविवक्षितमिति कैयटोऽप्येवम् । अस्मिन्पक्षे मासमास्ते कटे इति कटादेरपि द्वितीया प्राप्ता तथापि कालादेरेव व्यापनकर्मत्वं न तु कटादेरिति हेलाराजः । अनभिधानत्वेह

---

मासं गुडधानाः, सर्वरात्रं कल्याणी, क्रोशं कुटिला नदीति । न तर्हि व्याप्त्यर्थं कालभावाध्वगन्तव्या इति, न व्याप्त्यर्थं नान्तासिरासनमात्रे वर्तते किं तु तत्पूर्वके व्यापने वर्तते, मासमास्ते । कोऽर्थः, मासमासनेन व्याप्नोतीत्येवं सर्वत्र । एवं च सति सकर्मकेष्वपि मासादयः कर्म भवन्ति, मासं

## ईप्सितमेव तु (भा)

इत्यादिना विनिगमनाविरहेणेप्सितस्यैव कर्मत्वमीप्सिततमस्यैवापादानत्वं स्यादिति भावः॥ तदेवाह।

## अवधारणेनेति। (कै)

एतेनैतद्भाष्यबलेन "अकथितं च" इतिसूत्रे ईप्सिततममित्यनुवर्त्यफलाश्रयस्यैवानेन कर्मसंज्ञां वदन्तः परास्ताः॥ ननु लक्षत्यक्षसार्थवत् षष्ठ्यपि भविष्यतीत्यत आह।

---

(१। ४। ४२) इति सूत्रात् तद्भावत्वर्थसाधकतमस्य कर्मत्वकरणत्वोभयप्रसक्तिमत्त्वं बोध्यम्। घृतं घृतेन वा दीव्यति। एवं च सर्वसाधारणकर्मत्व

---

ग्रहणं न्याय्यम्। अथ प्रकारे तदा षष्ठ्यपि वादिग्रहणेन गृह्यते इति प्रधानकर्मण्येव सा भवतीति मत्वा प्रश्नः। उभयथेति। भा। गुणकर्मणि षष्ठीद्वितीयादर्शनादुभयमपि स्मर्यते। वाचनिकं चेदं न तु न्याय्यम्। यत्र

---

प्रस्तम्। अधिप्रीङित्यादिज्ञापकं वा बोध्यम्। इह च कर्मणि भावे च लकारे देवदत्तेनास्यते मासो मासं वेति रूपद्वयमपीष्टम्। स्यादेतत्। भावेचाकर्मकेभ्य इति वचनान्मासादिकर्मकात्कथं भावे ल इति चेत्। उच्यते। अकर्मकेभ्य इत्यनेनान्तरङ्गं द्रव्यकर्म व्युदस्यते न तु बहिरङ्गं कालादिकर्म। कर्मणीत्यत्र तु व्यक्तिपक्षाश्रयणादन्तरङ्गासन्निधौ बहिरङ्गे कालादिकर्मण्यपि प्रतिरविरुद्धा। जातिव्यक्तिपक्षयोर्लक्ष्यानुरोधेन व्यवस्थेति सिद्धान्तात्। उक्तञ्च हरिणा। "प्रक्तिप्रमाणसंख्यादेरर्थ-

---

वेदमधीयते मासं वेदाध्ययनेन व्याप्नोतीत्यर्थः। अथ 'कर्तृकर्मणोः कृती'ति षष्ठी द्विकर्मकेषु किं प्रधाने कर्मणि भवति आहोस्विद्गुणे भवति आहोस्विदुभयोः, उभयोरिति प्राप्तं द्वितीयावद्भाष्यकार वचनात् गुणकर्मणि विकल्पेन षष्ठी प्रधानकर्मणि नित्या, नेता ऽश्वस्य स्रुघ्नस्य

प्रधाने (कै)

इत्यादि ॥ ननु षष्ठीवत्तद्भावस्य न्यायेनाप्राप्तेरुभयथेत्ययुक्तमत आह

गुणकर्मणीति ॥ (कै)

ननु ल्लादिवत् षष्ठ्यपि प्रधानकर्मण्येव न्याय्येत्यत आह ।

यच्च हीति ॥ (कै)

गोणिकापुत्रः (भा)

भाष्यकार इत्याहुः ॥

---

कर्मता प्रक्तिमत्वम् । धातूनां सकर्मकत्वमपि कर्मत्वप्रक्तिमदर्थान्वय्यर्थकत्व-मिति दिक् ॥

---

ह्येकेनैव प्रब्देन भिन्नकक्ष्ययोर्गुणप्रधानयोः कर्मणोरभिधानं न सम्भवति तत्र प्रधानकर्मण एवाभिधानं न्याय्यम् । षष्ठी तु पृथग्गुणप्रधानाभ्यां द्वितीयावद् विधीयते विरोधाभावादुभाभ्यां प्राप्ता प्रिष्टस्मरणाद् गुण-कर्मणि विकल्प्यते ॥

---

धर्मादिष्विष्यते । क्रियासु कालयोगेतः प्राण्योगो द्रव्यकर्मणीति ॥" "अतस्तैः कर्मभिर्धातुर्युक्तो द्रव्यैरकर्मकः । तस्य कर्मणि भावे च निमि-त्तत्वाय कल्पतइति च ॥" एतेन "सस्तेमाधमधाभिधानि यमुना गङ्गैव-सङ्गे ययेति श्रीहर्षप्रयोगो व्याख्यातः ॥

---

सुप्तमिति वा । इहाकथितं कर्मेत्येतावदस्तु मास्तु पूर्वसूत्रद्वयं तद्विषय-स्याप्यकथितत्वात् । सत्यम् । नटस्य शृणोतीत्यत्र माभूदिति दुह्यादिपरि-गणनमवश्यं कर्तव्यं तस्मिंश्च क्रियमाणे ओदनं पचति । इहामूनात्युपसर्पतो-त्यत्र न स्यादिति पूर्वमपि योगद्वयमारभ्यत इति ।

# गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्म-काणामणि कर्त्ता स णौ । १ । ४ । ५२ ॥

ननु रूढिमत्वात् कर्मकारकस्यैव ग्रहणमुचितमत आह

**कर्मशब्देनेति ॥** (कै)

ननु शब्दस्य गुणत्वात्क्रियात्वं कथमत आह

**ह्वयत्यादय इति ॥** (भा)

---

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ । १ । ४ । ५२ ।
शब्दकर्मेति कथमिदं विज्ञायते शब्दो येषां क्रियेत्याहोस्विच्छब्दो

---

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ । १ । ४ । ५२ ॥
कथमिति । भा । कर्मशब्देन क्वचित् क्रिया गृह्यते । यथा "कर्तरि कर्मव्यतिहार" इति । क्वचित्तु साधनं कर्म यथा वेः शब्दकर्मण इति ।

---

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ । १ । ४ । ५२ ।
गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ।

---

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ । १ । ४ । ५२ ।
'गमयति माणवकं ग्राममिति' । कथमत्र ग्रामस्य कर्मत्वं यावता कर्तुरीप्सिततमं कर्मेत्युच्यते । न च संप्रति माणवकः कर्त्ता ऽनेन कर्मसंज्ञकत्वात् । तत्र यथा माषेष्वश्वं बध्नातीत्यत्र वस्तुतो भक्षणेनेप्सिततमानामपि माषाणां

## कर्मणो भावादिति । (भा)

कर्मणः सत्त्वादित्यर्थः ॥

## अकर्मकत्वादपीति । (कै)

यो जातः कर्मसंज्ञाप्रसङ्गस्तस्यायं निषेध इत्यर्थः । अत्र वदन्ति । ह्वेञ् स्पर्धायां शब्दे चेत्यभियुक्तैः शब्दशब्देन ह्वेञ् धात्वर्थनिर्देशात्तदर्थकशब्दशब्दात् क्वचिद् ह्वयतेरिवाख्येव पुत्रादिकर्मयोग इति

## शब्दक्रियाणामिति चेद् ह्वयत्यादीनां प्रतिषेध (भा)

इति भाष्यसामञ्जस्येऽन्याट्टशशब्दायत्तेरकर्मकत्वप्रयुक्तप्राप्तेर्निषेधे मानाभावे चिन्त्योऽयं कैयट इति ॥

---

येषां कर्मेति । कस्मान्न विशेषः । शब्दकर्मनिर्देशे शब्दक्रियाणामिति: चेद् ह्वयत्यादीनां प्रतिषेधः । क । शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेद्

---

ततश्चोभयथा व्यवहारदर्शनात् संशयानः पृच्छति । ह्वयत्यादीनामिति । भा । ह्वयत्यादयो धातवः साध्यमानावस्थं क्रियारूपं शब्दमभिदधतीति शब्दकर्मत्वादतिप्रसङ्गे सति प्रतिषेधो विधेयः । ह्वयति देवदत्त इति । भा ।

---

नियमार्थमिदम् । णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्यर्थादीनामेवेति । तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये पूर्वप्रवृत्तकर्तृसंज्ञाया एव निरपवादत्वेनावस्थानात्तृतीया सिद्ध्यति । आह च ।

---

कर्मसंज्ञा न भवति तत्कस्य हेतोः । अन्यस्य संप्रत्ययकर्तृत्वात् । तद्वच्चापि न प्राप्नोति । मा भूदित्युत्पन्ने मायवकः कर्ता । प्राग्वदुत्पत्तेः प्रकृत्यर्थे कर्ता भवति । तदानीमेव च ग्रामस्याभिसम्बन्धः ग्रामकर्मकोऽसौ गमने प्रेष्यते

न ज्ञानमात्रेति । (कै)

ज्ञानसामान्यवचना एव बुद्ध्यर्थास्तत्र गृह्यन्ते न तु तद्विशेषवचना इति भावः ॥

शब्दविषयामेवेति । (कै)

श्रोत्रेन्द्रियजज्ञानरूपामित्यर्थः । एवं च ज्ञानविशेषार्थत्वेन न बुद्ध्यर्थत्वात्सिद्धिरिति भावः ॥

बुद्ध्यर्थत्वादिति । (कै)

ज्ञानसामान्यर्थत्वमाश्रित्य बुद्ध्यर्थत्वादपि सिध्यतीत्यभिमानः ॥

---

शब्दायत्यादीनां प्रतिषेधो वक्तव्यः । के पुनः शब्दायत्यादयः । क्रयति क्रन्दति शब्दायते । शब्दयति देवदत्तः । शब्दाययति देवदत्तेन । क्रन्दति देवदत्तः । क्रन्दयति

---

गुणादेः कर्मणो भावादकर्मकत्वं शब्दयतेर्नाशङ्कनीयम् । शब्दायते इति । भा । शब्दं करोतीति "शब्दवैरे"ति क्यङ् । शब्दलक्षणस्यात्र कर्मणोऽन्तर्भावात् कर्मान्तरायोगाच्चाकर्मकत्वादपि कर्मसंज्ञाप्रसङ्गः । प्रत्यायोत्यादीनामिति ।

---

"गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः ।
नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयतइति" ॥

---

ग्रामं गच्छेति । अतो यस्यामवस्थायां ग्रामस्य कर्मत्वं न तस्यां माणवकस्य कर्मत्वं यस्यां च ण्यन्तावस्थायां, माणवकस्य कर्मत्वं न तस्यां ग्रामस्य कर्मत्वं पूर्वप्रवृत्तत्वाद् माणवकमित्यत्र तु नैवं संभवति । 'यापयतीति' । या प्रापणे इत्यत्र प्राप्त्या गतिर्लक्ष्यत इति यातिर्गत्यर्थः ॥ 'नीवह्योरिति' । अनयोर्योगविभक्तं प्रापणमर्थो न गतिः 'न गतिहिंसार्थेभ्यः' ( १ । ३ । १५ ) इत्यत्र च भाष्यं न वहिर्गत्यर्थ इति सत्यम् । गुणभावेनापि गतिः प्रतीयतइति

## चिन्त्यमेतदिति (कै)

चिन्ताबीजं तु यदा जानात्यादिनां शब्दविषये श्रावणज्ञाने वृत्तिस्तदाण्यणौ कर्तुर्णौ कर्मत्वमिष्टं न च तदा बुद्ध्यर्थत्वेन विशिष्टज्ञानसामान्यार्थत्वाभावात् । एवमेवेदृशे ऽनुपसंख्यानं क्रियते । अत एव यदा रूपादिविषयकचाक्षुषज्ञाने वृत्तिस्तदा न भवति । यथा विजानाति रूपतर्कः कार्षापणं विज्ञापयति रूपतर्केणेति भाष्याशय इति ॥

## पुत्त्रं जल्पतीति । (कै)

ताडनपूर्वके जल्पने जल्पेर्वृत्तेरिति भावः ॥ एतेनाकर्मत्वाद्विधिरित्यप्यपास्तम् ॥

---

देवदत्तेन । शब्दायते देवदत्तः । शब्दाययति देवदत्तेन । ह्वयत्यादीनामुपसंख्यानमशब्दक्रियात्वात् । वा । ह्वयत्यादीनां चोपसंख्यानं कर्तव्यम् । के पुनः

---

भा । शब्दोपलब्धिरूपेऽर्थे वर्तमानाः ह्वयत्यादयः शब्दक्रिया न भवन्ति शब्दसाधनकर्मार्थास्तु तद्विषयत्वेन प्रयोगात् । न चैषां बुद्ध्यर्थत्वम् । ह्वयत्यादयो हि न ज्ञानमात्रवचनाः । बुद्ध्यर्था तु जानात्युपलभत इत्येते

---

कर्तुः स्वधर्मेण तृतीयेत्यर्थः । गमयति माणवकं ग्रामं ग्रामकर्मकं यद्गमनं तदनुकूलव्यापाराश्रय इत्यर्थः । नीवह्योः प्रतिषेधो वक्तव्यः ॥ यद्यप्येतयो:

---

मत्वा प्रतिषेध उक्तः । 'वहेरनियन्तृकर्तृकस्येति' । वा । वक्ष्यामीति चोपक्षेपः वाहयति बलीवर्दान्यवानित्यत्राणौ बलीवर्दाः कर्तारः एवन्ते तु नियन्ता सारथिः कर्ता तत्र प्रतिषेधप्रतिषेधाद्विधिरेव भवति । बुद्ध्यर्थग्रहणेन ज्ञानमात्रवाचिनामेव ग्रहणं न तु तद्विशेषवाचिनां स्मरत्यादीनामित्याहुः ।

सर्वत्र दृशेरिति। (कै)

ज्ञानसामान्यार्थकत्वादिति भावः॥ ननु पश्यार्थैर्चानालोचन इतिदर्शनाद् दृशेर्ज्ञानसामान्यार्थकत्वाद् बुद्ध्यर्थत्वेन सिद्धिरत आह

चक्षुरिति॥ (कै)

दृशेरिति। (कै)

ज्ञानसामान्यार्थत्वे इति शेषः। चाक्षुषज्ञानार्थकार्थं तु वचनमावश्यकमेवेति बोध्यम्। इदमेव ज्ञापयति ज्ञानसामान्यर्थकानां तत्र ग्रहणमिति॥

---

शृणोत्यादयः। शृणोति विजानात्युपलभते। शृणोति देवदत्तः। श्रावयति देवदत्तम्। विजानाति देवदत्तः। विज्ञापयति देवदत्तम्। उपलभते देवदत्तः।

---

यद्यप्युपलब्धिमात्रवचनौ तथापि प्रयोजकव्यापारविवक्षायां प्रकरणादिवशाद्यदा शब्दविषयामेवोपलब्धिं प्रत्याययतस्तदा साधनकर्मग्रहणे सिध्यति न तु क्रियाग्रहणे इत्युपसंख्यानं कर्तव्यम्। एवं तु बुद्ध्यर्थत्वादनयोः

---

प्राप्यसमर्थौ न तु गतिस्तथापि विशेषणतया गतिरपि वाच्यकोटिनिविष्टेत्येतावन्मात्रेण प्राप्तिं मत्वा प्रतिषेध उक्तः। नाययति वाहयति वा भारं देवदत्तेन। वहेरनियन्तृकर्तृकस्यैव प्रतिषेधः॥ नियन्तृकर्तृकस्य प्रयोज्यः कर्मेति

---

वृत्तावपि तथैवोदाहृतम्। 'आदिखाद्योरिति'। वा। अपर आह सर्वमेव प्रत्यवसानकार्यमदेर्न भवति नावश्यमियमेव कर्मसंज्ञेति 'निगरणचलनार्थेभ्यश्चे' (वा) ति पदमपि न भवति। इदमेकमिष्यते 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य' इदमेषां जग्धमिति। 'भक्षेरिति'। वा। गत्यार्थादिषु प्रायेण हेतुमण्णिच एव संभवाद् हेतुमण्णिचो विधिरिति प्रतिषेधोऽपि

इत्युक्तं भाष्ये इति । (कै)

तच्च तत्रैव निरूपितमत एव "न वेति" (१।१।४४) सूत्रे हृक्रोरित्यत्रोभयत्र विभाषात्वमुक्त्वा ऽप्राप्ते हरति भारं देवदत्तो हारयति भारं देवदत्तमिति प्रापणार्थं उदाहृतः । विपूर्वो हरतिर्गत्यर्थ इति च कैयटः । एवं च वहेः प्रतिषेधो नापूर्वः ।

तथापीति । (कै)

एवं च नियन्तृकर्तृकवहेरुपसंख्यानं कार्य्यमिति तात्पर्य्यम् । नयतेस्तु गत्युपसर्जनं प्रापणमर्थ इति गत्यर्थकत्वमस्त्येवं प्रापयतेस्तु शुद्धं प्रापणमेव वहिवदर्थ इति न स गत्यर्थ इति बोध्यम् ॥ भाष्ये

---

उपलम्भयति देवदत्तम् । किं पुनः कारणं न सिद्ध्यति । अशब्दक्रियात्वात् । यस्तु तर्हि शब्दो येषां कर्मेति । शब्दकर्मणा इति चेज्जल्पतिप्रभृतीनामुप-

---

सिध्यतीति चिन्त्यमेतत् । जल्पतिप्रभृतीनामिति । भा । जल्पत्यादयः शब्दनक्रियायां वर्तन्त इति क्रियाग्रहणे सिध्यति न तु साधनकर्मग्रहणे । पुनं जल्पतीत्यादौ शब्दकर्मत्वाभावात् । दृशेः सर्वत्रेति । भा । यदि

---

र्गत्यर्थमिति फलितोऽर्थः । वहन्ति वाहाः वाहयति वाहान् रथिनं सूतः । ा प्रापणा इत्यत्र तु गतिरेव प्रापणशब्दार्थः ॥ याति गच्छतीत्येकार्थप्रतीतेः । तेन कालं पाचयतीत्यादौ प्रयोज्यस्य कर्मता बोध्या । बुध्यर्थग्रहणेन ज्ञान-

---

नत्वासमेतस्यैव न्याय्य इति चुरादिणिजन्तोऽप्यणन्त एवेति भक्षेः प्राप्तिः । भक्षयति बलीवर्दान् सस्यमिति' । चेतनस्यानां यवानां वक्ष्यमाणानां हिंसा भवति तस्यामवस्थायां केचिच्चैतन्याभ्युपगमात् । स्वामिनो वा हिंसा स्थया । इह कर्मशब्देन क्वचित्क्रिया गृह्यते यथा 'कर्त्तरि कर्मव्यति-

## इदमेकमिष्यते इति (भा)

एवं च सर्वमेवेत्ययुक्तं परस्मैपदकभलयोः प्रतिषेधो वक्तव्य इत्यर्थः ॥

## सारथिरिति । (कै)

पशुप्रेरक इत्यर्थं ॥ अन्यथा रथप्रेरक एव सारथिशब्दस्य प्रसिद्धत्वेन भाष्योदाहरणासङ्गतेरिति बोध्यम् ॥ ननु भक्षयतो-र्नित्यण्यन्तत्वेनाणौ कर्त्रभावादाह

## अणि कर्तेति । (कै)

णावित्यत्र सर्वगत्यर्थादिभ्यो हेतुमण्णिच एव संभवेन तस्यैव ग्रह इति भावः । भक्षेः प्रत्यवसानार्थत्वात्प्राप्तिः । वार्तिके प्रतिषेध

---

संख्यानम् । वा । शब्दकर्मणा इति चेज्जल्पतिप्रभृतीनामुपसंख्यानं कर्तव्यम् । के पुनर्जल्पतिप्रभृतयः । जल्पति विलपति आभाषते । जल्पति देव-

---

क्रियाग्रहणमथ साधनग्रहणमथोभयगत्याश्रयणं सर्वत्र दृशेर्न प्राप्नोतीति भावः । पश्यतिरुपलब्धक इति । भा । चक्षुः प्रणिधानद्वारक उपलम्भे यदा दृशिर्वर्तते तदैतद्वक्तव्यम् । अन्यत्र तु बुद्ध्यर्थत्वात् सिध्यति । तत्र साधन-

---

सामान्यवाचिन एव गृह्यन्ते न तु तद्विशेषवाचिनः स्मरत्यादयः । अत एव अनुक्रोशोपसङ्ख्यानं करिष्यते । बोधयति माणवकं धर्मम् । प्रत्यवसानं

---

थार्' (१ । ३ । १४) इति । क्वचित् साधनकर्म 'वेः शब्दकर्मणः' इति । इह शब्दक्रियाणामिति चेत् ह्वयत्यादीनां प्रतिषेधः । ह्वयति पुत्रं देवदत्तः ह्वाययति पुत्रं देवदत्तेन । क्रन्दति पुत्रं देवदत्तः । क्रन्दयति पुत्रं देवदत्तेन । शब्दायते देवदत्तः । शब्दयते देवदत्तेन । अकर्मकत्वादयात्र प्रसङ्गः । शब्द-

इति शेषः। पिण्डा अप्राणित्वादुदाहरणे भक्षेर्हिंसार्थत्वम् ॥ ननु यवानामप्यचेतनत्वात्तद्विषयस्यापि कथं हिंसार्थत्वमत आह

**अवस्थानामिति।** (कै)

इदमुपलक्षणं बीजावस्थानामपि भक्षणे हिंसासत्त्वात्।

**हिंसाङ्ग इति।** (कै)

इदमुभयसाधारणं तत्राद्ये यवान् हिंसन् भक्षयतीत्यर्थः। द्वितीये तु परानित्यध्याहार्यम्। परान् हिंसन् सर्वान् भक्षयतीत्यर्थः। अत्रायमेव युक्तं भाष्यस्वरसादित्याहुः। उदाहरणवाक्यायां भक्षयन्तीति बहुवचनपाठे तत्स्वामिन इति शेषः ॥

---

दत्तः। जल्पयति देवदत्तम्। विलापयति देवदत्तः। विलापयति देवदत्तम्। आभाषते देवदत्तः। आभाषयति देवदत्तम्। दृशेः सर्वत्र। वा। दृशेः सव-

---

कर्मग्रहणमित्येष पक्ष आश्रीयते। क्रियाग्रहणे कर्मग्रहणानर्थक्यप्रसङ्गात्। गतिबुद्धिशब्दप्रत्यवसानार्थाकर्मकाणामित्येव सिद्धत्वात्। पुत्रादिकर्मत्वे जल्पतिप्रभृतीनामुपसंख्यानं कर्तव्यमेव। श्लोकादिशब्दविशेषकर्मकत्वे तु

---

भक्षणम्। भोजयति आशयति माणवकमोदनम्। आदिखाद्योः प्रतिषेधो वक्तव्यः॥ आदयति खादयत्यन्नं बटुना। भक्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यः॥

---

सहायकस्य कर्मणोऽन्तर्भावात् कर्मान्तरायोगाच्च। "शृणोतेश्चोपसंख्यानम्" अशब्दक्रियत्वात् शृणोति श्लोकं देवदत्तः। श्रावयति श्लोकं देवदत्तम्। न च बुद्ध्यर्थत्वादत्र सिद्धिः। चेतत्यादयो हि ज्ञानमात्रवचना बुद्ध्यर्थाः। अस्तु तर्हि साधकक्रमेणो ग्रहणम्। "शब्दकर्मण इति चेत् जल्पतिप्रभृतीनामुप-

तुल्यत्वाद्वेति । (कै)

वाशब्दश्चार्थे ॥ नन्वकर्मकवद्भावे कर्मणि लो न स्यादत आह

स्वाश्रयमिति । (कै)

सकर्मकेत्यत्र कर्ममात्रस्य ग्रहणादिति भावः । अकर्मकेत्यत्र निषेध्यकोटौ त्वन्तरङ्गद्रव्यकर्मण एव ग्रहणमिति तात्पर्यम् ॥

गृह्यन्त इति । (कै)

इह शास्त्र इत्यर्थस्तदेवाह

अन्यथेति ॥ (कै)

---

श्चोपसंख्यानं कर्तव्यम् । पश्यति रूपतर्कः कार्षापणम् । दर्शयति रूपतर्कं कार्षापणम् । आदिखादिनीवहीनां प्रतिषेधः । वा । आदिखादिनीवहीनां

---

शब्दकर्मत्वात् सिद्धिः । दृशेर्बुध्यर्थत्वादेव ग्रहणं सिध्यति । आदिखादीति । भा । आदिखाद्योः प्रत्यवसानार्थत्वात् प्राप्तिः । नीवह्योर्गत्यर्थत्वात् । यद्यपि न गतिहिंसार्थेभ्य इत्यत्र न वहिर्गत्यर्थ इत्युक्तं भाष्ये । तथापि वहेरनियन्तृ-

---

हेतुमण्णिजन्ते विधिरिति प्रतिषेधोऽप्ययमावित्ययं सन्निधानात्तद्विषयः । तेन चुरादिणिजन्तेऽपि भक्षयतौ प्राप्तिसत्त्वात्प्रतिषेध उपसङ्ख्यातः । भक्षयत्यन्नं बटुना । अहिंसार्थस्येति किम् । भक्षयन्ति बलीवर्दाः सस्यम् । भक्षयति

---

संख्यानम्" (वा) । जल्पति पुत्रं देवदत्तः । जल्पयति पुत्रं देवदत्तम् । विलपति पुत्रं देवदत्तः । विलापयति पुत्रं देवदत्तम् । आभाषते पुत्रं देवदत्तः । आभाषयति पुत्रं देवदत्तम् । दृशेः सर्वत्र । यद्यपि क्रियाग्रहणमथापि साधनग्रहणमथाप्युभयग्रहणं सर्वथा दृशेरुपसंख्यानम् । पश्यति रूपतर्कः कार्षापणम् । दर्शयति रूपतर्कं कार्षापणम् । यदा चायं दृशिः चक्षु-

## कर्माविवक्षायामिति । (कै)

तदविवक्षा हि द्वेधा तदन्वययोग्यधात्वर्थत्यागात् सत्येव तस्मिन्नर्थे तत्र कर्मत्वेनान्वयाविवक्षायां संबन्धित्वेनान्वयस्य विवक्षणा-द्वेति कार्याणि स्थादयः । प्रत्याहयितीनां तु सः कर्मणीत्यादिप्राप्ते । एवं वक्तुमशक्यं कृतपूर्वी कटमित्यत्र कटाविवक्षितकर्मतया भावे साधनस्य कर्तृकर्मणोरितिभाष्यादौ स्पष्टत्वात् ॥

## अकर्मकशब्दस्य च (कै)

इत्यादि तदुपपादनमप्यनुचितं कर्मसंज्ञाया अर्थसंज्ञात्वेनार्था-नामेवान्यपदार्थत्वस्यौचित्यादर्थस्यापि स्वतो नास्ति भेद इति

---

प्रतिषेधो वक्तव्यः । अत्ति देवदत्तः । आदयति देवदत्तेन । अपर आह । सर्वमेव प्रत्यवसानकार्यमदेर्न भवतीति वक्तव्यं परस्मैपदमपि । इदमेवमिष्यते ।

---

कर्तृकस्येत्यभिधानाय वहेरुपक्षेपः । परस्मैपदमिति । भा । निगरणचल-नार्थेभ्यश्चेति प्राप्तम् । वहेरिति नियन्ता सारथिः । भक्षेरिति । भा । भक्षयन्तीति हेतुमण्णिचो निषेधानुरादित्वात्ततोऽप्यण्यन्त इवेति प्राप्तिः ।

---

बलीवर्दान् सस्यम् । क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसाद्यभावात्तस्या-भक्षणात्तेषां चेतनत्वाभ्युपगमात् । शब्दः कर्मकारकं येषान्ते शब्द-कर्माणः न लिङ "कर्तरि कर्मव्यतिहार" (१ । ३ । १४) इत्यत्रैव

---

साधनके शास्त्रविषये सर्वत्र तदेतत्कथं शब्दमात्रवचनत्वे तु बुद्ध्यर्थत्वादेव सिद्धं तदेवमुभयोरपि मतयोर्दोषाभावात् भाष्यं नान्यतरः पक्षो निरस्यति । दर्शितास्तु ये शब्दक्रियाः शब्दसाधनकर्माणश्च तावपि वादविवादप्रभृत्युदा-हरति । 'अधीयते इत्यादि' । 'आशापयतीति' । 'जीवपीनां जादि'त्यादम्

दर्शनमप्यसङ्गतमेव धातूनां नानार्थत्वाच्छेदापत्तेः । तस्मादयमर्थः । किमकर्मकशब्दे कर्मपदस्य कर्मसंज्ञाप्रयोजके लक्षणया न विद्यते कर्मसंज्ञाप्रयोजकोऽर्थो येषां धातूनामित्यर्थ उत कर्मरहितार्थप्रतिपादकानामित्यर्थः ॥ लक्षणोभयत्र तुल्या नाद्य इत्याह भाष्ये

न च केचिदिति । (भा)

तथा च कर्मसंज्ञाप्रयोजकार्थरहितानामित्यर्थे सर्वेषां तदर्थसम्भवेनाकर्मकाणामित्यस्योदाहरणासम्भव इत्यर्थः । अन्त्ये ऽविवक्षितकर्मतयोदाहरणसम्भवो वाच्यः । न च कालस्य क्रियामात्रेणाकाङ्क्षिततया तदविवक्षाऽसम्भवः । आख्यातार्थकालेनैव तदाकाङ्क्षाशान्त्या बाह्यकालकर्मणो ऽविवक्षासम्भवात् । एवं च सति गत्यादि-

---

क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः । इदमेषां जग्धम् । खादि । खादति देवदत्तः । खादयति देवदत्तेन । नी । नयति देवदत्तः । नययति देव-

---

भक्षयन्ति यवानिति । भा । चेतनस्थानां प्ररोहाद्यवस्थायां यवानां भक्षणाद्धिंसा भवति । तदवस्थायां कैश्चिच्चैतन्यस्याभ्युपगमात् । परकीययवभक्षणे वा परो हिंसितो भवति । हिंसाङ्गे भक्षणेऽत्र भक्षिर्वर्तते ।

---

कर्मशब्दः क्रियापरः । गतिबुद्धिप्रत्यवसानशब्दार्थेति वक्तव्ये ऽर्थशब्दात्कर्मशब्दस्य पृथगुपादानात् अध्यापयति पाठयति माणवकं वेदम् ।

---

"अर्तिह्री" (७।३।३६) त्यादिना पुक् । निर्णयस्तु साधनकर्मणो ग्रहणं कर्मग्रहणादन्यथा गतिबुद्धिशब्दप्रत्यवसानार्थाकर्मकाणामित्येव सिद्धेः । जल्पादीनां तूपसंख्यानं कर्त्तव्यमेव । अन्यपरत्वात् । जल्पति देवदत्त इति । वचनेन बोधयतीत्यर्थः । एवमन्यत्रापि । तत्र बुद्ध्यर्थत्वादेव सिद्धम् । यद्यप्यन्या

सूत्रे तुल्यजातीयापेक्षतया नियमस्य सकर्मकविषयतया ऽकर्मक-विषये "कर्तुरीप्सिततमम्" इत्यनेन तदुपपत्तावकर्मकग्रहणं व्यर्थं स्यात्। तस्मात्सामर्थ्यं मनसि निधायाह

त एवम् इत्यादि। (भा)

एतच्च सामान्यापेक्षं ज्ञापकं शास्त्रे ऽकर्मकपदमात्रे ईदृशार्थ-ग्रहणमिति। क्व चिदित्येतद् व्याचष्टे।

द्रव्य एव कर्मणि सतीति। (कै)

सतीत्यस्य प्रतियोगिनि सतीति शेषः। एवं च कालाद्यतिरिक्त-कर्मप्रतियोगिकाभाववन्त इत्यर्थः। तादृशाश्च सर्वथा द्रव्यकर्माभाव-वन्तः शय्यादयो ऽविवक्षितकर्मकाश्चेत्युभयेऽपि प्रयोगानुसारित्वाच्च

---

दत्तेन। वहेरनियन्तृकर्तृकस्य। वा। वहेरनियन्तृकर्तृकस्येति वक्तव्यम्। वहति भारं देवदत्तः। वाहयति भारं देवदत्तेन। अनियन्तृकर्तृकस्येति किमर्थम्।

---

कालकर्मणामिति। भा। कालग्रहणेन साहचर्यात् पूर्वं सह निर्दिष्टत्वा-द्भावाध्वदेशानामपि ग्रहणम्। वक्ष्यमाणन्यायस्य तुल्यत्वाद् वा। सिद्धं त्विति। भा। तेन मासमास्यते देवदत्तेनेत्यादावकर्मकेभ्यो भावे विधीयमाना

---

जल्पतिप्रभृतीनामुपसंख्यानम्॥ जल्पयति विलापयति आभाषयति पुत्रं देवदत्तः। दृशेश्चोपसंख्यानम्॥ दर्शयति हरिं भक्तान्। यद्यपि दृशे-

---

बुद्धिरन्या बोधना उपसर्जनीभूतापि तावद्बुद्धिरस्तीति बुद्ध्यर्थत्वमस्त्येव उप-सर्जनीभूतोऽपि च गत्यादिरर्थो गृह्यते ऽन्यथा गमयतीत्यादौ गमगत्यर्थ-त्वादेवाप्रसङ्गादणिग्रहणमनर्थकं स्यादिति। अस्तु चेतनविषये एवमचेतन-विषये कथम्। यत्किंचिज्जल्पति तमन्यो जल्पयति नह्यत्र प्रबोधनाप्यस्ति।

विवक्षायाः। यवादिष्वविवक्षया नाकर्मकत्वनिबन्धनकार्याणि। न चैवमपि तुल्यजातीयतया सकर्मकविषयनियमेन सिद्धावकर्मकग्रहणं व्यर्थं सकर्मकत्वेन कालादिकर्मकाणामपि ग्रहणेन तद्विषयनियमस्याप्यापत्तौ मासमासयति देवदत्तमित्यसिद्ध्यापत्तेः। प्रतियोगिसमर्थककर्मपदेन तु न कालादीनां ग्रहणमेतत्सामर्थ्यादिति न दोषः॥ वस्तुतो भाष्ये

**कश्चिद्** (भा)

इत्यस्य कालादीनां कर्मत्वप्रयोजकव्याप्यादिरहितेऽर्थ इत्यर्थः। कैयटोक्तव्याख्यायां हि कालभावाध्वभिरिति पूर्वं तृतीयानिर्देशात् केनचिदित्येव वदेत्। एवं च तदवस्थायामकर्मकत्वेनाकर्मकत्व-

---

वहन्ति बलीवर्दा यवान्। वाहयति बलीवर्दान्यवान्। भक्षेरहिंसार्थस्य। वा। भक्षेरहिंसार्थस्येति वक्तव्यम्॥ भक्षयति पिण्डीन् देवदत्तः। भक्षयति पिण्डीन्

---

कादयः सिद्धा भवन्ति। स्वाश्रयं चाव्याहरं कर्मत्वम्। तेन मास आस्यते देवदत्तेनेत्यादौ कर्मण्यपि भवन्ति। न च केचिदिति। भा। ननु क्रियामात्रविवक्षायां कालादीनामविवक्षितत्वात् तैरप्यकर्मकत्वं भवत्येव। यथा

---

ज्ञानसामान्यपरत्वे बुद्ध्यर्थत्वादेव सिद्धं तथापि ज्ञानविशेषार्थतायां न सिध्यतीत्युपसंख्यानमारब्धम्। श्रावयति श्लोकं देवदत्तमिति तु शब्द-

---

'अकर्मकाणामिति'। कालभावाध्वगन्तव्यदेशव्यतिरिक्तकर्मरहितानामित्यर्थोऽत्र ग्राह्यः अन्यथा मासमास्ते देवदत्तः। मासमासयति देवदत्तम्। गोदोहमासयति। क्रोशमासयति। कुरूनासयतीत्यत्र न स्यात् कालादिकर्मणा सकर्मकत्वात्। एवं "णः कर्मणि च" (३।४।६६) त्वादावपि यत्राकर्मकग्रहणं तत्र

व्यवहारो धातूनामकर्मकपदव्यसामर्थ्याच्च तदवस्थायां कर्मरहिता गृह्यन्ते इति बोध्यम् ॥ भाष्ये

न चैतेनेति। (भा)

कालादिनेत्यर्थः ॥ तद्व्याचष्टे

सम्भवेति। (कै)

कालादीनां तु व्यभिचारो नास्त्युक्तरीत्या व्यापनादिरूपधात्वर्थे पूर्वके स्वार्थे सकर्मकाणामपि वृत्तेस्तेषामपि तत्सम्भवादिति भावः। अयं भावः। कालादेरपि प्रतियोगिभूतकर्मपदेन कर्मग्रहणे ऽकर्मको धातुरसम्भवीति सामर्थ्याद्द्रव्यकर्मण एव प्रतियोगित्वेन ग्रहणमिति ॥ ननु तदविवक्षायां तत्सम्भव इत्यत आह

---

देवदत्तेन। अहिंसार्थस्येति किमर्थम्। भक्षयन्ति यवान्बलीवर्दाः। भक्षयति बलीवर्दान् यवान्। अकर्मकग्रहणे कालकर्मणामुपसंख्यानम्। वा। अकर्मक-

---

ग्रेते देवदत्तो न भुङ्क्ते इति। समाङः। अत्यन्ताविद्यमानकर्माणो धातवो-ऽकर्मकग्रहणेन गृह्यन्ते न त्वविवक्षितकर्माणः। अन्यथा पचादीनामपि कर्माविवक्षायामकर्मकत्वनिबन्धनानि कार्याणि भवेयुः। अकर्मकशब्दस्य

---

कर्मत्वाश्रिसद्रम्। शब्दक्रियाणामिति व्याख्याने तु ह्वयतेरुपसंख्येयं स्यात्। ह्वयतिक्रन्दत्योश्च प्रतिषेधं स्यात्। ह्वाययति क्रन्दयति वा देव-

---

सर्वत्र ण्यन्तेन मासमास्यते देवदत्तेनेत्यादौ भावे लादयः सिद्धा भवन्ति। उक्तञ्च सिद्धं तु कालकर्मणामकर्मकवद्वचनादिति। कालग्रहणमुपलक्षणं तत्करणाद्ध्वाध्वमपि भवति मास आस्यते देवदत्तेन मासकर्मणि णौ भवति स तद्वकर्मकवचनाद् भावे वक्तव्यो न वक्तव्यो ऽकर्मकाणामित्युच्यते न च

वस्तुस्थित्येति । (कै)

धातुरेवान्यपदार्थ इति भावः ॥ वस्तुतो व्याप्त्यादिविवक्षायामप्यकर्मकत्वोपपत्तिर्दर्श्यते ।

अथवेति । (भ()

भाष्येणोपपत्तिरुक्तैव । न चैतेनेत्यादिना भाष्येण व्यभिचाराभाव उच्यते पूर्वस्माद्भेदव्युत्पादनायान्तरफलतात्पर्यकतया योजयति ।

अकर्मकेति ॥ (कै)

पूर्वं क्रियाया इति । (कै)

तदुद्देशेनैव क्रियाप्रवृत्तेरिति भावः ॥

---

ग्रहणे कालकर्मणामुपसंख्यानं कर्तव्यम्। मासमास्ते देवदत्तः। मासमासयति देवदत्तम्। मासं शेते देवदत्तः। मासं शाययति देवदत्तम्। सिद्धं तु काल-

---

च धातवोऽन्यपदार्थत्वेनाश्रीयन्ते न त्वर्थाः। अर्थाश्रयणे हि कर्माविवक्षायामर्थस्याकर्मकव्यपदेशः स्यात्। धातुष्वाश्रीयमाणेषु क्वचिदपि कर्मसंबन्धदर्शनेन साहूप्यात्त एवैत इति तत्त्वप्रत्ययविषया नाकर्मत्वेन व्यपदिश्यन्ते।

---

दत्तेन। दृशेस्तूभयथाप्युपसंख्येयं स्यात्। शब्दायतेस्तूभयथा प्रतिषेध्यम्। अकर्मकत्वादपि ह्यत्र प्रसंगः। शब्दलक्षणस्य कर्मणोऽन्तर्भावात् कर्मान्तरायोगाच्च शब्दाययति देवदत्तेन। अकर्मकग्रहणेन तु येषां कालादिभिन्नं

---

कालादिभिः केचिदकर्मकाः कालादिभिरप्यकर्मका यदा ते न विवक्ष्यन्ते तद् यथा शेते देवदत्तो न भुङ्क्ते इति। नाप्यविवक्षितकर्माणोऽकर्मकाः किं तर्हि ये ऽत्यन्ताविद्यमानकर्माणो धातवो ऽकर्मकाः नार्थाः। यस्य धातोः स्वरूपावधिकमकर्मकत्वं न च कालादिकर्मणा स्वरूपाधिकमकर्मकत्वं

'शक्तिप्रमाणेति । (कै)

द्रव्यधर्मरूपात् शब्दादेः सकाशात् क्रिया सकालयोगः प्रवर्त्तते इत्यर्थः । तत्र शक्तेर्यथा वसन्तादिकालयोगः पल्लवजन्मादेः प्रमाणवशाद् यथा दीर्घशष्कुल्यादिचर्वणस्य दण्डादिकालयोगः सद्भाववशाद् यथा नानाद्रव्यकर्मकपाकस्य सकर्मकपदे तु कालादेः कर्मसंज्ञाविधानसामर्थ्यात् कालादिकर्मणोऽपि ग्रहणम् । अत एवास्यते मास इति कर्मणि लः सिध्यति । अत्रैतत्सूत्रस्याकर्मकपदवत्सकर्मकपदे कालादिकर्मणोऽग्रहणे तात्पर्यग्राहकाभावादिति तत्त्वम् । "न

---

१ "शक्तिप्रमाणेति" इत्यारभ्य "इति दिक्" इत्यन्तं नास्ति क पुस्तके ॥

---

कर्मणामकर्मकवद्वचनात् । वा । सिद्धमेतत् । कथम् । कालकर्मका अकर्मकवद्भवन्तीति वक्तव्यम् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । अकर्मकाणामित्युच्यते ।

---

अर्थास्तु कारकादिभेदाद्भिन्ना एवेत्यन्ये सकर्मका अन्य एवाकर्मका इति स्याद् व्यपदेशः । यदा त्वर्थस्यापि स्वतो नास्ति भेद इति दर्शनं तदार्थैक्य-प्यन्यपदार्थैक्यदोषः । क्वचिदिति । भा । द्रव्य एव कर्मणि सत्यकर्मका इत्यर्थः ।

---

कर्म न सम्भवति ते गृह्यन्ते । न त्वविवक्षितकर्माणोऽपि । तेन मासमासयति देवदत्तमित्यादौ कर्मत्वं सिद्धम् । देवदत्तेन पाचयतीत्यादौ च न भवति । गत्यर्थाकर्मकेति सूत्रेऽप्येवम् । अत एवाविवक्षितकर्मकेभ्यः पचिददातिप्रभृ-

---

कस्यापि सम्भवतीति सामर्थ्यात्तद्व्यतिरिक्तेन कर्मणाऽकर्मकत्वं विधीयते । किमर्थं पुनरिदमुच्यते । यावता स्वव्यापारे स्वतन्त्रस्यापि प्रयोज्यस्य प्रयोजकव्यापारे विवक्षिते तेन प्रधानभूतेनाप्यमानत्वाद् अन्तरङ्गत्वेन पूर्वप्रवृत्तामपि कर्तृसंज्ञां बाधित्वा कर्मसंज्ञा भविष्यतीति । एवं तर्हि

येतत्कर्मेति" भाष्येण द्रव्यकर्मणो व्यभिचार एव दर्श्यते न लक्ष्यत्वमिति चिन्त्यम्। वस्तुतो द्वितीयपक्षोक्तमेवार्थं भङ्ग्यन्तरेणाह

अथवेति। (भा)

न च तेनेत्यादेः कश्चिदप्यकर्मक एतेन कर्मणा रहितो नेत्यर्थेन सकर्मकाणामेतत्कर्माभावादेषामपि व्यभिचारित्वमिति कश्चिद् भ्राम्येत्तद्भ्रमनिवृत्त्यर्थं तस्यार्थस्य पुनः कथनम् एवं चाकर्मकपदेन व्यभिचारिद्रव्यकर्मरहितानामित्यर्थबोधनं मासादिकर्मसत्त्वेऽप्यकर्मकत्वमित्येतत्पक्षेऽर्थः। न त्वेतद्भाष्यबलेनात्यन्ताविद्यमानकर्मकाणामेवात्र ग्रहणमिति वक्तुं युक्तम्। "कालाध्वनोः" इति सूत्रे "लः

---

न च केचित्कालभावाध्वभिरकर्मकाः त एवं विज्ञास्यामः क्वचिद्ये अकर्मका इति। अथ वा येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति तेनाकर्मकाणाम्।

---

अथवा येनेति। संभवव्यभिचाराभ्यां विशेषणविशेष्यभावे सर्वत्र वस्तुस्थित्याऽविवक्षिता अपि कालादयः सन्तीति न तैः केचिदकर्मका इत्यर्थः। अथवेति। भा। अकर्मकश्रुत्यान्तरङ्गमप्यकर्म निषिध्यते न बहिरङ्गं कालादिकर्म।

---

सिध्यः कर्तरि क्तो न। अन्यथा पक्ववान् दत्तवानित्यर्थे पक्वो दत्त इति स्यात्। "लः कर्मणीति" सूत्रे तु अविवक्षितकर्मणां असम्भवत्कर्मणां वा ग्रहणम्। अत एवाविवक्षितकर्मणां न भावे लादय इतीह सूत्रे वदतो

---

सिद्धे सत्यारम्भो नियमार्थः। प्रयोजकव्यापारेणाप्यमानस्य यदि भवति गत्यर्थादीनामेव नान्येषामिति। तेन पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यत्र पूर्वं प्रवृत्ताया एव कर्तृसंज्ञाया अवस्थानात् कर्तरि तृतीया भवति। षष्ठी च

कर्मणीति" सूत्रस्थाकर्मकपदविषयेऽपीदृशस्यैव भाष्यस्य सत्त्वेन तत्रात्यन्ताविद्यमानकर्मकाणामेव ग्रहणापत्तौ पूर्वोक्तहतपूर्वीत्यादिभाष्यासङ्गत्यापत्तेः। किं चात्यन्ताविद्यमानकर्मकाणामत्र ग्रहणमिति पक्षे लुनातेर्निवृत्तप्रेषणाण्णिचि लावयति केदारं देवदत्त इति "णेरणाविति" (१ । ३ । ६७) सूत्रस्थकैयटप्रयोगे केदारस्य कर्मत्वानापत्तिरिति दिक् ॥

---

न चैतेन कर्मणा कश्चिदप्यकर्मकः। अथवा यत्कर्म भवति न च भवति तेनाकर्मकाणाम्। न चैतत् कर्म क्वचिदपि न भवति ॥

---

तथाहि। पूर्वं क्रियाया द्रव्याकर्मणा सह संबन्धो भवति पश्चात् कालादिभिः परिमाणनिर्धारणाय। तथा चोक्तम्। "शक्तिप्रमाणसंख्यादेर्द्रव्यधर्मात् प्रवर्तते। क्रियासु कालयोगोऽतः प्राग्योगो द्रव्यकर्मणा" इति। सूत्रं चेदं नियमार्थमिति "आकडार"सूत्र उक्तं तत एवावधार्यम् ॥

---

"णेरणावि" (१ । ३ । ६७) अत्र तु नेह पच्यत इति भावे लकार इति ब्रुवतो हरदत्तस्य मतभेदपरत्वान्न पूर्वापरविरोध इति दिक् ॥

---

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः।
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥

इति। कर्तुः स्वधर्मस्तृतीया। अथ कथम्।

"अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक"

इति। स्वतन्त्राः कवयः। यद्वा सुतां प्रति किंचिदुद्वाहविषये ग्राहयितुं बोधयितुं न शशाकेत्येवं व्याख्येयम्। तत्र बुध्यर्थत्वात् सिद्धम् ॥

# ह्रक्रोरन्यतरस्याम्।१।४।५३॥

इत्यथोक्तमिति। (कै)

वार्तिककृतेति शेषः॥ भाष्ये

कथं चाचात्मनेपदमिति। (भा)

एतद्वार्त्तिकोदाहरणयोरित्यर्थः॥ अभिवादयतावणौ कर्मणो णौ कर्तृत्वाभावाद्दर्शयतावणौ कर्मातिरिक्तकर्मणः सत्त्वादिति प्रश्नः।

---

ह्रक्रोरन्यतरस्याम्॥१।४।५३॥ ह्रक्रोर्वावचनेऽभिवादिदृशोरात्मनेपदउपसंख्यानम्। वा। ह्रक्रोर्वावचने अभिवादिदृशोरात्मनेपदउपसंख्यानं

---

ह्रक्रोरन्यतरस्याम्॥१।४।५३॥ उभयत्र विभाषेयमिति "नवेति

---

ह्रक्रोरन्यतरस्याम्।१।४।५३॥ हा च का चेति विग्रहः। ऊच कुश्चेति वा। अनयोरणौ कर्त्ता णौ वा कर्म स्यात्। नवेतिविभाषासूत्रे उभयत्रविभाषाखिदं वार्तिककृता पठितम्। तथाहि। अभ्यवहारयति माणव-

---

ह्रक्रोरन्यतरस्याम् १।४।५३॥ गत्यर्थादयो निवृत्ताः। तेनोभयत्र विभाषेयम्। यदा हरतिर्गतौ वर्तते। हरति भारं देवदत्त इति। अभ्यवहारे वा। अभ्यवहरति माणवकमोदनमिति। करोतिश्चायमकर्मकः।

एकस्येति । (भा)

आद्यान्यस्य दृशेरित्यर्थः । अणौ कर्तृकर्मातिरिक्तकर्माभावो विवक्षित इति भावः ॥

---

कर्तव्यम् । अभिवदति गुरुं देवदत्तः । अभिवादयते गुरुं देवदत्तेन । अभि-वादयते गुरुं देवदत्तम् । पश्यन्ति भृत्या राजानं दर्शयते भृत्यै राजा दर्शयते

---

विभाषे" ( १ । १ । ४४ ) त्यत्रोक्तम् । अभिवादिदृशोरिति । भा । अभि-

---

कमोदनं माणवकेन वेत्यत्र भ्रत्यवसानार्थत्वात्प्राप्ते विकुर्वते छात्राः विका-रयति छात्रान् छात्रैर्वेत्यत्राकर्मकत्वात्प्राप्ते इतरत्र त्वप्राप्ते विभाषेयम् । अभि-वादिदृशोरात्मनेपदे वेति वक्तव्यम् । अभिवादयतेरप्राप्ते विभाषा । दृशेस्तु बुद्ध्याद्यर्थत्वादुपसङ्ख्यानाद्वा प्राप्ते । अभिवादयति गुरुं देवदत्तः अभि-वादयते गुरुं देवदत्तं देवदत्तेन वा । णिचश्चेत्यात्मनेपदम् । परस्मैपदे तु

---

ओदनस्य पूर्णाः छात्राः विकुर्वतइति । तदा पूर्वेण प्राप्ते । यदा हरतिः स्तेयादौ वर्तते । हरति सुवर्णं चोर इति । करोतिश्च सकर्मकस्तदा प्राप्ते । नन्वनन्तरस्य विधिर्वा भवति प्रतिषेधो वा इति नियमस्यैव विकल्पो युक्तः । गत्यर्थादिष्वेवेति योऽयं नियमः स हृक्रोरन्यतरस्यामिति । ततश्च पक्षे नियमाभावात् गत्याद्यर्थादन्यत्र पक्षे कर्मत्वं पक्षान्तरे च कर्तृत्वं भवतु गत्याद्यर्थत्वे तु नित्यवत् कर्मसंज्ञा प्राप्नोति । एवं तर्हि वार्तिककारेणोभयत्रविभाषात्वियं पठिता तत्सामर्थ्यादनन्तरस्य

अपरस्येति । (भा)

भाष्यस्थाभिवादयतेरित्यर्थः । उक्त आशयः ॥

---

भृत्यान् राजा । कथं चात्रात्मनेपदम् । एकस्य "णेरणाविति" (१।३।६७) अपरस्य णिचश्चेति (१।३।७४) ॥

---

वादयतावप्राप्ता कर्मसंज्ञा पक्षे विधीयते दृशेर्बुद्ध्यर्थत्वान्नित्यं प्राप्तौ पक्षे निवर्त्यते ॥

---

अभिवादयति गुरुं देवदत्तेन । दर्शयते राजानं भृत्यान् भृत्यैर्वा । कर्मसंज्ञाभावपक्षे कर्मान्तरस्याभावाण्णेरणावित्यात्मनेपदमन्यत्र तु णिचश्चेतीति प्राहुः । वस्तुतस्तु णिचश्चेत्येव युक्तम् । णेरणावित्यस्य तु नायं विषयः । णिज्वाच्यप्रवृत्तिभेदादिति तत्रैवोपपादितम् ॥

---

विधिरिति नाश्रीयते । अविशेषेण हृक्रोर्विकल्पः प्रवर्तते । 'अभिवादिदृशोरिति' । अभिवादयतेरप्राप्ते विभाषा दृशेर्बुद्ध्यर्थत्वात् दृशेः सर्वत्रेति वा प्राप्ते । 'अभिवादयत इति' । 'णिचश्चे' त्यात्मनेपदं परस्मैपदे त्वभिवादयति गुरुं देवदत्तेनेति कर्तृसंज्ञैव भवति । 'दर्शयत इति' । कर्मसंज्ञाभावपक्षे कर्मान्तरस्याभावात् णेरणावित्यात्मनेपदमन्यत्र तु णिचश्चेति ॥

# स्वतन्त्रः कर्ता । १ । ४ । ५४ ॥

भाष्ये

स्वं तन्त्रमिति । (भा)

विततास्तन्तवस्तन्त्रं किमयं बहुव्रीहिरिति प्रश्नतात्पर्यं विशेष-
विहितत्वादित्यभ्युच्चयः । निरवकाशत्वाभावात् ॥

अपादानादिसंज्ञेति । (कै)

तन्तुवायाद् गृह्णातीत्यादौ ब्राह्मणादेर्नेति । तन्तुवाय इत्यस्य भाष्यस्य तत्रैवेत्यर्थ इति भावः ॥

---

स्वतन्त्रः कर्ता । १ । ४ । ५४ ॥ तृतीयायाः कर्तृकरणे अर्थः "कर्तृ-करणयोस्तृतीया" (२ । ३ । १८) इति तृतीयेति सूत्रात् । कर्तृत्वं च कर्तृसंज्ञाबोधित कर्तृत्वशक्तिमत्त्वम् । सा शक्तिश्च कर्तृप्रत्ययसमभिव्याहारे व्यापारत्वावच्छेदकसम्बन्धेन तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रय-

---

स्वतन्त्रः कर्ता ॥ १ । ४ । ५४ ॥ किं यस्य स्वं तन्त्रं स स्वतन्त्रः । किञ्चातः । तन्तुवाये प्राप्नोति । नैष दोषः । अयं तन्त्रशब्दो ऽस्त्येव विताने वर्तते । तद्य-

---

स्वतन्त्रः कर्ता । १ । ४ । ५४ ॥ किं यस्येति । भा । तन्तुवायस्य स्वतन्त्र-शब्दवाच्यत्वादिदोषानुपादानाच्च प्रश्नः । तन्तुवाय इति । भा । यद्यपि तन्तुवायो

---

स्वतन्त्रः कर्ता । १ । ४ । ५४ ॥ क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता

---

स्वतन्त्रः कर्ता १ । ४ । ५४ ॥ स्वतन्त्रशब्दोऽयं तन्तुवायवचनोऽप्यस्ति स्वं तन्त्रमस्य स्वतन्त्रः । विततास्तन्तवस्तन्त्रमित्युच्यते । अस्ति च स्वा-

वितन्यत इति । (कै)

स च सन्निवेशविशेषविशिष्टस्तन्तुसमूहः स्वतन्त्र उच्यत इति । यथा कथं चिद् व्युत्पन्नो ऽयं प्रधानार्थे रूढ इति भावः ॥ प्राधान्ये वर्त्तमानस्यैव ग्रहणं कुत इत्यत आह

तत्रेति । (कै)

क्रियासिद्धौ यः स्वतन्त्र इत्यर्थे प्राधान्यस्यैवान्वययोग्यत्वम् ॥

---

तद्धात्वर्थाश्रये वर्त्तते। "स्वतन्त्रः कर्त्ता" (१ । ४ । ५४) इति सूत्रस्वरसात् । उक्ततद्धात्वर्थाश्रयत्वमेव स्वातन्त्र्यम् । स्थाल्यास्ये यत्ने कथ्यमाने स्थाली स्वतन्त्रेति "कारके" (१ । ४ । २३) इति सूत्रे भाष्ये उक्तेः । कालिकादिसम्बन्धेन व्यापाराश्रये ऽतिप्रसङ्गवारणाय सम्बन्धविशेषनिवेशः । एतेन सामग्रीसाध्यायां क्रियायां स्वस्वव्यापारे स्वातन्त्र्यात् सूत्रे स्वतन्त्र इत्यव्यावर्त्तकमित्यपास्तम् । प्रागुक्तस्वातन्त्र्यस्य युगपत् सर्वेषु अभावात् । रूपवन्तं गच्छतीत्यादावुत्तरदेशसंयोगरूपे काले रूपादौ च न तादृशधात्वर्थत्वमिति तदाश्रये रूपवति नातिव्याप्तिः । कर्तृप्रत्ययसमभिव्याहारे इत्यनेन पक्वास्तण्डुला देवदत्तेन इत्यादौ फलस्य विशेष्यत्वेऽपि देवदत्तस्य कर्तृत्व-

---

था । आस्तीर्णं तन्त्रं प्रोतं तन्त्रमिति । वितानमिति गम्यते । अस्ति प्राधान्ये

---

वयति सुब्रह्म इत्यादौ तन्तुवायस्य कर्तृसंज्ञेष्यते तथापि विशेषविहितत्वात् परत्वाच्चापादानादि संज्ञाविषयेऽपि सा प्राप्नोति । ब्राह्मणोऽधीत इत्यादौ च

---

स्यात् । धातूपात्तव्यापाराश्रयत्वं स्वातन्त्र्यम् । आह च । "धातुनोक्तक्रिये

---

धारणाश्रये पुरुषे वर्त्तते । साधारणं भवेत्तन्त्रं स्वं धनं तन्त्रं साधारणमस्य स्वतन्त्रः । अस्ति च प्रधानवचनः स्व आत्मा तन्त्रं प्रधानमस्य

तन्तुवायरूपतयेति। (कै)

कारक इत्यनेन क्रियामात्रस्योपस्थितेस्तस्मिंश्च तत्त्वेनानुपयोग इत्यर्थः। बहुलप्रयुक्तसंस्कारानुरोधाच्च प्रधानस्यैव ग्रहणमित्यपि बोध्यम्॥ ननु किं प्राधान्यं कर्तुरित्यत आह

अनेकेति। (कै)

सकलकारकप्रवर्त्तकत्वादिति भावः॥ नन्वेवं स्थाली पचतीत्यादि न स्यादत आह

यस्य धातुनेति॥ (कै)

---

सिद्धिः। तत्र सति सम्भवे तद्धात्वर्थकृतिव्यापाराभयाश्रयत्वसमानाधिकरण्यैव कर्तृताप्रसक्तिरतो गुरुतरभारयोस्तोलनादिविषयकयत्नसत्वेऽपि तत्क्रियाया अनिष्पत्तौ न तत्र कर्तृत्वव्यवहारः। तत्र यत्नसत्वेन मानमित्यन्ये। धात्वर्थकृतिश्च साध्यत्वाख्यविषयतया क्रिया विषयैव ग्राह्या। अतो मत्तोभूतं न तु मयाकृतमिति व्यवहारस्य नानुपपत्तिः। नान्तरीयककृतिसाध्यपिष्टकमध्यस्थशर्करा भोक्तरि च न तत्कर्तृत्वव्यवहारः। एतेन

---

वर्तते। तद्यथा। स्वतन्त्रो ऽसौ ब्राह्मण इत्युच्यते स्वप्रधान इति गम्यते।

---

ब्राह्मणादेर्न प्राप्नोतीति दोषः। वितानइति। भा। वितन्यत इति विताननम्। स्वतन्त्रोऽसौ ब्राह्मण इति। स्वशब्द आत्मवाची। स आत्मा तन्त्रं प्रधानं

---

नित्यं कारके कर्तृतेव्यत इति" कर्मकर्तर्यप्यस्तीदम्। फलव्यापारयोर्वैयधि-

---

स्वतन्त्र इति। तत्राश्रययोर्ग्रहणे तयोरपादानादिविषये कर्तृसंज्ञा स्यात्परत्वादित्यविहितत्वाच्च तन्तुवायादागच्छतीत्यादौ। इह च न स्यात्

## अगुणभावेन। (कै)

प्राधान्येन॥

## स्वतन्त्र इति। (कै)

स्वातन्त्र्येण विवक्षित इत्यर्थः। तच्चारोपितमनारोपितं वेत्यन्यत्। कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थव्यापाराश्रयो हि सः। तादृश एव च सकलकारकप्रवर्त्तकः प्रायेण कर्मप्रत्ययसमभिव्याहारे फलव्यापारयोर्व्यत्यासदर्शनात्समभिव्याहारे इत्यन्तमित्यादिनिरूपितं मञ्जूषायाम्॥ ननु हेतुमच्छब्देन प्रयोजकव्यापार उच्यते न च तत्र संज्ञेष्यते ऽत आह

---

कृतिर्नाम न काचिद्व्यापारातिरिक्तेत्ययाशयम्। आन्तरचेष्टा विशेष एव वा कृतिरिति दिक्। तत्र व्यापारस्य धातुत एव लाभात्। कर्तृत्वशक्तिमत्त्वेन कर्त्ता तृतीयार्थस्तत्र प्रकृत्यर्थस्याभेदान्वयः। स च धात्वर्थे आधेयतयान्वेति तेन चैत्रेण सुप्यते इत्यत्र चैत्राभिन्न कर्तृवृत्तिस्वाप इति बोध इति प्राहुः। द्वितीयप्रकारस्तोक्तदिशा कर्तृचैत्रीयः स्वाप इति चैत्र कर्तृकः स्वाप इति

---

तन्त्रः प्राधान्ये वर्तते तन्त्रशब्दस्येदं ग्रहणम्। स्वतन्त्रस्य कर्तृसंज्ञायां

---

यस्य स स्वतन्त्र उच्यते। तत्र कारकाधिकारात् क्रियासिद्धौ प्राधान्यस्यो- प्रयोगात्तन्तुवायस्यापि तन्तुवायरूपतया तत्रानुपयोगात् प्रधानवाचिनः

---

करणभावस्य यथावौत्सर्गिकस्य परं त्यागः। विग्रहविक्लृप्तिपक्षे विशिष्ट-

---

हेतुत्वो 'कृष्णवीति इत्यसाधयोर्ग्रहणो दोषं दृष्ट्वा तृतीयमर्थमाश्रित्याह। 'स्वतन्त्र इति'। 'प्रधानभूत उच्यत इति'। स्वतन्त्रशब्दस्य तत्रैव प्रसिद्ध-

**प्रयोज्य इति। (कै)**

स एवात्र हेतुमच्छब्दार्थत्वेन विवक्षित इत्यर्थः ॥

**स्वातन्त्र्यमिति। (कै)**

उद्भूतमिति शेषः ॥ दूषणान्तरमाह

**तत्प्रयोजक इति। (कै)**

तत्र हि यत्पदेन स्वतन्त्र एव पूर्वसूत्रोपात्तः परामृश्यते ॥

---

बोध इत्युचितम्। यत्तु तत् तत् क्रियानुकूलकृत्याश्रयः कर्त्ता। कृञः कृत्यर्थकत्वेन कृप्रकृतिकतृचा तथैव लाभात्। तत्राश्रयस्य प्रकृत्यालाभात् कृतिस्तृतीयार्थ इति। तन्न। कृतेरपि धातुलभ्यतया उक्तत्वात्। रथेन गम्यते इत्यादावचेतने ऽसम्भवाच्च। विभक्तौ लक्षणा नौचित्यस्य प्रागेव निवेदितत्वात् तत्राश्रयलक्षणेत्युक्तं कृञः कृतिमात्रवाचकत्वाभावाच्चेति दिक्। यत्तु धात्वर्थश्चेतनमात्र वर्त्तेव। तत्राचेतनस्य कर्त्तृत्वं चेतनत्वारोपेण तन्निष्ठक्रियारोपेणैव वेति "दामहायनान्ताच्च" ( ४ । १ । २७ ) इति सूत्रे भाष्ये स्पष्टम्। परे तु तत्तद्धात्वर्थीयकारकचक्रप्रयोक्तृत्वं सूत्रे स्वातन्त्र्यम्। तदुक्तं "कारक" ( १ । ४ । २३ ) इति सूत्रे भाष्ये प्रधानेन समवाये स्थाली परतन्त्राव्यवाये

---

हेतुमत्युपसंख्यानमस्वतन्त्रत्वात्। वा। स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युप

---

स्वतन्त्रशब्दस्येह ग्रहणम्। अनेककारकसाध्यायामपि क्रियायां यथा कस्यचित् स्वातन्त्र्यं तथा "कारक"सूत्रे प्रतिपादितम्। यस्य धातुना व्यापारो

---

ऽभिधीयते चेदं तुल्यम्। निष्कृष्टप्रेषणं कर्म स्वक्रियावयवे स्थितमिति पक्षे तु

---

तरत्वादिति भावः। किं च कारकाधिकारात् क्रियाविषयं स्वातन्त्र्यं गृह्यते न च वस्तुवाचकशब्दवाचकतया क्रियासामुपयुज्यते किं तर्हि म-

क्रियासिद्धाविति । (कै)

स्वक्रियासिद्धावित्यर्थः । अयं भावः । स्वक्रियाकारकप्रवर्त्तकत्वरूपस्वातन्त्र्यमस्त्यस्यैव परप्रेर्यत्वेऽपि ॥ ननु प्रेरणायाः क्रियाविषयत्वात्कथमकुर्वति कारयतीति प्रयोगो ऽत आह

यदीति । (कै)

साधनान्तरविनियोगेन क्रियासाधकत्वमेव हि स्वातन्त्र्यमूले आदिपदार्थः क इति चिन्त्यम् ॥

---

स्वतन्त्रा किंपुनः प्रधानं कर्त्ता कथं ज्ञायते कर्त्ता प्रधानमियत् सर्वेषु कारकेषु सन्निहितेषु कर्त्ता प्रवर्त्तयिता भवतीति । एवं स्वेच्छाधान प्रवृत्तिनिवृत्तिकत्वमपि स्वातन्त्र्यं तच्च प्रयोजकसन्निधानेऽपि प्रयोज्यस्य । तत् सन्निधानेऽपि स्वार्थसत्वे प्रवृत्तेस्तदभावेऽप्रवृत्तेश्च । एतच्च "स्वतन्त्रः कर्त्ता" इति सूत्रे भाष्ये । तत्रारोपितमनारोपितं च संज्ञा निमित्तम् । आद्यं स्थाल्यादौ । अन्त्यं पुरुषे । यस्य च स्वतन्त्रविवक्षा तद्व्यापार एव च धातुना प्राधान्येनोच्यते शब्दशक्तिस्वभावात् । स्थाली स्वतन्त्रेति भाष्ये आरोपित स्वतन्त्रवतीत्यर्थः । तत्वं विना तद्व्यापारे धातोः प्राधान्येन वृत्त्यसम्भवात् । प्रधानधात्वर्थव्यापाराश्रयत्वमेव न स्वतन्त्रत्वम् । स्वतन्त्रपदस्य तत्रापरिभाष-

---

संख्यानं कर्तव्यम् । पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति । किं पुनः कारणं न

---

ऽगुणभावेनोच्यते सर्वास्तौ स्वतन्त्र इत्येतदपि तत्रैव भाष्यस्थता प्रतिपादितम् ।

हेतुमतीति । भा । प्रयोज्यइत्यर्थः । यथा कर्तृसन्निधौ करणादीनां नास्ति

---

प्रधानभूतधात्वर्थ एवेह क्रिया धातुत्वं तु भूतपूर्वभावनार्थत्वात् । एतेन

---

धानतयैवेति तदाचिन एव ग्रहणं युक्तम् । यदि प्रधानभूत उच्यते एवं सत्यप्रधानापेक्षत्वात् प्रधानभावस्य यत्राधिकरणादीन्यप्रधानानि कारकाणि

व्यपदिश्येतेति। (वै)

तदापि तस्यौपसंख्यानिककर्तृत्वेन कर्तुः प्रयोजकत्वात्तस्य हेतुत्वे णिजापत्तिः। एवं चोपसंख्यानमतिव्यापकमिति भावः॥

भाष्ये

न चेदमकुर्वति तस्मिन् कारयतीत्येतद्भवति (भा)

इत्यनन्तरं किं तु कुर्वत्येवेति शेषः॥

---

णात्। लोके उक्तार्थयोरेव तत्प्रवृत्तेरिति। अत एव प्रयोज्यस्य स्वतन्त्रत्वात्। कर्तृसंज्ञा न प्राप्नोतीति पूर्वपक्षे तस्यापि स्वेच्छाधीनप्रवृत्तिकत्वरूपं स्वातन्त्र्यं साधितं कर्तृसंज्ञासूत्रे भाष्ये इति दिक्॥ हरिरप्याह—

"प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात्॥
अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात्।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरुच्यते॥"

---

सिध्यति। अस्वतन्त्रत्वात्। न वा स्वातन्त्र्याद् इतरथा ह्यकुर्वत्यपि कारयतीति

---

स्वातन्त्र्यं तथा प्रयोजकसन्निधौ प्रयोज्यस्य पारतन्त्र्यात् स्वातन्त्र्याभावात् कर्तृसंज्ञाया अप्रसक्तात् पाचयत्योदनं देवदत्तेनेति कर्तृतृतीया न प्राप्नोति। तत्प्रयोजक इत्यत्र च तच्छब्देन परामर्शो नोपपद्यते। न वेति। भा। प्रयो-

---

कारकाणां क्रियान्वयनियमोऽपि द्वेधा व्याख्यातः। देवदत्तः पचति। स्थाली

---

पचति काष्ठैः स्थाल्यामोदनं पचतीति अत्रैव स्यात् न त्वाद्ये प्रेत इत्यादावित्याशङ्क्य प्राधान्येनागुणभावो लभ्यतइति दर्शयति। 'अगुणीभूत इति'। तेन यस्य गुणभावो नास्ति स कर्ता कारकान्तराविवक्षायामपि

स्वतन्त्रो ऽसाविति । (भा)

असावुपसंख्यानलभ्यकर्तृसंज्ञकः स्वतन्त्र इत्यर्थः । एवं चोपसंख्या-नातिप्रसङ्गवारणाय वार्त्तिकेऽपि स्वतन्त्रपदमनुवर्त्त्य तत्सामर्थ्या-द्गौणार्थकत्वमाश्रित्य कुर्वतः स्वतन्त्रत्वात्तस्यैव कर्तृसंज्ञा नाकुर्वत इति वाच्यमित्याह

शक्यं तावदिति । (भा)

एवं च सूत्र एव गौणमुख्यसाधारणस्वतन्त्रपदार्थमाश्रित्य वार्त्तिकं न कार्यमिति भावः तदाह

उपसंख्यानवादीति ॥ (कै)

---

करणादिव्यापारात् पूर्वमेव करणादिसंपादकतया शक्तिमत्त्वेन कर-णादीनामात्माधीनत्वसंपादनेन च तेषां तदायत्तव्यापारवत्त्वेनातिप्रवृ-त्तानां तेषां निवर्त्तनेन च दुरादुपकारित्वेऽपि कर्तुः स्वातन्त्र्यमिति तदर्थः । वस्तुस्थित्यैषां धर्माणामभावेऽपि शब्देन यस्यैते प्रत्याय्यन्ते स कर्त्ता । घटो भवतीत्यादौ बौद्धघटस्य कर्तृत्वम् । यद्वा घटपदेनोपादानकारणं मृदेव

---

स्यात् न वा कर्तव्यम् । किं कारणम् । स्वातन्त्र्यात्स्वतन्त्रोऽसौ भवति । इतरथा

---

जकसन्निधानेऽपि प्रयोज्यस्य करणादिसाधनवियोगादिना स्वातन्त्र्यस्य क्रिया-सिद्धौ सद्भावादित्यर्थः । अकुर्वत्यपीति । भा । यदि प्रयोज्यस्य स्वातन्त्र्यं न

---

पर्यंति । अनन्यलभ्यस्य शब्दार्थत्वादाश्रयो चकारार्थः । देवदत्तेन पच्यते ।

---

चाङ्गुणभावो ऽस्त्येव । कः पुनरत्र कारकाणां गुणगुणिभावः । यदा प्रकाशाभावेऽपि क्रिया न निर्वर्त्तते । उक्तमत्र—

प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि ।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्त्तनात् ॥

तेन चेदमिति। (कै)

दोषवारणायेत्याशयः। अकुर्वतीत्यन्तमभ्युपगमे कर्म ॥

एवं चेदिति। (कै)

णोत्तरमप्रकरणं चेदित्यर्थः ॥

स्वातन्त्र्यमस्त्येवेति। (कै)

अन्यथा स्वार्थाभावेऽपि कुर्यादित्यर्थः। एवं च सूत्रेणैव सिद्धे संख्यानं व्यर्थमिति भावः ॥ भाष्ये

ज्ञापकम् (भा)

अनुमापकम् ॥

---

र्पात्मना भवतीत्यर्थः ॥ कार्य्यकारणयोरभेदस्य स्वीकारात्। यदा प्रकृत्या विद्यावशादुपचरितनानात्वभावाभावरूपवत्तद्रूपगतजन्मनाशव्यवहारो-प्यविचारितरमणीयः सिद्ध इति बोद्धम्। याचयति चैत्रेण मैत्र इत्यादौ योज्यस्य प्रयोजकव्यापाराधीनत्वेऽपि साधनान्तरविषये उक्त स्वातन्त्र्यात् र्तृत्वमव्याहतम्। प्रेरणा पारतन्त्र्ये उक्तस्वातन्त्र्यस्योपायत्वात्। धातु-र्थक्रियाकृतस्वातन्त्र्यस्यैव विवक्षणात् कर्तृपरतन्त्रकरणादेर्न स्वव्यापार-

---

अकुर्वत्यपि कारयतीति स्यात्। वा। यो हि मन्यते नासौ स्वतन्त्रः अकुर्वत्यपि

स्यान्नैवासौ साधनान्तरविनियोगादिना क्रियां कुर्यात् तथा चाकुर्वत्यपि

देवदत्तरूपो य आश्रयस्तद्भिन्नो विक्लित्त्यनुकूलव्यापार इत्यर्थः। वैशिष्ट्यं चाधेयतारूपं संसर्गमर्यादया भासते ॥

---

अदृष्टत्वात्प्रतिनिधेः प्रविवेकेऽपि दर्शनात्।

आरादप्युपकारित्वात् स्वातन्त्र्यं कर्तुरिष्यते ॥

अयम् (भा)

उपसंख्यानवादी ॥

प्रेषिते । (भा)

पुरुषे ॥

क्रियाम् । (भा)

क्रियाप्रयोज्यमनेन कारयतीति प्रयोगम् ॥

अक्रियाम् (भा)

तत्प्रयोज्यमनेन कारयतीति प्रयोगाभावं च दृष्ट्वा निश्चिनोति कुर्वन् स्वतन्त्रो ऽकुर्वन्नतीत्यर्थः॥ एतेन प्रेषिते क्रियादर्शनादेव

---

मादाय कर्तृत्वम् । किं च करणादीनां कर्त्रधीनत्ववत् न प्रयोज्यस्य प्रयोजकाधीनत्वं प्रयोज्यस्य स्वार्थसिद्ध्यर्थं प्रवृत्तेः । न हि करणादीनां तादृशी प्रवृत्तिः ॥ तदुक्तम्—

"निमित्तेभ्यः प्रवर्त्तन्ते सर्वं एव स्वभूतये ।
अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये" इति ।

निमित्तं भृत्यादि । तन्निमित्तापि स्वार्थसाधनप्रवृत्तिकैव सेति स्वाभ्याप्रयानुवर्त्तनमात्रेण तु प्रयोज्यत्वमिति दिगित्याहुः । केचित्तु धात्वर्थव्यापाराश्रयत्वं साक्षात् परम्परया वा । तत्राद्यं प्रसिद्धम् । द्वितीयं पक्षभि-

---

तस्य कारयतीत्येतत्स्यात् । नाकुर्वतीति चेत्स्वतन्त्रः । वा । न चेदमकुर्वति

---

प्रयोज्ये प्रयोजकः कारयतीति व्यपदिश्येत । प्रकृतं तावदिति । भा । उपसंख्यानवाद्यपि प्रयोजस्य स्वातन्त्र्यमस्तीत्यभ्युपगच्छतीति प्रतिपाद्यते ।

---

इति । काष्ठादीनि कर्त्रा प्रवर्तितानि करणादिशक्तिं प्रतिलभन्ते । कर्त्ता तु प्रागेव कर्तृसंनिधौ च करणादीनि न्यग् भवन्ति तदधीने

तस्य पारतन्त्र्यनिर्णय इति स एव कथं स्वातन्त्र्ये हेतुरित्यकुर्वन्न स्वतन्त्र इत्यस्य प्रकृतेऽनुपयोगस्येति परास्तम्। एवमुपसंख्यानारम्भेऽतिप्रसङ्गवारणाय स्वतन्त्रपदसंबन्धाद्यभिधायैवं सति मुख्यस्वातन्त्र्यग्रहणेऽपि प्रयोज्यस्य तदस्तीत्याह

यदि चेति (भा)

भाष्ये॥ स्वेच्छायामसत्यामिति शेष तदाह

स्वार्थादर्शनादिति। (कै)

एवं च यद्ययं स्वतन्त्रः स्यात्सर्वथा कुर्यादेव कदा चिन्न करोत्यपि तस्मात्स्वतन्त्र इति भावः। एवं च स्वेच्छाधीनप्रवृत्तिनिवृत्ति-

---

ष्ठैः कर्षतीति। तत्र हि स्वाश्रयप्रयोजकत्वसम्बन्धेन कर्तुर्धात्वर्थव्यापाराश्रयत्वम्। अन्यथा प्रयोज्यव्यापारस्य धात्वर्थत्वे तदाश्रयाणां बहुत्वाद् बहुवचनापत्तिः प्रयोजकव्यापारस्यापि धातुवाच्यत्वे तु णिजापत्तिः। अन्तर्भावितण्यर्था इति प्रवादस्याप्ययमेवार्थ इति आहुस्तन्न। अन्तर्भावितण्यर्थत्वेन सकर्मकत्वोच्छेदापत्तेः। दृश्यते चान्तर्भावितण्यर्थत्वेन सकर्मकाणामपि द्विकर्मकता। तस्माद् धातूनामनेकार्थत्वाद्ण्यर्थान्तर्भावेनापि धातोर्वृत्तिः। परन्तु यत्र णिचोभावेऽपि तदर्थद्योतकमस्ति तत्रैव। यथा प्रकृते पञ्चभि-

---

तस्मिन्कारयतीत्येतद्भवति स्वतन्त्रोऽसौ भवति। शक्यं तावदनेनोपसंख्यानं

---

प्रयोजकस्य स्वातन्त्र्येण स्वव्यापारं प्रत्यप्रवर्तनाद् णिचोपसंख्यानमारभ्यते। तेन चेदमवश्याभ्युपगन्तव्यं यः करोति स स्वतन्त्रः न त्वकुर्वन्नित्येवं चेत्

---

च तेषां प्रवृत्तिनिवृत्ती। प्रधानकर्तुस्य प्रतिनिधिर्न दृष्टः करणादीनां तु दृष्टः। व्रीह्यपचारे नीवारैरिज्यते। प्रविवेको ऽभावः। करणाद्यभावेप्यास्ते शेते इत्यादौ केवलः कर्ता दृश्यते न तु कर्तुरभावे कारणादीनि दृश्य-

कत्वं स्वातन्त्र्यमित्युक्तं तस्यैव च प्रागुक्तं सकलकारकप्रयोक्तृत्वं तच्चारोपितमनारोपितं च संज्ञोपयोगि। तत्रारोपितं स्थाल्यादावन्यत्र पुरुषे। यस्य च स्वातन्त्र्यविवक्षा तद्व्यापार एव च धातुना प्राधान्येनोच्यते शब्दशक्तिस्वभावात्। तदुक्तं "कारके" इति सूत्रे भाष्ये। संभवनक्रियां धारणक्रियां च कुर्वती स्थाली पचतीति यदोच्यते तदा तत्र व्यापारे पचिर्वर्तते स्थाल्यस्थे च यत्ने कथ्यमाने स्थाली स्वतन्त्रेति। आरोपितस्वातन्त्र्यवतीति तदर्थः। कर्त्तु-

---

र्ष्णीर्भवेरिति। क्वचित्तु एकान्ते तुष्णीमासीनत्वादिकं तद् द्योतकम्। यदि तु द्वितीयकर्मरहितोऽपि तत्र प्रयोग इष्टस्तदा प्रयोजकव्यापारस्यैव धात्वर्थत्वमाश्रित्य समाधेयः। कर्तृत्वं च विवक्षा निबन्धनम्। तेन स्थाल्यादिव्यापारस्य धात्वर्थत्वे स्थाली पचतीत्याद्यपि। तदुक्तं "कारके" इति सूत्रे भाष्ये स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रेति। यत्नो व्यापारः। एवमेकस्यैवोपाधिभेदेन कर्तृत्वकर्मत्वकरणत्वानि भवन्ति "यथा आत्मानमात्मनाहन्सि" इति॥ तदुक्तं हरिणा—

---

कुर्वता वक्तुं कुर्वंस्स्वतन्त्रो ऽकुर्वन्नेति। साधीयो व्यापकम्। प्रेषिते च

---

प्रयोजकसन्निधानेऽपि स्वार्थदर्शनात् प्रयोज्यः करोति नान्यथेति तस्य स्वातन्त्र्यमस्त्येव तथा चोक्तं भाष्यकृता। न हि कश्चित् परोऽनुग्रहीतव्य इति प्रवर्तते सर्व इमे स्वभूत्यर्थं यतन्त इति। प्रेषित चेति। भा। कर्तुरभि-

---

न्ते। आरादप्युपकारित्वादिति। यद्यप्यसौ तटस्थः फलसिद्धावुपकरोति न तु करणादिवदनुप्रविश्य तथापीत्यर्थः। एतच्च प्रायेण चेतनेष्वेव सम्भवति नाचेतनेषु रथो यातीत्यादौ। नैष दोषः। उक्तलक्षणे कर्तरि इयं वृत्ते प्राधान्यमगुणभावश्च तत्रागुणभावो ऽचेतनेषु चेतनेष्वपि सम्भवति स

रधिकरणत्वेनेत्यादि चिन्त्यम्। नह्यत्र वाक्ये प्रेषितो दर्शनक्रिया-मध्यवस्यति क्रियायां वा कर्त्ता ऽयमित्यस्य कर्त्तुरुपादानात् क्रिया-मित्येतत्कर्मनिरूपितं तस्याधिकरणत्वं स्थाल्यां तण्डुलमित्यादिवत्। अन्यथा देवदत्ते पचतीत्यस्याप्यापत्तिः। कर्त्तृकर्मद्वाराक्रियाश्रय-स्यैवाधिकरणत्वाच्च। न च क्रियामित्येतन्निरूपितकर्त्तृत्वं तस्य सत्त्वभूतार्थप्रतिपादकत्वात्॥

---

"एकस्य बुद्ध्यवस्थाभिर्भेदेन परिकल्पने।
कर्मत्वं करणत्वं च कर्त्तृत्वं चोपजायते" इति॥

योऽपि "गोरथौ" (१।३।६७) इतिसूत्रे भाष्ये शरीरात्मान्त-रात्मा इत्यादि भेद उक्तः। सोऽपि व्यावहारिको बोद्ध एवेति बुद्ध्यवस्था-भिरित्युक्तम्। बुद्धि कल्पितावस्थाभिरित्यर्थकम्॥

---

किञ्चायं क्रियां चाक्रियां यद् दृष्ट्वा ऽध्यवस्यति कुर्वन्स्वतन्त्रो ऽकुर्वन्नेति। यदि च प्रेषितोऽसौ न करोति स्वतन्त्रोऽसौ भवतीति॥

---

करणत्वेन विवक्षितत्वात्तृतीया। क्रियामिति। भा। स्वार्थदर्शनादिच्छायां सत्यां क्रियां तद्दर्शने त्वक्रियाम्। यदि चेति। भा। स्वार्थदर्शनादिच्छाया-मसत्यामित्यर्थः॥

---

वाचमगुणभावो न प्रतिनियतविषयो यस्यैव तु विवक्ष्यते तस्यैवेत्याह 'स्वातन्त्र्येण विवक्ष्यत इति'। विवक्ष्यतइत्यस्योदाहरणं स्थाली पचतीति। अन्ये तु व्याचक्षते। अगुणभावेनाभिधीयमानव्यापारो गुणभूतो गुणभू-तधातूपात्तव्यापारः कर्तेत्यर्थः। कस्य च व्यापारो धातुना ऽगुणभावेनोपा-दीयते यस्य विवक्ष्यते तस्येति सर्वत्र सिद्धमिति॥

# तत्प्रयोजको हेतुश्च ।१।४।५५।

प्रेषषष्ठ्या समासः प्रवर्त्तनात् स्वातन्त्र्यमित्यस्यास्तु नामेति प्रेषः ॥

**समाश्रितो** (भा)

विवक्षितः ॥ ननु न वा सामान्येत्यादि "हेतुमति च" त्यत्र वक्ष्यमाणतया ऽपरसुक्तमित्यसङ्गतमत आह

---

तत्प्रयोजको हेतुश्च १ । ४ । ५५ ॥ प्रैषे ऽस्वतन्त्रप्रयोजकत्वाद्धेतुसंज्ञाप्रसिद्धिः । वा । प्रैषे ऽस्वतन्त्रप्रयोजकत्वाद्धेतुसंज्ञाया अप्रसिद्धिः प्राप्नोति । स्वतन्त्रप्रयोजको हेतुसंज्ञो भवतीत्युच्यते न चासौ स्वतन्त्रं प्रयोजयति ।

---

तत्प्रयोजको हेतुश्च । १ । ४ । ५५ । प्रैष इति । भा । न तु पूर्वसूत्र एव प्रयोज्यस्य स्वातन्त्र्यमुपपादितं तत्किमर्थं चोद्यते । एवं मन्यते । "प्रैषात्पूर्वं प्रयोज्यस्य स्वव्यापारे प्रवर्तनात् । स्वातन्त्र्यं प्रैषकाले तु स्वव्यापाराप्रवर्तनात् । प्रकृतौ प्रैषवैयर्थ्यात्स्वतन्त्र्यं नास्ति तस्य च । प्रयोजको न हेतुः स्यात् ततश्चाच न णिज् भवेत् । प्रैषग्रहणमध्येषणानिवृत्त्यर्थमिति केचित् ।

---

तत्प्रयोजको हेतुश्च । १ । ४ । ५५ ॥ तस्य कर्तुः प्रयोजको हेतुसंज्ञः

---

तत्प्रयोजको हेतुश्च १ । ४ । ५५ ॥ 'तदित्यनेन कर्ता सम्बध्यत इति' । कर्तृसंज्ञाविप्रतिषेधः स्वतन्त्र इत्यर्थः । ननु च प्रयोजकसन्निधौ प्रयोज्यस्य पारतन्त्र्यं कर्तृसन्निधाविव करणादीनान्तत्कथं स्वतन्त्रः परामृश्यते कथन्तरां च कर्तृसंज्ञाविप्रतिषेधः कथन्तमां च पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये तृतीया भवति पूर्वमेव च स्वतन्त्रस्य कर्तुः सतः प्रयुक्तिरपि किमर्था । मायं विरंसीदिति प्रयुङ्क्ते इति चेद् भवत्वेवं प्रवृत्तप्रवर्त्तने यत्र तु बलात्कारेण प्रवर्त्यते तत्र कथम् । उच्यते । अप्र-

वक्ष्यमाणस्यापीति । (कै)

अयं हि न वा सामान्येति वार्त्तिकार्थः ॥ कं घातयतीत्यादौ हेतुमति चेत्येव सिद्धत्वादुपसंख्यानं न कार्यम् । कथं सामान्यकृतत्वमत आह

---

स्वतन्त्रत्वात्सिद्धम् । स्वतन्त्रत्वात्सिद्धमेतत् । स्वतन्त्रमसौ प्रयोजयति । स्वतन्त्रत्वात्सिद्धमिति चेत्स्वतन्त्रपरतन्त्रत्वं विप्रतिषिद्धम् । भा । यदि च स्वतन्त्रो न प्रयोज्यः । अथ प्रयोज्यो न स्वतन्त्रः प्रयोज्यः स्वतन्त्रश्चेति विप्रतिषिद्धम् ।

---

अध्येषणे क्रियाव्यापार्यमाणस्य गुर्वादेः स्वव्यापारे स्वातन्त्र्यमस्तीति । तच्चयुक्तम् । न्यायस्य तुल्यत्वात् । तस्मादत्र प्रेषग्रहणेन नियोगमात्रमुच्यते न तु निकृष्टविषय एव नियोगः । स्वतन्त्रत्वादिति । भा । वृद्धसामर्थ्यो वा सम्भावितसामर्थ्यो वा क्रियायां स्वातन्त्र्येण समाश्रित एव नियुज्यत इत्यर्थः । स्वतन्त्रपरतन्त्रत्वमिति । भा । प्रयोजकसन्निधौ पारतन्त्र्येण स्वातन्त्र्यस्य

---

स्वाश्रयात्कर्तृसंज्ञः । संज्ञासमावेशार्थश्चकारः । कुर्वन्तं प्रेरयति कारयति हरिः । हेतुत्वात्तद्व्यापारे हेतुमतिचेति णिच् । कर्तृस्थात्कर्तरि लकारः ॥

---

तत्प्रवर्तनेऽपि यावत्स्वार्थादर्शनात् प्रयोज्ये न प्रवर्तते तावत्प्रयोजकः पाचयतीति न व्यपदिश्यते प्रयोज्यप्रवृत्त्युत्तरकालमेव तु व्यपदिश्यते तदानीमपि च कृत्याकृत्वा प्रयुक्तिर्विद्यत इति अनुवर्तमाना हि प्रवृत्तिः प्रयोज्यस्यापवर्गनिष्पत्तेः प्रवृत्तौ हेतुर्न मध्ये विच्छिन्ना । लोडादिवाच्यस्तु प्रेष प्रयोज्यस्याप्रवृत्तावपि भवति । उक्तं च—

> द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड्विधीयते ।
> प्रवृत्तस्य यदा प्रैषस्तदा स विषयो णिचः ॥

इति । तदेवं णिज्वाच्या प्रयुक्तिः प्रवृत्तप्रवर्तनारूपेण प्रतीयतइति प्रवृत्त्यर्थं कर्तुः सतः प्रयोजक इत्यविरुद्धम् । इममेव चार्थं दर्शयितुं

हेतुत इति। (कै)

मुख्याद्धेतुतः पौराणिकादिरविशिष्ट इत्यर्थः। स्वतन्त्रप्रयोजकस्य हेतुत्वादयमप्रयोजको हेतुरिति चेदित्यर्थः॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्योते प्रथमस्य चतुर्थे तृतीयमाह्निकम्॥

---

उक्तं वा। किमुक्तम्। एवं तावदुक्तम्। न वा स्वातन्त्र्यादितरो ह्यकुर्वत्यपि कारयतीत्येतस्मादिति। अपरमुक्तम्। न वा सामान्यकृतत्वाद्धेतुमतो ह्यविशिष्टम्। स्वतन्त्रप्रयोजकत्वादप्रयोजक इति चेन्मुक्तसंशयेन तुल्यमिति॥

---

तिरस्कृतत्वाद्यौगपद्यानुपपत्तिरिति भावः। उक्तं वेति। वक्ष्यमाणस्यापि बुद्ध्या विषयी कृतत्वात्कृतत्वसमारोपादुक्तं वक्ष्यमाणं चाभेदेनोक्तं वेति निर्दिष्टम्। न वा सामान्यकृतत्वादिति। भा। "हेतुमति च" यत्र वार्तिककारेणैतदुक्तम्। मुक्तसंशयेनेति। भा। अप्रयुक्तो यः स्वयं करोति तेन तुल्यःप्रयोज्योऽपीत्यर्थः॥

---

तच्छब्दोपादानम्, अन्यथा कस्य प्रयोजक इत्यपेक्षायां प्रकृतत्वादेव स्वतन्त्रस्य प्रयोजक इति लाभादनर्थकं तत् स्यात्। 'तस्य प्रयोजकस्तत्प्रयोजक इति'। ननु 'तृजकाभ्यां कर्तरि' 'कर्तरि चे' ति प्रतिषेधात् कथमत्र समास इत्यत आह। 'निपातनात्समास इति'। अत्र विचार्यमस्ति समासप्रकरण एव विचारयिष्यामः। 'संज्ञासमावेशार्थश्चकार इति'। असति हि तस्मिन् एकसंज्ञाधिकारात् कर्तृसंज्ञा न स्यात्। 'कुर्वाणं प्रयुङ्क्त इति'। कुर्वाणदशायां या प्रयुक्तिः स्वत्याह्वा सैव णिजर्थः। एवेवं विग्रहः। हेतुत्वादित्यादिना समावेशस्य प्रयोजनं दर्शयति॥

# महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृते ऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्य्यादुत्तान इव सौष्ठवात् ॥

---

## प्राग्रीश्वरान्निपाताः । १ । ४ । ५६ ॥

"अधिरीश्वर" इति सूत्रस्थे "ईश्वरे" इति पदे प्रकृतिभागस्य पूर्वान्तरेफेण सहानुकरणं

रीश्वरादिति ॥ (पा)

---

प्राग्रीश्वरान्निपाताः । १ । ४ । ५६ । किमर्थं रेफाधिक ईश्वरशब्दो गृह्यते । रीश्वराद्वीश्वरान्मा भूत् । रीश्वरादित्युच्यते वीश्वरान्मा

---

प्राग्रीश्वरान्निपाताः । १ । ४ । ५६ । किमर्थमिति । भा । प्राग्रीश्वरादित्येव क्रियतां प्रत्यासत्याधिरीश्वर इतीश्वरशब्दो ग्रहीष्यत इति प्रश्नः ।

---

प्राग्रीश्वरान्निपाताः ॥ १ । ४ ५६ ॥ "अधिरीश्वर" इत्यतः प्राक् प्राङ्-निपाता इत्यधिक्रियते । तन्नाद्याश्रयणात् । तेन पूर्वं निपातसंज्ञाः सन्तः

---

प्राग्रीश्वरान्निपाताः । १ । ४ । ५६ ॥ प्राचि काले देशे वा प्राक् । 'अधिरीश्वर इति वक्ष्यतीति' । ईश्वरप्रकृतिभागस्य पूर्वपदान्तेन रेफेण

नन्वन्यस्यापीश्वरशब्दस्यावधित्वं स्यादत आह

**प्रत्यासत्त्येति** ॥ (कै)

ननु प्रथमोपस्थितत्वात्तस्यैव ग्रहणं स्यादत आह

**व्याप्नोतीति** ॥ (कै)

**रीश्वरादिति** । (भा)

तथापीश्वरशब्दोऽस्तीति भावः ॥ रीश्वरशब्दस्य क्वाप्यश्रवणादाह

**यद्येति** ॥ (कै)

---

भूदिति। प्रकियामुक्तामुत्तावीश्वरेतोसुन्कसुनाविति। नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति अनन्तरो य ईश्वरशब्दस्तस्य ग्रहणमिति। यदयं

---

रीश्वरादिति। भा। व्याप्तिन्यायाद्रीश्वरात्प्राक् स्यात्। यदा संहितया सूत्रपाठस्तदा वकारसहित ईश्वरशब्दोऽस्तीत्येतदभिप्रेत्यैवमुक्तम्। यदय-मिति। भा। सेकसेन् प्रभृतीनां ग्रमुन्कमुन्नोश्च निपातत्वादेवाव्ययसंज्ञायां सिद्धायां "क्त्मेजन्त"इत्यव्ययसंज्ञाविधानाज्ज्ञापकाद्व्याप्तिर्बाध्यत इत्यर्थः ॥

---

पश्चाद्गत्यादिसंज्ञा इत्यर्थात्संज्ञासमावेशः सिध्यति। अन्यथा गत्युपसर्ग-

---

सहानुकरणं द्रष्टव्यम्। अनुकार्येणार्थेनार्थवत्त्वात् विभक्त्युत्पत्तिः, च वा इत्यत्र निपातत्वे सति 'स्वरादिनिपातमव्यय' मित्यव्ययसंज्ञा भवति 'निपाता आद्युदात्ता' इति तु स्वरो न भवति उदात्तानामनुदात्तानां गणे पाठात्, अन्येषां तु तदपि भवति, ननु यथा 'प्रत्यय' इत्यादिरधिकारो विनाप्यवधिनिर्देशेनाभिमतविषये प्रवर्तते तथायमपि प्रवर्तिष्यते निपाता इत्येवास्तु नार्थोऽवधिनिर्देशेनेत्यत आह। 'प्राग्वचनमिति'। प्राग्वचन-द्वारेणावधिनिर्देशस्य प्रयोजनमुक्तम्। अयमर्थः। असत्यवधिनिर्देशे निपाता

ननु नियमापेक्षया ज्ञापकत्वं युक्तमत आह

तुल्येति। (कै)

न्यायबाधकल्पने बहुषु शास्त्रबाधः कल्प्यः। नियमे तु सजातीयविषय एवेति लाघवनियमे इति भावः॥

समासे एतज्ज्ञापकमिति (भा)

भाष्ये ज्ञापकशब्दो नियमपर इति बोध्यम्॥ ननु लोकन्यायस्य शास्त्रे कथमाश्रयणमत आह

शास्त्रे चेति। (कै)

"कृन्मेजन्त" इति कृतो मान्तस्यैजन्तस्याव्ययसंज्ञा प्राप्ता। कृन्मेजन्तः परोऽपि सः। सः। परोऽप्येतस्मात्कृन्मेजन्तस्यास्ति तदर्थमेतत्स्यात्।

परोऽपीति। भा। "कृत्यार्थे तवैकेनि"त्यादिरेजन्तः खमुञादिस्तु मान्तोऽस्ति तदर्थमेतत्स्यादित्यज्ञापकं न्यायैर्बाधस्य॥ यत्तर्हीति। भा। व्यासावाश्रीयमाणायां निपातत्वादव्ययीभावस्याव्ययसंज्ञासिद्धेव किं तद्विधानेनेति ज्ञापकं सं पद्यते। समासेष्विति। भा। तुल्यजातीयत्वादस्तये नियमार्थ-

कर्मप्रवचनीयसंज्ञानां निपातसंज्ञायाश्च पर्यायः स्यात्। तस्मादौ

इत्यस्य प्रतियोगमनुवृत्तौ सत्यामप्येकसंज्ञाधिकारात् पर्यायः स्यात् न तु समावेशः, सति तु तस्मिन् ईश्वरात् प्राग्यावन्तः संज्ञिनः सर्वांस्तानैकध्यमिच्छापेक्ष्य सकृत्संज्ञा विधीयते प्रतिसूत्रमधिकाराच्चपराद्वन्तिस्तस्याश्च समावेशः प्रयोजनमिति। अथ वा प्राग्वचनं किमर्थं यावता पञ्चम्येव प्रागिति दिक्शब्दोऽध्याहरिष्यते, पराग्दित्यस्य त्वध्याहारो न भविष्यति, 'चादयो ऽसत्वे' 'प्रादय' इत्यनयोर्विधेयासम्भवेनानर्थक्यप्रसङ्गात्, अत

लक्ष्यानुरोधात्प्रत्यासत्तिरेवाश्रयिष्यते इति भावः ॥ भाष्ये

प्रियं प्रोथमिति (के)

क्वचित्पाठः । तत्र प्रोथो ऽध्वगः ।

"प्रोथो ऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु ।
प्रोथो ऽध्वगे ऽश्वघोणायां कटिस्त्रीगर्भयोरपीति ।"

मेदिनीविश्वोक्तेः ॥ यत्तु हरदत्तेन प्रोथं पर्याप्तमित्यर्थकं क्रियाविशेषणम् । प्रोथ पर्याप्ताविति धातोः पचाद्यजित्युक्तं तदुक्तको-

---

यत्तु्ह्ययीभावस्याव्ययसंज्ञां प्राप्ति तज्ज्ञापयत्याचार्यः अनन्तरो य ईश्वरशब्दस्तस्य ग्रहणमिति ॥ समासेष्वव्ययीभावः । समासस्यैतज्ज्ञापकं

---

मेतत्स्याद् न तु व्याप्यग्रहणज्ञापनार्थमेतदित्यर्थः ॥ एवं तर्हीति । भा । लोके प्रत्यासत्तिराश्रीयते यथा* "कपिञ्जलानालभेते"ति त्रय एवालभ्यन्ते

---

प्रमाणं तु प्राग्ग्रहणसामर्थ्यमेव अन्यथा रीश्वरादिति पञ्चम्येव दिक्शब्दा-

---

त्याह । 'प्राग्वचनमिति' । अयं भावः । अध्याहारेण सिद्धे प्राग्ग्रहणाला-मर्थ्यादन्वेण द्वौ प्राक्शब्दावुच्चार्येते तेनायमर्थो भवति, प्राग्रीश्वराद्वे व्यवस्थितास्ते प्राक् निपातसंज्ञा भवन्ति निपातः सन्तो गत्यादिसंज्ञा इति ।

---

* "वसन्ताय कपिञ्जलानालभते" इति श्रूयते । तत्र विचार्यते । किं बहवस्त्रयः पञ्च वा विकल्पेनालब्धव्याः । अथवा त्रय एव इति । किं प्राप्तम् । अत्र जैमिनीयसूत्राणि—

बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् । अ ११ । पा १ । सू ३८ ॥ (पू)

दृष्टः प्रयोग इति चेत् । अ ११ । पा १ सू ३९ ॥ (आ)

ग्रानुक्तेस्तस्य धातोरभावाच्च प्रकृतेऽर्थाभक्ते "ग्रंथयूथप्रोथा" इत्यु-
णादिसूत्रेण थप्रत्ययान्ततया साधनाच्चोपेक्ष्यम् ॥

---

तथेह । अ ११ । पा १ । सू ४० ॥ (आ-नि)

भक्त्येति चेत् । अ ११ । पा १ ॥ सू ४१ ॥ (आ)

तथेतरस्मिन् । अ ११ । पा १ । सू ४२ ॥ (नि)

अथ सिद्धान्तसूत्रम्—

प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् । अ ११ । पा १ । सू ४३ ॥

अत्र शबरस्वामिना एवमुक्तम् —

'प्रथमं वा' बहुत्वं त्रित्वं नियम्येत । किं कारणम् ?

न हि कश्चिच्चतुर उपददानो न त्रीनुपादत्ते, यत् कारणम्, अनुगता-
स्त्रयश्चतुर्षु, त्रिषु चोपात्तेषु कृतः शब्दार्थः, "बहूनालभत" इति श्रुतम् ।
आलब्धाश्च बहवः । एवं सति 'कारणादति क्रमः स्यात्' यदि च यथा
श्रुतानुपादाने किं चिदन्यत् कारणं त्रित्वातिक्रमे स्यात्, ततोऽतिक्रमः ।
न तदस्ति । तस्मात् त्रित्वं नियम्येत ॥ ... ... ... ... ... ...

... ... ... ... ... ... ... ... ... ... ... ...

यस्तु मांसीयन् शिष्टमतिक्रमेत्, स, यदि तावद्वैदिकीषु हिंसासु प्रत्यवाय,
ततः प्रत्यवेयात् । अथ अप्रत्यवायस्तथापि शिष्टविगर्हणं च लभेत् । कृते
श्रुत्यर्थे मांसीयन् पशून् हन्ति इति । तस्मात् त्रयः कपिञ्जला आलब्धव्याः ॥

तत्र युक्तिः । तथाच सूत्रम्—

तथा चान्यार्थदर्शनम् । अ ११ । पा १ । सू ४४ ॥ (यु)

तस्मात् त्रित्वनियमः ॥

प्रकृत्या च पूर्व्ववत्तदासत्तेः । अ ११ । पा १ । सू ४५ ॥ (यु)

जैमिनीयन्यायमालायाम्—

कपिञ्जलेषु त्रित्वाद्याः पाक्षिकाक्षित्वमेव वा ।

आद्यो बहुत्वसाम्यान्न त्रित्वेनैव कृतत्वतः ॥

प्रथमातिक्रमे इति। (कै)

सकलकपिञ्जलालम्भासम्भवात्केषु चिदालम्भव्येषु त्रयो वा ऽथ चतुरादय इति सन्देहे इति भावः॥ व्याप्तिन्यायाश्रये बाधकमाह

निषेधावतारादिति। (कै)

"बह्वषु न हिंस्यादिति" निषेधकल्पनाभिया प्रथमातिक्रमन्यायस्यैव तत्राङ्गीकार इति भावः॥ "पर्यग्निकृतानारण्यानुत्सृजन्ती"-त्युक्तेर्हिंसाप्रसक्त्यभावादाद्यैव युक्तिरिति बोध्यम्॥ ननु "न लोके" (२।३।६९) तिसूत्रे लोकादिग्रहणमिह व्याप्तिन्यायबाधकं स्यादत आह

---

स्यादव्ययीभाव एव समासो ऽव्ययसंज्ञो भवति नान्य इति। एवं तर्हि लोकत एतत्सिद्धम्। तद्यथा। लोके। आ वनान्तादा उदकान्तात् प्रियं पान्थमनुव्रजेदिति। य एव प्रथमो वनान्त उदकान्तस्था

---

न चतुरादयः। शास्त्रे च लोकव्यवहारोऽङ्गीक्रियते इति भावः। लौकिकमिति। भा। लौकिकं प्रत्यासत्तिलक्षणं न्यायं लोक एव परित्यजति स्नेहादिवशाद् द्वितीयमप्युदकान्तं प्राप्य निवर्तते। कपिञ्जलानित्यत्र तु प्रथमातिक्रमे कारणाभावान्न "हिंस्यात्सर्वा भूतानीति" चतुर्थादि

---

र्यौपाल्किं तेन। न च परशब्दाक्षेपप्रसङ्गः। चादयोऽसत्वे प्रादय

---

तेन निमित्तमेव निपातसंज्ञा गत्यादिसंज्ञानामिति समावेशसिद्धिरिति। रीश्वरादिति सह रेफेणानुकरणे प्रयोजनमाह। 'रीश्वराद्रीश्वरान् माभूदिति'। रीश्वरादित्युच्यते अधिरीश्वर इत्ययमीश्वरशब्दोऽवधिर्यथा-स्यात् 'सृपि तृदोः कसुन्' 'ईश्वरे तोसुन्कसुनौ' विषयं मा भूद् इत्येव-

न लोकेति। (कै)

एवं चात्र रेफोच्चारणमेव ज्ञापकमत्र शास्त्रे प्रथमातिक्रमन्यायानाश्रयणस्येति बोध्यम्। अत एव "निजां त्रयाणामि" त्यादौ (७। ४। ७५) त्रयाणां ग्रहणं चरितार्थम्॥ ननु प्राक्ग्रहणाभावे परशब्दोऽव्यथाश्रियेतेत्यत आह

प्राग्ग्रहणेति॥ (कै)

नन्वियमपि निरवकाशेत्यत आह

चादिष्विति। (कै)

---

ततोऽनुव्रजति। **लौकिकं चातिवर्तते**॥ द्वितीयं तृतीयं च वनान्तमुदकान्तं चानुव्रजन्ति तस्माद्रेफाधिक ईश्वरशब्दो ग्रहीतव्यः। अथ

---

निषेधावतारात्प्रय एवालभ्यन्ते। इह तु विरोधकाभावाद्यामिन्यायाश्रयः स्यात्। "न लोकाव्यये"त्यव्ययत्वाल्लोकादीनां सिद्धे षष्ठीनिषेधे पुनस्तेषामुपादानमव्ययसंज्ञाया एवाभावं ज्ञापयेत्। निपातसंज्ञा तु स्यादेव। ततस्त्रिकौश्वर्थमित्यादौ "निपात एकाजिति" प्रगृह्यसंज्ञा स्यात्॥

---

इत्येतयोर्विधेययोर्लाभेनानन्वयापत्तेः। रेफविशिष्टग्रहणं किम्। ईश्वरे

---

मर्थमित्यर्थः। यदा संहितया सूत्राणि पठ्यन्ते तदा रीश्वरशब्दोऽस्तीत्यभिप्रेत्य रीश्वरादित्युक्तं, ज्ञापकात् सिद्धं, यदयं 'कृन्मेजन्त' इति कृतो मान्तस्यैजन्तस्य वाऽव्ययसंज्ञां शास्ति तज्ज्ञापयति कृदन्तर ईश्वरशब्दोऽवधिर्न व्यवहित इति, अन्यथा सेसेन्प्रभृतीनां णमुल्कमुलोश्च निपातत्वादेवाव्ययसंज्ञायाः सिद्धत्वादनर्थकं तत्स्यात्। नैतदस्ति ज्ञापकं, 'कृन्मेजन्तः परोऽपि सः, 'ईश्वरे तोसुन्कसुनावित्यस्मात्परोऽपि कृन्मान्त एजन्त-

चादिषु सावकाशा क्रियायोगे प्रादिषु सावकाशेत्यादि-क्रमेणान्वयः ॥

बाध्येतेति । (कै)

तत्तद्विशेषसंज्ञाविषये अस्या अनुपस्थितिरेव स्यादिति भावः ॥ भाष्ये

अथ क्रियमाणेऽपीति । (भा)

प्राग्रीश्वरादित्युक्तावपि विशेषसंज्ञाऽविषय एवोपस्थितिः स्यादि-त्यर्थः ॥ समाधत्ते

क्रियमाणे हीति । (भा)

---

प्राग्वचनं किमर्थम् । प्राग्वचनं संज्ञाऽनिवृत्त्यर्थम् । वा प्राग्वचनं क्रियते निपातसंज्ञाया अनिवृत्तिर्यथा स्यात् । अक्रियमाणे हि प्राग्वचनेऽनवकाशाः

---

अथेति । भा । प्राग्ग्रहणद्वारेणावधिनिर्देशश्चोद्यते । निपाता इत्येवास्तु यथा प्रत्यय इत्यादिरधिकारो विनाप्यवधिनिर्देशेनाभिमतविषये प्रवर्तते तथायमपि प्रवर्तिष्यते इति भावः ॥ निपातसंज्ञामिति । भा । चादिषु प्रादिष्वप्यक्रिययोगे विकल्पित गतिसंज्ञाविषयेषु "साक्षात्प्रभृतिषु" च

---

तोसुन्कसुनावित्यस्य व्याप्तिन्यायेनावधित्वं मा भूत् । वस्तुतस्तु मास्तु रेफः प्रत्यासत्त्या ऽभिमतसिद्धेः अव्ययीभावस्याव्ययसंज्ञारम्भाच । न चासौ समा-

---

स्वास्ति क्त्वार्थे तवैकेनित्याद्येजन्तः, णमुलादिषु मान्तः, तदर्थमेतत् स्यात्, यत्त्वव्ययीभावस्याव्ययत्वं प्राप्ति तज्ज्ञापयति अनन्तरस्य ग्रहणमिति, अन्यथा द्वितीये निपातसंज्ञा व्यापाराद् अव्ययीभावस्य निपातत्वादेवा-व्ययसंज्ञायाः सिद्धत्वादनर्थकं तत्स्यात्, नैतदस्ति, 'समासेष्वव्ययीभावः'

अवधिनिर्देशसामर्थ्यात्सति सूत्रमुपस्थितौ तत्सामर्थ्यात् समावेश इति भावः ॥ नन्वेवमपि पर्यायः स्यादत आह

रीश्वरादीति ॥ (भा)

असंबद्धत्वेति । (कै)

विधेयानिर्देशादिति भावः ॥

निपाताः सन्त इति । (कै)

प्राक्ग्रहणसामर्थ्यादेतदर्थलाभस्तेन गत्यादिसंज्ञानां निमित्तमेव निपातसंज्ञेति समावेशसिद्धिरिति भावः ॥

---

गत्युपसर्गकर्मप्रवचनीयसंज्ञाः निपातसंज्ञां बाधेरन् । ताः मा बाधिषतेति प्राग्वचनं क्रियते । अथ क्रियमाणेऽपि प्राग्वचने यावता अनवकाशा एताः

---

गतिसंज्ञाभावपक्षे सावकाशा निपातसंज्ञा गत्यादिसंज्ञाभिर्बाध्येतेत्यर्थः ॥ क्रियमाणे इति । भा । ईश्वरादिति पञ्चम्या प्राक् शब्दाध्याहारे लब्धे पुनः श्रुतिः प्राग्ग्रहणं संपद्यते । परशब्दाध्याहारेण तु पञ्चमी न भविष्यति । "चादयोऽसत्त्वे" इत्यादीनामसंबद्धत्वप्रसङ्गात् । तन्मतेनैव वा द्वौ प्राक्शब्दावु-

---

सेऽप्यव्ययीभाव एवेति नियमार्थं स्यादिति वाच्यम् । गौरवग्रस्तं व्याप्ति-न्यायमाश्रित्य नियमार्थत्ववर्णनापेक्षया प्रत्यासत्तेर्विध्यर्थतायाश्च न्याय्यता-

---

तुल्यजातीयव्यावृत्तये नियमार्थमेतत्स्यात् न त्वनन्तरस्य ग्रहणे ज्ञापक-मित्यर्थः । एवं तर्हि लौकिकन्यायादेवानन्तरस्य ग्रहणं भविष्यति लौकिके ह्योदकान्तात्प्रियं प्रोथमनुव्रजेदिति य एवानन्तर उदकान्त आ ततोऽनुव्रज्य बान्धवा निवर्तन्ते तद्वदत्रापि तत्राह । 'लौकिकं चातिवर्तत इति' । लौकिकं न्यायं लोक एवातिवर्तते, यतो द्वितीयमप्युदकान्तं स्नेहातिशया-दनुव्रज्य निवर्तन्ते तस्मादीश्वरादित्युच्यते वीश्वरान्माभूदिति शिवम् ।

विशिष्टावधीति । (कै)

रीश्वररूपावधिपरिच्छिन्नसमुदायस्येत्यर्थः ॥

अवयवसंज्ञा इति । (भा)

षष्ठीतत्पुरुष इति भावः ॥

---

संज्ञाः कस्मादेव न बाधन्त इति । क्रियमाणे हि प्राग्वचने सत्यां निपात-संज्ञायामेता अवयवसंज्ञा आरभ्यन्ते तत्र वचनात् समावेशो भवति ॥

---

श्रीयते । तेनायमर्थः । प्राग्रीश्वराद्ये व्यवस्थितास्ते प्राङ्निपातसंज्ञा भवन्ति निपाताः सन्तो गत्यादिसंज्ञा इति समावेशःसिद्धः केवले तु निपाता इत्यधिकारे क्रियमाणे सत्यामपि प्रतियोगमनुवृत्तावेकसंज्ञाधिकारा-त्पर्यायः स्यान्न तु समावेशः ॥ अवयवसंज्ञा इति । भा । विशिष्टावधि-परिच्छिन्नस्य समुदायस्यान्तरालपतिता गत्यादिसंज्ञाभाजोऽवयवा भवन्ति तेषां संज्ञा इत्यर्थः ॥

---

त् । अत एव "न लोकेति" सूत्रे अव्ययात्पृथक् लोकादीनां ग्रहणमप्युपपद्य-त इति दिक् ॥

---

ननु च न लोकाव्ययेत्यत्र लोकादीनामव्ययत्वादेव षष्ठीप्रतिषेधे सिद्धे पुनरुपादानं ज्ञापकं भविष्यति अनन्तरस्य ग्रहणमिति । नैतदस्ति । अव्ययसंज्ञाया एवाभावं ज्ञापयेत् निपातसंज्ञा तु स्यादेव, ततश्च चिकी-र्ष्वर्थ इत्यादौ 'निपात एकाजनाङिति' प्रगृह्यसंज्ञा स्यात् । 'प्रोष-मिति' । पर्याप्तमित्यर्थः । प्रोष पर्याप्तौ पचाद्यचि क्रियाविशेषणत्वात् नपुंसकत्वम् ॥

# चादयो ऽसत्त्वे । १ । ४ । ५७ ॥

सीदन्त्यस्मिन्निति । (कै)

विशेषणत्वेनावतिष्ठन्ते ऽस्मिन्नित्यर्थः ॥

[1]सदेरौणादिकस्त्वः ॥ (कै)

---

१ "सत्त्वम्" इत्यत्र ॥

---

चादयोऽसत्त्वे । १ । ४ । ५७ ॥ अयं सत्त्वशब्दः अत्रैव द्रव्यपदार्थकः ।

---

चादयोऽसत्त्वे । १ । ४ । ५७ ॥ अयमिति । भा । अर्थद्वयेऽपि सत्त्वशब्दस्य प्रयोगदर्शनाद्विशेषावगतौ प्रमाणानुपलम्भात्प्रश्नः । तत्र सीदन्त्यस्मिञ्जातिगुणक्रिया इति सत्त्वं द्रव्यमुच्यते यदा तु सतो भावः सत्त्वमिति तदा

---

चादयोऽसत्त्वे ॥ १ । ४ । ५७ ॥ चादयो निपातसंज्ञाः स्युः न तु द्रव्ये । निपातत्वादव्ययत्वम् । च वा इत्यादिवस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोऽर्थो भेदत्वेन विवक्षितः । लिङ्गसङ्ख्यान्वयि द्रव्यमिति वा । असत्त्वे किम् । पशुना यजेत, पशुशब्दस्यादिः । चः समुच्चय इत्यपि प्रत्युदाहरणम् । न चात्र प्रकृतिवदनुकरणमित्यतिदेशात् निपातत्वदुर्वारमिति

---

चादयोऽसत्त्वे । १ । ४ । ५७ ॥ 'न चेत्सत्त्वे वर्तत इति' । सत्त्वे चेद् वर्तते तदा संज्ञा न भवतीत्यर्थस्तदाह । प्रसज्यप्रतिषेधोऽयमिति'। अथ पर्युदासे को दोषः पशुशब्दोऽत्र पठ्यते स जातिविशिष्टे द्रव्ये वर्तते, तस्य निपातत्वं स्यात् जातिद्रव्यसमुदायरूपो ह्यर्थः केवलादन्यो भवति,

## साध्यमानेति । (कै)

वस्तुतः साध्यमानावस्थः क्रियारूपापन्नो योऽर्थः सत्तारूपः स सत्त्वपदेनोच्यत इत्यर्थः ॥

## चाद्यनुकरणार्थानामिति (कै)

पाठे चादीनामनुकरणं स्वरूपबोधनमर्थः प्रयोजनं येषां तेषामित्यर्थः ॥

---

तद्यथा । सत्त्वमयं ब्राह्मणः । सत्त्वमियं ब्राह्मणीति । अस्ति क्रियापदार्थकः

---

साध्यमानतया क्रियारूपापन्ना सत्ता सत्त्वशब्देनोच्यते ॥ एवं च सत्त्वेति । भा । यदि सत्त्वशब्देन सत्तोच्येत तदा प्रतिषेधोऽनर्थकः स्यात् । नहि चादिषु सत्तावाची कश्चिच्छब्दोऽस्ति यदर्थो निषेधः स्यात् । पशुर्वै पुरुष

---

वाच्यम् । अतिदेशस्यानित्यतायाः स्थलकसूत्र एवोपपादितत्वात् । प्रसज्य-प्रतिषेधः किम् । वातीति वाः विप्रातीति विप्रः । इह क्रियाविशिष्ट-द्रव्यवाचकतया क्रियायास्त्वासत्त्वरूपत्वान्निपातता स्यात् ततश्च विप्रशब्दस्या-प्यव्ययसंज्ञा स्यात् । प्रयोजनं सर्वनामाव्ययसंज्ञायामित्युक्तत्वात् । अथ चादयः । च वा ह अह एव एवं नूनं शश्वत् युगपत् भूयत् कूपत् प्रश्नवितर्क-प्रशंसास्वयम् । एवं सूपदपि । कुविदिति भूयोऽर्थे योगप्रशंसास्ति भावेषु च । नेदिति शङ्कायाम् । निज्जिह्मायन्तो नरकं यताम । नेदेवसापुनजन्नदेवा

---

तथा प्रादय इत्यत्र विप्रातीति विप्रः 'आतश्चोपसर्गे' इति कः, अत्र प्रशब्दः क्रियाविशिष्टे द्रव्ये वर्तते तत्र क्रियाद्रव्यसमुदायस्य द्रव्यादन्यत्वान्नि-पातत्वे सत्यव्ययसंज्ञायां तदन्तविधेरभ्युपगमात् विप्रशब्दस्याव्ययसंज्ञा स्यात् प्रसज्यप्रतिषेधे तु यत्र द्रव्यगन्धस्तत्र सर्वत्र प्रतिषेधो भवति, क तर्हि 'वर्तमानः पशुशब्दो ऽसत्त्ववचनो भवति, कृष्यर्थे, बोधं

इत्यादावपीति। (कै)

निपातसंज्ञा स्यादित्यनुषज्यते ॥

विधिनिषेधाविति। (कै)

अप्रेति हेतोरित्यादिः ॥

यथाभिमतविषयमिति। (कै)

अनुकार्ये निपातत्वं नानुकरणेनापि गवादिपरपम्वादावित्यादीति भावः ॥

---

सद्भावः सत्त्वमिति। कस्येदं ग्रहणम्। द्रव्यपदार्थकस्य। कुत एतत्। एवं

---

इत्यत्र च निपातसंज्ञा स्यात्। चाद्यनुकरणानां चः पठितो हि यस्मादर्थ इत्यादावपि विधिनिषेधौ यथाभिमतविषयं न व्यवतिष्ठेयातां द्रव्यग्रहणे तु व्यवतिष्ठेते। द्रव्यशब्देन चात्र सिद्धावस्थारूपं वस्त्वभिधीयते। तदुक्तम्।

---

इत्यादौ तु न इदिति पदद्वयं पठ्यते। तस्मान्निपातसमुदायो ऽयं बोध्यः। "निपातैर्यद्यदीति" निघातनिषेधः। प्रतिषेधविचारसमुच्चयेष्वयमिति तु शाकटायनः। चेत् चण् अयं चेदर्थे णित् समुच्चयादौ त्वननुबन्धः। इदं च "निपातैर्यद्यदी"त्यत्र स्फुटीभविष्यति। कच्चित्। यत्र। नह निश्चितनिषेधे। हन्त हर्षेऽनुकम्पायां च। माकिः माकीं एतौ निषेधे। माकिर्नेमाकीरित्यमाकीसंप्रारिके वटेत् किलसम्भावितनिषेधेन किरिन्द्रत्वदुत्तरः।

---

नयन्ति पशु मन्यमाना इत्यत्र दृश्यर्थेन मननं विशेष्यते दर्शनमेतन्मननं, सम्यक् मन्यमाना इत्यर्थः सत्त्वशब्दोऽयं सतो भावः सत्त्वमिति सत्ताजातिवचनो गृह्यत इति भ्रान्तिमपनयति 'सत्त्वमिति च द्रव्यमुच्यतइति'। इदं यदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमुच्यते, उक्तञ्च।

सिद्धरूपमिति । (कै)

तत्त्वं च लिङ्गसंख्याकारकान्वयित्वेन सर्वनामपरामर्शयोग्यत्वेन वा तदाह

वस्तूपेति ॥ (कै)

लक्षणान्तरमाह

भेद्यत्वेनेति । (कै)

लिङ्गसंख्याविशेष्यत्वेनेत्यर्थः ॥

---

च कृत्वा विधिश्च सिद्धो भवति प्रतिषेधश्च । किं पुनरयं पर्युदासः । यदन्य-

---

"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः" इति ॥

---

नकिरेवायथात्वं हिकं नुकम् । सुकम् साहिकम् आकीम् नकीम् नकिः । माकीं माकिः । आकृतमिति वेदनिघण्टुः । आमिश्रामि नवोत्तराणीति तद्व्याख्यायां यास्कः । माङ् । माङि लुङिति विशेषणार्थो ङकारः । मा भवतु मा भविष्यतीत्यत्र निरनुबन्धो माशब्दः । नञ् । ञकारो "नलोपो नञ" इति विशेषणार्थः । नस्येत्युक्ते तु पामनपुत्र इत्यत्रापि स्यात् । न च सिद्धान्तेऽपि स्त्रैणपुत्रेतिप्रसङ्गं वारयितुम् "अलुगुत्तरपद" इत्युत्तरपदाधिकारेण

---

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥

इति । स्वार्थेनेति शेषः । सिद्धरूपो योऽर्थः स्वार्थेन विशेष्यतया विवक्षितस्तद् द्रव्यमित्यर्थः । उक्तं च,

' स्वार्थस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदुच्यते ।

## उभयथेति । (कै)

द्रव्यभिन्नेऽर्थे वर्त्तमानाश्चादय इति पर्युदासे ऽर्थः । सत्त्वे वर्त्तमानं चादिस्वरूपं तु निपातसंज्ञमिति प्रसज्यप्रतिषेधे ऽर्थः ॥ चादिष्वपाठात्कथं प्राप्तिरित्यतो भाष्ये

## अस्ति च प्रादिभिरिति ॥ (भा)

---

त्त्ववचनादिति आद्यो लिङ्गसङ्ख्यायं प्रतिषेधः सत्त्ववचने नेति । किं चातः ।

---

किं पुनरिति । भा । उभयथा शास्त्रे दर्शनात्प्रश्नः ॥ विप्र इति । भा । विप्रातीति विप्रः । "आतश्चोपसर्गे" (३ । १ । १३६) इति कप्रत्ययान्तः क्रियोपसर्जनद्रव्यवाचित्वात् केवलाद् द्रव्यात् क्रियाद्रव्यसमुदायस्यान्यत्वाद्

---

पूर्वपदेन नञोऽवश्यं विशेषणीयत्वात्तेनैव पामनपुत्रस्यापि सिद्धेः किं अकारेणेति वाच्यम् । नैकधागमिकमौक्तिकनैकभेदतेत्यादौ निषेधार्थेन नशब्देन "सहसुपेति" समासेऽतिव्याप्तिं वारयितुं ञित्वस्याप्यावश्यकत्वात् नञा पूर्वपदस्य विशेषणेऽपि अनन्यार्थञित्वस्य निपातस्यैव ग्रहणं न तु तद्वशा चरितार्थञकारस्य तद्धितस्यापीति तु प्राचां ग्रन्थस्योक्तिसम्भवो बोध्यः । यावत् तावत् । त्वै न्वै एतौ वितर्के । औषट् । वौषट् । स्वाहा वषट् । स्वधा । ॐ । तथा । हिरुक् । खलु । किल । अथ । सुष्टु ।

---

इति । एवं च कृत्वा सीदतिं निविशते यत्र जात्यादिकं शब्दप्रवृत्तिनिमित्तं विशेषणाभावेनेति सत्त्वं द्रव्यं, सदेरौणादिकस्त्वप्रत्ययः 'ताभ्यामन्यत्रोणादय' इत्यधिकरणसाधनः । चणिति पठ्यते, स चेदर्थे वर्तते, णकारश्चणकचिद्यत्रयुक्तमिति विशेषणार्थः । नञो ञकारो 'नलोपो नञ' इति विशेषणार्थः । नलोपो नस्येत्युच्यमाने वामनपुत्रः,

निपातत्वेनेति । (कै)

एवं चोत्तरसूत्रविषये ऽयं दोष इत्यर्थस्तथापि समुदाये कथं प्राप्तिरतो भाष्ये

तदन्तविधिनेति ॥ (भा)

---

यदि पर्युदासः विप्र इत्यत्रापि प्राप्नोति । क्रियाद्रव्यवचनोऽयं संघातो द्रव्या-

---

द्रव्यादन्यस्मिन्नर्थे वर्तते ॥ प्रादिभिरिति । भा । निपातत्वेनाभिमतैः ॥ सामान्यमिति । भा । सारूप्यम् ॥ तदन्तविधिनेति । भा । ननु विशेष्या-सन्निधानात्कथं तदन्तविधिः । एवं तर्ह्ययमर्थः । निपातस्य संज्ञा निपात-

---

आदहेति हि सोपक्रमकृत्स्नेषु । आदहस्व धामन्नित्यत्र तु पदकारा आदिति पृथक् पठन्ति । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च ॥

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।

सुदत्तमनुदत्तं च निदत्तममिति चेष्यते ॥

"अच उपसर्गात्त" इति त्वत्वं न भवति । उपसर्गप्रतिरूपकत्वेऽप्यनुपसर्गत्वात् । विभक्तिप्रतिरूपको यथा । अहम् । शुभम् । अहंयुः । शुभंयुः । अहंशुभमोर्युस् । चिरेण । अन्तरेण । चिराय । अचिरात् । अकस्मात् । चिरस्य मम । ममत्वं गतराज्यस्य । वेलायां मात्रायामित्यादि । एतेन गेये केन विनीतौ वामिति व्याख्यातम् । वामित्यस्या-

---

त्रापि प्राप्नोति, प्राचिक एव दोषः, "अलुगुत्तरपद" इति वर्तते, तत्र यदोत्तरपदेनाक्षिप्तं पूर्वपदं नञ्ञ विशेषणं तदा पूर्वपदभूतस्य नञ्ञो लोप इत्युच्यमाने नैवात्र प्राप्नोति नञ्शब्देन पूर्वपदे विशेष्यमाणे तदन्तविधिसद्भावादत्रापि स्यात् । यथाश्रिमपक्षे नञ्ञ इत्युच्यमाने ऽपि

## निपातस्य संज्ञेति । (कै)

सकलनिपातमुद्दिश्यैकवाक्यविहिता संज्ञेत्यर्थः ॥ प्रगृह्यसंज्ञा तु न तथाचोद्देशेन विहितेति भावेनाह

## सा चाव्ययेति । (कै)

"तस्यां चाप्नोति प्रयोजनमि"त्यादेर्गमकाच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः ॥ अत्रेदं बोध्यम् । एवं

---

दन्तस्य विधिनाश्रीयते । अस्ति च प्रादिभिः सामान्यमिति ज्ञात्वा तदन्त-

---

संज्ञा सा चाव्ययसंज्ञा तस्यां चास्ति "तदन्तविधिः प्रयोजनं सर्वनामाव्ययसंज्ञायामिति"। तत्र विप्रशब्दे प्रशब्दस्य निपातसंज्ञायां सत्यां यथा परमोच्चैरिति स्वराद्यन्तस्याव्ययसंज्ञा भवत्येवं निपातान्तस्यापि स्यात् ।

---

व्ययस्य युवामित्यर्थात् । आह आसेत्यादीनि तु तिङन्तप्रतिरूपकाणि । स्वरास्तु सम्बोधनभर्त्सनानुकम्पापादपूरणप्रतिषेधेषु यथासम्भवं बोध्याः । अ अपेहि आ एवं मन्यसे । इ इन्द्रं पश्य । ई ईदृशः । उ उपरे बीजं वपति । ए इतो भव । ओश्रावय । ऋ ॠ ऌ ऐ औ एते मन्त्रस्तोभाः । पश्विति सन्ध्यर्थे । लोधं नयन्ति पशुमन्यमानाः । शुकमिति शीघ्रत्वे । यथा कथाचेत्यनादरे । पाट् प्याट् अङ्ग है हे भो अये इत्यादयः

---

र्थेऽप्युत इत्यत्र नञः कस्मान्न भवति, अतुल्यत्वात्प्रत्ययस्य, अकारो वृद्धिस्वरयोश्चरितार्थः, निपातस्य त्वचरितार्थः । तथेति पठ्यते,-सोऽप्युत्पन्नः समुच्चये वर्तते, तस्य तु थालन्तस्य लित्स्वरेणाद्युदात्तत्वं सिद्धम् अव्ययत्वमपि 'तद्धितश्चासर्वविभक्ति' रित्येव सिद्धम् । नञ्व्युत्पन्नस्यापि

हि पशुशब्दस्य जातिविशिष्टद्रव्यवाचिनोऽप्यसत्त्वभूतार्थत्वादसत्त्व इत्यस्य व्यावर्त्याप्रसिद्धिस्तस्मा"त्किंपुनरि"त्यादिभाष्यमेकदेशिनोक्तिरित्याहुः॥

---

विधिना (१।१।७२) निपातसंज्ञा प्राप्नोति। अथ प्रसज्यप्रतिषेधः। न दोषो भवति। यथा न दोषस्तथास्तु॥

---

ततो लुक् प्रसज्येत। विप्रकम्बल इत्यत्र च निपातान्तस्य पूर्वपदस्य प्रकृतिस्वरः स्यात्॥

---

सम्बोधने। घेति हिंसाप्रातिलोम्यपादपूरणेषु। विषु इति नानार्थे। एकपदे इत्यकस्मादथ। निहन्त्यरीनेकपदे। पुत इति कुत्सायाम्। कुत्सितमवयवच्छादयति इति पुच्छः। डः। पुलिति सान्तमिति शाकटायनः। कुत्सितं कसति गच्छतीति पुल्कसः। अस्तीत्यस्मर्थे। त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति। आत इति इतोऽपीत्यर्थे। इत्यादि। आकृतिगणश्चायम्॥

---

विभक्तिप्रतिरूपका इत्येव सिद्धं, सत्यं, प्रपञ्चार्थः पाठः, एवं वेलायां मात्रायामित्यादेरपि, 'स्वरप्रतिरूपका इति'। "ऋति ऋवा"वचनमित्यादयस्तेषां निपातसंज्ञाविधानद्वारेण सद्भाव एव प्रतिपाद्यते न पुनरेषां निपातत्वे किञ्चित्प्रयोजनमस्तीति॥

# प्रादयः । १ । ४ । ५८ ॥

# उपसर्गाः क्रियायोगे । १ । ४ । ५९ ॥

ननु विभक्तस्यैव पाठात् कर्त्तव्य इत्यनुपपन्नमत आह

यदेति ॥ (कै)

प्रागेवेति । (कै)

सूत्रकृता सूत्रप्रणयनकाले एवेत्यर्थः । एवं व्याख्याने भाष्यस्थ-कर्तव्यपदस्वारस्यभङ्गः ॥ ननु निपाता इत्यस्याधिकारादेकयोगेऽपि निपातत्वं सिद्धमत आह

अक्रियेति ॥ (कै)

---

प्रादयः उपसर्गाः क्रियायोगे । १ । ४ । ५८—५९ ॥ प्रादय इति योग-विभागः । वा । प्रादय इति योगविभागः कर्तव्यः । प्रादयोऽसत्त्ववचना निपात-

---

प्रादयः उपसर्गाः क्रियायोगे । १ । ४ । ५८—५९ ॥ यदा प्रागेव प्रादय इति योगो विभाज्यते तदा योगप्रयोजनकथनाय वार्तिकम् । यदा तु प्रादय

---

प्रादयः । १ । ४ । ५८ ॥ एते निपातसंज्ञाः स्युर्न तु सत्त्वे । प्र परा

---

उपसर्गाः क्रियायोगे । १ । ४ । ५९ ॥ प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः ॥

---

प्रादयः । १ । ४ । ५८ ॥ अयं योग उत्तरस्माद्विभज्यते पूर्वस्माच्च, यदि पुनः प्रादय उपसर्गाः क्रियायोग इत्युच्येत नैवं प्रयच्छमित्याह । 'एव-

---

उपसर्गाः क्रियायोगे । १ । ४ । ५९ ॥ 'क्रियायोग इति' । तद्योगे तृतीया निपातनात् समासः, कर्तृकरणे कृतेति बहुलवचनाद्वा, यदा क्रियया करणभूतया प्रादीनां धातुभिर्योगात् करणे तृतीयाया एव समासः ।

तदाह भाष्ये

यस्मिन्नेव विशेष इति । (भा)

क्रियायोगरूपे इत्यर्थः ॥ ननु प्रादयः क्रियायोगे उपसर्गा गतय इतिवत् प्रादयः कर्मप्रवचनीया इति वचनाभावादाह

सुः पूजायामिति ॥ (भा)

ननु "अच उपसर्गात्" (७।४।४७) इत्यत्र 'त' इति द्वित-कारकनिर्देशात्सर्वादिशस्तत्त्वमनजन्तत्वेऽपि संज्ञाविधानसामर्थ्याद्भवति तच्च नित्यमिति महत्तद्दत्त इत्ययुक्तमत आह

प्रक्रियायामिति ॥ (कै)

---

संज्ञा भवन्ति । तत उपसर्गाःक्रियायोग इति ॥ किमर्थो योगविभागः । निपातसंज्ञार्थः । वा । निपातसंज्ञा यथा स्यात् ॥ एकयोगे हि निपात-

---

उपसर्गाः क्रियायोग इत्येको योगः पठ्यते तदा योगविभागः कर्तव्यत्वेन चोद्यते । एकयोगे हीति । भा । अक्रियायोगे निपातसंज्ञा न स्यात् । क्रियायोग एव तु गत्युपसर्गसंज्ञावत्स्यात् । ततश्च प्रगत आचार्यः प्राचार्य इत्यत्र पूर्वपदप्रकृति

---

अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु

---

प्रयोगकरणमिति' । उत्तरस्या उपसर्गसंज्ञाया एव क्रियायोग इति विशे-षणं यथा स्यात् निपातसंज्ञायां माभूदित्येवमर्थमुत्तरस्माद् योगादस्य

---

'प्रणयतीति' । उपसर्गादसमासेऽपीति णत्वम् । 'प्रणायक इति' । नन्व-त्रापि प्रनिक्रियायोगोऽस्त्येव, सत्यं, प्रादयः पुनरेवमात्मकाः यदुत श्रुतायां क्रियायां तामेव विशिंषन्ति, अश्रुतायां तु ससाधनां क्रियामाक्षिपन्ति तत्र क्रियायोगग्रहणसामर्थ्याद् यत्क्रियायुक्ताः प्रादयस्तं प्रत्युपसर्गसंज्ञा

नन्वलौकिकप्रक्रियावाक्यं मरुत्दात इति दर्शयितुमुचितं न तु दत्त इतीति चेदत्राहुः। मरुद्भिर्दत्त इत्यर्थकलुप्तविभक्तिकमरुच्छब्देन श्रुतो मरुत्तशब्दस्य विग्रहप्रदर्शनं कृतं तथैव भगवतोक्तमिति ॥

## इष्यत इति। (कै)

तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरेणेत्यर्थः ॥ मृग्रोरुतिप्रत्ययान्तत्वादन्तोदात्तः सः। एवं च मरुत्तपदं मध्योदात्तमिति भावः ॥

---

संज्ञाभावः। वा। एकयोगे हि सति निपातसंज्ञाया अभावः स्यात्। यस्मिन्नेव विशेषे गत्युपसर्गकर्मप्रवचनीयसंज्ञास्तस्मिन्नेव विशेषे निपातसंज्ञा

---

स्वरो न स्यात् ॥ यस्मिन्नेवेति। भा। कर्मप्रवचनीयसंज्ञा "सुः पूजायामि"-त्यादिभिर्योगैः प्रादीनां विहिता॥ मरुद्दत्त इति। भा। प्रक्रियायां ह्यल-लौकिकमिदमुपात्तम्। तत्त्वेन हि नित्यं भाव्यम्। उपसर्गसंज्ञैव चास्येष्यते तेन निपातसंज्ञा। तस्यां हि सत्यां निपाता आद्युदात्ता इत्याद्युदात्तत्वं

---

उत् अभि प्रति परि उप एते प्रादयः। तत्र निस्दुस् इमौ सान्तौ।

---

विभाग इत्यर्थः। अथ वा चादिष्वेव प्रादीनपि पठित्वा पूर्वस्माद्योगात् किमर्थं विभज्यते तत्राप्याह। 'उपसर्गाः क्रियायोग इति'। 'चादीना-

---

भवतीत्ययमर्थो भवति, अत्र च यत्क्रियायुक्तः प्रादिः स गतिर्न प्रयुज्यते, यत्र प्रयुज्यते न तत् क्रियायुक्त इति नास्ति गत्वप्रसङ्गः। 'मरुच्छब्दस्येति'। उपसर्गसंज्ञैवेष्यते न निपातसंज्ञा, तस्यां हि सत्यां निपाताद्युदात्तत्वं तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरेण स्यात् अन्तोदात्तश्च मरुत्तशब्द इष्यते। नन्रूपसर्गसंज्ञायामप्युपसर्गाश्चाभिवर्जमित्याद्युदात्तत्वं स्यादेव, न, चानेनापूर्वमाद्युदात्तत्वं विधीयते किं तर्हि निपाता इत्येव सिद्धे ऽनु-

**अव्ययसंज्ञा च स्यादिति । (कै)**

तथा च महद्भिर्दत्त इति मत्वर्थीयप्रकरणस्थभाष्यप्रयोगे विभक्तिश्रवणं न स्यादिति भावः ॥ नन्वस्योपसर्गत्वे "उपसर्गे घोः किः" (३।३।९२) "आतश्चोपसर्गे" (३।३।१०६) इति अङ्-कौ स्यातामत आह

**अनभिधानादिति । (कै)**

अनेन न्यायेन संज्ञावचनसामर्थ्यरूपेण ॥

---

स्यात् ॥ महच्छब्दस्योपसंख्यानम् । वा । महच्छब्दस्योपसंख्यानं कर्तव्यम् । महद्दत्तो महत्तः । अच उपसर्गादिति (७ । ४ । ४७) तत्त्वं यथा स्यात् ॥

---

"तृतीया कर्मणीति" (६ । २ । ४८) पूर्वपदप्रकृतिस्वरेण स्यात् । अन्तोदात्तश्च महच्छब्द इष्यते । अव्ययसंज्ञा च स्यात् । तत्त्वमेवोपसर्गसंज्ञेष्यते । अनभिधानाद्धि किरङ्च न भवति । संज्ञावचनसामर्थ्याच्चानजन्तत्वेऽपि तत्त्वं प्रवर्तते । अनेन तु न्यायेन महन्नयतीति तवर्गव्यवायेऽपि णत्वं प्राप्नोति ।

---

"निसत्तपतावनासेवन" इतिनिर्देशादिति "उपसर्गस्यायतावि ति" सूत्रे

---

मिति' । यवोपपोऽज्ञ अङ्गस्य इति यवादीनामिति । 'परा जयन्ति सेना इति' । परा उत्कृष्टाः परदेशस्थिता वा अव्ययत्वात्तत्र वर्तमानस्य पराश-

---

प्रतिषेधार्थमेतत्, किं च निपातसंज्ञायामव्ययसंज्ञा स्यात् । अथ 'उपसर्गे घोः किः', 'आतश्चोपसर्गे' इत्येतौ विधी कस्मान्न भवतः अनभिधानात् । 'महत्त इति' । मुहच्छब्दतकारस्य 'नमि चे' ति द्विर्वचने भारो भारीति मध्यमस्य मध्यमयोर्मध्यमानां वा लोपे वैरूप्यं भवति, कथं पुनरत्र तत्वं यावता तमनजन्त इत्यत आह । 'संज्ञाविधानसामर्थ्यादिति' । उक्तः प्रयोजनान्तराभावः, एवं तु महन्नयतीति तकारव्यवायेऽपि णत्वं

## तस्मात्तत्व एवेति । (कै)

अत एव "उपसर्गाश्चाभिवर्जमि"त्याद्युदात्तत्वमपि न । नन्वेवं तत्त्वविधावेव मरुत उपसंख्यानं व्यर्थं स्यादिति चिन्त्यम् । केचित्तु-त्रोपसंख्यानेन निपातत्वमिष्यते एव तेनाद्युदात्त एव मरुत्शब्दो निपातसंज्ञापि तत्त्वविषये एवेति मरुद्भिर्दत्त इति पाञ्चमिकभाष्य-प्रयोगस्य नानुपपत्तिः । पञ्चमेऽपि तन् पर्वमरुद्भ्यामिति निर्देव पाठ इत्याहुः । कैयटस्वारस्येन तु स पिदिति बोध्यम् ॥

## व्युत्पादयिष्यत इति । (कै)

मत्वर्थीयप्रकरणे इति शेषः ॥

---

वा । श्रच्छब्दस्योपसंख्यानम् । (३।३।१०६) श्रच्छब्दस्योपसंख्यानं कर्तव्यम् । श्रद्धा ॥

---

तस्मात्तत्व एवोपसर्गसंज्ञा वक्तव्या । प्रकारान्तरेणापि मरुत्शब्दो निपात्यते तप्पर्वमरुद्भ्यामिति ॥ श्रच्छब्दस्येति । भा । तेन भिदादिषु श्रद्धाशब्दो न पठितव्यो भवति ॥

---

वृत्तिः । "निरः कुषः" "सुदुरोरधिकरणे" इत्याद्यनुरोधाद्रेफान्तावपीति तत्रैव सूत्रे हरदत्तः । अद्रव्ये किम् । विः पक्षी । पराः सेनाः ॥

---

ब्दस्य न भवति, यत्र त्वेकवचनं प्रयुज्यते परा जयति सेनेति तत्र त्वपोदा-हरणं द्रष्टव्यम्, हलङ्याबिति सुलोपात्, पराशब्दस्याद्युदात्तत्वाच्च ॥

---

प्राप्नोति तस्मात्तत्वविधावेवेष्यते, 'श्रच्छब्दस्येति' । षड्विधावेवेष्यते कि-प्रत्ययो हि न भवति तदाह । 'आतश्चोपसर्गे इति' । भिदादिपाठात् प्रश्राश्रद्धार्थेति निपातनाद्वा सिद्धम् ।

# गतिश्च।१।४।६०॥

कारिकेति। (कै)

भावे ण्वुल्। श्लोकादौ तु कारके॥

श्लोकवाचीति। (कै)

दासीवाचिनोऽप्युपलक्षणम्॥

---

गतिश्च॥१।४।६०॥ कारिकाशब्दस्य। वा कारिकाशब्दस्योपसंख्यानं कर्तव्यम्। कारिकाकृत्य (१।१।१८॥७।१।३७)॥ पुनश्चनसौ छन्दसि। पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम्। पुनरुत्स्यूतं (२।२।१८) वासो देयम्। पुनर्निष्कृतो (८।१।७०) रथः। उशिग्दूतश्चनोहित (६।२।४९)

---

गतिश्च।१।४।६० कारिकाशब्दस्येति। भा। कारिका क्रिया मर्यादास्थितिरित्यर्थः। यत्न इत्यपरे। यस्तु श्लोकवाची कारिका-

---

गतिश्च।१।४।६०॥ प्रादयो गतिसंज्ञाः स्युः क्रियायोगे। पुल्लिङ्गोऽयं गतिशब्दः। "गतिरनन्तर" (६।२।४९) इति लिङ्गात्। अव्युत्पन्नश्चायं स्त्रीलिङ्गो वा। "नक्षिचि दीर्घश्चेति" (६।४।३९) तु न प्रवर्तते। अत एव निर्देशात्। उपसर्गसंज्ञया सह समावेशार्थश्चकारः। अन्यथा पर्यायः स्यात्। तेन प्रणेयमित्यादौ णत्वं कृदुत्तरपदप्रकृतिस्वरश्च सिध्यति। निपातसंज्ञायास्तु समावेशः प्राग्ग्रहणेन साधित एव। इह यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः। योगग्रहणसामर्थ्यात्। तेन प्रकृष्टं कृतं प्रकृतमित्यत्र "गतिरनन्तर इति स्वरो न। कर्मणि क्तान्तं प्रत्यगतित्वात्।

---

'गतिश्च'।१।४।६१॥ 'गतिरनन्तर' इति पुल्लिङ्गनिर्देशाद् गम्यतइति गतिः, स्त्रियुक्तौ च संज्ञायमिति क्तिन्, निपातनाच्च 'न क्तिचि दीर्घश्चे' ति

क्रियायोगेति । (कै)

क्रियारूपे युज्यमाने वर्त्तमानादित्यर्थः ॥ पुनः शब्दस्य गतित्वे स्वयं फलं दर्शयति

ततश्चेति । (कै)

एतेन

पुनरुत्स्यूतमिति (भा)

भाष्योदाहरणे "सुपुपे"तिसमासेनैव सिद्धे पुनः शब्दस्य गतिसंज्ञा व्यर्थेत्यपास्तम् । तद् ध्वनयन्नाह्यति

---

इति ॥ गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रतीति वचनम् । वा । गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञा भवन्तीति वक्तव्यम् । किं प्रयोजनम् । प्रयोजनं घञ्‌स्वरत्वे वा । स्वरम् । घञ् । प्रकृष्टो भावः प्रभाव अनुपसर्ग इति प्रतिषेधो मा भूत् (३ । ३ । २४) ॥

---

शब्दस्य ग्रहणं न भवति । क्रियायोगग्रहणेन कारिकाशब्दस्य विशेषणात् क्रियावृत्तेर्ग्रहणात् । पुनश्चानसाविति ततश्च पुनराधेयमित्यत्र कृदन्तो-

---

क्तार्थविशेषकत्वे तु स्यादेव । तथा प्रकृष्टो भावः प्रभाव इत्यत्र "श्रिणी भुवोऽनुपसर्गे" (३ । ३ । २४) इति घञ् सिद्धः । एवं प्रणाययत्यभिप्राचयतीत्यादौ प्रकृत्यर्थगतप्रकर्षाभिमुख्यद्योतकतायां णत्वमत्वे स्तः । क्त्यर्थविशेषकत्वे तु नेति बोध्यम् । निपातसंज्ञा तु क्रियायोगं विनाप्यस्ति । एतदर्थमेव हि प्रादय इति योगो विभक्तः । तेन प्रगत आचार्यः प्राचार्य इत्यत्राश्रयपूर्वपदप्रकृतिस्वरः सिध्यति । उपसर्गसंज्ञायां मरुच्छब्दस्योपसंख्यानम् ॥ मरुत्तः । उपसर्गसंज्ञाविधानसामर्थ्याद्गन्तत्वा-

---

न भवति, 'प्रकृत्येति' । अत्र गतित्वात् कृत्स्वरो भवति समासस्तु प्रादित्वादेव सिद्धः । प्रादिभ्योऽन्यत्र समासोऽपि प्रयोजनम् । 'प्रकृतमिति' ।

## स्वरश्चेति । (कै)

"सह सुपे" (२ । १ । ४) तिसूत्रे भाष्ये समासत्वाभिप्रायेण "गतिर्गतावि" (८ । १ । ७०) तिनिघात इत्युक्तम् ॥

## णत्वनिवृत्तिः प्रयोजनमिति (कै)

णत्वम् ।

## ऋत्यकः (पा)

(६ । १ ( १२८) इति योगविभागेन पुनर्विधानद्वारेति भावः ॥ "उपसर्गाच्छन्दसि" (५।१।११८) इति वतिः। "अञ् नासिकाया"

---

विगताः सेचका अस्माद् ग्रामाद्विसेचको ग्रामः । उपसर्गादिति (८।३।६५) षत्वं मा भूत् । णत्वम् । प्रगता नायका अस्माद् ग्रामात्प्रणायको ग्रामः । उपसर्गादिति (८ । ४ । १४) णत्वं मा भूत् ॥ वृद्धिविधौ च धातु-ग्रहणानर्थक्यम् । वा । वृद्धिविधौ च धातुग्रहणमनर्थकम् । उपसर्गादृति

---

त्तरपदप्रकृतिस्वरेण "यतोऽनावः" (६ । १ । २१३) इति धेयशब्द उदात्तः । पृथक्त्वभूतमिति । भा । गतित्वात् समासः । स्वरस्तु प्रवृद्धादेः (प्रवृद्धादीनां

---

भावेऽपि "अच उपसर्गात्तः" इति तत्वं प्रवर्तत इत्याहुः । एवं च मरुत्प्रवतीत्यत्र णत्वमपि प्राप्नोति । तस्मात्तत्र एव संज्ञा वक्तव्या । अत एव किविधिरड् च न भवति । निपातसंज्ञा तु नास्त्येव । तेन "तृतीया कर्मणी"ति पूर्वपदप्रकृतिस्वरे कृते मरुच्छब्दो मध्योदात्तः । निपातत्वे त्वाद्युदात्तः स्यात् । न च "उपसर्गाश्चाभिवर्जमि"ति फिट्सूत्रा-द्वोपसर्गादवरुध्यं ग्रहणम् । "निपाता आद्युदात्ता" इत्येव सिद्धे ऽभेः प्रतिषेधमात्रार्थं तत्सूत्रारम्भादिति हरदत्तादयः । अत एव नाभिरित्येव

---

गतिरनन्तर इति पूर्वपदप्रकृतिस्वरः 'यत् प्रकरोतीति' । तिङन्तस्य निघातस्य निपातैर्यद्यदीति निषेधे तिपः पित्वादनुदात्तत्वं, विकरणस्य

**उद्धत** (भा)

**इत्यादेरुद्धताम् निर्गताम् इत्यर्थः ॥**

**प्रेपमि** (भा)

**त्यादेः प्रगता आपो यस्मिन्नित्यादिरर्थः ॥**

**प्रणः** (भा)

**इत्यादेः प्रकृष्टानामस्माकमित्यर्थः ॥**

---

वषुत् । वद्विधि ॥ नसभाव (५।४।११८)। प्रणसं मुखम् । उन्नसं मुखम् । नसभाव ॥ अपोत्त्व । (६ । ३ । ९३) प्रेपं परेपम् । अपोत्त्व । स्वाङ्गादिस्वर । प्रत्विक् (७ । २ । १७७) प्रोदरः । स्वाङ्गादिस्वर ॥ णत्व (८।४।२८)। प्रणः सूद्रः प्रण आचार्यः प्र णो राजा प्र णो वृत्रहा ॥ उपसर्गादित्येते

---

प्रकृतिस्वरः ॥ गत्युपसर्गसंज्ञा इति । भा । क्रियायोग इति सामान्येनोपादानाद्विशेषावधारणार्थं वचनम् । अथ वा प्रत्यासन्नैव क्रिया गृह्यते इति

---

द्युदात्तत्वं तु द्वेधापि सिध्यति । "नब्विषयस्यानिसन्तस्येति" (फिट् सूत्र–२६) पर्वतशब्दस्याद्युदात्तत्वात् । अच्छब्दस्याङ्विधावुपसंख्यानं ॥ श्रद्धा । भिदादिपाठाच्छ्रद्धाश्रद्धेतिनिपातनाद्वा सिद्धम् । "अन्तःशब्दस्याङ्किविधिणत्वेषूपसंख्यानम्" । वा । एतच्च "अन्तरपरिग्रहे" (१ । ४ । ६५) इत्यत्र भाष्ये स्थितम् । अन्तर्धा । अन्तर्द्धिः । अन्तर्हण्यात् । "हन्तेरत्पूर्वस्येति" (८ । ४ । २२) णत्वं । एवं च "अन्तरदेशे" (८ । ४ । २४) इति न कर्तव्यम् । देशे तु क्षुभ्नादित्वाण्णत्वाभावः । अयनं चेत्यपि न कर्तव्यम् । "कृत्यच" इति सिद्धेः । देशे तु क्षुभ्नादित्वात् बोध्येति कैयटः । देशे निषेधार्थं सूत्रद्वयमिति तु हरदत्तः । पक्षद्वयेऽपि अन्तर्णयति अन्तर्भवाणीत्यादौ

---

संज्ञासमावेशार्थं इति' । अन्यथैकसंज्ञाधिकारादेकत्र संज्ञाद्वयविधानाच्च पर्यायः स्यादिति भावः । 'कारिकाशब्दस्येति' कारिका .क्रिया

इत्यर्थ इति । (कै)

तच्च सर्वत्रोपसर्गग्रहणं प्राद्युपलक्षणमिति भावः ॥ ननु लघुना गुरोः प्रत्याख्याने क्रियत एवेत्यसंगतमत आह

केवलाभ्यामितीति ॥ (कै)

---

विधयो न प्राप्नुवन्ति ॥ वद्विधिनत्वभावाबीत्त्वस्वाङ्गादिस्वरणत्वेषु वचनप्रामाण्यात्सिद्धम् । वा । अनवकाशा एते विधयस्ते वचनप्रामाण्याद्भविष्यन्ति ॥ सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु । वा । सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु वक्तव्यः । नुम्विधि । सुलभं दुर्लभम् । उपसर्गादिति नुम्सा

---

न्यायव्युत्पादनार्थम् । वृद्धिविधौ चेति । भा । उपसर्गेणैव धातोराक्षेपात् ॥ प्रर्छक इति । भा । प्रगता ऋच्छका अस्मादिति बहुव्रीहिः । तत्र धातुग्र-

---

यथायथं णत्वं बोध्यम् । सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु ॥ सुलभं । दुर्लभम् । उपसर्गात्खल्घञोरिति नुम् न । एतच्च प्रयोजनमापाततः । "नसुदुर्भ्यां केवलाभ्यामिति" सूत्रस्यावश्यारभ्यत्वात् । अन्यथाऽतिसुलभमित्यत्र नुम् न स्यात् । तत्त्वं, सुदत्तम् । "अच उपसर्गादि"ति तत्वं मा भूत् । षत्वं, दुःस्थितिः । प्रक्रियाजालदुःस्थम् । सुषिक्तम् सुस्तुतम् । "सुःपूजायामिति" तु कर्तव्यमेव पूजायामिति विशेषणार्थम् । तेन सुषिक्तं किं तवात्रेत्यादौ षत्वं भवत्येव । कथं तर्हि

"फलवद्भावनोद्भूतकथम्भावतिरोहिताः ।
नैवाज्ञानां कथं भावाः प्रदुष्यन्ति कथं च नेति ।"

सत्यम् । नेदमुपसर्गत्वप्रादुर्भ्यामित्यत्र प्रादुसः पृथग्ग्रहणप्रयुक्तम् । एतेन प्रादुष्यन्तीति पठित्वा प्र आङ् दुर् इत्युपसर्गत्रिकपूर्वस्य स्यतेरपवर्गा-

---

मर्यादास्थितिरित्यर्थः । यत्न इत्यपरे, धात्वर्थनिर्देश इति ण्वुल्, यस्तु कर्तरि कारिकाशब्दः कारिका दासीति यश्च श्लोकवाची तयोर्ग्रहणं न भवति क्रियायोगग्रहणेन कारिकाशब्दस्य विशेषणात् क्रियाकर्तृग्रहणात् ।

अवश्यमिति । (कै)

वार्त्तिककृताधीति भावः ॥ इत्यचोपसर्गत्वे नुम् भवत्येवेति योरुपसर्गत्वे सतीत्यर्थः । निषेधाभावादित्याशयः ।

इत्यतेरुपसर्गत्वे (कै)

इति पाठे ऽतेः परस्य योरुपसर्गत्वे इत्यर्थः ॥

---

भूदिति (७ । १ । ६७) । न सुदुर्भ्यां केवलाभ्य (७ । १ । ६८) इमित्येतन्न वक्तव्यं भवति ॥ नैतदस्ति प्रयोजनम् । क्रियत एतन्न्यास एव । तत्वम् । सुदत्तम् । अच उपसर्गात्तः (७ । ४ । ४७) इति तत्वं मा भूदिति ॥ षत्वम् । सुसिक्तं घटश्रतेन । सुस्तुतं श्लोकश्रतेन । उपसर्गादिति षत्वं मा भूदिति

---

इत्यस्य श्लाकवनिवृत्तिः प्रयोजनं वक्ष्यते ॥ उद्वत इति । भा । क्रियाशब्द-स्याप्रयोगादुपसर्गत्वाभावः ॥ अनवकाशा इति । भा । येषां हि क्रियाशब्दप्र-योगे तं प्रत्युपसर्गसंज्ञा ते संप्रत्यनुपसर्गसंज्ञा अपि गृह्यन्त इत्यर्थः ॥

---

सुनोतीत्यादिना षत्वमिति व्याचक्षाणाः परास्ताः । दुर उपसर्गतायाः षत्वविधौ निषेधात् । स्वतेरर्थस्य प्रकृतासम्बन्धाच्च । णत्वम् । दुर्नतिम् । दुर्नयः । एतेन दुरः परस्य णत्वं नेति केचिदिति पठित्वा सिद्धान्ते णत्वमिति व्याचक्षाणाः परास्ताः । गतिसंज्ञायां कारिकाशब्दस्योपसङ्ख्यानम् ॥ कारि-काकृत्य । कारिकाकृतम् । यत्कारिकाकरोति । तिङ्ङिचोदात्तवतीति गतेर्निघातः । निपातत्वादव्ययत्वे सति विभक्तेर्लुक् । कारिका क्रिया । मर्यादा स्थितिरित्यर्थः । यत्न इत्यपरे । धात्वर्थनिर्देश इति ण्वुल् । यस्तु कर्तरि ण्वुलन्तः कारिका दासीति । यश्च श्लोकवाची तयोर्नेह ग्रहणम् ।

---

'यत्कारिका करोतीति' । निपातत्वादव्ययत्वे सति विभक्तेर्लुक् । 'पुनरुत्स्यूतमिति' । गतित्वात्समासः । 'गतिर्गता' विति निघातो भवतीति । यद्यप्यत्र प्रकृत्यादीनां केवलस्यपदान्तोदात्तत्वेन प्रेषनिघातः

**इत्यतेः परस्योरुपसर्गत्व (के)**

इति पाठस्तु युक्त एव ॥ "सुः पूजायामि" (१।४।९४) त्येतत्कर्मप्रवचनीयसंज्ञाविधायकम् ॥ भाष्ये

**णत्वं मा भूदिति। (भा)**

न च दुनमादाय णत्वं दुर्वारं कृतरोर्दुसोऽप्यत्रानुकरणेन तस्यापि निषेधात् ॥

---

(८।३।६५) सुः पूजायामि (१।४।९४) त्येतन्न वक्तव्यं भवति। नैतदस्ति प्रयोजनम्। क्रियत एतन्न्यासएव। णत्व। दुर्नयं दुर्नीतमिति। उपसर्गादितिणत्वं मा भूदिति ॥

---

क्रियत इति। भा। केवलाभ्यामिति विशेषणाभिधानार्थमवश्यं कर्तव्यम्। तेनातिसुलभमित्यतेरुपसर्गत्वे णुम् भवत्येव ॥ क्रियत इति। भा। पूजाया-मितिविशेषणोपादानार्थम्। तेन सुषिक्तं किं तवात्रेत्यादौ षत्वं भवत्येव ॥

---

क्रियायोगइति कारिकाशब्दस्य विशेषणात्। क्रियावृत्तेरेव ग्रहणात्। पुनश्च न सौ छन्दसि गतिसंज्ञाविति वक्तव्यम् ॥ पुनराधेयम्। गतित्वात्समासः। कृदुत्तरपदप्रकृतिस्वरेण "यतो नाव" इति धेशब्द उदात्तः। पुनरुत्स्यूतं वासः। इहापि गतित्वात्समासः। स्वरस्तु प्रवृद्धादेराकृति-गणत्वादन्तोदात्तत्वम्। काठके त्वन्तोदात्तः पठ्यते। शेषनिघातेन पुनःशब्दो ऽनुदात्तः। "गतिर्गताविति" निघातं वदन् वृत्तिकारस्तु परत्वात्तस्य न्याय्यतां मन्यते। "चनोहितः" ॥ "चायेरन्ने ह्रस्वश्चे"त्यसुन्नन्तत्वा-न्निपातत्वाद्वा ऽद्युदात्तस्य चनाशब्दस्य "गतिरनन्तर" इति प्रकृतिस्वरः ॥

---

सिद्धस्तथापि परत्वादयमेव निघातो युक्त इति भावः। 'इह च पुनराधेयमिति'। गतित्वात्समासे कृते कृदुत्तरपदप्रकृतिस्वरेण 'यतो ऽनाव' इति धेयशब्द आद्युदात्तः। 'चनो हित इति'। निपातत्वादाद्युदात्तस्य चनःशब्दस्य 'गतिरनन्तर' इति प्रकृतिस्वरः ॥

# ऊर्यादिच्विडाचश्च । १ । ४ । ६१ ॥

च्विडाचोः केवलयोः प्रत्यययोः क्रियायोगासंभवात्सामर्थ्येन संज्ञा-

---

ऊर्यादिच्विडाचश्च ॥ १ । ४ । ६१ ॥ कृभ्वस्तियोग इति वक्तव्यम् ।

---

ऊर्यादिच्विडाचश्च । १ । ४ । ६१ ॥ ऊरी पक्षेति । भा । प्रयोगापर्या-

---

ऊर्यादिच्विडाचश्च १ । ४ । ६१ ॥ एते गतिसंज्ञाः स्युः क्रियायोगे । कृभ्वस्तियोगे च्विडाचौ विहितौ । तत्साहचर्यादूर्यादयोऽपि तद्योग एव प्रयुज्यन्ते नान्यत्र । अनभिधानाच्च । तत्राप्याविःप्रादुःशब्दौ मुक्त्वाऽन्येषां करोतिनैव योग इति माधवादयः । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति तथापीह सामर्थ्यात् च्विडाजन्तग्रहणम् । न हि प्रत्यय-मात्रस्य क्रियायोगः संभवति । स्वार्थिकत्वेनानर्थकत्वात् । चेरश्रावित्वाच्च । ऊरीकृत्य शुक्लीकृत्य पटपटाकृत्य । इहेदमवधेयम् । श्रौषडादीनां चादिष्वपि पाठादक्रियायोगेऽपि निपातत्वम् । आविःशब्दस्य साक्षा-त्प्रभृतिषु पाठात्कृञो योगे विकल्पः । भ्वस्तियोगे त्वनेन नित्यमिति । कथं तर्हि वाचयोमदविघ्नंकमथाविश्चक्षुषोभवदसाविव इति माघः ।

---

ऊर्यादिच्विडाचश्च । १ । ४ । ६१ ॥ 'च्व्यन्ता डाजन्ताश्चेति' । यद्यपि पदसंज्ञायामन्तग्रहणेन संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीति ज्ञापितं तथापि क्रियायोगइत्यनुवृत्तेस्तदन्तग्रहणमिति भावः । नहि प्रत्ययमात्रस्य क्रियायोगः सम्भवति स्वार्थिकत्वेन स्वयमनर्थकत्वात् चेरश्रावित्वाच्च ।

विधावपि तदन्तविधिः । वक्ष्यमाणरीत्यास्य प्रयोगस्यैवाभावादाह

---

इहैव यथा स्यात् । ऊरीकृत्य ऊरीभूय । इह मा भूत । ऊरी पक्त्वा ॥

---

लोचनेन संभवमात्राश्रयेणैतदुदाहृतम् ॥ न चान्ययेति । भा । च्विडाचौ

---

अभवद्युगमद्रिलोलजिह्वायुगलीढोभयसृक्कभागमाविरिति च । निरंकुशाः कवय इति हरदत्तः । वस्तुतस्तु नेह दोषलेशमपि पश्यामः । तथाहि । गतित्वाद्धातोः प्राक् प्रयोगः प्राप्नोतीति त्वदीयपूर्वपक्षसर्वस्वम् । तच्च भाष्यवार्तिकयोरेव निराकृतप्रायम् । "ते प्राग्धातोरिति" सूत्रं हि द्वेधा व्याख्यातं प्रयोगनियमार्थं संज्ञानियमार्थं चेति । तत्रान्त्यपक्षे प्राक् चाप्राक् च प्रयोक्तव्याः । प्राक्तु प्रयुज्यमानाः संज्ञां लभन्त इति स्थितम् । इममेव च पक्षमाश्रित्य "अनुकरणं चेति" सूत्रे ऽनितिपरमिति प्रत्याख्यातम् । एवमेव "छन्दसि परेऽपि" "व्यवहिताश्चेति" सूत्रद्वयमपि प्रत्याख्यातम् । अत एव "ते प्रागिति" सूत्रे सुकटं कराणि वीणानीति भाष्यं "कर्तृकर्मणोश्च" भूकृञोरिति सूत्रे स्वायम्भुवमिति वृत्तिग्रन्थश्च सङ्गच्छते । एतेन वृत्तेः प्रामादिकतां वदन् आढ्येन सुभूयत इति पाठः कर्तव्य इति शिक्षयन् हरदत्तोऽप्यपास्तः । पक्षान्तरैरपि परिहारा भवन्तीति न्यायेन संज्ञानियमपक्षे सर्वस्य सामञ्जस्यात् । एतेन पुरोरामस्य जुहवाञ्चकार ज्वलने वपुरिति भट्टिः । तस्य स्थित्वा कथमपि पुर इति कालिदासश्च

---

'छन्दस्तियोग इति' । न केवलं संज्ञाप्रयोगोऽप्यन्यत्र भवति नहि भवति उरीसंपद्यत इति, औषडादीनां स्वाहापर्यन्तानां चादिषु पाठाद् अक्रियायोगेऽपि निपातत्वम् । आविःशब्दस्य साक्षात्प्रभृतिषु पाठात् कृञो योगे विकल्पः, छन्दस्तियोगे त्वनेन नित्यं' कथं तर्ह्याविश्चतुर्भो

# प्रयोगेति ॥ (कै)

---

तत्तर्हि वक्तव्यम्। न वक्तव्यम्। क्रियायोग इत्यनुवर्तते। (१।४।४६)
न चान्यया क्रियययोर्यादिच्विडाचां योगोऽस्ति॥

---

तावत् कृभ्वस्तियोग एव विहितौ ऊर्यादयोऽपि कृभ्वस्तिविषया एव प्रयुज्यन्ते नान्यत्र॥

---

समर्थितः। न च पुरोऽव्ययमित्यस्य कृञ्मात्रविषयत्वमिति भ्रमितव्यम्। कृञोऽनधिकारात्। तुरासाहं पुरोधायेत्यादिप्रयोगाच्चेति दिक्। ऊरी ऊररी उररी एते त्रयोऽङ्गीकारे विस्तारे च। वितानी भूसी एतौ विस्तारे प्रकला संसकला ध्वंसकला भ्रंसकला एते चत्वारो हिंसायाम्। प्रकला कृतेत्यादि। हिंसित्वेत्यर्थः। गुलुगुधा पीडार्थे। गुलुगुधाकृत्य। पीडयित्वेत्यर्थः। सजूः सहार्थे। फलफली विक्ली आक्ली एते विकारे। आलोष्ठी केवली सेवाली शेवाली वर्षाली मसमसा मस्मसा एते हिंसायाम्। वषट् वौषट् स्वाहा स्वधा पांपी करुणाविलापे। पापीकृत्य। करुणं विलप्येत्यर्थः। प्रादुः प्राकट्ये। श्रत् शीघ्रार्थे। श्रत्कृत्य। आविः प्राकट्ये। आविष्कृत्य। गणरत्ने त्वन्येऽपि संगृहीताः। तथाहि। पापाली सज्ञ्चा केवासी एते हिंसायाम्। वार्दाली यार्दाली आलम्बी एते प्राकाश्ये हिंसायां च। इत्यूर्यादयः॥

---

ऽभवदसाविव रागः, अभवन् युगपद्विलोलजिह्वा युगलीठोभयसृक्कधारमाविरिति, स्वतन्त्राः कवयः। 'शुक्लीकृत्येति'। अस्य च्वितीत्वम्। पटपटाशब्दो 'वा क्यष' इत्यत्र व्युत्पादितः॥

# अनुकरणं चानितिपरम् । १ । ४ । ६२ ॥

## इतेः परमिति । (भा)

"सुप्सुपे"ति योगविभागात्समासः ॥

## धातोश्चानन्तरमिति । (कै)

तद्व्यवधानेन गतेः प्रयोग इत्यर्थः ॥

---

अनुकरणं चानितिपरम् ॥ १ । ४ । ६२ ॥ कथमिदं विज्ञायते । इतेः परमितिपरं न इतिपरमनितिपरमिति आहो स्विदितिः परो यस्मात्तदिदमितिपरं न इतिपरमनितिपरमिति । किं चातः । यदि विज्ञायते इतेः परमितिपरं न इतिपरमनितिपरमिति खाडिति कृत्वा

---

अनुकरणं चानितिपरम् । १ । ४ । ६२ ॥ कथमिति । भा । द्वयोरपि समासयोः संभवाद्दोषदर्शनाच्च प्रश्नः । खाडिति कृत्वेति । भा । गतिसंज्ञायां समासः स्यात् । धातोश्चानन्तरं प्रयोग इतिरूपमेतन्न सिध्येत् । इति खाट्कृत्येत्यत्र च निषेधप्रसङ्गः ॥ भा । श्रौषडिति । श्रौषट्छब्दस्य इतिपरो

---

अनुकरणञ्चानितिपरम् । १ । ४ । ६२ ॥ गतिः स्यात्क्रियायोगे । खाट्-कृत्य । अनितिपरं किम् । खाडिति कृत्वा निरष्ठीवत् । सति हि गतित्वे

---

अनुकरणं चानितिपरम् । १ । ४ । ६२ ॥ 'इतिः परो यस्मादिति' । पञ्चमीसमासस्तु लक्षणाभावान्नाश्रितः । तेनेति खाट्कृत्येत्यत्र इतेः

इति खाट्कृत्येति । (कै)

इति हेतोः खाट् कृत्य गत इत्यर्थः ॥ नन्वितेः परत्वसत्त्वेन कथमत्र प्राप्तिरत आह

औषडिति । (भा)

एवं गतिसमासस्य नित्यत्वादयं प्रयोगो न स्यादिति भावः ॥ "तस्मिन्निति" (१।१।६६) सूत्रे निर्दिष्टग्रहणाद् व्यवहितसाधारण एवायमित्यतो दूषणान्तरमाह

खाट्कृत्येतीति । (भा)

---

निरष्ठीवदित्यत्र प्राप्नोति । अथ विज्ञायते इतिः परो यस्मात्तदितिपरं न इतिपरमनितिपरमिति । औषड्वौषडिति कृत्वा निरष्ठीवदित्यत्र प्राप्नोति । अस्तु तावदितिः परो यस्मात्तदितिपरं न इतिपरमनितिपरमिति । ननु चोक्तं औषड्वौषडिति कृत्वा निरष्ठीवदित्यत्र प्राप्नोतीति । नैष दोषः ।

---

न भवति वौषटा व्यवधानादिति गतिसञ्ज्ञाप्रसङ्गः ॥ ननु व्यवहितेऽपि परशब्दस्य दर्शनाद्भवत्येवेतिपरत्वम् । नैष दोषः । अव्यवधान एवास्य मुख्यावृत्तिः । अन्यत्र त्वन्तरालस्थमसमीक्ष्याव्यवधानमेवाश्रित्य प्रयुज्यते । इह तु वौषटो व्यवधायकस्योच्चारणादयुक्तमनपेक्षणम् ॥ खाट्कृत्येति

---

प्रयोगनियमपक्षे धातोः प्राक् प्रयोगः स्यात् । अनुकरणत्वमात्राक्रान्तस्येति-

---

परत्वेऽपि भवति । 'खाडिति कृत्वा निरष्ठीवदिति' । अत्रासति प्रतिषेधे गतिसंज्ञायां समासः स्यात् धातोश्चानन्तरः प्रयोग इति रूपमेवैतन्न

इति हेतोः खाट्कृत्य निरष्ठीवदित्यर्थः॥ वस्तुत "इतेः परमिति" विग्रहवाक्ये उत्तराङ्गविकल'तस्मादितिपरिभाषोपस्थित्याऽव्यवहितपरत्वबोधाद्वृत्तावपि तदन्तर्भावेणैकार्थीभाव इति भाष्याशयः॥ अयं पदार्थो दर्शयति।

य इति॥ (कै)

---

१ तस्मादित्युत्तरस्य। १। १। ६७॥

---

इदं तावदयं प्रष्टव्यः। अथेह ते प्राग्धातोरिति (१। ४। ८०) कथं गतिमात्रस्य पूर्वप्रयोगो भवति उपोद्धरतीति। गत्याकृतिः प्रतिनिर्दिश्यते। इहापि तर्ह्यनुकरणाकृतिः प्रतिनिर्दिश्यते॥ किमर्थमिदमुच्यते। अनुकरणस्येतिकरणपरत्वप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः। वा। अनुकरणस्येतिकरणपरत्वप्रतिषेध उच्यते। किं प्रयोजनम्। अनिष्टशब्दनिवृत्त्यर्थः। अनिष्टशब्दता

---

निरष्ठीवदित्यत्र धातुव्यवधानेऽपि प्रतिषेधप्रसङ्गात्॥ इदं तावदिति। भा। यो व्यक्त्याश्रयेण व्यवधानं मन्यते॥ गत्याकृतिरिति। भा॥ तस्याश्च भिन्नास्वपि व्यक्तिषु अभिन्नाया नास्त्यत्र व्यवधानम्। किमर्थमिति। अनितिपरमित्येतदित्यर्थः। संज्ञानियमपक्षे सिद्धिं मत्वा प्रश्नः। अनिष्टशब्दनिवृत्त्यर्थ इति। खाडितिकृत्वेति प्रयोक्तव्ये इति खाट्कृत्येति प्रयोगः

---

शब्दे परे ऽयं निषेधः। तेन श्रौषड्वौषडितिकृत्वा निरष्ठीवदित्यत्र

---

सिध्येत्। ष्ठिवु निरसने 'ष्ठिवुक्लमुचमां शिती' ति दीर्घः, भूतकालोवत्यासः किमर्थः कस्य चित्कवेरयं प्रयोग उदाहृतः॥

तस्याश्चेति । (कै)

गतिशब्देन तत्संज्ञकानेकव्यक्तेर्ग्रहणं लक्ष्यानुसारादित्याशयः ॥
गतिसंज्ञार्थं सूत्रमावश्यकमिति प्रश्नानुपपत्तिरत आह

अनितिपरमित्येतदिति ॥ (कै)

संज्ञेति । (कै)

प्राक् प्रयुक्ता एव गत्यादिसंज्ञा इति तदर्थः ॥

---

मा भूदिति । इदं विचारयिष्यति तेप्राग्धातुवचनं प्रयोगनियमार्थं वा स्यात्संज्ञानियमार्थं वेति (१।४।८०) । तद्यदा प्रयोगनियमार्थं तदानिष्ठ-शब्दनिवृत्त्यर्थमिदं वक्तव्यम् । यदा हि संज्ञानियमार्थं तदा न दोषो भवति ॥

---

स्यात् । प्रयोगनियमे चायं दोषः । तत्र ह्ययमर्थः । गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्या इति ततो व्यवहितस्य प्रयोगाप्रसङ्गः । संज्ञानियमे तु न दोषः । तेनैव नियमेन खाडिति कृत्वेत्यत्र व्यवहितस्य संज्ञानिवारणादस्य प्रयोगस्य सिद्धत्वात् ॥

---

श्रौषट्शब्दस्यापि निषेधः । संज्ञानियमपक्षे तु अनितिपरग्रहणं न कर्तव्यमिति । परस्परसंज्ञाप्राप्तेरेवाभावात् ॥

---

चुम्बनसक्तः सोऽस्याः च्युतमूलं दशनमात्मनो वदने ।
जिह्वामूलस्पृष्टं खाडिति कृत्वा निरष्ठीवत् ॥

# आदरानादरयोः सदसती।१।४।६३॥

## आदरः। (कै)

प्रत्युत्थानादिविषयस्त्वराख्यः॥

## अनादरः। (कै)

परिभव औदासीन्यं च तच्चावश्यकोत्थानादिविषयोपेक्षकार्यार्थत्वादिति तेनासच्छब्देन समासादिसिद्धिः। गतिसंज्ञा तु सच्छब्द-

---

आदरानादरयोः सदसती। १। ४। ६३॥ इदमतिबहु क्रियते आदरे अनादरे सद् असदिति। आदरे सदित्येव सिद्धम्। कथमसत्कृत्येति।

---

आदरानादरयोः सदसती १। ४। ६३॥ कथमसत्कृत्येति। भा। यदि न सत्कृत्यासत्कृत्येति नञ्समासः क्रियते तदा सतिशिष्टत्वात्कृदुत्तरपद-प्रकृतिस्वरं बाधित्वाऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं स्यात्। अथ न सदसदिति समासः क्रियते तदा सच्छब्दस्य विधीयमाना गतिसंज्ञा-

---

आदरानादरयोः सदसती। १। ४। ६२॥ क्रमाद्गतिसंज्ञे स्तः। सत्कृत्य।

---

आदरानादरयोस्सदसती॥ 'प्रीतिसंभ्रम इति'। प्रीतिपूर्विका प्रत्युत्थानादिविषया त्वरेत्यर्थः। 'परिभवौदासीन्यमिति'। अवश्यकर्तव्यं प्रत्युत्थानादिकं प्रत्युपेक्षेत्यर्थः। असदनादरग्रहणं किमर्थमसत्कृत्येत्यत्रापि यथा स्यात्, मा भूदसच्छब्दस्य गतिसंज्ञा सत्कृत्येत्यनेन नञ्समासो भविष्यति। नैवं शक्यं, सति शिष्टत्वात् कृदुत्तरपदप्रकृतिस्वरं

स्यैवेति भावः ॥ सुबिति प्रकृतमिति समर्थ इति प्रकृतमित्यपि बोध्यम् ॥ ननु तदन्तविधिना कार्यसम्भवेऽप्यनादर इत्यस्यासत्त्वे कथमत्र तत्प्रतीतिरित्याह भाष्ये

केनेदानीमिति ॥ (भा)

नन्वनादर इत्यस्यासत्त्वं कथं नञा ऽऽदरप्रतिषेधो विज्ञास्यते-ऽत आह

अनेनेति । (कै)

आदरप्रतिषेध इत्यस्य सदर्थादरप्रतिषेध इत्यर्थः ॥

---

तदन्तविधिना भविष्यति (१ । १ । ७२) । केनेदानीमनादरे भविष्यति । नञाऽऽदरप्रतिषेधं विज्ञास्यामः । न आदरे ऽनादर इति । नैवं शक्यम् ।

---

ऽसच्छब्दस्य न स्यादिति भावः ॥ तदन्तविधिनेति । भा । यद्यपीह प्रकृतं विशेष्यं नास्ति तथापि कार्यार्थत्वात्संज्ञायाः कार्यप्रदेशेषु प्रकृतस्य गतिना विशेषणात्तदन्तविधिर्भवति । तत्र समासविधौ सुबिति प्रकृतं गतिरनन्तर (६ । २ । ४९) इत्यत्र पूर्वपदं गतिर्गताविल्यत्र पदस्येति (८ । १ । ७०) ।

---

असत्कृत्य । प्रीतिपूर्विका प्रत्युत्थानादिविषया त्वरादराः । अवज्ञया

---

नाधित्वा ऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं स्यात्, असत्कृतमित्यत्र तु सत्कृतशब्दे गतिरनन्तर इति स्वरे प्रवृत्ते पश्चान्नञ्समासेऽपि तस्यैव स्वरः, असच्छब्दस्यापि कृतशब्देनापि समासे तस्य निपातत्वादाद्युदात्तस्य गतित्वात्प्रकृतिभावेऽपि स एव स्वर इति नास्ति विशेषः । इह च पूर्वसत्कारोतीत्यसच्छब्दस्य निपातो न स्यात् अव्ययसंज्ञापि तस्य न स्या-दित्यसच्छब्दस्यैव गतिनिपातसंज्ञे एषितव्ये, न चात्र सच्छब्देन तदन्त-

इत्यादौ तु न स्यादिति । (कै)

नञ्समासे सदृशस्यैव प्रतीतेर्गुर्वादिविषये एव प्रयोगः स्यात् पाखण्ड्यादिविषये तु प्रयोगो न स्यादिति भावः ॥ प्रसङ्गाभावे चेति पाठः ॥ नन्वनादरग्रहणे ऽसद्ग्रहणमपि कार्यमेवान्यथा सच्छब्दस्यानादरे ऽवृत्तेरच तदन्तविध्यभावाच्च कस्य तत्र वर्त्तमानस्य संज्ञा स्यादत आह

आदरेत्यादि ॥ (कै)

---

आदरप्रसङ्गे एव हि स्यादनादरप्रसङ्गे न स्यात् । अनादरग्रहणे पुनः

---

अव्ययसंज्ञायामस्त्येव तदन्तविधिः ॥ न आदर इति । भा । अनेनासच्छब्दस्यानादरार्थवृत्तितां दर्शयति । ततश्चानादरग्रहणेन यत्साध्यं तदन्यथापि सिध्यतीत्येवं परमेतत् । आदरप्रसङ्ग इति गुरुमसत्कृत्येत्यादौ स्यात् पाखण्डिनमसत्कृत्येत्यादौ तु न स्यात् । तथाहि । अश्राद्धया इति द्वाचि-

---

प्रत्युत्थानादावुपेक्षा त्वनादरः । एतयोः किम् । सत्कृत्वा । असत्कृत्वा । शोभनमशोभनं च कृत्वेत्यर्थः ॥

---

विधिर्लभ्यते विशेष्यस्याभावात् । नन्वत्र सच्छब्दस्यैव संज्ञास्तु कार्यप्रदेशेषु प्रकृतस्य तेन तदन्तविधिर्भविष्यति, अव्ययसंज्ञायां तावदस्त्येव तदन्तविधिः परमोच्चैरिति, यथा कुगतिप्रादय इत्यत्रापि सुबिति प्रवर्तते सुपेत्येव निवृत्तं तद्गतिना विशेष्यते 'गतिरनन्तर' इत्यत्रपूर्वपदं 'गतिर्गता' वित्यत्रापि पदस्येति प्रकृतं भवतु तदन्तविधिना कार्यम् अनादरावगतिस्तु कुतः असत्त्वनादरग्रहणे, न सदसदित्यादरनिषेधान्नैव प्रकाम् आदर-

सामर्थ्यादिति। (कै)

प्रकृतविशेष्याभावेऽपि शब्दरूपं विशेष्यमादायेत्यर्थः ॥

---

क्रियमाणे बहुव्रीहिरयंविज्ञायते। अविद्यमानादरे अनादरे इति। तस्मादनादरग्रहणं कर्तव्यम्। असतस्तु तदन्तविधिना सिद्धम् ॥

---

यादिरेवोच्यते न तु गोलोष्ठादिः॥ बहुव्रीहिरिति। भा। स चात्यन्ताभावेऽपि प्रसक्त्यभावे भवतीति सर्वत्र संज्ञा सिध्यति॥ असतस्त्विति। भा। आदरानादरयोः सदित्येव वक्तव्यं तत्रानादरे सच्छब्दस्य वृत्त्यसंभवात्तदन्तविधिना ऽसच्छब्दस्य गतिसंज्ञा भविष्यति। यथा गोष्पदं सेवितेत्यत्रासेविते गोष्पदशब्दस्य वृत्त्यसंभवादगोष्पदार्थमसेवितग्रहणम् ॥

---

प्रसक्त एव हि स्यात् गुणमसवृत्तत्वेति चाक्षाणमसल्कृत्येत्यत्र न स्यात् यथा ऽब्राह्मण इति क्षत्रियादिरेवोच्यते न लोष्ठादिः, अनादरग्रहणे तु सति बहुव्रीहिर्विज्ञायते अविद्यमानादरोऽनादर इति। बहुव्रीहिश्चात्यन्ताभावे प्रसक्ताभावे ऽप्रसक्ताभावे च भवतीति सर्वत्र संज्ञा सिध्यति, तस्मादनादरग्रहणं कर्तव्यम् असद्ग्रहणं तु शक्यमकर्तुम्। आदरानादरयोः सदित्येवास्तु तत्र यथा गोष्पदं सेवितेष्वासेविते गोष्पदशब्दो न सम्भवतीत्यगोष्पदार्थमसेवितग्रहणम्। एवमनादरे ऽपि सच्छब्दो न सम्भवतीत्यसच्छब्दार्थमनादरग्रहणं भविष्यति। 'सत्कृत्य ऽसत्कृत्येति'। शोभनवचनो विद्यमानवचनो वा सच्छब्दः, तद्विपरीतवचनोऽसच्छब्दः ॥

# अन्तरपरिग्रहे १ । ४ । ६५ ॥

ननु समासस्य सूत्रेणैव सिद्धेर्वार्त्तिके समासग्रहणं व्यर्थमत आह

सामान्येनेति । (कै)

एवं चोपसंख्यानशब्देनापूर्ववचनमेव नोच्यते किं तु विधान-मात्रम् । एवं चोपसर्गसंज्ञाविषयमपूर्ववचनं गतिसंज्ञाविषयसूत्रं चोपसंख्यानशब्देनोच्यत इति न समासग्रहणं व्यर्थमिति भावः ॥ ननु गतिसंज्ञांऽशेऽप्यपूर्वत्वमस्त्वित्यत आह

गतिसंज्ञाया इति ॥ (कै)

---

अन्तरपरिग्रहे १ । ४ । ६५ ॥ अन्तः शब्दस्याङ्किविधिसमासणत्वेषूप-संख्यानम् । अन्तःशब्दस्याङ्किविधिसमासणत्वेषूपसंख्यानं कर्तव्यम् । अङ् ।

---

अन्तरपरिग्रहे १ । ४ । ६५ ॥ अन्तःशब्दस्येति । भा । अङ्किविधिणत्वानि उपसर्गसंज्ञाश्रयाणि । समासस्तु गतिसंज्ञाश्रय इत्यपूर्ववचनं सूत्रोपादानं च सामान्येनोपसंख्यानमुच्यते । गतिसंज्ञाया अनेनैव सिद्धत्वादपूर्ववचनाभावात् ।

---

अन्तरपरिग्रहे । १ । ४ । ६५ ॥ स्पष्टम् । अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् । अन्तर्हत्वा मूषिकां श्येनो गतः । परिगृह्य गत इत्यर्थः । अत्रेदमवधेयम् । हत्वा गमनं द्विधा । हतं त्यक्त्वा परिगृह्य

---

अन्तरपरिग्रहे । १। ४। ६५ । अन्तर्हत्वा मध्ये हत्वेत्यर्थः । 'अन्तःशब्द-स्येत्यादि' । उपसर्गसंज्ञायामेवैतस्योक्तम् अन्तःशब्दप्रसङ्गेन वक्ष्यामीति यदा-पीपसर्गसंज्ञोच्यते तदान्तर्भवतीत्यादिवदन्तर्हण्यात् अन्तर्हयणमित्यादावपि

अनेनैवेति। (कै)

सूत्रेणैवेत्यर्थः। तदतिरिक्तविषये त्वनेनापि नेष्यतइति भावः॥ नन्वन्तरदेशे इत्यादिनैव सिद्धेर्णत्वे उपसंख्यानं व्यर्थमत आह

हन्ते इत्यादिः॥ (कै)

तथैवेति। (कै)

अन्तरयणमित्यस्यानेनैव सिद्धेर्देशे प्रतिषेधोऽपि 'क्षुभ्नादित्वा-त्सिद्ध इति भावः॥ तदारम्भेऽप्यस्यावश्यकतां दर्शयति

अन्तर्णयतीति॥ (कै)

---

१ अ ८। पा ४। सु २६॥

---

अन्तर्द्धा। किविधिः। अन्तर्द्धिः। समासः। अन्तर्हत्य। णत्वम्। अन्तर्हण्याद् गोघ्नो गाः॥

---

अन्तर्हण्यादिति। भा। हन्तेरत्पूर्वस्येतिणत्वस्य सिद्धत्वाद् अन्तरदेशे इति न वक्तव्यं भवति। देशे तु क्षुभ्नादित्वात्तत्वाभावः। तथैवायनं चेति न वक्तव्यम्। कृत्यच इति सिद्धत्वात्। अन्तर्णयतीत्यत्राप्युपसर्गादिति णत्वं सिध्यति॥

---

चेति। आद्यमुदाहरणम्। द्वितीयं प्रत्युदाहरणम्। अपरिग्रहे इति च प्रयोगोपाधिर्न तु वाक्कोटिनिविष्टमिति॥

---

"हन्तेरत्पूर्वस्येति णत्वं सिद्धम् अन्तरयणमित्यत्रापि 'कृत्यच' इत्येव सिद्ध-मिति अन्तरदेशे अयनं चेति सूत्रद्वयमपि देशप्रतिषेधार्थं द्रष्टव्यम्॥

# साक्षात्प्रभृतीनि च । १ । ४ । ७४ ॥

## साक्षाद्भूता इति । (कै)

प्रत्यक्षा इत्यर्थः ॥ तदुक्तं भाष्ये

## यदा हि साक्षादेव सत् किंचित्क्रियत इति । (भा)

"लवणमि"त्यादिगणपाठान्मान्ता अपि ॥ एते शब्दाः स्वतन्त्रा इति भ्रमं व्यावर्तयति भाष्ये

## मकारान्तत्वं चेति । (कै)

---

साक्षात्प्रभृतीनि च । १ । ४ । ७४ ॥ साक्षात्प्रभृतिषु च्व्यर्थवचनम् । साक्षात्प्रभृतिषु च्व्यर्थवचनं कर्तव्यम् । असाक्षात्साक्षात्कृत्वा साक्षात्कृत्य । यदा हि साक्षादेव सत् किंचित्क्रियते तदा मा भूदिति ॥ मकारान्तत्वं च गतिसंज्ञासन्नियुक्तम् । वा । मकारान्तत्वं च गतिसन्नियोगेन वक्तव्यम् । लवणं

---

साक्षात्प्रभृतीनि च । १ । ४ । ७४ ॥ साक्षात्प्रभृतिष्विति । भा । अभूततद्भावविषयायामेव तथा स्याद् यदा तु साक्षाद्भूतं रूपान्तरेण क्रियते तदा

---

साक्षात्प्रभृतीनि च । १ । ४ । ७४ ॥ एतानि कृञि वा गतिसंज्ञानि स्युः । च्व्यर्थ इति वक्तव्यम् ॥ साक्षात्कृत्य साक्षात्कृत्वा । असाक्षाद्भूते साक्षात्क्रियते चेत्तदायं प्रयोगः । नतु साक्षाद्भूतस्यैव रूपान्तरापादाने । च्व्यन्तेषु तु पूर्वविप्रतिषेधादूर्यादिच्विति नित्यैव संज्ञा । तेन लवणीकृत्येत्यत्र मान्तत्वं न भवति । तद्विकल्पसन्नियोगेनेह गणे निपात्यते । यदा लवणशब्दस्य लवणमिति मान्त आदेशः । तथा च मास्तु

---

साक्षात्प्रभृतीनि च । १ । ४ । ७४ ॥ 'साक्षात्प्रभृतिष्विति' । असाक्षाद्भूतं यदा साक्षात्क्रियते तदा यथा स्यात् यदा यत्तु साक्षाद्भूतमेव रूपान्तरेण क्रियते तदा माभूदित्येवमर्थम्, मिथ्याप्रभृतिष्वपि द्रष्टव्यम्, एतच्चान्तरङ्गत्वाल्लभ्यते, तथाहि साक्षात्कृतमित्युक्ते श्रुतस्य तस्यैव रूपस्य करणं

पुनः प्रसङ्गेति । (भा)

परत्वाद्विकल्पेऽपि तदभावे नित्यविधिप्राप्त्या न दोष इति भावः ॥ न च प्राप्तविभाषाविषये वैकल्पिकाभावे नित्याङ्गीकारे विकल्पशास्त्रस्य वैयर्थ्यापत्तिरच्व्यन्ते चारितार्थ्यात् ॥ भाष्ये

गतिसंज्ञासन्नियुक्तमिति । (भा)

वैकल्पिकगतिसंज्ञानियुक्तमित्यर्थः ॥

---

·कृत्य ॥ तत्र च च्विप्रतिषेधः । वा । तत्र च च्व्यन्तस्य प्रतिषेधो वक्तव्यः । लवणीकृत्य ॥ न वा पूर्वेण कृतत्वात् । वा । न वा वक्तव्यम् । किं कारणम् पूर्वेण कृतत्वात् । अस्त्वनेन विभाषा पूर्वेण (१ । ४ । ६१) नित्या भविष्यति ॥ इदं तर्हि प्रयोजनम् । मकारान्तत्वं च गतिसंज्ञासन्नियुक्तमित्युक्तं

---

मा भूदित्यर्थः ॥ लवणीकृत्येति । भा । अत्र हि परत्वादनेन विभाषा प्राप्नोति । नित्या च गतिसंज्ञेष्यते ॥ पूर्वेणेति । भा । पुनःप्रसङ्गविज्ञानादिति

---

पूर्वविप्रतिषेधः । नैशब्द्यं हि नः साध्यम् । लवणं कृत्य लवणं कृत्वा । लवणीकृत्येति । तत्र च्व्यन्ताच्व्यन्तयोः पाक्षिके लवणमादेशे समं रूपम् । परेणापि विकल्पेन मुक्ते तु च्व्यन्तस्य नित्या संज्ञेति न कश्चिद्दोषः । इहामीवर्षेप्रभृतयो विभक्तिप्रतिरूपका निपाताः । प्रादुराविःशब्दयो-रूर्यादित्वात्प्राप्ते विभाषा । साक्षात् मिथ्या चिन्तेति मनोव्यापारे । चिन्ताकृत्य । भद्रा आलोचनाप्रशंसामङ्गलेष्वयम् । रोचनेतीतिशब्दोत्पादे

---

प्रतीयते न त्वद्भुतरूपान्तरस्य ॥ नन्वसत्यामपि प्रकृतिविवक्षायां तस्यैव रूपस्य करणं प्रतीयते अथ च च्व्यर्थवत्तिता नास्ति तस्माच्च्व्यर्थग्रह-णमेव कर्तव्यम्, अथ च्व्यन्तेष्वपि साक्षादादिषु अयं विकल्पः कस्मान्न भवति अस्त्वनेन मुक्ते पुनः प्रसङ्गविज्ञानादूर्यादिच्विडाचस्त्वेषा भवत्येव । नैवं शक्यं यदेतल्लवणादीनां मकारान्तत्वनिपातनं तदपि च्व्यन्तेषु स्यात्, एवं लवणादीनां मान्ता लवणादय आदेशाः करिष्यन्ते तत्र यथैकदेशविकृतस्यानन्यत्वाल्लवणीशब्दस्यापि पक्षे लवण आदेशः क्रियते

एकदेशेति । (कै)

एवं च लवणीकृत्येत्यनिष्टं स्यादिति भावः ॥ भाष्ये

लवणं शब्द इति । (भा)

लवणमिति गणपाठस्य लवणशब्दस्य लवणमित्यादेश इत्यर्थः ॥
गतिसंज्ञासंनियुक्तत्वाद् गतिसंज्ञाभावे आदेशाभाव इति भाष्ये

"विभाषे"त्युक्तम् । (भा)

अनेन गतित्वाभावे च लवणशब्दे पूर्वेण गतित्वमिति भावः ॥

---

तच च्व्यन्तस्य मा भूदिति । एतदपि नास्ति प्रयोजनम् । लवणशब्दस्यायं विभाषा लवणं शब्द आदेशः क्रियते । यदि च लवणीशब्दस्यापि विभाषा लवणं शब्द आदेशो भवति न किं चिद् दुष्यति । त्रैशब्द्यं चेह साध्यं तच्चैवं सति सिद्धं भवतीति ॥

---

भावः। च्व्यन्तस्य मा भूदिति । एकदेशविकृतस्यानन्यत्वात् प्राप्नोति । त्रैशब्द्य-मिति । त्रय एव शब्दास्त्रैशब्द्यम् । लवणं कृत्वा लवणं कृत्य लवणीकृत्येति ॥

---

प्रशंसायां च । अमेति रहःसाहित्ययोः । आस्था श्रद्धा प्राणथी बीजथी गर्भक्रियायाम् । प्राणवद्धा बीजवद्धेति वधक्रियायाम् । लवणम् उष्णं शीतम् । उदकम् । आर्द्रं, लवणादीनां पञ्चानां गतिसंज्ञासन्नियोगेन मान्तत्वं निपात्यते मान्तादेशो वेत्युम् । अमौ । वशे विकम्पने विकसने प्रहसने सन्तपने । प्रादुस् नमस् आविस् । आकृतिगणोऽयम् ॥

---

न कश्चिद् दोषः, त्रैशब्द्यं हि नः साध्यं लवणं कृत्य लवणं कृत्वा लवणी-कृत्येति तच्चैवं सति सिद्धं वृत्तिकारस्तु मकारान्तत्वं निपात्यत इति वदति स मन्यते च्व्यन्तेषु पूर्वविप्रतिषेधेन नित्या संज्ञा भवति विकल्पेन तु सन्नियुक्तं मान्तत्वं निपातनमिति । अमौवशे प्रभृतयो विभक्तिप्रतिरूपका निपाताः, प्रादुराविःशब्दयोरूर्यादित्वात् प्राप्ते विभाषा ॥

# ते प्राग्धातोः । १ । ४ । ८० ॥

ननु ते इत्यनेन यदि लब्धसंज्ञानां परामर्शस्तदा द्वितीयपक्षानुत्थितिरेव केवलानां परामर्शे लेतत्संज्ञारहितानामप्यायपचे व्यवहितप्रयोगानापत्तिरत आह

तत्र यदेति ॥ (कै)

---

ते प्राग्धातोः । १ । ४ । ८० ॥ किमिदं प्राग्धातुवचनं प्रयोगनियमार्थमेते प्रागेव धातोः प्रयोक्तव्या आहोस्वित्संज्ञानियमार्थमेते प्राक् चाप्राक् च प्रयोक्तव्याः प्राक्प्रयुज्यमानानां गतिसंज्ञा भवतीति । कश्चात्र विशेषः ।

---

ते प्राग्धातोः । १ । ४ । ८० ॥ किमिदमिति । भा । नियमद्वयसंभवात्प्रश्नः । तत्र यदा प्रयोगनियमस्तदा त इत्यनेन लब्धगत्युपसर्गसंज्ञाः परामृश्यन्ते । यदा तु संज्ञानियमस्तदा प्रादय उपनिषत्पर्यन्ताः स्वरूपेणैव प्रत्यवमृश्यन्ते ।

---

ते प्राग्धातोः । १ । ४ । ८० ॥ ते गतिसंज्ञा धातोः प्रागेव प्रयोज्याः ॥ छन्दसि परेऽपि ॥

---

ते प्राग्धातोः । १ । ४ । ८० ॥ नियमार्थमिदम् । स पुनर्नियमः संज्ञानियमो वा स्यात्प्रयोगनियमो वा स्यात् । तत्र संज्ञानियमे तेशब्देन प्रादय उपनिषत्पर्यन्ताः स्वरूपेण परामृश्यन्ते, न गत्युपसर्गसंज्ञाविशिष्टेन रूपेण, संज्ञयोरनिष्पादनात्, अनेनैकवाक्यतापन्नैः पूर्वसूत्रैस्तयोर्विधानात् । ते प्रादय उपनिषत्पर्यन्ता धातोः प्रागेव प्रयुज्यमाना गत्युपसर्गसंज्ञा भवन्तीत्यर्थः । प्रयोगनियमे तु लब्धगत्युपसर्गसंज्ञाः परामृश्यन्ते । ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्या इत्यर्थः । तत्राद्ये पक्षे स्वरूपेण परामर्शः प्रादीनामिव चादीनामपि स्यात् । ततश्च निपातसंज्ञाया अपि नियमः

## अनिष्यादादिति। (कै)

संज्ञानियमपक्षे ऽस्य परिभाषात्वेनैकवाक्यतयैव संज्ञाविधानादिति भावः॥ प्रत्यासत्तेश्च गत्युपसर्गसंज्ञाविषय एव नियमो न निपातसंज्ञाविषयक इति बोध्यम्॥ ननु संज्ञानियमे इदं व्यर्थमप्राक् प्रयुज्यमानानामपि संज्ञायां जातायामनिष्टाभावादत आह

## अनितीति। (कै)

एवं चैवमाद्यकरणमेवात्र पक्षे सूत्रस्य फलमिति भावः॥

---

प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरणपरप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः। वा। प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरणपरप्रतिषेधो वक्तव्यः। किं प्रयोजनम्। अनिष्टशब्दनिवृत्त्यर्थः। अनिष्टशब्दता मा भूदिति। छन्दसि परव्यवहितवचनं च। वा। छन्दसि

---

संज्ञाया अनिष्यादात्। अनेनैकवाक्यतामापन्नैः पूर्वसूत्रैस्तस्या विधानात्। अनुकरणस्येति। भा। अनुकरणं चानितिपरमित्यत्रैतद्व्याख्यातम्। संज्ञानियमे सिद्धमिति। भा। अनितिपरमिति न वक्तव्यम्। अनेनैव नियमेन खाडितिकृत्वेत्यत्र संज्ञानिरासस्य सिद्धत्वात्। उत्तरं च सूत्रद्वयं न कर्तव्यं

---

स्यात्, अथापि गत्युपसर्गसंज्ञयोरेव नियमः, एवमप्यनर्थकं वचनं प्रयोग एव हि तेषामप्राक् नेष्यते न पुनरप्राक्प्रयुज्यमानानां संज्ञायां किंचिदनिष्टमापद्यते, छन्दसि परेऽपि 'व्यवहिताश्चे' ति सूत्रद्वयं चानर्थकं, परव्यवहितानां संज्ञैव निषिद्धा न तु प्रयोगः, न च तेनापि संज्ञैव विधीयते, निष्प्रयोजनत्वात्। किं चा 'नुकरणं चानितिपर' मित्यनितिपरग्रहणमनर्थकं स्यात्, खाडिति कृत्वा निरष्ठीवदित्यत्र व्यवहितस्यानुकरणस्य गतिसंज्ञैव निषिद्धा प्रयोगस्तु केन वार्यते, प्रयोगनियमे तु धातोः प्रागेवानुकरणस्य प्रयोगः स्याद् न त्वितिशब्देन व्यवहितस्येति अनितिपरमिति वक्तव्यम्,

न तु प्रयोगस्येति । (कै)

न चाप्राप्तसंज्ञानां परव्यवहितानां संज्ञार्थमुत्तरसूत्रं फलाभावात् परव्यवहितानामेकाकिनामेव छन्दसि प्रयोगेण "गतिर्गताविति" फलस्य वक्तुमशक्यत्वात् । एवं च संज्ञानियमे प्रयोगनियमपक्षीय-फलसिद्धिस्तितयाकरणलाघवं चेति भावः ॥ नन्वापाद्यमानव्यवहित-परप्रयोगनिवृत्तये सूत्रं स्यादत आह

भाषायामिति । (कै)

एवं चानभिधानेन प्रत्याख्यानमिति भावः ॥

---

परेऽपि व्यवहिताश्चेति वक्तव्यम् । संज्ञानियमे सिद्धम् । वा । संज्ञानियमे सति सिद्धमेतद्भवति । अस्तु तर्हि संज्ञानियमः । उभयोरनर्थकं वचनमनिष्टाद-र्शनात् । वा । उभयोरपि पक्षयोर्वचनमनर्थकम् । किं कारणम् । अनिष्टा-दर्शनात् । नहि कश्चित्प्रपचतीति प्रयोक्तव्ये पचति प्रेति प्रयुङ्क्ते यदि

---

भवति । परव्यवहितानां गत्युपसर्गसंज्ञयोर्निवारणान्न तु प्रयोगस्येत्यर्थः । चक्त्वेति । भा । लाघवादस्यैव पक्षस्य युक्तत्वात् । उभयोरिति । भाषायां परव्यवहितप्रयोगो न दृश्यते तत्र किं प्रयोगनियमेन वा संज्ञानियमेन वा । यत्र हि लोके संकीर्णः प्रयोगो यथा गौर्गावीति तत्रासाधुपरिहाराय

---

अतः प्रयोगनियम एवायं युक्त इति मत्वाह । 'ते गत्युपसर्गसंज्ञका इति' । अथास्मिन्नपि पक्षे निपातानामपि तच्छब्देन परामर्शः कस्मान्न भवति, व्यवहितत्वात् । कथं तर्ह्युपसर्गाणां परामर्शः, नोपसर्गत्वेन रूपेण परामृश्यन्ते किं तर्हि गतिरूपेण तेषामपि गतित्वात्, अनेनैवाभिप्रायेण वृत्तावुपसर्गाणां पृथग् ग्रहणं, चादयस्तु नैवमिति न ते परामृश्यन्ते॥ ननु यत्र लोके संकीर्णः प्रयोगो गौर्गावीति तत्र साधुपरिज्ञानाय शास्त्रमर्थवत्, यत्र त्वसंकीर्ण एव प्रयोगो न तत्र शास्त्रकृत्यमस्ति, न च

न दृश्यतइति । (कै)

शिष्टानां यज्ञकर्मणो ऽन्यत्रापीति शेषः ॥

द्वयोरप्युपपदत्वादिति ॥ (कै)

यद्यपि समासः क्रमेणैव तथापि कदाचित्पूर्वं कूलशब्देन समासे तत उदेति विपरीतः प्रयोगः स्यादिति भावः । तथा च सूत्रसार्थक्याय प्रयोगनियमपक्ष एवादर्त्तव्यस्तस्मिंश्च कृते ऽनिनीत्याद्यपि सर्वकार्यमिति तात्पर्यम् ॥ ननु सुष्ठितं कटं कुर्वन्तीत्यर्थाभावाय गतिरुपसर्गो वेति न दोषो ऽत आह

---

चानिष्टं दृश्येत ततो यत्नार्हं स्यात् । उपसर्जनसन्निपाते तु पूर्वपरव्यवस्थार्थम् । वा । उपसर्जनसन्निपाते तु पूर्वपरव्यवस्थार्थमेतद्वक्तव्यम् । ऋषभं कूलमुद्रुजम्रृषभंकूलमुद्रुहम् । अत्र गतेः प्राग्धातोः प्रयोगो यथा स्यात् । यद्युपसर्जनसन्निपाते पूर्वपरव्यवस्थार्थमिदमुच्यते सुकटंकराणि वीरणानीत्यत्र

---

साध्वनुशासनं कर्तव्यम् । न त्वसंकीर्ण एव प्रयोगे स्थिते शास्त्रस्य किंचिदस्ति प्रयोजनम् । छन्दसि तु परव्यवहितप्रयोगो दृश्यत एव । उपसर्जनसन्निपात इति । भा । यद्यपि लोके विपरीतः प्रयोगो न दृश्यते

---

कश्चित् प्रपचतीति प्रयोक्तव्ये पचतीति प्रेति प्रयुङ्क्ते । यद्यपि लोके प्रयोगो न दृश्यते विपरीतश्छन्दसि तु परव्यवहितप्रयोगदर्शनाद् भाषायामपि तथा प्रयोगः शङ्क्येत, दर्शितश्चाद्यत्वेऽपि भाषायामेव गतेराविःशब्दस्य परव्यवहितप्रयोग ऊर्यादिसूत्रे । किं च 'उदिकूले रुजिवहोः' कूलमुद्वह इत्यत्र उदि कूल इति द्वयोरपि सप्तमीनिर्देशादुपपदत्वात्समासे कृते 'उपसर्जनं पूर्व' मिति शास्त्रवशात्पर्यायेण' पूर्वनिपातं मन्येरन् इत्युपसर्जनसंनिपाते पूर्वपरव्यवस्थार्थमिदं वक्तव्यं, यद्येवं 'कटंकर्मकोश्च भूतृञ्ोः' सुखेन कटः क्रियते सुकटंकराणि वीरणानि दुष्कटं कराणि,

सुखेनेति । (कै)

उत्तरसूत्रे एव खलः खित्त्वस्य सफलत्वादिति भावः । ईषच्छ-ब्दयोगे तु न खल् नानभिधानात् । अन्यथेषदाढ्यं भवं भवता। ईषदाढ्यंकरो मैत्रो भवतेत्यादावीषतोऽगतित्वेन खित्त्वस्य चारि-तार्थ्याज्ज्ञाप्यासंगतिरेव स्यादिति बोध्यम् ॥ नन्वजन्तत्वात्सोर्मुमः प्राप्तिरस्त्येवेत्यत आह भाष्ये

अस्त्वेवेति । (भा)

प्राप्नोत्वित्यर्थः ॥

---

गतेः प्राग्धातोः प्रयोगः प्राप्नोति । आचार्यप्रवृत्तिर्ज्ञापयति नात्र गतेः प्राक्प्रयोगो भवतीति । यदयमीषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खलिति खकारमनुबन्धं करोति । कथं कृत्वा ज्ञापकम् । खित्करण एतत्प्रयोजनं खितीति मुम् यथा स्यात् । यदि चात्र गतेः प्राक्प्रयोगः स्यात्

---

तथापि कूलमुद्रुजमित्यादौ द्वयोरप्युपपदत्वात्समासे कृते "उपसर्जनं पूर्व-मिति" शास्त्रदर्शनात्पर्यायेण पूर्वनिपातेन भाव्यं कूलमुद्रुज उत्कूलं रुज इत्येवं यो भाष्योक्तं प्रतीदं सूत्रं कर्तव्यमित्यर्थः । सुकटंकराणीति । सुखेन

---

अत्र सुदुसोः प्राग्धातोः प्रयोगः प्राप्नोति कटं सुकराणीति, खलः खित्करणमिदानीं किमर्थं स्यात्, अनव्ययस्य हि मुमुच्यते खित्करणसाम-र्थ्याद् अव्ययस्य भवतु, यदि वा कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति सुकरशब्दे परतः कटस्य भविष्यति, कर्तव्योऽत्र यत्नः । धातुग्रहणमनर्थकं, कुतः, प्रागित्यपेक्षायां यत्क्रियायुक्ताः प्रादयस्ततः प्रागिति विज्ञास्यते, नैवं प्रकामिह च कर्तुं प्रेप्सति प्रचिकीर्षतीति सन्वाच्यया इच्छया प्रशब्दस्य योग इति सन एव प्राक् प्रशब्दः प्रयुज्येत धातुग्रहणात् तु धातोरेव चिकीर्षतेः प्राक् प्रयुज्यते । 'तेग्रहणमुपसर्गार्थमिति' । ननु

प्रत्यक्षत्वादिति । (कै)

विधित्वादित्यर्थः ।

प्रयोगनियमस्येति । (कै)

एवं च विधिबाधापेक्षया ऽन्यत्र चरितार्थस्य परिभाषारूपत्वेन गुणभूतस्य बाध उचित इति भावः ॥ भाष्ये

एवमर्थेनेति । (भा)

प्रयोगनियमार्थेनेत्यर्थः । सुकटं कराणीत्यसिद्धेरिति भावः ॥ ननु सूत्राभावे संज्ञानियमेऽपि वोल्कूलं व्रज इति विपरीतप्रयोगापत्तिरत आह भाष्ये

---

खित्करणमनर्थकं स्यात् । अत्वत्र मुम् । अनव्ययस्येति प्रतिषेधो भविष्यति । पश्यति त्वाचार्यः नात्र गतेः प्राग् धातोः प्रयोगो भवतीति ततः खकारमनुबन्धं करोति । नैतदस्ति ज्ञापकम् । यदत्र गतेः प्राक्प्रयोगः स्यात् । स्यादेवात्र मुमागमः । कथम् । कृद्ग्रहणे गतिकारकपूर्वस्यापि

---

कटाः क्रियन्त इति कर्तृकर्मणोश्च भूकृञोरिति खल् । तत्रास्मान्नियमात्कटं सुकराणीति प्राप्नोति । अत्वनेति । भा । शास्त्रेण प्राप्नोतु प्रतिषेधात्तु नैव प्रयुज्यत इत्यर्थः । खित्करणादव्ययस्यापि भवत्विति चेत् । नैतदस्ति । अन-

---

यदि गतिसंज्ञारहिताः केवलोपसर्गसंज्ञा एव प्रादयः स्युः ततो ऽसति तेग्रहणे गतीनामनन्तरत्वात्त एव संबध्येरन् न तूपसर्गा इति तदर्थं तेग्रहणं कर्तव्यं, तेपि तु गतिसंज्ञकाः, ततश्चानन्तराणां गतीनामपि सम्बन्धे प्रादीनामपि गतित्वादेव ग्रहणं सिद्धम् । स्यादेतत् असति तेग्रहणे गतिसंज्ञैव केवला येषां तेषामेव स्याद् नोभयसंज्ञकानां प्रादीनामिति । न । केवलगतेरभावात् । ननु चायमस्ति 'अनुकरणं चानिति पर' मिति । न । तस्यापि निपातत्वात् । उच्यते । असति तेग्रहणे प्रकृतेष्वपेक्षा चेत् कतिपये

**नैष उदिरिति ।** (भा)

तस्मात्प्रयोगनियमार्थं संज्ञानियमार्थं वोभयथापि सूत्रं न कार्यमेव । आद्ये सुकटं कराणीत्यसिद्धेरन्त्ये कटं सुकराणि सुकटं कराणीत्यस्याप्यापत्तेरनभिधानेन वारणे तु व्यर्थमेव सूत्रमित्याशयः । यत्तु भ्रमनिवृत्त्यर्थेऽपि सूत्रे संज्ञानियमपक्ष एवादर्त्तव्यः कटं सुकराणि सुकटं कराणीत्युभयविधप्रयोगसिद्धये इति स्थितमिति । तन्न । कटं सुकराणीत्यस्येष्टत्वे मानाभावात् । अत्र गतेः प्राग्धातोः प्रयोगः प्राप्नोति । यद्यप्यत्र गतेः प्राक् प्रयोगः स्यादित्यादिशब्दैस्तदनिष्टत्वस्यैव लाभादिति दिक् ॥

---

ग्रहणं भवतीति । तस्मान्नार्थ एवमर्थेन प्राग्धातुवचनेन । कथमन्तषमं कूलमुद्रुजमन्तषमंकूलमुद्वहम् । नैष दोषः । नैष उदिरुपपदं किं तर्हि विशेषणम् । उदि कूले रुजिवहोः । उत्पूर्वाभ्यां रुजिवहिभ्यां कूले उपपदे इति ॥

---

थयस्येति निषेधस्य प्रत्यक्षत्वाद् बाधितुमशक्यत्वात् प्रयोगनियमस्यान्यत्र सावकाशत्वाद्बाधेऽपि न का चित्क्षतिः । स्यादेवेति । कटं सुकराणीत्येवमपि प्रयोगे स्यादेवमुमित्यर्थः ॥

---

संबध्येरन् णोपसर्गपर्यन्ताः, व्याप्तिन्यायात्तु भूयसामपेक्षायां न प्रादिष्वेव पर्यवसाने कारणमस्तीति चादयोऽप्यपेक्ष्येरन्, तद्ग्रहणे तु सति गतिसंज्ञाया अनन्तरत्वात्तेन रूपेण परामर्शो णं कतिपयानामेव भवतीति प्रादीनपि व्याप्नोति चादींश्च परिसंचष्ट इति तद्ग्रहणमुपसर्गार्थं भवति, तत्पर्यन्तानां च तथा स्यात् तेषामेव च यथा स्यादित्यर्थः । 'गतयो ह्यनन्तरा इति' । येऽनन्तरास्त एव कतिपये गृह्येरन् प्रत्यासत्ताविति भावः । व्याप्तौ तु दोषः सुज्ञानत्वान्न काक्षोक्तः ।

# कर्मप्रवचनीयाः ।१।४।८३॥

ननु संज्ञां विना तत्प्रयुक्तकार्यासिद्धिरत आह

लाघवार्थत्वादिति ॥ (कै)

ननु सर्वापि संज्ञार्थं प्रयोजनमनुगतैवेत्यत आह

अर्थमिति । (कै)

अर्थशब्दो ऽभिधेयपर इति भावः ॥

अङ्गीकृतप्रवृत्तिनिमित्तेति । (कै)

अङ्गीकृतयोगार्थप्रवृत्तिनिमित्तेत्यर्थः । एवं च योगरूढा संज्ञा-ऽन्वर्थसंज्ञोच्यते ॥ भाष्ये

---

कर्मप्रवचनीयाः । १ । ४ । ८३ ॥ किमर्थं महतीसंज्ञा क्रियते । अन्वर्थसंज्ञा यथा विज्ञायेत । कर्म प्रोक्तवन्तः कर्मप्रवचनीया इति ।

---

कर्मप्रवचनीयाः । १ । ४ । ८३ ॥ किमर्थमिति । भा । लाघवार्थत्वात्संज्ञा-करणस्य लाघवप्रकर्षाय एकाक्षरा द्व्यक्षरा वा संज्ञा कार्येति भावः । अन्वर्थसंज्ञेति । भा । अर्थमनुगता अर्थेन वा अनुगता अङ्गीकृतप्रवृत्ति-

---

कर्मप्रवचनीयाः । १ । ४ । ८३ । रीश्वरात्प्रागिदमधिक्रियते । कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः बाहुलकात्कर्तर्यनीयर्, स च भूते । तेन सम्प्रति क्रियां न द्योतयन्तीति लभ्यते । आह च ।

---

कर्मप्रवचनीयाः । १ । ४ । ८३ ॥ वक्ष्यमाणानां संज्ञिनां बहुत्वाद्बहु-वचनं यथा निपाताः क्रिया इति । क्वचित्तु सामान्यविवक्षयैकवचनम्, गतिश्च, प्रत्ययः, इदिति महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं कर्म क्रियां

**कर्म प्रोक्तवन्त इति ।** (कै)

कर्म क्रियां क्रियागतविशेषमित्यर्थः । भूते "कृत्यल्युटो बहुलमि"ति कर्त्तर्यनीयः ॥ ननु निपातानां द्योतकत्वात् प्रोक्तवन्त इत्यसंगतमत आह

**प्रयुज्यमाने इति ।** (कै)

सुखमनुबभूवेत्यादौ द्योतकेऽपि प्रोक्तवत्त्वमस्त्येवेत्यर्थः ॥ ननु निपाताः कदापि क्रियां न वदन्तीति संप्रतीत्ययुक्तमत आह

**क्रियाविशेषमिति ।** (कै)

यदि संप्रति क्रियागतं विशेषं न द्योतयन्ति किं तर्हि द्योतयन्तीत्यत आह भाष्ये

---

के पुनः कर्म प्रोक्तवन्तः । ये संप्रति क्रियां नाहुः । के च संप्रति क्रियां नाहुः । ये अप्रयुज्यमानस्य क्रियामाहुः ते कर्मप्रवचनीयाः ॥

---

निमित्ता या संज्ञा साऽन्वर्थसंज्ञा । कर्म प्रोक्तवन्त इति । भा । प्रयुज्यमाने क्रियापदे क्रियाविशेषं द्योतितवन्त इत्यर्थः । क्रियां नाहुरिति । भा । क्रियाविशेषं न द्योतयन्तीत्यर्थः । ये अप्रयुज्यमानस्य क्रियामाहुरिति । भा । शाकल्यस्य संहितामनुप्रावर्षदिति वाक्ये ऽप्रयुज्यमानस्य निष्पमेर्या क्रिया

---

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदक इति ॥

---

प्रोक्तवन्तः कर्म्मप्रवचनीया इति, भूते कृत्यल्युटो बहुलमिति कर्त्तरि कृत्यः । के च कर्म्म प्रोक्तवन्तः, ये प्रयुज्यमाने क्रियापदे ऽनुभूयते कम्बल इत्यादौ क्रियाविशेषं द्योतितवन्तो न संप्रति क्रियाविशेषं द्योतयन्ति किन्तर्हि सम्बन्धविशेषं तद्यथा शाकल्यस्य संहितामनुप्रावर्षदिति, नद्यामानुरनु-

ये ऽप्रयुज्यमानस्येति । (भा)

तद्वाच्यां क्रियां तद्वाच्यक्रियाकृतसंबन्धविशेषं तदेवोपपादयति

शाकल्यस्येति ॥ (कै)

तत्र संबन्धावच्छेदप्रकारमाह

विशिष्टक्रियेति । (कै)

निशमनक्रियाजनितसंबन्धेन संहितासंबन्धिवर्षणमिति बोध इति भावः ॥ एवं बोधानुभवादाह

हेतुर्मादिति । (कै)

संहिताहेतुकं प्रवर्षणमिति बोधः । वस्तुतः क्रियाद्वारकोऽर्थः संबन्धः स हेतुत्वादिना भासते इति तत्त्वम् ॥

क्रियायाः । (कै)

क्रियागतविशेषस्य वाचको द्योतक इत्यर्थः ॥

---

तत्कृतो वर्षसंहितयोर्हेतुहेतुमद्भावलक्षणः संबन्ध इत्ययमर्थो ऽनुशब्दसन्निधौ प्रतीयते। तदयमनुःसंहितामिति द्वितीययाभिहितं संभन्धमवच्छिनत्ति। विशिष्टक्रियाभिजनितत्वेन हेतुहेतुमद्भावलक्षणविशेषरूपतया वा तत्सन्निधौ संबन्धस्य संप्रत्ययात्। तथा हि। क्रियायास्तावदयं न वाचकः।

---

तथाहि। शाकल्यस्य संहितामनुप्रावर्षदित्यत्रानुना न क्रियाविशेषो द्योत्यते। अनुभूयते सुखमित्यादौ यथा। नापि षष्ठेव सम्बन्ध उच्यते।

---

भूयत इत्यादाविव क्रियाविशेषं द्योतयति क्रियापदाभावात्, नापि षष्ठीवत् सम्बन्धमाचष्टे संहितामिति द्वितीयायास्तदर्थत्वात्, नापि क्रियापदमाक्षिपति यथा प्रादेशं विपरिलिखतीति, विशब्दो विमानक्रियां प्रादेशं विमाय परिलिखतीति, तथाहि सति प्रादेशमितिवत् कारकविभक्तिप्रसङ्गः, शेष-

**कारकविभक्तिप्रसङ्गादिति। (भा)**

वृक्षं वृक्षं प्रति सिञ्चतीत्यादावुपपदविभक्तेरितिन्यायेन कर्मणि द्वितीयैव स्यादित्यर्थः। मम तु प्रतियोत्यसबन्धेनान्वये कारकविभक्तेरप्राप्ताविथमिति भावः॥ ननु को विशेषो ऽत आह

**शेषेति। (कै)**

शेषविभक्त्यर्थसंबन्धस्येत्यर्थः। अनेन कारकविभक्त्यर्थस्यापि संबन्धत्वं सूचितम्॥ संबन्धस्यापि न वाचको द्वितीययैव तत्प्रवृत्तेः॥

**अत एवेति। (कै)**

संबन्धाप्रतीतिप्रसङ्गादेवेत्यर्थः॥ तदाक्षेपे तां प्रति कर्मत्वादिनैवान्वयसंभवादिति भावः॥ कर्मप्रवचनीययुक्ते इत्यस्य वैयर्थ्यं च स्यादित्यपि बोध्यम्॥ क्रियागतविशेषद्योतकत्वाभावे युक्त्यन्तरमप्याह

**क्रियाविशेषे इत्यादि। (कै)**

---

कारकविभक्तिप्रसङ्गात्। शेषविभक्तिसंबन्धस्याप्रतीतिप्रसङ्गाच्च। अत एव न क्रियापदाक्षेपकः। यथा प्रादेशं विपरिलिखतीति विशब्दो विमानक्रियाया आक्षेपक इति प्रादेशमिति कर्मणि द्वितीया। क्रियाविशेषद्योतकत्वमपि क्रियापदसन्निधाने दृष्टमिति अत्र न संभवतीति पारिशेष्यात्संबन्धावच्छेदहेतुरनुः संपद्यते। तथा चोक्तं हरिणा

---

द्वितीययैव तस्योक्तत्वात्। नापि प्रादेशं विपरिलिखति विमाय परिलिखतीत्यत्र विशब्देन मानक्रियैव, क्रियान्तरमाक्षिप्यते, कारक-

---

सम्बन्धस्य वा प्रतीतिप्रसङ्गः, तदेवमनुः संहिताप्रवर्षणयोर्यः शेषसम्बन्धो द्वितीयाभिहितस्तं विशेषेऽवस्थापयति हेतुहेतुमद्भावेन रूपेण विशिष्टक्रियाजनितत्वेन वा सम्बन्धस्य तत्संनिधौ सम्प्रत्यायाव् संहितामनुनिम्य प्रावर्षदिति। उक्तं च

**न संभवन्तीति ।** (कै)

अनु हरिं सुरा इत्यादौ क्रियापदासन्निधानादिति भावः ॥

**पारिशेष्यादिति ।** (कै)

एवं च संबन्धसामान्ये प्राप्तषष्ठीबाधाय द्वितीयार्थमयमारम्भ इति भावः ॥ कारिकायां

**क्रियायाः** (हरिः)

इत्यस्य क्रियागतविशेषस्येत्यर्थः ॥

**भेदको** (हरिः)

द्योतकः ॥

---

"क्रियाया द्योतको नायं संबन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी संबन्धस्य तु भेदक इति ।"

तत्र क्रियामाङुरिति क्रियाशब्देन तदुपजनितसंबन्धविशेष उपचारादुच्यते । आङुरित्यस्यापि द्योतयन्तीत्ययमर्थः । क्वचित्तु प्रवृत्तिनिमित्ताभावेऽपि वचनसामर्थ्यादियं संज्ञा प्रवर्तते । यथा "सुः पूजायामिति" षत्वादिनिवृत्तये गत्युपसर्गसंज्ञाबाधनार्था ॥

---

विभक्तिप्रसङ्गात् । किन्तु संहितासम्बन्धिवर्षणमिति द्वितीयावगतः सम्बन्धो लक्षणलक्ष्यभावरूप एवेत्यवगमात्सम्बन्ध एवानुना विशेषेऽवस्थाप्यते । क्वचित्तु क्रियागतविशेषद्योतकेऽपीयं संज्ञा वचनात्प्रवर्तते । "सुः पूजायाम्" "अतिरतिक्रमणे चे"ति यथा ॥

---

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥

इति । क्वचित्तु प्रवृत्तिनिमित्ताभावेऽपि वचनसामर्थ्यादियं संज्ञा प्रवर्तते यथा 'सुः पूजाया' 'मतिरतिक्रमणे चे'ति ॥

# अनुर्लक्षणे ।१।४।८४॥

## जात्युत्तरम् । (कै)

असदुत्तरम् । तत्त्वं च "लक्षणेत्थमि"त्यनेनैव गत्यादिसंज्ञाबाधसिद्धेरिति भावः ॥

## नहि प्रादेश इति । (कै)

किं तु तत्परिच्छिन्नं भूम्यादीति भावः ॥

## धातुं प्रतीति । (कै)

अप्रयुज्यमानधातुबोध्यक्रियया योगे इति फलितोऽर्थः ॥ ननु या काचित् क्रियाक्षेप्येत्यत आह

---

अनुर्लक्षणे । १ । ४ । ८४ ॥ किमर्थमिदमुच्यते । कर्मप्रवचनीयसंज्ञा यथा स्यात् । गत्युपसर्गसंज्ञे मा भूतामिति । किं च स्यात् । शाकल्यस्य संहितामनुप्रावर्षत् । गतिर्गताविति निघातः प्रसज्येत । यद्येवं वेरपि कर्मप्रवचनीयसंज्ञा वक्तव्या । वेरपि निघातो नेष्यते । प्रादेशं विपरि-

---

अनुर्लक्षणे । १ । ४ । ८४ ॥ किमर्थमिति । भा । लक्षणेत्थंभूताख्यानेत्यनेनैव सिद्धत्वादिति प्रश्नः । इतरः शिष्यबुद्धिपरीक्षार्थं जात्युत्तरं ददाति । कर्मप्रवचनीयसंज्ञेति । भा । निघात इति । भा । निपातत्वादाद्युदात्तोऽत्रा-

---

अनुर्लक्षणे । १ । ४ । ८४ ॥ लक्षणे द्योत्ये ऽनुः कर्मप्रवचनीयसंज्ञः स्यात् । लक्षणेत्थंभूतेत्यादिना सिद्धे हेतौ तृतीयां बाधितुमिदं सूत्रम् ।

---

अनुर्लक्षणे । १ । ४ । ८४ ॥ 'यावतेति' । यावताशब्दो निपातो यस्मिन्नित्यर्थ । अन्वेत्यर्थं इत्यन्ये । 'लक्षणेत्थमभूताख्यानेति सिद्धेति' । तत्र यावद्ग्रहणमनोर्ग्रहणं कर्तव्यमित्थंभूताख्यानादिषु यथा स्यात् लक्षणग्रहणं च प्रत्याख्यर्थम्,

प्रादेशे चेति। (कै)

प्रादेशान्वये इत्यक्षरार्थः॥ एवं च "गतिर्गतौ" इत्यत्र प्रत्यासत्त्यैकक्रियानिरूपितगतित्ववतोर्ग्रहणेन नात्र निघातप्राप्तिरिति भावः॥ ननु "शाकल्यस्य संहितामि"त्याद्युदाहरणे संबन्धावच्छेदकताया अन्वादीनामुक्तत्वेन क्रियापदाक्षेपो ऽसङ्गतो द्वितीया यथा स्यादित्युत्तरग्रन्थासङ्गतिश्चेत्यत आह

अत्र वाक्ये इति॥ (कै)

शाकल्येन सुकृतामिति (भा)

वाक्ये

प्रतिपाद्यते इति। (कै)

"शाकल्यस्य संहितामि"त्युदाहरणे इति शेषः॥ गत्यादिसंज्ञापवादत्वं लक्षणा एकशेषस्य द्वन्द्वापवादत्ववद् बोध्यम्॥ "शाकल्येन

---

लिखतीति। अस्त्यत्र विशेषः। नात्र वेर्लिखितं प्रति क्रियायोगः किं तर्ह्यप्रयुज्यमानम्। प्रादेशं विमाय परिलिखतीति। यद्येवमनोरपि कर्मप्रवचनीयसंज्ञया नार्थः। अनोरपि न वृषिं प्रतिक्रियायोगः।

---

नुरिष्यते। नात्र वेरिति। भा। नहि प्रादेशो लिख्यते किं तर्हीति। मातुं प्रतीति वाक्यशेषः। प्रादेशे च योग्या क्रिया वेराक्षेप्येति सामर्थ्याद्विमानक्रियाया आक्षेपः। शाकल्येन सुकृतामिति। भा। अत्र वाक्ये या

---

तथाहि। लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशः। यो न हेतुः, इत्थं-

---

भूतोऽर्थान्तरसंज्ञान्तरसाधारणत्वात्तदेवास्तु इदं तु न कर्तव्यमिति भावः। 'हेत्वर्थक्विति'। तुशब्दः पक्षं व्यावर्तयति। हेतुः कारणम् अर्थः प्रयोजनं प्रयोजकोऽस्य वचनस्येत्यर्थः। ननु च तत्र चात्र च लक्षणा-

सुङ्कतामि" त्युक्त्या तत्तद्दृषिकृतत्वं शाखाखभ्युपैति। स्पष्टं चेदं "तेन प्रोक्तमि"(४।३।१०१)तिसूत्रे भाष्ये ॥

## नास्ति वर्षेति। (कै)

एवं च "गतिर्गतौ"इत्यस्य न प्राप्तिः क्रियायोगस्य तद्गतविशेषद्योतकतारूप एव गतिसंज्ञानिमित्तमिति भावः। एवं चैतद्द्योत्यसंबन्धस्य क्रियान्वयेऽपि न क्षतिरिति तात्पर्यम् ॥

## अत उत्तरमिति। (भा)

"सार्वविभक्तिकस्तसिर"स्योत्तरमित्यर्थः॥ नन्वनुरितिप्रथमान्तस्य वचनमनर्थकमित्यनेनान्वयोऽनुचित इत्यनोरिति वक्तुमुचितमत आह

---

किंतर्ह्यप्रयुज्यमानम्। शाकल्येन सुकृतां संहितामनुनिशम्य देवाः प्रावर्षत्। इदं तर्हि प्रयोजनं द्वितीया यथा स्यात्। कर्मप्रवचनीययुक्ते द्वितीयेति। अत उत्तरं पठति। अनुर्लक्षणे वचनानर्थक्यं सामान्यकृतत्वात्। अनुर्लक्षणे वचनानर्थक्यम्। किं कारणम्। सामान्यकृतत्वात्। सामान्येनैवात्र कर्मप्रवचनीयसंज्ञा भविष्यति। "लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव" इति। हेत्वर्थं तु वचनम्। हेत्वर्थमिदं वक्तव्यम्। हेतुः शाकल्यस्य

---

निशमनक्रिया तत्कृतो वर्षसंहितयोः संबन्धावच्छेदोऽनुना प्रतिपाद्यत इति नास्ति वर्षक्रियायोगोऽनोरित्यर्थः। अनुर्लक्षणइति। भा। सूत्रानुकरणमेतत्। सामान्यकृतत्वादिति। भा। सामान्यं साधारणं यत्सूत्रमर्थान्तर-

---

मनुविद्योतते विद्युदिति। हेतुतृतीयाया अवकाशो धनेन कुलमिति।

---

ग्रहणमेव क्रियते तद्यदि हेतुर्लक्षणं न भवति इहापि न प्राप्नोति, अथ भवति तत्रापि प्राप्नोतेति पुनरपि नार्थ एतेन तत्राह। 'हेतुतृतीयामिति'। सत्यम्, लक्ष्यतेऽनेन तल्लक्षणं चिह्नं ज्ञापकं, कारणमपि नियतं कार्यविशेषावगतिहेतुत्वात् लक्षणं भवत्येव, उक्तं भाष्ये। लक्षणेन हेतुरपि

सूचेति। (कै)

अनुर्लक्षणे इत्येतद्वचनमित्यर्थः ॥ ननु तस्यापि विशेषलात्सामान्येनेत्ययुक्तमत आह

सामान्यमिति ॥ (कै)

ननु साध्यतया ऽस्य हेतुः प्रयोजनं नेत्यत आह

हेतुरिति ॥ (कै)

प्रयोजक इति। (कै)

प्रयुज्यते ऽनेनेति व्युत्पत्तेः ॥ भाष्ये

हेतुः शाकल्यस्येति। (भा)

"लक्षणेत्थमि"तिसूचे ज्ञापकस्यैव लक्षणशब्देन ग्रहाद् हेतोश्च तत्त्वाभावान्न तेन सिद्धिरित्यर्थः ॥ तच्च हेतुत्वमुपपादयति। भाष्ये

येन पुनःपुनरिति। (भा)

गृहीतसंबन्धेनेति शेषः ॥

---

संहिता वर्षस्य न लक्षणम्। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। लक्षणं हि नाम स स भवति येन येन पुनःपुनर्लक्ष्यते। न यः सकृदपि निमित्तत्वाय कल्पते। सकृच्चासौ शाकल्येन सुकृतां संहितामनु-

---

संज्ञान्तरनिर्देशात्तेनैव कृतत्वात्सिद्धत्वादित्यर्थः। हेत्वर्थमिति। भा। हेतुरर्थः प्रयोजनम्। प्रयोजक एतस्य वचनस्येत्यर्थः। हेतुरिति। भा। अन्वयव्यतिरेकाभ्यां वर्षं प्रति संहितायाः कारणत्वावगमादित्यर्थः। किं वक्तव्य-

---

संहितामनुप्रावर्षदित्यत्र तु हेतुभूतसंहितोपलक्षितं वर्षणमित्यर्थाद्धेतुभूते

---

व्याप्तो नावश्यं तदेव लक्षणं येन पुनःपुनर्लक्ष्यते किं तर्हि यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणमिति, किन्तु येन नाप्राप्तिन्यायेन

लक्ष्यलक्षणभाव इति । (कै)

तद्व्यवहार इत्यर्थः ॥

न यः सकृदपीति । (भा)

गृहीतसंबन्ध इति शेषः ॥ निमित्तत्वाय तेन तत्कारणमेवेत्यर्थः ॥

स तर्हीति । (भा)

कृतेऽपि सूत्रे हेतोर्लक्षणशब्देन व्यवहाराभावादिति भावः ॥ ननु हेत्वर्थमिदमित्युक्तवन्तं प्रति हेतोर्लक्षणत्वाभावादनुर्हेताविति वक्तव्यमित्यन्येनोक्ते "अथेदानीमि"तिग्रन्थः स्वरसतो हेत्वर्थवादिन इति लभ्यते तन्न युक्तं नार्थोऽनेनेति वाक्यशेषविरोधात् । नापि सूत्रप्रत्याख्यानवादिनस्तस्य विच्छिन्नत्वादत आह

येनोक्तमिति ॥ (कै)

---

निशम्य देवः प्रावर्षदिति । स तर्हि तथा निर्देशः कर्तव्यः अनुर्हेताविति । अथेदानीं लक्षणेन हेतुरपि व्याप्तो भवति नार्थोऽनेन । लक्षणेन हेतुरपि व्याप्तो नह्यवश्यं तदेव लक्षणं भवति येन पुनः पुनर्लक्ष्यते किं तर्हि

---

मिति । भा । हेतोर्लक्षणत्वं नास्तीति किं परिभाषितव्यमिति मत्वा पृच्छति । येन येन पुनः पुनरिति । भा । पौनःपुन्येन साहचर्यावगमे लक्ष्यलक्षणभावो भवतीति भावः । अथेदानीमिति । भा । येनोक्तं स तर्हि

---

लक्षणे परत्वात्तृतीया स्यात् । पुनः संज्ञाविधानसामर्थ्यात्तु द्वितीयैव भवति । आह च ।

---

कर्मप्रवचनीययुक्ते द्वितीया षष्ठ्या एवापवादः, ततश्च लक्षणेत्थंभूतेत्यनोर्लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशो यो हेतुर्न भवति वृक्षमनु विद्योतते विद्युदिति, हेतुतृतीयाया अवकाशो धनेन कुलमिति हेतुभूते

ननु हेतुत्वं विना लक्षणत्वस्य विद्युद्वृत्तविषये सत्त्वेन लक्षणत्वं विना हेतुत्वस्य च दण्डादौ दर्शनेन लक्षणेन हेतुर्व्याप्त इत्यसङ्गतमत आह

**हेतुविषयत्वादिति ।** (कै)

प्रकृतोदाहरणे इति शेषः ॥ "व्याप्त" इत्यस्य संबद्ध इत्यर्थो द्रष्टव्यः ॥ ननु भूयो दर्शनाभावात्कथं ज्ञापकत्वमत आह भाष्ये

**नह्यवश्यमिति ॥** (कै)

**तद्विशेषावगमेति ।** (कै)

कालविशेषावच्छिन्नदृष्ट्यवगमे इत्यर्थः॥ यो मे कमण्डलुपाणि-श्छात्रः पूर्वं दृष्टः सोऽद्य तथा दृष्ट इत्यपि भवानिति वाक्यार्थः । लक्षणेत्थं न व्याप्यत्वापरपर्यायमेव । किं तूपलक्षकत्वरूपमपीति भावः ॥ एवं च "लक्षणेत्थमि"त्यत्रापि लक्षणशब्देन हेतोरभि-धानादिदं व्यर्थं स्यादत आह भाष्ये

**तदेवेति ॥** (भा)

---

यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणं भवति। तद्यथा। अपि भवान् कमण्डलुपाणिं छात्रमद्राक्षीदिति । सकृदपि असौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवति । एतदेव तर्हि प्रयोजनम्। द्वितीया यथा स्यात् ।

---

तथेति स एव सन्दिहानः पृच्छति । व्याप्त इति । भा । हेतुविषयत्वा-ल्लक्षणस्य तेन हेतुर्व्याप्तो भवति । लक्षणेनेति । भा । सिद्धान्तवादी । तदपि लक्षणमिति । भा । कार्योत्पत्तिनिमित्तमपि तद्विशेषावगमहेतुत्वा-

---

"हेतुहेतुमतोर्योगपरिच्छेदेऽनुना कृते ।
आरम्भाद्बाध्यते प्राप्ता तृतीया हेतुलक्षणेति" ।

---

त् लक्षणे उभयप्रसक्ते परत्वात्तृतीया स्यात् तामपि बाधित्वा द्वितीयैव यथा स्यात् पुनः संज्ञाविधाने कक्षान्तरप्राप्तत्वाद् द्वितीयैव तृतीयां बाधते। उक्तं च

ननु विध्यन्तपूर्वकत्वेन द्वितीयाया अपवादत्वात्कथं तृतीया-बाध्यत्वमत आह

**येन नेति ॥ (कै)**

**बाधेतेति । (कै)**

यत्र हेतुत्वं न भासते तत्र "लक्षणेत्थमि"त्येतत्संज्ञाप्रयुक्ता द्वितीया सावकाशा यथा वृक्षमनु विद्योतत इत्यादौ धनेन कुल-मित्यादौ चानोरभावाद्धेतुतृतीया सावकाशेति भावः ॥ ननु क्तेऽप्यस्मिन् द्वितीयया कथं बाधो ऽत आह

**पुनः संज्ञेति । (कै)**

पुनः संज्ञाविधानेन पुनर्द्वितीयाविधानं कल्प्यते तच्च तृतीया-प्राप्त्युत्तरकालत्वात्स्थानान्तरप्राप्तमित्युच्यते इति बोध्यम् ॥

---

कर्मप्रवचनीययुक्ते द्वितीयेति । एतदपि नास्ति प्रयोजनम् । सिद्धाच्च द्वितीया कर्मप्रवचनीययुक्त इत्येव । न सिध्यति । परत्वाद्धेत्वाश्रया तृतीया प्राप्नोति ॥

---

लक्षणं भवतीत्यर्थः । परत्वादिति । भा । येन नाप्राप्तिन्यायेन कर्मप्रवच-नीययुक्ते द्वितीया षष्ठ्या एव बाधिका तां तु परत्वात्तृतीया बाधेत पुनः संज्ञाविधाने तु स्थानान्तरप्राप्त्या द्वितीया हेतुतृतीयां बाधते ॥

---

न च तृतीयार्थे इति सूत्रेण शङ्क्या । तस्य पुरस्तादपवादन्यायेन "सहयुक्ते ऽप्रधान"इत्येतन्मात्रबाधकत्वात् ॥

---

हेतुहेतुमतोर्योगपरिच्छेदेऽनुना कृते ।
आरम्भाद्बाध्यते प्राप्ता तृतीया हेतुलक्षणा ॥

इति । तृतीयार्थे इत्यनेन तु पुरस्तादपवादन्यायेन सहयुक्तेऽप्रधाने इत्यस्यैव बाधो न हेतुतृतीया इति वक्तव्यमेतत् ॥

# आङ् मर्यादावचने। १। ४। ८९॥

ननु परिच्छेदहेतुमात्रं मर्यादेति सिद्धमेवाभिविधावपीत्यत आह

अत्यचेति॥ (कै)

अवान्तरेति। (कै)

मर्यादाविशेष एवाभिविधिः॥ मर्यादैव यदा कार्येण युज्यते तदा ऽभिविधिर्यदा तु न तदा मर्यादेति विशेषाविवक्षणादिति भावः॥ तदुक्तं भाष्ये

एषा ऽस्य यशसो मर्यादेति। (भा)

"अस्य" पाणिनेः॥ "एषा" कुमारकृपा॥

मर्यादा (भा)

परिच्छेदहेतुरित्यर्थः॥

---

आङ्मर्यादावचने। १। ४। ८९॥ आङ्मर्यादाभिविध्योरिति वक्तव्यम्। वा। इहापि यथास्यात्। आकुमारं यशः पाणिनेरिति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। मर्यादावचन इत्येव सिद्धम्। एषास्य यशसो मर्यादा॥

---

आङ्मर्यादावचने। १। ४। ८९॥ अन्यत्र मर्यादाभिविध्योर्भेदेन निर्देशदर्शनाद् "विना तेनेति मर्यादा सह तेनेत्यभिविधिरि"त्यर्थभेदं मत्वा वार्तिकं पठति। आकुमारमिति। भा। कुमारानपि यशः प्राप्तमित्यर्थः। मर्यादावचन इत्येवेति। वचनग्रहणस्येदं प्रयोजनमवान्तरभेदपरिहारेण परिच्छेदहेतुमात्रं मर्यादा यथा गृह्येत॥

---

आङ् मर्यादावचने १। ४। ८९॥ आङ् प्राग्वत्। मर्यादाशब्दो यस्मिन्सूत्रे उच्यते तत्रत्यमेत्। आङ्मर्यादाभिविध्योरित्यत्रोपात्तो द्वार्थ इत्यर्थः। आमुक्तेः संसारः। आबालेभ्यो हरिभक्तिः॥

# लक्षणेत्थं भूताख्यानभागवीप्सासु प्रतिपर्यनवः । १ । ४ । ९० ॥

**प्रत्यादीनां वेति ।** (कै)

तेषां तद्विषयत्वं च तद्घटितसंबन्धपरिच्छेदकत्वाद्बोध्यम् भाष्ये

**वृक्षादीनामिति ।** (भा)

तदुत्तरविभक्तीनामित्यर्थः ॥ प्रत्यादयस्तु तद्द्योतका इति भावः ॥

---

लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः । १ । ४ । ९० ॥ कस्य लक्षणादयोऽर्था निर्दिश्यन्ते । वृक्षादीनाम् । किमर्थं पुनरिदमुच्यते ।

---

लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः । १ । ४ । ९० ॥ कस्येति । भा । किं यथा विभक्तिसमीपादयो ऽव्ययार्थास्तथा लक्षणादयः

---

लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः । १ । ४ । ९० ॥ एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः । लक्षणे । वृक्षं प्रति परि अनु वा विद्योतते विद्युत् । कञ्चित्प्रकारं प्राप्त इत्थंभूतस्तदाख्याने यथा । साधुर्देवदत्तो मातरं प्रति पर्यनु वा । भागे । यदत्र मामभि स्यात् । परिस्यात् ।

---

लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः । १ । ४ । ९० ॥ लक्ष्यते येन तल्लक्षणं चिह्नं ज्ञापकम्, अयं प्रकार इत्थं, प्रथमान्तादिदमस्थमुः, इह त्विदमा प्रत्यवमृश्यस्य सन्निहितस्य कस्य चिदभावात्प्रकारविशेष-मात्रवृत्तिरित्थंशब्दः, भू प्राप्तावात्मनेपदी, ख्या प्रकथने इति णिजभावपक्षे

**संबन्धविशेषेति। (कै)**

वृक्षविद्योतनयोः प्राप्तिक्रियाजनितो लक्ष्यलक्षणभाव इति भावः ॥ महासंज्ञाकरणेन क्रियाजनितसंबन्धद्योतकताया एव प्रायेण कर्मप्रवचनीयानामुचितत्वादिति तात्पर्यम् ॥ ननु द्वितीयार्थमिदमावश्यकमत आह

**वृक्षं वृक्षं प्रतीति ॥ (भा)**

---

कर्मप्रवचनीयसंज्ञा यथा स्यात्। गत्युपसर्गसंज्ञे मा भूतामिति।

---

प्रत्यादीनामथ पदान्तरवाच्याः सन्तो विषयभावेन संज्ञायाः प्रत्यादीनां वा निर्दिष्टा इति प्रश्नः। वृक्षादीनामिति। वृक्षं प्रति विद्योतते विद्युदिति वृक्षो विद्योतनस्य लक्षणम्। प्रत्यादयस्तु प्राप्तिक्रियाजनितसंबन्धविशेषाव-

---

अनुस्यात्। योऽत्र मम भागः स दीयतामित्यर्थः। स्वस्वामिभावो द्वितीयार्थः। वीप्सा व्याप्तुमिच्छा साकल्यप्रतिपिपादयिषेति यावत्। भूतंभूतं प्रति पर्यनु वा प्रभुः। सकलभूतानामित्यर्थः। न चेत्थंभूताख्यान इत्येव सिद्धम्। इदं तत्त्वुदाहरणं वृक्षंवृक्षं प्रतिसिञ्चति

---

गत्यर्थत्वात्कर्तरि क्तः। तत इत्थंशब्दादव्ययापि वृत्तिविषये सत्त्वधर्मापादानात्कर्मणि द्वितीया, श्रितादिषु गम्यादीनामिति समासः, कञ्चित् प्रकारं प्राप्त इत्थंभूतः, इत्थंभूतस्याख्यानमित्थंभूताख्यानं, स्वीक्रियमाणोंऽशो भागः, यत्स्वंप्रमाणे प्रयोगः प्रियङ्गोर्भाग इति स भागस्वादृश्यात्। व्याप्तुमिच्छा वीप्सा, सा चाष्टमे स्पष्टयिष्यते, एते लक्षणादयो यथा विभक्तिसमीपादयोऽव्ययार्था नैवं प्रत्यादीनामर्थाः किं तर्हि संज्ञायाः प्रत्यादीनां विषयत्वेन निर्दिष्टा इत्याह। 'वीप्सायां च विषयभूतायामिति। एतच्च लिङ्गविपरिणामेन लक्षणादिभिरपि सम्बन्धनीयम्। 'वृक्षं प्रतीति'।

**क्रियायोगाभावादिति। (कै)**

तेषां समभिव्याहृतविभक्त्यर्थसम्बन्धमात्रद्योतकत्वादिति भावः॥

भाष्ये

**न च वृक्षादीन्प्रतीति (भा)**

प्रतियोगे वृक्षादीनिति द्वितीयासम्बन्धार्थिका वृक्षाद्युत्तर-विभक्त्यर्थसम्बन्धिनामेषामित्यर्थः। तत्सम्बन्धस्य तदर्थसम्बन्धपरिच्छेद-कत्वेनेति बोध्यम्॥

---

नैतदस्ति प्रयोजनम्। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः। न च वृक्षादीन्प्रति क्रियायोगः। इदं तर्हि प्रयोजनं द्वितीया यथा

---

च्छेदहेतवः। किमर्थमिति। भा। वृक्षं वृक्षं प्रति सिञ्चतीत्यत्रकर्मत्वाद् द्वितीया सिद्धेति तद्विधानार्थं तावदिदं न भवति। प्रत्यादीनां च क्रियाविशेषानवद्योतनात् क्रियायोगाभावाद्गत्युपसर्गसंज्ञाबाधनार्थमपि

---

परिसिञ्चति अनुसिञ्चति। इह वीप्सादिर्वचनेनैव द्योत्यते। परिशब्दस्तु क्रिययैव सम्बध्यते। न चैवन्तस्य कर्मप्रवचनीयत्वं न स्यादिति वाच्यम्। वीप्सायाः विषयत्वानपायात्। अत एव वीप्सायां विषयभूतायामिति वृत्तिग्रन्थमवतारयन्हरदत्त आह। एते च लक्षणादयो यथा विभक्तिसमी-

---

अत्र वृक्षो लक्षणं विद्योतनस्य, प्रत्यादयस्तु प्राप्तिक्रियाजनितो लक्ष्यलक्षणभाव इत्येवं सम्बन्धविशेषेऽवस्थापयन्ति वृक्षं प्राप्य विद्योतते वृक्षे प्रदेशे विद्योतत इत्यर्थः। 'साधुरिति'। अत्रापि प्राप्तिक्रियाजनित एव विषयविषयिभावसम्बन्धः, यथा वृक्षे वृक्षे विद्योतनं लक्ष्यते नैवमत्रा-साधुत्वाप्रत्तिरितीत्थंभूताख्यानग्रहणम्। 'यदत्र मामिति'। यो मम भागः स दीयतामित्यर्थः। अत्र स्वीकरणक्रियाजनितः स्वस्वामिसम्बन्धः।

## अकर्मकत्वादिति। (कै)

एवमर्थमर्थं प्रति शब्दनिवेश इत्यादौ निविशत्यधिकरणे द्वितीयार्थमपीदं बोध्यम् ॥ सकर्मकयोगेऽपि कर्मत्वाविवक्षायां सम्बन्धत्वेन विवक्षायां प्रत्यादीत्यसम्बन्धेनान्वयविवक्षायां च द्वितीयार्थमित्यपि बोध्यम्। एतेनाकर्मकत्वाद् द्वितीया नास्तीति कैयटोक्तेः सकर्मकधातुयोगे कर्मणि द्वितीययैव सिद्धमिति भ्राम्यन्तः परास्ताः ॥

---

स्यात्। कर्मप्रवचनीययुक्ते द्वितीयेति। वृक्षं प्रति विद्योतते वृक्षमनु विद्योतते इति ॥

---

नोपयुज्यत इति प्रश्नः। वृक्षं प्रतीति। भा। अकर्मकत्वाद्द्युतेःकर्मणि द्वितीया नास्ति ॥

---

पादयो व्ययार्थाः। नैवं प्रत्यादीनामर्थाः। किन्तर्हि संज्ञायां प्रत्यादीनां विषयत्वेन निर्दिष्टा इत्याहेति। द्वितीया तु कर्मणि। कर्मप्रवचनीयसंज्ञा तूपसर्गत्वनिवृत्त्यर्था। तेनोपसर्गात्सुनोतीति षत्वं न। परिशब्दयोगे पञ्चमी तु न भवति। "पञ्चम्यपाङि"त्यत्र वर्जनार्थेनापेत्यनेन साहचर्यात् ॥

---

'वृक्षंवृक्षमिति'। वीप्सा द्विर्वचनेन द्योत्यते परिशब्दस्तु क्रिययैव सम्बध्यते द्वितीया चेह कर्मणि, कर्मप्रवचनीयसंज्ञा तूपसर्गसंज्ञानिवृत्त्यर्था तेनोपसर्गात्सुनोतीति षत्वं न भवति। 'अपशब्दसाहचर्यादिति'। परिशब्दोऽयन्दृष्टापचारो वर्जने चावर्जने च कर्मप्रवचनीयः, अपशब्दस्तु वर्जने एव, कर्मप्रवचनीयाधिकारे पञ्चमी विधीयते तत्र साहचर्य व्यवस्थाहेतुः ॥

# अधिपरी अनर्थकौ । १ । ४ । ९३ ॥

ननु गत्यादिसंज्ञाबाधनं फलमित्यत आह

**अनर्थकयोरिति ॥** (कै)

**पञ्चमीति ।** (कै)

"पञ्चम्यपाङ्परिभिरिति" ( २ । ३ । १० ) सूत्रेणेति शेषः ॥ किञ्चाधिशब्दयोगे पञ्चम्यविधानेऽपि यथा ऽपादानत्वात्सा तथा परियोगेऽपीत्याह

---

अधिपरी अनर्थकौ । १ । ४ । ९३ ॥ किमर्थमधिपर्योरनर्थकयोः कर्मप्रवचनीयसंज्ञोच्यते । कर्मप्रवचनीयसंज्ञा यथा स्यात् गत्युपसर्गसंज्ञे मा भूतामिति । नैतदस्ति प्रयोजनम् । यत्क्रियायुक्तौ तं प्रति गत्युपसर्गसं-

---

अधिपरी अनर्थकौ । १ । ४ । ९३ ॥ किमर्थमिति । भा । अनर्थकयोः क्रियायोगाभावात्संज्ञान्तरबाधनार्थं संज्ञाविधानं नोपयुज्यते । नापि परियोगे पञ्चमीविधानार्थम् । अपेन साहचर्याद्वर्जनविषयपरियोगे तस्या

---

अधिपरी अनर्थकौ । १ । ४ । ९३ ॥ उक्तसंज्ञौ स्तः । कुतो ऽध्याग-च्छति । इहाधिकार्थविरहादनर्थकत्वमधिपर्योः, धात्वर्थमात्रानुवर्तित्वात्

---

अधिपरी अनर्थकौ । १ । ४ । ९३ ॥ ननु चानर्थकयोः क्रियायोगा-भावाद् गत्युपसर्गसंज्ञयोः प्राप्त्यभावान्न तद्बाधनार्थं कर्मप्रवचनीयसंज्ञा-विधानमुपपद्यते, नापि परिशब्दयोगे पञ्चमीविधानार्थं तद्विधौ वर्ज्जनार्थस्य

अपादानेति । (कै)

आगमनादिक्रियानिरूपितेत्यर्थः । द्वितीयार्थमपि नार्थाभावेन कर्मप्रवचनीययुक्तत्वस्य निरूपयितुमशक्यत्वादिति भावः ॥

पूर्वापरितोषेणेति । (कै)

"नेमावनर्थकाविति" भाष्येण स्फुटं तदा वेदनादिति भावः । किं चोक्तार्थे ज्ञापितेऽपि न चारितार्थ्यं क्रियागतविशेषद्योतकत्व-रूपक्रियायोगाभावेन गतिसंज्ञाद्यप्राप्तेरिति बोध्यम् ॥

प्रयोगानुपपत्तिरिति ॥ (कै)

तस्माद् द्योत्यार्थेनार्थवत्त्वमस्याप्येषितव्यमित्यर्थः ॥ नन्वेवमनर्थका-वित्यसङ्गतमत आह

---

ऽौ भवतः । अनर्थकौ चेमौ । इदं तर्हि प्रयोजनं पञ्चमी यथा स्यात् । "पञ्चम्यपाङ्परिभिरिति" । कुतः पर्यागम्यत इति । सिद्धं तु पञ्चम्यपादान इत्येव । आतश्चापादानपञ्चम्येव । अत्राधिशब्देन योगे पञ्चमी न

---

विधानात् । अपादानसद्भावे चाधिशब्दस्य प्रयोग इव परियोगे तन्नि-मित्तायाः पञ्चम्याः सिद्धत्वादिति प्रश्नः । अथवेति । भा । पूर्वापरितोषेणो-च्यते । यस्य शब्दस्य वाच्यं द्योत्यं वा वस्तु न संभवति तस्य वाक्यार्थे

---

प्राप्त गतिसंज्ञः । तद्बाधः संज्ञाफलम् । तेन "गतिर्गताविति" निघातो न भवति ॥

---

प्रश्याद् अपादानत्वाच्च सिद्धा पञ्चमी यथा ऽधिशब्दस्य प्रयोगे, कुतो-ऽध्यागच्छतीति, अत एव द्वितीयाविधानार्थमपि नोपपद्यते तस्मादनर्थकयोः

तस्मादिति ॥ (कै)

अर्थान्तरबोधकत्वाभावान्निष्प्रयोजनावित्यर्थः ॥ ननु धातुना क्रियोक्तावपि तद्गतोपरिभावसर्वतोभावरूपविशेषद्योतनमनयोः फलमत आह

प्रकरणेति ॥ (कै)

पूर्वं क्रियाप्रक्रमेण तदिति नपुंसकमनुपपन्नमत आह

तदिति । (कै)

एवं च क्रियायोगसत्त्वात्प्राप्तगत्यादिसंज्ञाबाधनार्थमिदमावश्यकमिति भावः ॥ ननु विपरीतं कुतो न शङ्कितमत आह

---

विधीयते तत्रापि च श्रूयते कुतो ऽध्यागम्यते इति । एवं तर्हि सिद्धे सति यदनर्थकयोरुपसर्गसंज्ञा बाधिकां कर्मप्रवचनीयसंज्ञां शास्ति तज्ज्ञापयत्याचार्यः अनर्थकानामप्येषां भवत्यर्थवत्कृतमिति ॥ किमेत

---

ऽनुपयोगात् प्रयोगानुपपत्तिः । तस्मादर्थशब्द इह प्रयोजनवाची तेन योऽर्थो ऽनयोर्धात्वर्थस्य प्रकरणादिवशात्संप्रत्ययान्निष्प्रयोजनावेतावुच्येते । धातुनोक्तात्वदिति । भा । प्रकरणादिसामर्थ्यावगतविशेषां धातुनोक्तां क्रियामित्यर्थः । आहतुरिति । भा । द्योतयत इत्यर्थः । तदविशिष्टमिति । भा । तद् क्रियालक्षणं वस्तविशिष्टम् । अधिपरिसन्निधानेऽप्यनाहितविशेषमित्यर्थः । यथेति । शङ्के न्यस्तं चौरं शोक्तेनाभिन्नं शङ्कादित्यर्थः । यथैव-

---

संज्ञाविशेषमनर्थकमित्यत आह । 'अनर्थान्तरवाचिनाविति' । यथा तिष्ठति वितिष्ठति परिभवतीत्यादौ धातूपात्तादर्थादर्थान्तरवाचित्वं नैवमनयोरर्थान्तरवाचित्वं किन्त्वागच्छतीतिप्रयोगे योऽर्थः स एवाधिपरियोगे

धातोरिति ॥ (कै)

धातोः प्रयोगं व्यर्थत्वेन नाक्षिपतीत्यर्थस्तदेवाह

तेन विनेति । (कै)

तयोर्वाचकत्वाभावादित्यर्थः ॥ नन्वनयोरुपसर्गत्वाभावादुपसर्गत्व-
मुपपन्नमत आह

उपसर्गेति । (कै)

आगच्छत्यध्यागच्छतीत्यादि पाठः । अत्रेदं बोध्यम् । कैयटोक्त-
यावपावकदृष्टान्तेन भाष्योक्तेनापूपौ द्वाविति दृष्टान्तेन वा ऽऽगच्छ-
तीत्यर्थापेक्षया ऽधिकोऽर्थो नानयोर्द्योत्यो नापि प्रकरणादिनाध्या-
गच्छतीत्यस्योपरिभावस्सर्वतो भावार्थकत्वं किं त्वागमनमात्रार्थकत्व-

---

ज्ञापने प्रयोजनम् । निपातस्यानर्थकस्य प्रातिपदिकत्वं चोदितं तन्न वक्तव्यं
भवति । अथ वा नेमावनर्थकौ । किं तर्ह्यनर्थकावित्युच्यते अनर्था-
न्तरवाचिनावनर्थकौ धातुनोक्तां क्रियामाहतुः । तदविशिष्टं भवति ।

---

मिति । भा । धातोर्वाचकत्वात्तस्य प्रयोगं नाक्षिपति तेन विना तयोः
प्रयोगासंभवादुपसर्गग्रहणं चाधिपर्योरुपलक्षणार्थम् । उक्तार्थानामपीति ।
भा । प्रकरणादिवशादगतार्थानामपि स्फुटतरावगत्यर्थः प्रयोगो लोके
भवति । न चानियमप्रसङ्गः । येषामेव हि गतार्थानां प्रयोगो दृश्यते तएव
प्रयुज्यन्ते न तु वृक्षस्तरुः पादप इति तथा प्रयोगादर्शनात् । अपूपौ

---

ताभ्यामुच्यते तदत्र विषये धातोरधिपर्योश्च सहाभिधायित्वं, यथा गजशब्दे
योऽर्थः स एव मतङ्गज इति सर्वैः सहाभिधीयते, एवं वृषशब्दे योऽर्थः स एव
वृषभशब्दे, तदेवमनर्थान्तरवाचित्वादनर्थकत्वात्वादनर्थकावित्युक्तं न त्वभा-

मेवाध्यागच्छतीत्याद्यध्यागमनमात्रार्थकमेव किं तु बोद्धुस्ततो मिलि-तादेवार्थबोधने तस्याप्यनुवादकत्वेन धात्वर्थद्योतकतेति व्यवहारः फलं तु न किं चिदिति तत्त्वम्। एतेन प्रकरणादिसामर्थ्यावगत-विशेषमित्यादिकैयटस्चिन्त्यः सर्वत्र प्रकरणसत्त्वे तद्विषये एव वैतत्प्रयोगे मानाभावाच्च ॥

अपूपौ द्वाविति। (भा)

अत्र द्विशब्दापूपशब्दयोर्वाचकयोः प्रत्यययोर्वाचकद्योतकयोर्द्वा-वित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयो दृश्यत इत्यर्थः ॥

---

यथा शङ्के पयः। यद्येवं धातुनोक्तत्वात्तस्यार्थस्योपसर्गप्रयोगो न प्राप्नोति, उक्तार्थानामप्रयोग इति। उक्तार्थानामपि प्रयोगो दृश्यते। तद्यथा। अपूपौ द्वावानय ब्राह्मणौ द्वावानयेति ॥

---

द्वाविति अपूपावित्यत एवावगते द्वित्वे द्विशब्दस्यापि प्रयोगो लोके दृश्यते। एतदुक्तं भवति। यथा यावशब्दो वाक्यान्तरविषयोऽन्य एव। अन्यश्च यावकशब्दः। यथा च ऋषभशब्दो वृषभशब्दा इति च। तथैवागच्छत्यध्या-गच्छति पर्यागच्छतीति च। तदत्र विषये धातोः अधिपर्योश्च सहाभि-धायित्वमङ्गीकर्तव्यम् ॥

---

वात्, तयोश्च गतिसंज्ञाबाधाय कर्मप्रवचनीयसंज्ञा विधेयेति दर्शितं भवति। 'कुतोऽध्यागच्छतीति'। किंशब्दादपादाने चाहीयरुहोरिति तसिः, तस्य तसेश्चेति तसिलादेशः, 'गतिर्गता' विति निघाताभावः ॥

# अपिः पदार्थसम्भावनान्ववसर्गगर्हा-समुच्चयेषु । १ । ४ । ९६ ॥

ननूपसर्गत्वप्रयुक्तषत्वस्य "स्यादि"त्यत्र निवृत्तये एतत्संज्ञाप्रवृत्तिर-स्त्वेवेत्यत आह

यथेति ॥ (कै)

इत्याहेति । (कै)

इत्याद्यर्थेनाहेत्यर्थः ॥

यद्यपीति । (कै)

यदि अपिशब्दार्था इति च्छेदः ॥

---

अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ॥ १ । ४ । ९६ ॥ इह कस्मान्न भवति । सर्पिषोऽपि स्यात् । गोमूत्रस्यापि

---

अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु । १ । ४ । ९६ ॥ कस्मान्न इहेति । यथा ऽपिशब्दस्य कर्मप्रवचनीयसंज्ञायां सत्यां स्यादित्यत्रो-पसर्गाश्रयं षत्वं न भवत्येवं सर्पिः शब्दाद्द्वितीया भवतीति प्रश्नः । इतरो

---

अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु १ । ४ । ९६ ॥ एषु द्योत्येष्वपिकर्मप्रवचनीयसंज्ञः । सर्पिषोऽपि स्यात् । प्रार्थनायां लिङ् । तस्या एव

---

अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु । १ । ४ । ९६ ॥ 'पदा-न्तरस्येत्यादि' । स्वार्थस्तावदव्यभिचारान्न गृह्यत इति पदान्तरस्यार्थः पदार्थः, तत्रापि पदान्तरप्रयोगे सत्यपिः प्रयुज्यमानस्तदर्थे कञ्चिद्विशेषमाधत्ते यथा

## स्वपदार्थेति । (कै)

स्वपदार्थेन पदस्याव्यभिचारादित्यर्थः ॥

## सम्भवनादीनां चेति । (कै)

तेषामप्यपिरूपस्वपदार्थत्वादिति भावः । एषु वर्त्तमानो ऽपिरिति नार्थस्तथापति प्रत्यासत्त्या पदार्थशब्देनापेः स्वपदार्थ एव गृह्यतेति तद्वैयर्थ्यम् । अपिः कर्मप्रवचनीय इत्येव वदेदिति तात्पर्यम् ॥

## यदा सामर्थ्यादिति । (कै)

अपिशब्दसामर्थ्यादित्यर्थः । अयं भावः । कर्मप्रवचनीययुक्तत्वं तद्द्योत्यसम्बन्धप्रतियोगित्वमिव तद्द्योत्यबोधकत्वमपि तच्च स्यादित्यस्यैव न सर्पिष इति न ततो द्वितीया । कर्मप्रवचनीयानां संबन्ध-

---

स्यात् । किं च स्यात् । द्वितीया प्रसज्येत कर्मप्रवचनीययुक्ते द्वितीयेति ।

---

भवत्येवाचापेः संज्ञोत्याह । किं च स्यादिति । नेमे इति । यद्यपि-शब्दार्था इमे निर्दिश्येरन् पदार्थग्रहणमनर्थकं स्यात् । स्वपदार्थाव्यभि-चारात् । संभावनादीनां चोपादानमनर्थकं स्यात् तेषामपि पदार्थत्वात् । परपदार्था इति । स्यादित्यादेः परस्य पदस्यामी अर्था इत्यर्थः ।

---

विषयभूते भवने कर्त्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन सम्बध्यते । अनुपसर्गत्वान्न षः । सर्पिष इति षष्ठी तु अपिशब्दबलेन

---

नीलशब्द उत्पले, न तु तस्मिन्नेवान्यूनानतिरिक्ते वर्तते तथा सति पर्यायत्व-प्रसङ्गेनाप्रयोगार्हत्वात्, अतः पदान्तरस्याप्रयोग एव तदर्थे प्रवृत्तो भवतीति भावः । 'सर्पिषोऽपि स्यादिति' । प्रार्थनायां लिङ्, तस्या एव दुर्लभविषयता-मपिशब्दो द्योतयन् स्यादित्यनेन सम्बध्यत इति षत्वप्रसङ्गः, दुर्लभत्वं च

द्योतकत्वं तु प्रायिकमधिपर्यादौ व्यभिचारादिति। स्यादित्याख्या-
तेन विन्दुत्वेनाश्रयत्वेन वाश्रयोपस्थितिरित्येतत्पचतात्पर्यम् ॥ भाष्ये

अथवेति। (भा)

अयं भावः। अपिना परपदार्थो बिन्दुस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यं सम्बन्धश्च द्योत्यते तत्रापि। द्योत्यसम्बन्धप्रतियोगित्वस्य विन्दौ सत्त्वात्तस्यैव कर्मप्रवचनीययुक्तत्वमिति तदाह

बिन्दुकर्तृकत्वमिति। (कै)

तद्दौर्लभ्यप्रयुक्तदौर्लभ्यं चेत्यपि बोध्यम्। पृथग्बिन्दूपस्थितिस्तस्य चाख्यातार्थे ऽभेदान्वय इत्येतत्पचतात्पर्यम्। यदत्र कर्मप्रवचनीय-युक्तं कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगीति भाष्याचरार्थः ॥

---

नैष दोषः। नेमे अप्यर्था निर्दिश्यन्ते। किं तर्हि। परपदार्था इमे निर्दिश्यन्ते। एतेष्वर्थेषु यत्पदं वर्तते तत्रत्यपिः कर्मप्रवचनीयसंज्ञो

---

तदयमर्थः। स्यादित्यादिपदं कर्तृसामान्यवाच्यपि यदा सामर्थ्यात्कर्तृविशेषे बिन्दौ वर्तते तदा तत्रत्यपिः कर्मप्रवचनीयः। सर्पिःशब्दस्तु समुदायएव वर्तते नावयवमात्रे। अत एवावयवोपजनितव्यतिरेके षष्ठी भवति। अथवेति। बिन्दुकर्तृकत्वं क्रियायाः द्योतयितुमपिः प्रयुज्यते इति बिन्दुं प्रति कर्मप्र-

---

गम्यमानस्य बिन्दोरवयवावयविभावसम्बन्धे। इयमेव ह्यपिशब्दस्य पदार्थ-द्योतकता नाम। कर्मप्रवचनीययुक्ते द्वितीया तु नेह प्रवर्तते। सर्पिषो

---

विषयस्यैव भवति, यदि तस्य बिन्दुमात्रमपि न लभ्यत इत्यत्रापिशब्द-सामर्थ्याद्बिन्दुरिति गम्यते तदाह। 'मात्राबिन्दुस्तोकमित्यस्यार्थेऽपिशब्दो वर्तत इति'। तदुपजनिते च व्यतिरेके सर्पिष इति षष्ठी, द्वितीया तु न

## उपलक्षणार्थमिति । (कै)

यत्पदप्रयोगं विनापि तदर्थेऽपिशब्देनावश्यं द्योत्यते तादृशापेः कर्मप्रवचनीयत्वमित्यर्थस्तत्फलितमाह

## तेन यस्मिन्निति । (कै)

पदान्तरस्य तद्वाचकत्वेन प्रसिद्धातिरिक्तस्याभिधानशक्तिर्नास्त्यपिशब्दसमभिव्याहारं विनेति शेषः । अर्थात्तत्समभिव्याहारेऽस्तीति लभ्यम् । एवं च सर्पिष इत्येतत्तत्सम्बन्धिबिन्दुपरं बोध्यम् । बागादिशब्दे स्त्रीत्वस्य प्रकृतिवाच्यत्वेऽपि द्योतकटाबादिप्रयोगवत् तस्य द्योतकत्ववच्च बिन्दुशब्दप्रयोगेऽप्यपेस्तद्द्योतकत्वाच्चतिरित्याह

## ततश्चेति ॥ (कै)

---

भवतीति । अथवा यदत्र कर्मप्रवचनीययुक्तं नादः प्रयुज्यते । किं पुनस्तत् ।

---

वचनीयो ऽपिः न तु सर्पिःप्रतीति भावः । बिन्दोस्तद्वीति । ननु यदा बिन्दुशब्दो न प्रयुज्यते तदापिः कर्मप्रवचनीयः । तदुच्यते वृत्तिकारैः । पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थ इति न चाप्रयुक्ते द्वितीया विधातुं शक्या अत्राहुः । पदार्थग्रहणमिहोपलक्षणार्थमुपात्तं तेन यस्मिन् पदार्थ

---

बिन्दुना योगो न त्वपिनेत्युक्तत्वात् । सम्भवनं नाम शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः । अपिसिञ्चेन्मूलसहस्रम् । अपिस्तुयाद्विष्णुम् । अन्ववसर्गः कामचारानुज्ञा । अपिसिञ्च । अपिस्तुहि । गर्हायाम् । धिग्देवदत्तमपि-

---

भवति अपिना योगाभावात्, स हि स्यादित्यनेन सम्बध्यत इत्युक्तम् । 'अधिकार्थवचनेनेति' । यावत्यर्थेऽस्य सामर्थ्यं ततोऽधिकमर्थं ब्रुवन् यत् सेकादौ शक्तिमाविष्करोति तत्सम्भावनमित्यर्थः । 'अपि सिञ्चेदिति' । सम्भावने लिङा तस्यैव दुष्करविषयतामपिराह, कामचार इच्छाप्रवृत्तिः, 'अपि

ननु प्रथमायाः कारकाधिकारे ऽपठितत्वात्कथं कारकविभक्तित्वमत आह

सर्वत्रैवेति। (कै)

क्रियाजनकार्थकत्वमेव कारकविभक्तित्वमिति भावः ॥

अन्तरङ्ग इति। (कै)

अपिद्योत्यो बिन्दुरिति तस्य कथमपि संबन्धो बहिरङ्ग इति चिन्त्यम्। अपिना द्योत्यद्योतकभावः संबन्धः स्वाभाविक इति तस्य कथं स्यादित्येतत्सम्बन्धोत्तरकालिकता तस्मादाचनिको ऽयं न्याय इति तत्त्वम् ॥

---

बिन्दुः। बिन्दोर्व्हिर्ष कस्मान्न भवति। उपपदविभक्तेः कारकविभक्तिर्बलीयसीति प्रथमा भविष्यति ॥

---

पदान्तरस्याभिधानशक्तिर्नास्ति तत्रापिः कर्मप्रवचनीयः। ततश्च गतार्थो बिन्दुशब्दो यदा विस्पष्टप्रतिपत्तये प्रयुज्यते तदाप्यपिः कर्मप्रवचनीयसंज्ञो भवति। उपपदविभक्तेरिति। कारकविभक्तिरत्र प्रथमा। सर्वत्रैव वाक्येऽवश्यभाव्यं क्रियया ततः सत्तया तत्र बिन्दोः प्रथमं स्यादित्यनेन संबन्धोऽन्तरङ्गः पश्चात्तु तद्द्वारकोऽपि शब्देन ॥

---

स्याद्वचनम्। समुच्चये। अपिसिञ्च। अपिस्तुहि। सिञ्च च स्तुहि चेत्यर्थः। यथायथमुपसर्गप्रादुर्भ्यामिति उपसर्गात्सुनोतीति च प्राप्तं षत्वं कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधितत्वान्न भवति ॥

---

सिञ्चेति'। सिञ्च वा मा वा स्तुहि वा मा वा यथेष्टं कुर्वित्यर्थः। नास्त्योपशब्दः। 'अपि सिञ्चेदिति'। गर्हार्थे लिङ्। 'उपसर्गसंज्ञाबाधनादिति'। स्यादित्यत्रोपसर्गप्रादुर्भ्यामिति सिच उपसर्गात्सुनोतीति षत्वप्रसङ्गः ॥

# अधिरीश्वरे ।१।४।९७॥

**वक्ष्यमाणमपीति । (कै)**

"यस्मादधिकं यस्य चेश्वरवचनमिति" सूत्रे इत्यर्थः ॥

**स निर्दिश्यते । (कै)**

यस्मिन्सप्तमीश्वरत्वमुच्यते इत्यर्थादिति भावः ॥

**प्रथमा न प्राप्नोतीति । (कै)**

सूत्रे ईश्वरेणेप्सिततमत्वोद्यात् तं प्रत्यपि कर्मप्रवचनीयत्वादिति भावः ॥

---

अधिरीश्वरे॥ १। ४। ९७॥ अधिरीश्वरवचने उक्तम् । किमुक्तम् । यस्य चेश्वरवचनमिति कर्तृनिर्देशश्चेदवचनात्सिद्धम् । प्रथमानु

---

अधिरीश्वरे । १ । ४ । ९७ । उक्तमिति । वक्ष्यमाणमपि बुद्ध्या निरूपितत्वादुक्तमित्युक्तम् । कर्तृनिर्देशश्चेदिति । यदीश्वरवचनमित्यनेन पदेनेश्वरः स्वामी भृत्यनियोगादौ यः कर्ता स निर्दिश्यते तदानेन स्वामिनः सप्तमी विधीयते । अधिब्रह्मदत्ते पञ्चाला इति । तत्राधिकरणत्वादेव सप्तमी सिद्धा । ब्रह्मदत्ते स्थिताः पञ्चाला इत्यर्थावगमात् । पञ्चाला इति च प्रथमा न प्राप्नोति । कर्मप्रवचनीययुक्ते द्वितीयेतिद्वितीयया बाधितत्वात् । स्व-

---

अधिरीश्वरे । १ । ४ । ९७॥ स्वस्वामिभावे द्योत्ये ऽधिः कर्मप्रवचनीयः स्यात् । इह स्वात्स्वामिनो वा पर्यायेण कर्मप्रवचनीयविभक्तिर्न तु हीने "उपोऽधिके च" त्यत्रेवान्यतरस्मादेव । अधिभुवि रामः । अधिरामे भूः ।

---

अधिरीश्वरे । १ । ४ । ९७॥ 'तदयमिति' । यथा हीन इत्यत्र हीनोत्कृष्टसम्बन्धे संज्ञा उपोधिके चेत्यत्राधिकाधिके सम्बन्धे तथात्रापीत्यर्थः । विभक्तिस्तु तत्रान्यतरस्मादुच्यते इह तु न तथेत्याह । 'तत्र कदा चिदिति' । यस्य चेश्वरवचनमित्यत्रार्थद्वयम् ईश्वरशब्दो भावप्रधानः, यस्य स्वामिन ईश्वरत्वमुच्यते तस्मात्स्वामिनः सप्तमीत्येकः, यस्य स्वस्येश्वर उच्यते

ईश्वरेण यदुच्यते इति । (कै)

संबध्यत इत्यर्थः ॥ ईश्वरेण स्वनिरूप्यधर्मवत्तया यदुच्यत इत्यर्थो वा निरूपकस्यैव कर्तृत्वविवक्षा न तौशितव्यस्य देशरूपत्वेन । पञ्चालानामप्याधारत्वेन सप्तमी सिद्धेत्यत आह

तत्रेति । (कै)

आसनादिक्रियोपजनितः सम्बन्धः स्वस्वामिभावादि ॥ ननु ब्रह्मदत्तादपि द्वितीयापत्तिरत आह

स्वं चेति । (कै)

तस्यैव कर्मप्रवचनीययोग्यसम्बन्धप्रतियोगित्वेन ब्रह्मदत्ताच्च द्वितीयेति भावः ॥

---

पपत्तिस्तु । स्ववचनात्सिद्धमिति । अधिः स्वं प्रति कर्मप्रवचनीयसंज्ञो भवतीति वक्तव्यम् ।

---

चनादिति । अधिब्रह्मदत्ते पञ्चाला इत्यस्याऽन्यथासिद्धत्वादधिस्वे इति वक्तव्यम् अधिपञ्चालेषु ब्रह्मदत्त इत्यर्थम् । ईश्वरवचनमिति च कर्तृषष्ठ्या समासः ईश्वरेण यदुच्यते स्वतत्त्वकर्मप्रवचनीययुक्ते सप्तमीति । यदि वा यस्य संबन्धिन ईश्वरस्य वचनं सप्तमी तत्र । पञ्चालेष्वासनादि क्रियोपजनिते संबन्धे षष्ठ्यां प्राप्तायां सप्तमी विधीयते । स्वं च प्रत्यधेः कर्मप्रवचनीयसंज्ञा न तु स्वामिनमिति स्वामिनः प्रथमैव भवति ॥

---

एतच्च संज्ञासूत्रं नारम्भणीयम् । उत्तरार्थत्वे तु योगो न विभजनीय इति "यस्मादधिकमि"त्यत्र वक्ष्यामः ॥

---

तस्मात्स्वात्सप्तमीत्यपरः, यत्र यदा स्वाम्यर्थे व्यतिरेकविवक्षा तदा ततः सप्तमी स्वस्य तु व्यतिरेके तत इति न पुनरुभाभ्यां युगपद्भवति एकयैव विभक्त्या द्विष्ठस्यापि सम्बन्धस्याभिधानादिति मत्वा कदा चिदित्युक्तम् । 'ब्रह्मदत्त-इति' । ब्रह्मदत्तस्य स्वाः पञ्चाला इत्यर्थः । 'अधिपञ्चालेष्विति' । पञ्चालानां ब्रह्मदत्तः स्वामीत्यर्थः ॥

# लः परस्मैपदम् । १ । ४ । ९९ ॥

नन्वस्य प्रथमान्तत्वे लकाराणामेव परस्मैपदसंज्ञा स्यात् तथा चानुदात्तङित्त्वो लकारा एव न स्युः । किं च तङानावित्यत्र प्रथमान्तस्य सम्बन्धो न प्राप्नोत्यत आह

षष्ठीति । (कै)

अत एव "टित आत्मनेपदानामि"त्यादि चरितार्थम् । तङानावित्यादेश्च तङानभाविनि लक्षणायां गौरवमतः षष्ठ्यन्तत्वमेवादेशापेक्षया युक्तमिति भावः ॥

---

लः परस्मैपदम् ॥ १ । ४ । ९९ ॥ लादेशे परस्मैपदग्रहणं पुरुषबाधितत्वात् । वा लादेशे परस्मैपदग्रहणं कर्तव्यम् । किं कारणम् ।

---

लः परस्मैपदम् । १ । ४ । ९९ लः । इत्यादेशापेक्षा षष्ठी । लादेशाः परस्मैपदसंज्ञा इत्यर्थः । लादेश इति । लस्येत्यत्र परस्मैपदमिति वक्तव्यम् ।

---

लः परस्मैपदम् । १ । ४ । ९९ ॥ लकारस्यादेशाः परस्मैपदसंज्ञाः स्युः । पचन्तं पश्य ॥

---

लः परस्मैपदम् । १ । ४ । ९९ ॥ 'ल इति षष्ठीति' । अथ प्रथमाबहुवचने को दोषः, 'आम' इति लावस्थायामेव लुप्यमानस्य लिटः संज्ञा स्यात् ततस्तेषामित्यत्राम स्याद् नह्यतो लिट्परः सम्भवति, शेषादेव परस्मैपदमिति नियमात्, ज्ञापकात् सिद्धं, यदयमाम्प्रत्ययवदित्याह तज् ज्ञापयति भवत्यात्मनेपदिभ्योऽप्यामिति, अयं तर्हि दोषो लकारस्यैव संज्ञा स्यान्न तदादेशानां तिबादीनामिति, स्थानिवद्भावात्तेषामपि भविष्यति, तङानावात्मनेपदमित्यत्र तर्हि ल इति प्रथमान्तस्य तङानाभ्यां सम्बन्धो न

## लस्येत्यचेति । (कै)

लस्य तिबाद्यौत्यचेति भावः ॥ भाष्ये

## लादेशेत्यस्य (भा)

लादेशप्रकरणे इत्यर्थः ॥

## बाध्यत इति । (कै)

इष्टानुरोधादिति भावः । एतेन पर्यायज्ञापनेनापीदं चरितार्थमित्यपास्तम् ॥ ननु तृतीय एव परस्मैपदसंज्ञा ऽस्तु किं ज्ञापकाश्रयणेनेत्यत आह

---

पुरुषबाधितत्वात् ।इह वचने हि संज्ञा बाधनम् । इह हि क्रियमाणे अनवकाशा पुरुषसंज्ञा परस्मैपदसंज्ञां बाधेत । परस्मैपदसंज्ञाप्यनवकाशा सा वचनाद्भविष्यति । सावकाशा परस्मैपदसंज्ञा । कोऽवकाशः । शतृक्वसू

---

इह तुवचने एकसंज्ञाधिकारात्परस्मैपदसंज्ञा शतृक्वसोः सावकाशां पुरुषसंज्ञास्तिङस्तु बाधेरन्नित्यर्थः । विधि इत्ती तिति । अस्मादेव लिङ्गादेकसंज्ञाधिकारोऽत्र बाध्यत इति भावः । आत्मनेपदसंज्ञया परस्मै-

---

स्यात् नहि तङानौ तौ भवतः । ननु चैवं विज्ञास्यते तङानभावी लकार एव तङानाविति इति एवमपि गत्यन्तरे सति न लिङ्गकल्पना युक्ता तस्मात्तु इति षष्ठी । 'आदेशापेक्षेति' । न च संज्ञापेक्षा, लकारस्य परस्मैपदमिति संज्ञा भवतीति, कुतः, सामानाधिकरण्येन प्रायेण संज्ञाविधानात् । किञ्च अपि यो दोषः सोऽस्मिन्नपि स्याद् उभयत्र लकारस्य संज्ञित्वात् तस्मादादेशापेक्षा।षष्ठी । यद्येवमनवकाशाः पुरुषसंज्ञा परस्मैपदसंज्ञां शतृक्वसोः सावकाशां बाधेत, अपि तु लकारस्यं परस्मैपदसंज्ञा तिङां तु पुरुषसंज्ञेति भिन्न विषयत्वान्नास्ति बाधप्रसङ्गः, यद्यपि अस्यत्रोपि तिबादीनामादेशानामपि स्थानिवदादेश इत्यनेन परस्मैपदसंज्ञा भविष्यति

आत्मनेपदेति ॥ (कै)

ननु ज्ञापकात्परस्मैपदसंज्ञया समावेशेऽप्यात्मनेपदसंज्ञया पुरुषसंज्ञानां समावेशो न स्यादत आह

सामान्यापेक्षं चेति । (कै)

पुरुषसंज्ञायां परस्मैपदात्मनेपदग्रहणानुवृत्त्या समवेशसिद्धिरनुवृत्तिरेव लिङ्गेन विवक्षिता। एतदर्थमेव चात्र प्रकरणे पुरुषसंज्ञादिविधानमित्यन्ये ॥

---

अवकाशः सिचि वृद्धौ तु परस्मैपदग्रहणं ज्ञापकं पुरुषाबाधकत्वस्य। यदयं सिचिवृद्धिः परस्मैपदेष्विति परस्मैपदग्रहणं करोति तज्ज्ञापयत्याचार्यः न पुरुषसंज्ञां परस्मैपदसंज्ञा बाधत इति ॥

---

पदसंज्ञाया बाधनं यथा स्यादित्येवमर्थं त्विह प्रकरणे ऽनयोः संज्ञयोर्विधानम् । सामान्यापेक्षं च ज्ञापकमित्यात्मनेपदसंज्ञयापि पुरुषसंज्ञानां समावेशो भवति । अन्यथा पुरुषसंज्ञाः सावकाशास्तिङ्त्सु अनवकाशया आत्मनेपदसंज्ञया बाधेरन् ॥

---

तथापि तस्या अनाकडारीयत्वात्समावेशसिद्धिः, षष्ठीपक्षेऽपि ज्ञापकात्सिद्धं, यदयं 'सिचि वृद्धिः परस्मैपदेषु' त्याह तज् ज्ञापयति भवति तिङामप्येषा संज्ञेति, नहि सिज्विषये प्रत्ययस्य सम्भवतः, सामान्यापेक्षं च ज्ञापकमिति आत्मनेपदसंज्ञया पुरुषसंज्ञानां समावेशसिद्धिः, अन्यथा परस्मैपदेषु सावकाशाः पुरुषसंज्ञाः तङ्स्वनवकाशयात्मनेपदसंज्ञया बाध्येरन् । अथ वा पुरुषसंज्ञायां परस्मैपदात्मनेपदग्रहणानुवृत्तेरयमर्थो भवति, लटः परस्मैपदात्मनेपदसंज्ञकाः सतस्त्रीणि त्रीणि पदानि भूत्वा प्रथमादिसंज्ञा भवन्तीति तेन समावेशसिद्धिः ॥

# तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः । १ । ४ । १०१ ॥

ननु तिङस्त्रीणित्रीणीत्यनेनात्मनेपदत्रिकाणामपि ग्रहणं भविष्यतीत्यत आह

तिङः षडिति ॥ (कै)

नन्वात्मनेपदग्रहणे कृते परस्मैपदसम्बन्धिनां संज्ञा न स्यादिति दोषस्तदवस्थ एवेत्यत आह

---

तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः । १ । ४ । १०१ ॥ प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं समसंख्यार्थम् । प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं कर्तव्यम् । आत्मनेपदानां च प्रथममध्यमोत्तमसंज्ञा भवन्तीति वक्तव्यम् । किं प्रयोजनम् । समसंख्यार्थम् । संख्या-

---

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः । १ । ४ । १०१ ॥ तिङां षट् त्रिकाः संज्ञास्तिस्र इति वैषम्याद्यथासंख्यं न प्राप्नोतीति मत्वाह । प्रथमेति । आत्मनेपदग्रहणे च पृथक् क्रियमाणे सूत्रं परस्मैपदविषयमेव

---

तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः । १ । ४ । १०१ ॥ कृतद्वन्द्वानामेकशेषात् प्रथमेत्यादयः षट् संज्ञाःतिङः षट् त्रिकाः क्रमात्प्रथ-

---

तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः । १ । ४ । १०१ ॥ त्रीणित्रीणीति वीप्सायां द्विर्वचनं, तत्र च समुदायस्यावयवयोश्च पृथक्पदत्वमिष्यते, आ पचसि पचसि देवदत्तेत्येकान्तता यथा स्यात् कुण्डं कुण्डं वाग्वाग् अपचन्न-पचन्नित्यादौ पूर्वपदेप्यनुस्वारादि पदकार्यं यथा स्यादिति, तेन पदच्छेदकाले

( तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः । 
१ । ४ । १०१ । )

**आत्मनेपदेष्विति ॥ (कै)**

सहविवक्षाभावादेकशेषो न प्राप्नोतीत्यत आह

**आहतीति । (कै)**

इदमुपलक्षणं व्यक्तिपक्षेऽपि तत्प्रत्याख्यानात् । यदेकशेषशब्देन तत्त्वं लक्ष्यते ॥ नन्वेतत्संज्ञाप्रवृत्तेः पूर्वं प्रथममध्यमयोरिति व्यवहारो न युक्तो ऽत आह

---

तानुदेशो यथा स्यात् । अक्रियमाणे ह्यात्मनेपदग्रहणे तिस्रः संज्ञाः षट् संज्ञिनः वैषम्यात्संख्यातानुदेशो न स्यात् । क्रियमाणेऽपि चात्मनेपदग्रहणे आनुपूर्व्यवचनं च । आनुपूर्व्यवचनं च कर्तव्यम् । अक्रियमाणे हि कस्य चिदेव त्रिकस्य प्रथमसंज्ञा स्यात् कस्य चिदेव मध्यमसंज्ञा कस्य चिदेवो-

---

भवतीति वाक्यभेदादेकेन वाक्येन परस्मैपदानां त्रयाणां तिस्रः संज्ञा द्वितीयेनात्मनेपदानामिति सिद्धमिष्टम् । वैषम्यादिति । यद्यप्येकैकस्य त्रिकस्यानेकसंज्ञाकरणे प्रयोजनाभावः तथापि कस्य चित्त्रिकस्य काचित्संज्ञेत्येतावल्लभ्येत न तु यथाभिमतविषयविभागलाभः । आनुपूर्व्यवचनं चेति । अत्र सूत्रे त्रिका-

---

मादिसंज्ञाः स्युः । लटलसोः सावकाशापि परस्मैपदसंज्ञा प्रथमादिसंज्ञाभिर्न बाध्यते सिचिवृद्धिःपरस्मैपदेष्विति लिङ्गात् । तथा परस्मैपदे लब्धावकाशापि

---

त्रीणित्रीणीत्येकं पदं द्वे वा । इह तिङां षड् त्रिकाः संज्ञास्तु तिस्र इति वैषम्यात् संख्यातानुदेशो न प्राप्नोति । अत्र यद्यप्येकैकस्य त्रिकस्यानेकसंज्ञाविधाने प्रयोजनं नास्ति नैतावता यथाभिमतविषयलाभस्तत्राह । 'तिङास्त्रादयः प्रत्यया इति' । एवं मन्यते संज्ञा अपि षडेव, कथमेकशेषनिर्देशोऽयं तत्र यदि प्रथमश्च प्रथमश्च प्रथमौ मध्यमश्च मध्यमश्च मध्यमौ उत्तमश्च उत्तमश्चोत्तमौ प्रथममध्यमोत्तमा इति कृतैकशेषाणां द्वन्द्वः

## प्रसिद्धिमिति। (कै)

सिद्धान्तकालिकीं प्रसिद्धिमित्यर्थः॥ भाष्ये

## किं पुनरत्रेति। (भा)

यद्यप्यत्र व्याख्यानतः कृतद्वन्द्वानामेवैकशेषस्तथापि लोके कथं न्याय्यमिति प्रश्नः॥ नन्वत्र बहुशब्दस्य बहुत्वार्थकत्वे एकवचनानुपपत्तिरत आह

---

त्तमसंज्ञा स्यात्। न वैकशेषनिर्देशात् यत्तावदुच्यते आत्मनेपदग्रहणं कर्तव्यं समसंख्यार्थमिति तन्न कर्तव्यम्। संज्ञा अपि यद्येव निर्दिश्यन्ते। कथम्। एकशेषनिर्देशात्। एकशेषनिर्देशोऽयम्। अथैकस्मिन्नेकशेषनिर्देशे सति किमयं कृतैकशेषाणां द्वन्द्वः प्रथमश्च प्रथमश्च प्रथमौ। मध्यमश्च मध्यमश्च मध्यमौ। उत्तमश्चोत्तमश्चोत्तमौ। प्रथमौ च मध्यमौ

---

णामुच्चारणं नास्ति केवलं त्रीणित्रीणीति वीप्सया प्रतिपत्तिस्तेषां तत्रानियमप्रसक्तेर्नियमार्थमानुपूर्व्यग्रहणं च कर्तव्यमित्यर्थः। एकशेषनिर्देशादिति। आकृत्यभिधानाश्रयेण प्रत्याख्यातं सूत्रं शास्त्रप्रक्रियासंपत्त्यर्थमेव संपद्यते। अथैतस्मिन्निति। उभयथा संभवात्प्रश्नः। प्रथममध्यमयोरिति प्रसिद्ध-

---

प्रथमादिसंज्ञा तङ्स्वात्मनेपदसंज्ञया न बाध्यते कृतद्वन्द्वानामेकशेषेण तङ्स्तु प्रतिपदविधेबलत्वात्। न चैवमपि परस्मैपदात्मनेपदसंज्ञाभ्यां पुरुषसंज्ञायाः पर्यायः स्यादिति वाच्यम्। णलुत्तमो वेत्यस्य सामान्यापेक्षज्ञापकत्वात्। इह

---

क्रियेत ततो नाभिमतसंख्यातानुदेशः स्यात् तस्मात्कृतद्वन्द्वानामेकशेषः प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमा इति। न चैवमपि न विज्ञायते किमादित आरभ्य त्रीणि वचनानि गृह्यन्ते आहो स्विदन्ततस्त्रिकपरिग्रह इति। नहि त्रिकपरिग्रहेऽपि यथासंख्यशास्त्रं लभते:

( तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः। (अ. १। पा. ४। आ. ४)
१।४।१०१।)

बहुशब्दस्येति॥ (कै)

नन्वेवमवयवबहुत्वप्रतीतिर्न स्यादत आह

समुदायस्येति॥ (कै)

भाष्ये

लोकत इति। (भा)

विहव्यस्येत्यादिस्मृतेरित्यर्थः॥

---

च उत्तमौ च प्रथममध्यमोत्तमा इति। आहो स्वित्कृतद्वन्द्वानामेकशेषः। प्रथमश्च मध्यमश्चोत्तमश्च प्रथममध्यमोत्तमाः प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमा इति। किं चातः। यदि कृतैकशेषाणां द्वन्द्वः। प्रथममध्यमयोः प्रथमसंज्ञा प्राप्नोति उत्तमप्रथमयोर्मध्यमसंज्ञा प्राप्नोति। मध्यमोत्तमयोरुत्तमसंज्ञा प्राप्नोति। अथ कृतद्वन्द्वानामेक-

---

माश्रित्यैतदुच्यते। व्याख्यानान्निर्णय इति मत्वाह। कृतद्वन्द्वानामिति॥ बहुशक्लिकिटकमिति। एकशेषे कृते द्वन्द्वः। जातिरप्राणिनामित्येकवद्भावः। बहुशब्दस्यात्र वैपुल्यवचनत्वेकवचनम्। समुदायस्य वैपुल्यमवयवानां प्रचयाद्भवति। यदा तु समाहारद्वन्द्वे कृते एकशेषः क्रियते तदा

---

सूत्रत्रयेऽपि महासंज्ञाकरणं पूर्वाचार्यानुरोधात्। इह त्रीणित्रीणीत्येकं पदम्। द्वे वेति हरदत्तः। तत्र सत्यामप्यवान्तरपदसंज्ञायां महापदसंज्ञामाश्रित्य संहितैकपदे नित्येत्यस्य प्रवृत्तिः। अन्यथा समासादावपि पृथक्छे-

---

किं तर्हि विहितेषु संज्ञानां क्रमेण संबन्धं विधत्ते, एवं तर्हि लोकत एतत्सिद्धं तद्यथा विहव्यस्य द्वाभ्यां द्वाभ्यामभिप्रपद्येय इति न चोच्यते आनुपूर्व्येणेति, अथ च विहव्याख्यस्य सूक्तस्यादित आरभ्य आनुपूर्व्येण द्वाभ्यां द्वाभ्यामृग्भ्यामभिप्रपद्यते न याभ्यां काभ्यां चित् तथ तिङोऽष्टादश प्रत्यया इत्यनेनादित आरभ्य त्रिकाणामानुपूर्व्येण ग्रहणं नेष्यते इति

**तथेहापीति। (कै)**

प्रथममध्यमेत्यादि। महासंज्ञाकरणं तु प्राचामनुरोधेनैवेति भावः। "ममाग्ने नव विहव्य" इति सर्वानुक्रमः॥

---

शेषः न दोषो भवति। यथा न दोषस्तथास्तु। किं पुनरत्र न्याय्यम्। उभयमित्याह। उभयं हि दृश्यते। तद्यथा। बहुशष्कुलिकिटकं बहूनि शष्कुलिकिटकानि। बहुस्थाली पिठरं बहूनि स्थालीपिठराणि। यदप्युच्यते क्रियमाणेऽप्यात्मनेपदग्रहणे आनुपूर्व्यवचनं कर्तव्यमिति। न कर्तव्यम्। लोकत एतत्सिद्धम्। तद्यथा लोके विहव्यस्य द्वाभ्यां द्वाभ्यामभिषवस्येय इति न चोच्यते आनुपूर्व्येणेति आनुपूर्व्येण चोपस्थीयत इति॥

---

बहूनि शष्कुलिकिटकानीति भवति। लोकत इति। यथा पङ्क्तिस्थेषु ब्राह्मणेषु द्वौद्वौ ब्राह्मणावानयेत्युक्ते आनुपूर्व्येणानयनं भवति न तु व्युत्क्रमेण तथेहापि भवतीतिभावः। विहव्यस्येति। विहव्याख्यस्य सूक्तस्य द्वाभ्यां द्वाभ्यामभिषवस्येय इत्युक्ते आनुपूर्व्येण ऋगद्वयं गृह्यते न तु व्युत्क्रमेण॥

---

दापत्तेः। द्विवचनमध्येऽपि पदान्तरप्रयोगापत्तेश्च। अत एव ताता पिण्डानामित्यादौ वेदे ऽवग्रहः क्रियते। यथा च द्विवचने महापदसंज्ञाऽवान्तरसंज्ञा च तथा नित्यवीप्सयोरित्यत्र वक्ष्यामः॥

---

दर्शयितुं तिङ्ग्रहणेन संनिवेशोऽस्तीति दर्शितं, न च परस्मैपदसंज्ञक इत्यादिना तु कृतद्वन्द्वानामेकशेषो न कृतैकशेषाणां द्वन्द्व इति दर्शितं, यदि वा परस्मैपदग्रहणमात्मनेपदग्रहणं चानुवर्तते तिङ्ग्रहणं तु शब्दकालो-विशेषार्थं तदनुवृत्तौ च द्वौ राशी भवतः, तयोश्च व्यापारभेदेन सूत्रमेतत्प्रवर्तते, तत्र चैकैकं त्रयस्त्रिका इति यथा संख्यसिद्धिः, तत्र न चेत्यादिना गणिद्वयं दर्शितम्, तत्रेत्यादिना तु व्यापारभेदः, अत्रापि महासंज्ञाकरणं पूर्ववत्॥

# विभक्तिश्च ॥ १ । ४ । १०४ ॥

अननुवृत्तौ स्वरितत्वप्रतिबद्धत्वमभावप्रतियोगितया बोध्यम् ॥ स्वरितत्वमस्ति नवेति विचारतात्पर्यम् । स्वरितत्वमाचार्याणामप्यनुमेयमेवेति बोध्यम् ॥

**प्रत्येकमिति । (कै)**

नन्वस्याः प्रत्येकं सत्त्वेऽपि द्वितीयायां चेत्यादिव्यवहारात् त्रिकस्य त्रिकस्य प्रथमादयः सप्त संज्ञा अवश्यमभ्युपेया एवं च तया प्रथमयोरित्यत्राप्युपपत्तिरिति चेन्न । पाणिनिना तासामकृतत्वात् ।

---

विभक्तिश्च ॥ १ । ४ । १०४ ॥ त्रोस्त्रिणोत्यनुवर्तते उताहो न । किं चातः यद्यनुवर्तते । अष्टन आ विभक्ताविल्यात्वं न प्राप्नोति । अथ निवृत्तम् । प्रथमयोः पूर्वसवर्ण इत्यत्र प्रथमयोरेव ग्रहणं प्राप्नोति ।

---

विभक्तिश्च । १ । ४ । १०४ । सति प्रयोजने स्वरितत्वप्रतिबद्धे शब्दानामनुवृत्त्यननुवृत्ती भवतः लिङ्गदर्शनं च पक्षद्वयेऽप्यस्ति इति संदेहात्प्रश्नः । त्रोस्त्रिणीति आत्वं न प्राप्नोतीति । नह्यष्टन् शब्दात्परं युगपत्त्रिकमस्ति । प्रथमयोरिति । प्रत्येकं संज्ञित्वे विभक्तिसमुदायस्य विभक्तिग्रहणेना-

---

विभक्तिश्च । १ । ४ । १०४ ॥ सुप्तिङौ विभक्तिसंज्ञौ स्तः । चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः । तिङां विभक्तिसंज्ञायाः प्रयोजनं नविभक्तौ तुस्मा इति, सुपां तु त्यदाद्यत्वादिकमपि ॥

---

विभक्तिश्च । १ । ४ । १०४ ॥ चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः तिङां व्यवहितानामपि स्वरितत्वादनुवृत्तिः, तिङां विभक्तित्वे प्रयोजनम् आतामादौ 'न विभक्तौ तुस्माः' इति निषेधः, सुपां तु त्यदाद्यत्वादिकमपि ॥

सिद्धान्ते तु त्रिकस्य विभक्तित्वेऽवयवधर्मविभक्तित्वस्य त्रिके आरोपे वा यौगिका एव ते व्यवहाराः संभवन्तीति ताः संज्ञाः सूत्रकृता न कृता इति प्रतीमः ॥

**विभक्तिसमुदायस्येति। (कै)**

जनपदसमुदायस्य जनपदग्रहणेनाग्रहणवदिति भावः ॥

**समुदायद्वयापेक्षानुपपत्ताविति। (कै)**

**प्रथमाविति। (कै)**

विशेष्यमचीति विशेषणमिति भावः ॥

**अजादित्वासम्भवादिति। (कै)**

यद्यपि शिवोऽर्च्य इत्यादावुत्वे कृते सम्भवोऽस्ति तथापि तत्र "नादिचीति" निषेध इति भावः ॥ एकदेशी शङ्कते

**ननु चेति॥ (भा)**

---

यथेच्छसि तथास्तु। अस्तु तावदनुवर्तत इति। ननु चोक्तमत्र आ विभक्तावित्यात्वं न प्राप्नोतीति। वचनाद्भविष्यति। अथवा पुनरस्तु निवृत्तम्। ननु चोक्तं प्रथमयोः पूर्वसवर्ण इति प्रथमयोरेवग्रहणं प्राप्नोतीति। नैष दोषः। अचीत्यनुवर्तते। न चाजादी प्रथमौ प्रत्ययौ स्तः।

---

ग्रहणात्प्रथमयोरिति समुदायद्वयापेक्षानुपपत्तौ प्रत्यययोरेव द्वयोरेव द्वयोर्ग्रहणं प्राप्नोतीत्यर्थः। वचनादिति। त्रिकस्य युगपत्प्रयोगाभावात्सामर्थ्यात्समुदायवृत्तिर्विभक्तिशब्दोऽवयवे वर्तिष्यतइति भाव। न चाजादी इति। सुशब्दो प्रथमौ सुखाजादिर्यो भवतीति प्रत्यययोरजादित्वासंभवादवयवशब्दस्त्रिके समुदाये उपचाराद्वर्तत इति भावः। अजादी याविति। चाजादी विशेष्यौ प्रथमयोरिति विशेषणं तेनौजसोरेव ग्रहणमित्यर्थः। अजादीनां चेति। अचीत्यनुवर्तते। तत्र व्याख्यानात्तदादिविधिः निर्धारणं

तद्व्याचष्टे

अजादीविशेष्याविति । (कै)

व्याख्यानाच्छब्दरूपंविशेष्यमादाय तदादिविधिरिति भावः ॥ वस्तुतो निर्द्धारणमेकवचनान्तेन नेति "कारक" इति सूत्रे भाष्ये उक्तम् । शब्दरूपं विशेष्यमादाय तदन्तविधिश्चासति गमके नेतीयं शङ्कां युक्तैव तथापि तामुपगम्य पर एकदेशी समाधत्ते

यत्तर्हीति ॥ (भा)

भाष्ये

विभक्त्योरिति । (भा)

विभक्तिसमुदाययोरित्यर्थः । तौ च समुदायौ प्राचां वैयाकरणानां प्रथमाद्वितीयादिसंज्ञत्वेन प्रसिद्धावेव गृह्येते । न च तस्मादित्यनेन गा इत्येतद्व्यावृत्तये सवर्णदीर्घ एव परामृष्टव्यस्तस्य व्यवहितत्वादित्याशयः । एतद्भाष्यमूलिका एव प्रथमादयः सप्तम्यन्ताः स्वौजसादीनां सप्तानां त्रिकाणां संज्ञा इति बोध्यम् ॥

---

ननु चैवं विज्ञायते ऽजादी यौ प्रथमौ अजादीनां वा यौ प्रथमाविति । यत्तर्हि तस्माच्छसो नः पुंसीत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति । तज्ज्ञापयत्याचार्यः विभक्त्योर्ग्रहणमिति । अथवा वचनग्रहणमेव कुर्याद् औजसोः पूर्वसवर्ण इति ॥

---

चाश्रयिष्यते अजादिषु यौ प्रथमाविति । एवमप्यौजसोरेव ग्रहणं स्यादिति चोद्यम् । यत्तर्हीति । एतान् गाः पश्येत्यत्र नत्वनिवृत्त्यर्थं तस्मादित्युच्यते । औजसोरेव ग्रहणे ऽन्तरात् पूर्वसवर्णदीर्घादुत्तरः शसः सकारो न भवतीति किं तस्मादित्यनेन । तत् क्रियमाणं त्रिकद्वयग्रहणस्य ज्ञापकं संपद्यते ॥

# युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १ । ४ । १०५ ॥

# अस्मद्युत्तमः । १ । ४ । १०७ ॥

# शेषे प्रथमः । १ । ४ । १०८ ॥

विधिनियमसम्भवे विधेर्ज्यायस्त्वादाह

तत्रेति । (कै)

---

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०५ ॥ अस्मद्युत्तमः ॥ १०७ ॥ शेषे प्रथमः ॥ १०८ ॥ किमर्थमिदमुच्यते । युष्मदस्मच्छेष-

---

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १ । ४ । १०५ ॥ किमर्थमिति । किं लादेशविधानवाक्यैकवाक्यत्वादिष्यर्थमिदम् । अथ

---

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १ । ४ । १०५ ॥ लकारेण समानाधिकरणे युष्मदि प्रयुक्ते ऽप्रयुक्तेऽपि मध्यमः स्यात् ।

---

'अस्मद्युत्तमः । १ । ४ । १०७ ॥ लकारसमानाधिकरणे ऽस्मदि स्थिते

---

शेषे प्रथमः । १ । ४ । १०८ ॥ मध्यमोत्तमविषयादन्यत्र प्रथमपुरुषः स्यात् । पचति पचतः पचन्ति ॥

---

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १ । ४ । १०५ ॥ लस्य तिबादय इत्यनेनैकवाक्यतामापन्नेनानेन तिबादीनां विशिष्यविधानमुत

---

"अस्मद्युत्तमः" १ । ४ । १०७ ॥ यत्र युष्मदस्मदी द्वे अप्युपपदे भवतस्तत्र

---

"शेषे प्रथमः" । १ । ४ । १०८ ॥ उपपद इति निवृत्तं शेष इति

वस्तुत एकवाक्यतापक्षेऽपि फलतो नियमत्वमेवैतैर्विनापि सिद्धेः॥ शुद्धविध्यर्थमिति पूर्वपक्षोऽन्यथापि सिद्धेरितरनिवृत्त्यर्थमिति सिद्धान्त इति तत्त्वम्॥

## समुदायस्येति। (कै)

विधेये शाब्दं प्राधान्यमुद्देश्ये तदुद्देश्यतालक्षणमार्थं प्राधान्यमिति सन्देहे बीजं वक्तुं युक्तम॥ सामान्यनियमेऽप्याह

## तृजादीति॥ (कै)

---

वचनं नियमार्थम्। वा नियमार्थोऽयमारम्भः। अथैतस्मिन्नियमार्थे विज्ञायमाने किं नयमुपपदनियमः युष्मदि मध्यम एव अस्मद्युत्तम एव। आहोस्वित्पुरुषनियमः युष्मद्येव मध्यमः अस्मद्येवोत्तम इति। किं चातः।

---

विहितेषु लादेशेषु नियमार्थमिदमित्ति प्रश्नः। तत्रैकवाक्यतापक्षे इतरेतराश्रयपरिहाराय भाविनी संज्ञाऽऽश्रयितव्येति प्रतिपत्तिलाघवार्थं वाक्यभेदेन नियमपक्षे दर्शयितुमाह। युष्मदस्मदिति। किमयमिति।

---

त्वं पचसि दृश्यसे च। समानाधिकरणे किम्। त्वां पश्यति। त्वया दृश्यते।

---

स्थानिन्यप्युत्तमः स्यात्। अहं पश्यामि दृश्ये वा। युष्मदस्मद्भ्यां सामानाधिकरण्ये तु परत्वादुत्तम एव। अहं च त्वं च वृत्रहन्त्सयुज्यावस निभ्य आ॥

---

विहितानां तिबादीनां भिन्नेनानेन वाक्येन नियम इति संशये नियम इत्याह। 'लस्येत्यधिकृत्येति'। विशिष्टविधाने त्वितरेतराश्रयं स्यात् सतां तिबादीनां प्रथमादिसंज्ञा संज्ञायां च तिबादयो भाव्यन्त इति, स पुन-

---

र्यदि कर्तृशक्ती स्वाधारनियते विवक्ष्येते तदा लकारोपि भेदेनोत्पद्यते

---

विषयसप्तमी न पुनः परत इति तदाह। 'शेष इति'। 'मध्यमोत्तमविषया

## सङ्केतचिह्नम्।

| | |
|---|---|
| अ। पा। आ। ... ... | अध्यायः। पादः। आह्निकम्। |
| पा ... ... ... ... | पाणिनिसूत्रम्। |
| भा ... ... ... ... | महाभाष्यम्। |
| वा ... ... ... ... | वार्त्तिकम्। |
| कै ... ... ... ... | कैय्यटः। |
| मीमां ... ... ... | मीमांसासूत्रम्। |
| हरिः ... ... ... | भर्तृहरिकारिका। |

# महाभाष्यप्रदीपोद्योतस्य प्रथमाध्यायस्य—
# द्वितीय-तृतीय-चतुर्थ-पादान्तर्गतानां
# पाणिनिसूत्राणां
# वर्णानुक्रमसूची-पत्रकम् ।

---

## अ ।

## ऊ।



## ए।



## क।



## ग।

---

च ।



---

ज ।



---

ण ।



---

त ।

---

# द ।



---

# ध ।



---

# न ।



---

# प ।

---

फ ।



---

ब ।



---

भ ।



---

म ।



---

य ।

## र।



## ल।



## व।



## श।

## ष।



---

## स।



---

## ह।



---

# महाभाष्यप्रदीपोद्योतस्य
# प्रथमाध्यायस्थद्वितीय-तृतीय-चतुर्थपादान्तर्गतानां
# सूत्रवार्त्तिकमहाभाष्यादीनां वर्णानुक्रम-
# सूचीपत्रकम् ।

—०—

## अ ।

---

## आ।

---

## ई ।

---

## ऐ ।

## ख।



## ग।

---

## घ।



---

## ङ।



---

## च।



---

## छ।

---

## ज ।



---

## ट ।



---

## ठ ।



---

## ण ।



---

## त ।

---

## द।

---

## ध ।

---

## न ।

---

## प ।

---

## फ ।



---

## ब ।

---

## भ ।

## म।

---

## य।

## र ।



## ल ।

---

## व।

---

## ष।

---

## ह।

**सिद्धे प्रथमे इति । (कै)**

तिबादिसूत्रेण पक्षे सिद्धे इति भावः ॥

**प्रथम एव भवतीति । (कै)**

नियमान्तरस्यासम्भवादित्यर्थः ॥

**पाक्षिक्यां प्राप्ताविति । (कै)**

नन्वेवमेतन्नियमापेक्षया पुरुषनियमस्य परिसङ्ख्यात्वेन गुरुतयोप-

---

यदि पुरुषनियमः शेषग्रहणं कर्तव्यं शेषे प्रथम इति । किं कारणम् ।
मध्यमोत्तमौ नियतौ युष्मदस्मदी अनियते तत्र प्रथमोऽपि प्राप्नोति ।
तत्र शेषग्रहणं कर्तव्यं प्रथमनियमार्थम् । शेष एव प्रथमो भवति
नान्यत्रेति । अथाप्युपपदनियम एवमपि शेषग्रहणं कर्तव्यं शेषे प्रथम

---

ननु प्रत्ययस्य प्राधान्यात्तन्नियम एव युक्तः । नैष दोषः । समुदायस्य
संचिकीर्षितत्वात् प्राधान्यं तदङ्गत्वात्तु प्रत्ययोपपदयोर्द्वयोरप्यप्राधान्य-
मित्युभयोरपि नियम आशङ्क्यते । युष्मदि मध्यम एवेति । तुल्यजातीय-
व्यावृत्तेर्नियमफलत्वादुत्तमप्रथमौ निवार्येते न कृजादयः । कृजादिविधि-

---

इह युष्मदि मध्यमोऽस्मद्युत्तम इत्येवास्तु युष्मद्यस्मदि त्रयो लकार इत्यर्थे
सर्वसामञ्जस्यात् । तथा तु न कृतमित्येव । अत्वं त्वं भवति त्वद्भवतीत्यत्र तु न ।

---

नियम उपपदनियमो वा स्यात् युष्मदि मध्यम एव अस्मद्युत्तम एव शेषे
प्रथम एवेति, पुरुषनियमो वा युष्मद्येव मध्यमोऽस्मद्येवोत्तमः शेष एव
प्रथम इति, तत्राद्ये पक्षे कुर्वंस्त्वं कुर्वाणस्त्वमिति युष्मदि शतृशानचौ च न
स्यातां कृजादयश्च न स्युः कर्ता त्वं कारकस्त्वमिति । नैष दोषः । एतावान्

---

त्वं चाहं च पचथ पचामि चेति, सहविवक्षायां तु द्वयोरपि प्रत्ययोरेको

---

एव उच्यत इति' । अन्यो विषय इत्यर्थः । यत्र युष्मदस्मदी समानाधिकरणे न

( युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः। अस्मद्युत्तमः। शेषे प्रथमः। १। ४। १०५, ७, ८। ) ( अ. १। पा. ४। आ. ४ )

पदनियम एवोचित इति चेन्न। अनुवादत्वस्यैवकारार्थगर्भत्वस्य प्राप्तबाधकत्वनस्य चोभयत्राप्यविशिष्टत्वेन तयोः समत्वमेवेत्याशयात्॥

नन्वत्र युष्मदस्मदोः सत्त्वात्कथं शेषत्वमत आह

यत्र केवले इति। (कै)

असहाये इत्यर्थः॥ सिद्धं तित्युक्तिर्न सिद्धान्तिनो वचनारम्भस्याचापि सत्त्वादत आह

---

इति। युष्मदस्मदी नियते मध्यमोत्तमौ अनियतौ तौ शेषेऽपि प्राप्नुतः। तत्र शेषग्रहणं कर्तव्यम्। शेषनियमार्थम्। शेषे प्रथम एव भवति नान्य इति। उपपदनियमे शेषग्रहणं शक्यमकर्तुम्। कथम्। युष्मदस्मदी नियते मध्यमोत्तमावनियतौ तौ शेषेऽपि प्राप्नुतः। ततो वक्ष्यामि प्रथमो

---

सामर्थ्याद्वा नास्ति तेषां निवारणम् यत्र प्रथमस्येति। युष्मदि मध्यम एव अस्मदि उत्तम एवेति युष्मदस्मदोर्नियतत्वात् तयोः पुरुषान्तरं न भवति मध्यमोत्तमयोस्त्वनियतत्वात् शेषेऽपि तत्प्रसङ्गे प्रथम इति सूत्रमारभ्यमाणं सिद्धे प्रथमे मध्यमोत्तमयोर्निवारणाय नियमार्थं संपद्यते

---

मध्यमविकृतेरकर्तृत्वात्। प्रकृतिरेव हि विकाररूपापत्तौ कर्त्री। तथा च मन्त्रः। यदग्ने स्यामहं त्वं त्वं वाधास्या अहमिति। अहं त्वं स्याम्। त्वं वा

---

विषयो युष्मदस्मदुपपदं शेषस्य सर्वस्यासौ पुरुषेषु नियतः, उच्यन्ते च त्वमादयस्ते वचनाद्भविष्यन्ति, तुल्यजातीयस्य च नियमेन व्यावृत्तिः, युष्मदि मध्यम एव न प्रथमोत्तमौ अस्मद्युत्तम एव नं प्रथममध्यमौ शेषे प्रथम एव न मध्यमोत्तमाविति, एवं तर्हि तिबादिसूत्रे विधीयमानत्वात् प्राधान्यात्तेषा-

---

मकार उत्पद्यते तत्र युष्मदि मध्यमोऽस्मद्युत्तमो विप्रतिषेधेन, त्वं चाहं

---

चाहं च शेष इत्यनेन युष्मदस्मदोरभावः शेषो न पुनरन्यसद्भाव इति दर्शयति

स एवासाविति॥ (कै)

पूर्वस्य वचनस्य गुरुत्वात्स एव लाघवाश्रयेण सिद्धं त्वित्याहेत्यर्थः॥ ननु युष्मदस्मदोर्नित्युक्तेऽपि यत्र केवले ते तत्रैव निषेधः स्यादत आह

यत्र शेषे इति॥ (कै)

शेषग्रहणं तत्रानुवर्त्तत इति भावः॥

---

भवतीति। तन्नियमार्थं भविष्यति। यत्र प्रथमस्यान्यस्य प्राप्नोति तत्र प्रथम एव भवतीति॥ तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वात्। वा। तत्र युष्मदस्मदन्येषु प्रथमस्य प्रतिषेधो वक्तव्यः। त्वं च देवदत्तश्च पचथः। अहं च देवदत्तश्च पचावः। किं कारणम्। शेषत्वात्। शेषे

---

प्रथम एव भवति न मध्यमोत्तमाविति। यथा समे देशे यजेतेति पाक्षिक्यां प्राप्तौ नियमः। तत्रेति। भा। उभयथा नियमे इत्यर्थः। शेषत्वादिति। भा। यत्र केवले युष्मदस्मदी उपपदे स एवाशेषस्तत्र माभूत् प्रथमः। यत्र त्वन्यसहिते तेत्तः तत्र समुदायस्य युष्मदस्मद्-

---

र्थं स्या इति प्रकृत्याश्रय एवेह पुरुषः। स्यादेतत्। भवान् करोतीत्यत्रापि स्थानिन्यपीति मध्यमः स्यात्। अत्राहुः। अलिङ्गः सम्बोधनैकविषयस्य

---

मेव नियमो युक्तः शेषग्रहणाच्चोपपदनियमे हि युष्मदस्मदी नियते पुरुषा अनियताः शेषस्यानियतः तत्र प्रथम इत्येतावदप्युच्यमानं नियमार्थं विज्ञायते तत्र च नियमान्तरस्यासंभवात् प्रथम एवेति नियमः, यत्र च प्रथमाप्रथमप्रसक्तस्तत्रैवं विधो नियमः कर्त्तव्यः शेष एव प्र तथा प्रसक्त इति तत्रैव

---

च पचावः, अहं च त्वं च वृत्रहन् संयुज्यावैति। यदापि त्यदादीनां यद्यत्पर

---

किं सिद्धं भवति त्वं च देवदत्तश्च पचथः, अहं च देवदत्तश्च पचावः, त्वं चाहं

(युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि (अ. १। पा. ४। आ. ४)
मध्यमः। अस्मद्युत्तमः। शेषे प्रथमः। १।४।१०५, ७, ८।)

चोदक इति। (कै)

तृतीय इत्यर्थः॥

आरोप्यत इति। (कै)

तं विना चास्मच्छब्दात्तद्बोधसम्भव इति भावः॥

तदा पृथगिति। (कै)

संबोध्यत्वेनाबोधादित्यर्थः॥

---

प्रथम इति प्रथमः प्राप्नोति॥ सिद्धं तु युष्मदस्मदोः प्रतिषेधात्। वा।
सिद्धमेतत्। कथम्। युष्मदस्मदोः प्रतिषेधात्। शेषे प्रथमः युष्मदस्मदो-
र्नेति वक्तव्यम्॥ युष्मदि मध्यमादस्मद्युत्तमो विप्रतिषेधेन। वा। युष्मदि
मध्यमादस्मद्युत्तम इत्येतद्भवति विप्रतिषेधेन। युष्मदि मध्यम इत्यस्या-

---

ग्रहणेनाग्रहणाच्छेषत्वमेवेति प्रथमप्रतिषेधो वक्तव्यः। स एवाह। सिद्धं
त्विति। भा। यत्र शेषे युष्मदस्मदी तत्र शेषे प्रथमो नेति वक्तव्य-
मित्यर्थः। चोदक आह। स तर्हीति। भा। आचार्यदेशीय आह।
न वक्तव्य इति। भा। अस्मदः शेष इति। भा। आवां पचाव इति।

---

युष्मदर्थः। सलिङ्गः सम्बोध्यासम्बोध्यसाधारणश्च भवदर्थ इति। न च युष्मदः
सम्बोधनैकविषयत्वे ततः सम्बोधन एव प्रथमा स्यात्। ततश्च आमन्त्रिता-

---

नियमो भविष्यति किं शेषग्रहणेन, पुरुषनियमे तु मध्यमोत्तमौ नियतौ
युष्मदस्मदी वा नियते प्रथमश्च तत्र युष्मदस्मदोरपि प्रथमप्रसङ्गे शेष एव
प्रथम इत्येवं प्रथमनियमः कर्तव्यः, न वान्तरेण शेषग्रहणमेवं नियमः शक्यते

---

मित्यस्मदः शेषस्तदापि, स्थानिन्यपीति मध्यमप्राप्तौ परत्वादुत्तम एव
भवति आवां पचावः॥

---

च देवदत्तश्च पचाम इति। अत्र यद्यपि युष्मदस्मदोरन्यस्य च यः समुदाय

[1]तदा भेदाभावात् पृथगिति (कै)

पाठे तदारोपादेव युष्मदर्थे भेदकधर्माभावाद् भेदकधर्माप्रतीतेर्हेतोः पृथग्युष्मदर्थाभाव इत्यर्थः॥

अच प्रयोगे इति। (कै)

चशब्देनैव साहित्यस्य द्योतनाद्देकशेषो नेत्यर्थः॥ भाष्ये

---

१ उपलब्धकैयटे एवं पाठोऽस्ति॥

---

वकाशः। त्वं पचसि। अस्मद्युत्तम इत्यस्यावकाशः। अहं पचामि इहोभयं प्राप्नोति। त्वं चाहं च पचावः। अस्मद्युत्तम इत्येतद्भवति विप्रतिषेधेन स तर्हि विप्रतिषेधो वक्तव्यः। न वक्तव्यः। त्यदादीनां यद्यत्परं तच्छिष्यत इत्येवमस्मदः शेषो भविष्यति। तत्रास्मद्युत्तम इत्येव सिद्धम्। अनेकशेषभावार्थं तु। वा। अनेकशेषभावार्थं तु स विप्रतिषेधो वक्तव्यः

---

तत्रास्मद्युत्तम इति। भा॥ ननु शिष्यमाणस्यास्मदो द्व्यर्थत्वादप्रयुज्यमानेऽपि युष्मदि तदर्थगतौ मध्यमविधानात् तस्याप्यत्र प्रसङ्ग इति विप्रतिषेध एवाश्रयितव्यः। अत्राहुः। युष्मदर्थे साहचर्यादस्मद्रूपत्वमारोप्यते तदा भेदाभावात् पृथग्युष्मदर्थाभावादस्मदुपपदनिमित्तः सिद्ध उत्तम एवेत्यदोषः। चोदकस्त्वाह। अनेकशेषभावार्थं त्विति। भा। त्वं

---

द्युदात्तत्वं पदात्परत्वेन निघातश्च स्यादिति वाच्यम्। सम्बोधनस्य प्रातिप-

---

कार्तुमिति कर्तव्यमेव शेषग्रहणम्, अतः शेषग्रहणं सूत्रकारस्यापि पुरुषनियम एवाभिप्रेत इति तमेवाश्रयति। 'तेषामयं पुरुषनियमः क्रियत इति'। तेषामित्युद्भूतावयवभेदस्तिबादिसमुदाय उच्यते, पुरुषापेक्षया ऽवयवषष्ठी तेषां तिबादीनामवयवो यो मध्यमपुरुषस्तस्योपपदनियमः क्रियत इत्यर्थः,

---

स युष्मदस्मद्भ्यामन्यत्रापि युष्मदस्मदी वाचकौ इति तत्सद्भावनिमित्तो मध्य-

( युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि (अ. १ । पा. ४ । आ. ४ )
मध्यमः । अस्मद्युत्तमः । शेषे प्रथमः । १ । ४ । १०५, ७, ८ । )

**यदा न सह विवक्षा** (भा)

इत्यस्य च विना केवलपदैर्यदा न साहित्यबोध इत्यर्थः ॥

**तदधिकरणयोरिति** (कै)

बहुव्रीहिः ॥ भाष्ये

**तदधिकरणानामिति** (भा)

बहुवचनं त्वनेकयुष्मच्छब्दप्रयोगाभिप्रायेण ॥

---

यदा चैकशेषो न। कदा चैकशेषो न। सहविवक्षायामेकशेषः। यदा न सहविवक्षा तदैकशेषो नास्ति॥ न वा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेधः । वा । न वार्थो विप्रतिषेधेन। किं कारणम् । युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामपि युष्मदस्मद-

---

चाहं च पचाव इत्यत्र प्रयोगे। आचार्यदेशीय आह। नवेति। भा। सहविवक्षाया अभावे यथा युष्मदस्मदोरेकशेषाभावः। एवं तदधिकरणयोरपि क्रिययोर्भेदस्य विवक्षितत्वादाख्यातयोरप्येकशेषाभावे पचसि पचामि चेति पृथगेव प्रयोगान्नार्थो विप्रतिषेधेनेत्यर्थः। एतदेव समर्थ-

---

दिकार्थ एवान्तर्भावात्। सम्बोधने चेति सूत्रं हि सम्बोधनाधिक्यार्थमिति वक्ष्यते। यत्तु केचिच्छङ्कापत्तिं कुर्वाणाः पठन्ति।

---

सापेक्षस्यापि पुरुषशब्दस्य गमकत्वात् समासः, अथवा तेषामिति कर्मणि षष्ठी पुरुषद्वारको नियमः पुरुषनियमः, पुरुषद्वारेण ते नियम्यन्त इत्यर्थः। उपोच्चरितं पदमुपपदम्, शाकपार्थिवादित्वादुत्तरपदलोपी समासः, उपशब्दः सामीप्ये ततश्च व्यवहिते न भवितव्यमिति शङ्कामपनयति। 'श्व-

---

मोत्तमौ भवतः। न तु तदभावनिमित्तः प्रथमः, अन्यसद्भावे तु निमित्ते स्यादेव प्रथमः। तदाह तत्र युष्मदस्मत्सु प्रथमप्रतिषेधः। शेषत्वादिति॥

'तदा भेदाभावात् पृथगिति (कै)

पाठे तदारोपादेव युष्मदर्थे भेदकधर्माभावाद् भेदकधर्माप्रतीतेर्हेतोः पृथग्युष्मदर्थाभाव इत्यर्थः ॥

अत्र प्रयोगे इति । (कै)

चशब्देनैव साहित्यस्य द्योतनाद्वैकशेषो नेत्यर्थः ॥ भाष्ये

---

१ उपलब्धकैयटे एवं पाठोऽस्ति ॥

---

वकाशः । त्वं पचसि । अस्मद्युत्तम इत्यस्यावकाशः । अहं पचामि इहोभयं प्राप्नोति । त्वं चाहं च पचावः । अस्मद्युत्तम इत्येतद्भवति विप्रतिषेधेन स तर्हि विप्रतिषेधो वक्तव्यः । न वक्तव्यः । त्यदादीनां यद्यत्परं तच्छिष्यत इत्येवमस्मदः शेषो भविष्यति । तत्रास्मद्युत्तम इत्येव सिद्धम् । अनेकशेषभावार्थं तु । वा । अनेकशेषभावार्थं तु स विप्रतिषेधो वक्तव्यः

---

तत्रास्मद्युत्तम इति । भा ॥ ननु शिष्यमाणस्यास्मदो द्व्यर्थत्वादप्रयुज्यमानेऽपि युष्मदि तदर्थगतौ मध्यमविधानात् तस्याप्यत्र प्रसक्त इति विप्रतिषेध एवाश्रयितव्यः । अत्राहुः । युष्मदर्थे साहचर्यादस्मद्रूपत्वमारोप्यते तदा भेदाभावात् पृथग्युष्मदर्थाभावादस्मदुपपदनिमित्तः सिद्ध उत्तम एवेत्यदोषः । चोदकस्त्वाह । अनेकशेषभावार्थं त्विति । भा । त्वं

---

युदात्तत्वं पदात्परत्वेन निघातस्य स्यादिति वाच्यम् । सम्बोधनस्य प्रातिप-

---

कर्तुमिति कर्तव्यमेव शेषग्रहणम्, अतः शेषग्रहणं सूत्रकारस्यापि पुरुषनियम एवाभिप्रेत इति तमेवाश्रयति । 'तेषामयं पुरुषनियमः क्रियत इति' । तेषामित्युद्भूतावयवभेदत्विबादिसमुदाय उच्यते, पुरुषापेक्षया अवयवभूतो तेषां तिबादीनामवयवो यो मध्यमपुरुषप्रत्ययस्योपपदनियमः क्रियत इत्यर्थः,

---

स युष्मदस्मद्ग्रामण्यत्रापि युष्मदस्मदी वाच्ये इति तत्सद्भावनिमित्ता मध्य-

( युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि ( अ. १ । पा. ४ । आ. ४ )
मध्यमः । अस्मद्युत्तमः । शेषे प्रथमः । १ । ४ । १०५, ७, ८ । )

प्रथमित्यादि । (कै)

इदं[1] "सरूप" सूत्रे वार्त्तिकम् ॥ वाचनिकैकशेषे दूषणमाह

एवं ह्रीति । (कै)

विप्रतिषेधस्थापनाय ह्येतद्भाष्यप्रवृत्तिरिति भावः ॥ अथ भाष्याशयमाह

तस्मादिति ॥ (कै)

---

१ अ १ । पा २ । सू ६४ ॥

---

शेषत्वादिति । तत्रापि ह्येवं भवितव्यम् । त्वं च देवदत्तश्च पचसि च पचति च । अहं च देवदत्तश्च पचामि च पचति चेति ॥ यत्तावदुच्यते न वा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेधं इति । दृश्यते हि युष्मदस्मदोश्चानेकशेषस्तदधिकरणानां चैकशेषः । तद्यथा । त्वं चाहं च वृत्रहन्नुभौ संप्रयुज्यावहा इति । यदप्युच्यते

---

शेषो सरूपत्वादिति वाचनिक एकशेषः । एवं ह्येकशेषे आश्रीयमाणे-नार्थो विप्रतिषेधेन । तस्मात्कारकभेदेऽपि क्रियाया अभेदादेक एव धातुः प्रयुज्यते तस्माच्च परो लकार एवानेकार्थाभिधायी विरोधाभावात् तत्र पुरुषद्वयप्रसक्तेः युक्तो विप्रतिषेधः । अस्ता इति । भा । प्रकटाद्यवि-

---

युष्मदर्थस्य सिद्धत्वान्नियता चाद्युदात्तता ।
युष्मदः प्रथमान्तस्य परत्वेन पदादसाविति ॥

---

ऽप्रयुज्यमानेऽपि भवति तथा पूर्वप्रयोगे ऽपि परभूतस्याप्रयोगात् स्थानि-नीति भविष्यति । नैतदस्ति । सामर्थ्यनिर्देशात् प्रयोगमपश्चि परभूत एव स्यात् । 'समानाभिधेय इति' । अधिकरणशब्दोऽभिधेयवचन इति दर्शयति । पुनः समानाभिधेये वाक्यैश्च निकम्ममानेन वा पुरुषेण, त्रिविधं चाभिधेयं

(अ. १ । पा. ४ । आ. ४ ) (युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । अस्मद्युत्तमः । शेषे प्रथमः । १ । ४ १०५, ७, ८ । )

## लकार एवानेकार्थाभिधायीति । (कै)

क्रियायामनेकार्थगतारोपितसङ्ख्याभिधायीत्यर्थः ॥ नन्वत्र इति भज्यन्तामिति च बहुवचनं कथमत आह

## शकटाश्चेति ॥ (कै)

तत्रैकैकाद्यर्थैकैकक्रियायामन्वयेन सहविवक्षा कथमित्याशङ्कां तामुपपादयति

---

क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्रानेकशेषभावस्येति । क्रियापृथक्त्वे सत्यपि द्रव्यैकशेषो भवतीति दृश्यते तद्यथा । अश्वाः भज्यन्तां भज्यतां दीव्यन्तामिति । एवं च कृत्वा सोऽपि दोषो भवति यदुक्तं तत्र युष्मदस्मदन्येषु प्रतिषेधः शेषत्वादिति । नैष दोषः । परिहृतमेतत् । सिद्धं तु युष्मदस्मदोः प्रतिषेधादिति । स तर्हि प्रतिषेधो वक्तव्यः ।

---

भीतकाद्यदेवगाद्यायां सहविवक्षायामेकशेषस्तत्रावयवक्रियायाः समुदाये आरोपाद्भज्यन्तामित्यादि बहुवचनं सामानाधिकरण्यं चोपपद्यते । यथा द्रव्यैकशेषेऽपि क्रियापृथक्त्वमेवं द्रव्यपृथक्त्वमेव द्रव्यपृथक्त्वेऽपि क्रियैकशेष इत्यर्थः । नहि शेषश्चान्यस्येति । भा । उपयुक्तादन्यः शेषः । युष्मदस्मदोरुपयुक्तयोः सद्भावान्नास्ति शेषत्वम् । इतर एतत्सामर्थ्यमविदित्वाऽऽह ।

---

तन्न । उक्तन्यायविरोधात् । लक्ष्यविरोधाच्च । दृश्यते हि पादादावप्यन्तोदात्तत्वं पदात्परत्वेऽप्यनिघातस्य । तद्यथा, युवं ह गर्भञ्जगतीषु धत्थः । यूयं यात स्वस्तिभिः । ह ये देवा यूयमिदापयः स्थेति ॥

---

लकाराणां भावः कर्म कर्ता च, तत्र द्रव्यवाचिनोर्युष्मदस्मदोर्भाववाचिना सार्द्धेन सामानाधिकरण्यासंभवात् कर्तृकर्मणोरेव ग्रहणमित्याह । 'तुल्यकारक इति' । तुल्यमेकं कारकं यस्य तत्तयोक्तं, स्थानिन्यपीति स्थानग्रहणं

तथेति । (भा)

एकैकाचस्यैवैकैकक्रिया विवक्षितेत्यभिमानः । वस्तुतः सह-विवक्षाभावेऽपि लोकन्यायसिद्धं विद्यमानेतिवत् तत्त्वं बहुवचनान्तानामत्रापीति भाष्याशयः । एकशेषशब्देन च तत्त्वमेव लक्ष्यत इत्याहुः ॥ भाष्ये

सोऽपि दोष इति । (भा)

विप्रतिषेधाङ्गीकाररूपो यो दोषस्तेनोक्तस्तदङ्गीकारे तदुक्तो द्वितीयो दोषोऽपि नास्ति इत्यर्थः ॥

---

न वक्तव्यः । शेषे प्रथमो विधीयते । नहि शेषस्थानस्य शेषग्रहणेन ग्रहणं भवेत्प्रथमो न स्यात् । मध्यमोत्तमावपि न प्राप्नुतः । किं कारणम् । युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावुच्येते । न च युष्मदस्मदी अन्यत्र युष्मदस्मद्ग्रहणेन गृह्यते । यदत्र युष्मद् यच्चास्मत्तदाश्रयौ मध्यमोत्तमौ भविष्यतः । यथैव तर्हि यदत्र युष्मद्यच्चास्मत् तदाश्रयौ

---

भवेदिति । भा । इतर आह । यदत्रेति । भा । तत्सन्निधौ शेषत्वाभावा-त्सन्निबन्धनमेव कार्यं भवतीत्यर्थः । इतरः शेषपदार्थमविद्वानाह । यथैवेति । भा । एतद्विचारणीयमभ्युपेत्योपपदार्थं वर्णयितुमाह । एवं तर्हीति । भा । यच्चात्रेति । भा । युष्मदस्मदोः श्रवणात्तदभावे च शेषसद्भावात् । यत्र शेष इति । देवदत्तस्येति । न तदिति । नहि तस्यैव साधनत्वं

---

प्रसङ्गवाची स्थानमस्यास्तीति स्थानी तत्र च प्रयुज्यमानस्याप्रयुज्यमानस्य च प्रसङ्गोऽस्ति उच्यते चेदं स्थानमस्यास्तीति, तत्र सामर्थ्यादवधारणं विज्ञायते प्रसङ्ग एव यस्य न तु प्रयोग इति । यद्वा स्थानिकायप्रसिद्धिरेषा यस्य स्थाने आदेशो विधीयते स स्थानीति इह त्वप्रयुज्यमानता सादृश्यात् युष्मदि

परिहृतमेतदिति । (भा)

शङ्कितेनेति शेषः ॥

उपयुक्तादन्य इति । (कै)

अस्योपयुक्तासमभिव्याहृत इत्यादिः । शेषपदस्य तत्रैवार्थे शक्तिरिति भावः । एतत्सामर्थ्यं शब्दशक्तिम् । तेनावधारणमाश्रितमिति भ्रमस्त्यक्तेति भावः ॥ भाष्ये

यदत्र युष्मदिति (भा)

समुदायस्य युष्मत्त्वाभावेऽपि तदवयवयुष्मदमादाय मध्यम इत्यर्थः ॥

---

मध्यमोत्तमौ भवतः । एवं योऽत्र शेषस्तदाश्रयः *प्रथमो भविष्यति । एवं तर्हि शेष उपपदे प्रथमो विधीयते । उपोच्चारि पदमुपपदम् । यच्चात्रोपोच्चारि न स शेषः यश्च शेषः न तदुपोच्चारि । भवेत् प्रथमो न स्यान्मध्यमोत्तमावपि न प्राप्नुतः । किं कारणम् युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावुच्येते । उपोच्चारि पदमुपपदम् । यच्चात्रोपोच्चारि न ते

---

किं तर्हि युष्मदस्मदर्थयोरपि । मत्वात्र शेषेणैवेति । किं तर्हि युष्मदस्मदर्थेनापि तद्भावाच्च शेषत्वाभाव इत्यर्थः । एवं तर्हीति । यद्यप्यनेकशेषे दोष उपन्यस्तस्तथाप्येकशेषेऽपि दूषणार्थोऽयमुपक्रमः । स्थानिन्यपीति । भा । अप्रयुज्यमाने प्रयुज्यमाने च शेषे । प्रथमविधानात् । दोषान्तरमप्याह । त्वदादीनामिति । एतदपरिहार्यं मन्यमानो लक्ष्येच्छोन्यदप्याह ।

---

प्रयुज्यते, सर्वथा स्थानिन्यपीत्यस्याप्रयुज्यमानेऽपीत्यर्थः, अपिशब्दात्प्रयुज्यमानेऽपि तदाह । 'स्थानिन्यपीत्यादिना' । स्थानिन्यपीति कोऽर्थः प्रयुज्यमानेऽप्रयुज्यमानेऽपीत्यर्थः । उपपदग्रहणप्राप्तस्य चार्थस्यापिशब्दोऽनुवादः । समानाधिकरण इति किं, त्वया गम्यत इत्यत्र मा भूत् । क्वचित्तु इत्तावेवार्थं

---

* "प्रथमः प्राप्नोति" इति पाठोऽस्ति पूनापत्तनस्थभाष्यपुस्तके ॥

एतद्विवरणीयमपीति । (कै)

एतत् शेषपदग्रहणं विपरीतं योग्यमपीत्यर्थः ॥

उपेक्ष्येति । (कै)

स्फुटत्वादिति भावः ॥

उपपदार्थमिति । (कै)

उपपदानि तद्विशेषणान्युपपदसमानाधिकरणपदस्थानि पदानि तदर्थमित्यर्थः ॥ सूत्रावकाशं दर्शयति ।

तदभावे चेति ॥ (कै)

---

युष्मदस्मदी । ये च युष्मदस्मदी न तदुपोचारि । एवं तर्हि शेषेण सामानाधिकरण्ये प्रथमो विधीयते । न चात्र शेषेणैव सामानाधिकरण्यम् भवेत्प्रथमो न स्यान्मध्यमोत्तमावपि तु न प्राप्नुतः । किं कारणम् । युष्मदस्मद्भ्यां सामानाधिकरण्ये मध्यमोत्तमावुच्येते । न चात्र युष्मदस्मद्भ्यामेव सामानाधिकरण्यम् । एवं तर्हि त्यादादीनि सर्वनित्यमि (१ । २ ।

---

युष्मदीति । परमत्वमिति । युष्मदस्मदीति विशिष्टरूपपरिग्रहादस्य च शब्दान्तरत्वात् आचार्यदेशीय आह । तदन्तविधिनेति । युष्मदस्मदोरुपपदस्य विशेषणात्तदन्तविधिः । चोदको दोषमाह । इहापीति । अतित्वमिति । त्वामतिक्रान्त इति समासः । एवं तदन्तविधावतिव्याप्तिमुक्त्वा अव्याप्तिमाह । ये चाप्येते इति । त्वत्कल्प इति । ईषदसमाप्तत्वं

---

प्रत्ययः प्रकृते, इह च अतित्वं पचति अत्यहं पचतीत्यत्रातिक्रान्तप्रधाने समासे युष्मदस्मदोरसामानाधिकरण्यात् प्रथम एव भवति, इह त्वीषदसमाप्तत्वं त्वत्कल्पः पचसि मत्कल्पः पचामीति शब्दान्तरवृत्त्यगुणरहितो युष्मदस्मदर्थ एव त्वत्कल्पमत्कल्पशब्दाभ्यामुच्यत इति मध्यमोत्तमौ भवतः, तस्यावयवपदार्थान्तराभिधाने तु प्रथमः, यथा त्वत्तरः पचसि मत्तरः पचामि ।

न हि तस्यैवेति। (कै)

"न तदि"तिभाष्यस्य न तदेवेत्यर्थ इति भावः॥ अनेन न पारिभाषिकमुपपदं किं तु यौगिकमिति निर्णीतम्॥ नन्वनेकशेषे दोषे प्रसक्ते कथमेकशेषेणान्यथासिद्धिरुक्तेत्यत आह

यद्यपीति। (कै)

एवं चैकशेषे तयोरेवावस्थानाभावात्त्र शेष इति न प्रथम इति भावः॥ एकशेषेऽपि दोषमाह भाष्ये

७२) त्वेवमत्र युष्मदस्मदोः शेषो भविष्यति। तत्र युष्मदि मध्यमः अस्मद्युत्तम इत्येव सिद्धम्। न सिध्यति। स्थानिन्यपीति प्रथमः प्राप्नोति। त्यदादीनां खल्वपि यद्यत्परं तच्छिष्यते इति यदा भवतः शेषस्तदाऽयं प्रथमः प्राप्नोति युष्मदि मध्यमः अस्मद्युत्तम इत्येनोच्यते ताविह न प्राप्नुतः। परमत्वं पचसि परमाहं पचामीति। तदन्तविधिना (१। १। ७२)

त्वत्कल्प इति कालान्तरप्रसिद्धमुच्चारितो युष्मदर्थ एव त्वत्कल्पशब्देनोच्यते। न तु तत्सदृशं पदार्थान्तरम्। तदभिधाने युष्मदर्थस्य साधनत्वाभावाद् मध्यमाभावात्। एवं मत्कल्प इति बोद्धव्यम्। आचार्यदेशीय आह। एवं तर्हीति। सौत्रत्वान्निर्देशस्य मतुब्लोपोऽभिधास्यते इति भावः। चोदक आह। इहापीति। आचार्य आह। एवं तर्हीति।

परमत्वं पचसि परमाहं पचामीति, कालान्तरादृष्टगुणातिशयविशिष्टो युष्मदस्मदर्थ एवोच्यते इति भवत्येव। एवं च युष्मदर्थे मध्यमः,अस्मदर्थ उत्तम इतीयता सिद्धं युष्मदस्मदर्थं चेत्सकार उत्पन्नस्तर्ह्येव मध्यमोत्तमावित्यर्थः, तथा तु न कृतमित्येव, इह चात्वं त्वं संपद्यत इति त्वद्भवतीति भवति प्रकृतेरेव विकाररूपेण सम्पत्तौ कर्तृत्वादेतच्चाम्भवत इत्यत्रोपपादयिष्यामः, तथा

न सिध्यति स्थानिन्यपीति ॥ (भा)

तद् व्याचष्टे

अप्रयुज्यमाने इति । (कै)

. अनेन कैयटेन स्थानिपदार्थो निर्णीतः ॥ अतिग्रथितस्त्वमिति विग्रहे इष्टापत्तिरत आह

त्वामतीति । (कै)

यंच त्वान्तस्येत्यन्तपदं वृथेति केचित् ॥

शेषत्वाभाव इति । (कै)

---

भविष्यति । इहापि तर्हि तदन्तविधिना प्राप्नुतः । अतित्वं पचति अत्यहं पचतीति । ये चाप्येते सामानाधिकरण्यवृत्तयस्तद्धितास्तत्र मध्यमोत्तमौ न प्राप्नुतः त्वत्तरः पचसि मत्तरः पचामीति । त्वद्रूपः पचसि मद्रूपः पचामि त्वत्कल्पः पचसि मत्कल्पः पचामीति । एवं तर्हि युष्मदस्यस्मदितीत्येवं

---

सामानाधिकरण्ये इति वचनाद्युष्मदस्मदर्थेन यत्र त्वान्तस्य सामानाधिकरण्यं तत्र मध्यमोत्तमाभ्यां भवितव्यमिति नास्ति कश्चिद्दोषः । एवं च त्वेति । युष्मदस्मदर्थस्य साधनत्वाच्छेषत्वाभावः । अथवेति । प्रथम इत्येतावत्सूत्रं क्रियते अनाश्रितविषयविशेषः प्रथमो विधीयमान उत्सर्गो भवति । तस्य विषयविशेषे विधीयमानौ मध्यमोत्तमावपवादौ भवतः ।

---

च मन्त्रे, 'यदग्ने स्यामहं त्वं त्वं वा स्या अहं मि'ति, अहं त्वं स्यां त्वं वाहं स्या इति प्रसक्त्वात्प्रयः पुरुषो दृश्यते, इह भवान्पचत्विति युष्मदर्थप्रतीतेः स्थानिन्यपीति मध्यमः प्राप्नोति, न वा युष्मदर्थत्वात्, अलिङ्गः सम्बोधनविषयश्च युष्मदर्थः भवदर्थस्तु लिङ्गवान् न च सम्बोधनैकविषयः यथैव हि

उपयुक्तासमभिव्याहृत उपयुक्तादन्यः शेषपदेनोच्यत इति भावः ॥

एवं तर्हि युष्मदि साधने (भा)

इत्यनेन समानाधिकरण इत्यस्यार्थो निर्णीतः ॥

साधने (भा)

इत्यस्य लकारवाच्यसाधने क्रियया समानाधिकरणे इत्यर्थः ॥

एतदर्थमेवान्तपदमित्यन्ये ।

अनाश्रितेति । (कै)

---

भविष्यति । इहापि तर्हि प्राप्नुतः अतित्वं पचति अत्यहं पचतीति ॥ एवं तर्हि युष्मदि साधने अस्मदि साधन इत्येवं भविष्यति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं तत्र युष्मदस्मदन्येषु प्रतिषेधः शेषत्वादिति । अथ वा प्रथम उत्सर्गः करिष्यते तस्य युष्मदस्मदोरुपपदयोर्मध्यमोत्त-मावपवादौ भविष्यतः । तत्र युष्मदन्यस्यास्मदन्यस्यास्तीति कृत्वा मध्यमो-

---

त्तमापवादनिमित्तसद्भावाद्यामिश्रेऽपि विषये मध्यमोत्तमावेव भविष्यतः न तु प्रथम इत्यर्थः । अतं त्वमिति । प्रकृतिविकृत्योरभेदविवक्षायां च्विप्र-त्ययः । तत्र किं प्रकृत्याश्रयेण प्रथमेन भाव्यमथ विकृत्याश्रयेण मध्यमेनेति प्रश्नः । अत्रोत्तरम् । त्वद्भवतीति । प्रकृतेरेव विकाररूपेण संपत्तौ कर्तृत्व-

---

मात्मवकाधीष्वेत्यभिमुखीभावो गम्यते एवं त्वमधीष्वेत्यपि, तथा च युष्मदः सर्वत्रैव संबोधने प्रथमा आमन्त्रिताद्युदात्तत्वं च भवति पदात्परत्वे च निघात इति केचिदाहुः । उक्तं च

सम्बोधनार्थः सर्वत्र मध्यमे कैश्चिदिष्यते ।
तथा सम्बोधने सर्वां प्रथमां युष्मदो विदुः ॥

तिङ्विषयिति सिद्धे इदं सूत्रं तदनुवादो विषयविशेषे ऽपवाद-
बोधनायेति भावः। अत एव भावे प्रथमपुरुषसिद्धिरिति बोध्यम्॥

## विकाररूपेणेति। (कै)

आरोपितविकाररूपेणेत्यर्थः॥

## न सन्निवेश आश्रयणीयः (कै)

इत्यस्य किं तु भवतु युष्मदस्मदितिशेषः॥

---

त्तमौ भविष्यतः। अथेह कथं भवितव्यम्। अत्वं त्वं संपद्यते त्वद्भवति-
मद्भवतीति॥ आहोस्वित्त्वद्भवसि मद्भवामीति। त्वद्भवति मद्भवतीत्येवं
भवितव्यम्। मध्यमोत्तमौ कस्मान्न भवतः। गौणमुख्ययोर्मुख्ये संप्रत्ययो
भवति। तद्यथा। गौरनुबन्ध्यो ऽजो ऽग्नीषोमीय इति। न बाहीको

---

मिति भावः। मध्यमोत्तमौ कस्मादिति। यथा प्रकृतिधर्मसमाचारा-
युष्मदस्मद्व्यपदेशं लभते तथा मध्यमोत्तमावपि प्राप्नुतः। गौणमुख्ययो-
रिति। तद्धर्मसमाचारादारोपितमत्र युष्मदर्थरूपत्वमिति भावः। शिष्टं
भाष्यम् "ओदि"त्यत्र व्याख्यातं तत एवावधार्यताम्। यदुक्तं भवतः शेष इति
तत्रोत्तरमाहुः। युष्मदस्मद्भवतु इत्येवं न संनिवेश आश्रयणीयः। किं तु

---

युष्मदर्थस्य सिद्धत्वान्नियतत्वाद्युदात्तता।
युष्मदः प्रथमान्तस्य परस्येन्न पदादसौ॥

इति। सत्यं, सम्बोधनैकविषयो युष्मच्छब्दः प्रथमा तु शुद्धैव, अभिमु-
खीभावस्यापि प्रातिपदिकार्थ एवान्तर्भावात्, यत्र त्वनन्तर्भावः तत्र तदभि-
द्योतनाय सम्बोधने चेति प्रथमा विधीयते स्वरोऽप्यन्यथा युवं हि स्थः
स्वर्पती, यूयं पात स्वस्तिभिः, इन्द्रे देवा, यूयमिदापयस्येति पादादावप्य-

वचनाद्वेति । (कै)

अभिमुखचेतनविषयो युष्मदर्थो भवदर्थस्तु न तथेति न युष्मदर्थसमानार्थत्वमिति बोध्यम् । यदा भवतः शेषस्तदा भवत्येव प्रथम इत्याशयेन भाष्ये तत्रोत्तरानुक्तिरित्यन्ये ॥

---

नुबध्यते । कथं तर्हि वाहीके वृद्धात्वे भवतः (७ । २ । ९० ॥ ६ । २ । ९२) । गौर्वाहीकस्तिष्ठति गामानयेति । अर्थाश्रय एतदेवं भवति । यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्धात्वे ॥

---

भवतु युष्मदस्मदिति । ततश्चास्मद एव शेषो न तु भवतः । पूर्वशेषवदर्थवाचेति वचनाद्वा ॥

---

न्तोदात्तत्वं पदात्परत्वेऽप्यनिघातः । तदेवं भवच्छब्दस्यासम्बोधनविषयत्वाभिमुखत्वाभावायुष्मदर्थत्वाद् मध्यमो न भवतीति स्थितम् ॥

# परः संनिकर्षः संहिता । १ । ४ । १०९ ॥

परो वर्णान्तराव्यवहित इत्यर्थे मध्यमादिवृत्तावपि सेत्स्यतीत्यशिमभाष्यामङ्गतिरत आह

पूर्वेति । (कै)

वर्णान्तरव्यवायो ऽव्यवहितपरत्वाभावादेवातिप्रसङ्गविरहा "दिकोयणची" (६।१।७७) त्यादौ संहिताधिकारवैयर्थ्यापत्तेः स नार्थ इति भावः ॥ ननु नञ्तत्पुरुषे उत्तरपदार्थप्रधानतया नपुंसकनिर्देशो ऽयुक्तो ऽत आह

---

परः सन्निकर्षः संहिता ॥ १ । ४ । १०९ ॥ परः सन्निकर्षः संहिता चेदद्रुतायामसंहितम् । वा । परः सन्निकर्षः संहिता चेद्द्रुतायां वृत्तौ संहितासंज्ञा न प्राप्नोति । द्रुतायामेव हि परः सन्निकर्षो वर्णानां

---

परः संनिकर्षः संहिता । १ । ४ । १०९ । पूर्ववर्णोच्चारणानन्तरमेव यद्वर्णान्तरमुच्चार्यते न तु तच्छून्यान्तरालसद्भावः स पर उत्कृष्टः सन्निकर्षः प्रत्यासत्तिलक्षणः संहितासंज्ञ इति सूत्रार्थः । एवं स्थिते चोद्यते । पर इति । द्रुतायामेव वृत्तावनन्तरोक्तः परः

---

परः सन्निकर्षः संहिता । १ । ४ । १०९ ॥ अतिशयितः सन्निधिर्वर्णानां यः स संहितासंज्ञः स्यात् । संज्ञाप्रदेशाः संहितायामित्यादयः ॥

---

"परः सन्निकर्षः संहिता" । १ । ४ । १०९ ॥ 'परशब्दो ऽतिशये वर्तत इति' । यथा परं सुखं परं, दुःखमिति, दिगादिषु वर्तमानस्य ग्रहणं

## अव्ययीभावे (कै)

इत्यादि । पूर्वपदार्थप्राधान्येऽव्ययीभाव उत्तरपदार्थप्राधान्ये तत्पुरुष इति व्यवस्थितेरिति भावः । वस्तुतः संहिता शब्दोऽपि परसंनिकर्षवाची क्लीबस्तेनायं तत्पुरुष एव । असंहितमारोपितं सन्धानं परसन्निकर्षस्तेन तदभावात्संहितासंज्ञा न प्राप्नोतीत्यर्थः । नञाऽव्ययीभावस्तु नास्त्येवेति नञ्सूत्रे वक्ष्यते ॥

## बहुव्रीहिरिति । (कै)

पौर्वापर्यं चान्यपदार्थ इत्यभिमानः । अत्राद्यमेव युक्तं संहितासंज्ञा न प्राप्नोतीति भाष्यव्याख्यानाद् बहुव्रीहेस्तत्पुरुषस्येवाव्ययीभावस्यापि लघुत्वाच्च योग्यान्यपदार्थाभावाच्च । आद्यस्योत्तरपदपरत्वाभावान्मध्यमस्य पूर्वपदत्वाभावात्सामानाधिकरण्याभावाच्च पुंवत्त्वाप्राप्तेराह

---

नाद्रुतायाम् ॥ तुल्यः सन्निकर्षः । वा । तुल्यः सन्निकर्षो वर्णानां द्रुतमध्यमविलम्बितासु वृत्तिषु ॥ किं कृतस्तर्हि विशेषः । वर्णकालभूयस्त्वं तु । वा । वर्णानां तु कालभूयस्त्वम् । तद्यथा । हस्तिमशकयोस्तुल्यः सन्निकर्षः प्राणिभू-

---

सन्निकर्षः संभवति न तु मध्यमायां विलम्बितायां चेत्यर्थः । असंहितमिति । संहितासंज्ञाया अभाव इत्यर्थाभावेऽव्ययीभावः ( २ । १ । ६ ) । अविद्यमाना वा संहिता अस्मिन्निति बहुव्रीहिः । संहिताद्रुतमध्यमविलम्बितास्विति । द्रुता च मध्यमा च विलम्बिता चेति द्वन्द्वे कृते भाष्यकारवचनप्रामाण्याद्ध्रस्वः । सर्वासु वृत्तिषु तुल्यः

---

न भवति, सन्निकर्षस्य दिग्देशकालायोगात् वर्णान्तरापेक्षमन्यत्वम् अव्यभिचारिसन्निकर्षः प्रत्यासत्तिरिति न तु संश्लेषस्तस्य वर्णेष्वसंभवात् वर्णि

भाष्यकारेति । (कै)

"आपोः संज्ञाछन्दसोर्बहुलमि" (६।३।६३) त्यनेनेति भावः॥

ननु सर्ववृत्तिषु वर्णानामेकरूपत्वात्कथं वर्णकालभूयस्त्वमत आह

वर्णोपलब्धीति ॥ (कै)

वैकृत (कै)

आलस्यादिजन्यो ध्वनिः पुनःपुनरुपलब्धिधारा न तु विच्छिद्य विच्छिद्य ग्रहणमिति । एतच्च "तपर" (१।१।७०) सूत्रे विस्तरेण निरूपितम् ॥

ध्वनिभेदादिति । (कै)

वैकृतध्वनिभेदादित्यर्थः ॥ ननु "किं कृत इति" कारणप्रश्ने फलकथनेनोत्तरमसङ्गतमत आह

कारणमेवेति । (कै)

---

वक्तव्यं तु । यद्येवं द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं काल-भेदात् । वा । द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कर्तव्यम् । किं कारणम् । कालभेदात् । ये द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्य-

---

सन्निकर्षः नैरन्तर्योच्चारणात् । विशेष इति । वृत्तीनामिति शेषः । क्व-चिद्वृत्तिविशेषे इत्येव पाठः । वर्णानां त्विति । वर्णोपलब्धिकालभेदा-द्वर्णकालभूयस्त्वमुच्यते । द्रुतायां स्वल्पः उपलब्धिकालः । मध्यमायामधिकः । विलम्बितायामधिकतरः । । प्राकृतवैकृतभेदाद्भिन्ना ध्वनयः । तत्र

---

संयोगश्चेद् द्रव्यधर्मत्वान्न शब्दस्य गुणस्य संभवति, समवायश्चेन्न वर्णे वर्णः समवैति शब्दस्याकाशसमवायित्वात्, येषां तु शब्दो द्रव्यं तेषां न क्वापि

वर्णकालभूयस्त्वं त्विति (भा)

भाष्यस्य कारणं वृत्तिविशेषस्येति शेषः। तच्च वैकृतध्वनिरूपं स्वयमुक्तमिति भावः॥ हस्तिमशकयोः परस्परसन्निकर्ष इति नार्थं इत्याह

हस्तिन इति। (कै)

अत एव "प्राणिभूयस्त्वमि"त्यग्रिमग्रन्थसङ्गतिरिति भावः॥

प्राणिशब्देनात्र शरीरम्॥

व्यञ्जकध्वनीति। (कै)

उपलब्धिधाराजनकध्वनीत्यर्थः॥ भाष्ये

उक्तं वेति। (भा)

वचनारम्भापेक्षो विकल्पः॥ ननु शब्दानां नित्यत्वादिरा-माभावे ऽविराम इति विशेषणं व्यर्थमत आह

---

मायाम् ये मध्यमायां वृत्तौ वर्णास्त्रिभागाधिकास्ते विलम्बितायाम्॥ उक्तं वा। वा। किमुक्तम्। सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिर-वचनाद् वृत्तयो विशिष्यन्ते ( १ । १ । ७० ) इति। अथवा शब्दाविरामः

---

वैकृतध्वनिवशात्तस्यैव वर्णस्य पुनः पुनरुपलब्धिर्भवतीति ध्वनिभेदाद्वृत्तिभेदः। किं कृत इति कारणे पृष्टे वर्णकालभूयस्त्वं त्विति सामर्थ्यात्कारणमेवोक्तं भवतीति। हस्तिमशकयोरिति। हस्तिनो हस्तिना यः सन्निकर्षः मशकस्य मशकेन सं तुल्यः परस्परापेक्षयेत्यर्थः। प्राणिभूय-

---

शब्दः समवैति अतिशयोऽपि संयोगसमवाययोः कीदृश इति न विद्मः, प्रत्यासत्त्यपेक्षाभेदात् सम्भवति प्रकर्षाप्रकर्षयोगः, तस्मात्प्रत्यासत्तिरेव संनिकर्षः। ननु च क्रमेणोच्चार्यमाणेषु वर्णेषु पूर्वस्य वर्णस्य ये निष्पादकाः

## यदेति । (कै)

शब्देन तदुच्चारणं लक्ष्यत इति भावः ॥ नन्वविरामे ऽवसान-संज्ञाप्राप्तिरित्यसंगतमत आह

## भिन्नेति । (कै)

ध्वनिपदेनाच कण्ठताल्वाद्यभिघातः प्रयत्नभेदे एकप्रयत्ना-विच्छेदाभावो हेतुः । अविच्छेदाभाव इत्यस्यारोपितविच्छेदप्रति-योगिको ऽभाव इत्यर्थः । तेनाभावप्रतियोगिको ऽभावः कथं तस्य भावप्रतियोगिकत्वनियमादिति न शङ्क्यं विच्छेदस्य निवृ-त्तिविरामापरपर्यायः क्रियाविशेष इति बोध्यम् ॥

## एकैकस्य वर्णस्येति । (कै)

एकवर्णोच्चारणानन्तरं तन्नाशकाले द्वितीयवर्णोच्चारणकत्वक-द्वितीययत्नेत्यधिकरणकाले च वर्णाभावात्तद्विरामो ऽस्त्येवेत्यर्थः ॥ यद्यप्यवच्छेदकभेदेनानेकयत्नोत्पत्तिरपि युगपत् तथापि प्रकृते-

---

संहितेत्येतल्लक्षणं करिष्यते । शब्दाविरामे प्रतिवर्णमवसानम् । वा । शब्दाविरामे प्रतिवर्णमवसानसंज्ञा प्राप्नोति ( १ । ४ । ११० ) । किमिदं प्रतिवर्णमिति । वर्णं प्रति प्रतिवर्णम् । येनैव यत्नेनैको

---

त्वमिति । हस्तिनौ महान्तं देशं व्याप्नुतो मशकौ तु स्वल्पम् । नैरन्तर्यं त्वविशिष्टमित्यर्थः । वर्णानां व्यञ्जकध्वनिकृतं यथोक्तं भेदमप्रतिपद्यमानः स्वगतमेवभेदं मत्वा चोदयति । यद्येवमिति । शिष्टं भाष्यं ( १ । १ । ७० ) तपरस्तत्कालस्येत्यत्र व्याख्यातं तत एवावधार्यताम् । शब्दाविराम इति ।

---

ध्वानादयस्तेषां व्यापारोपरतौ वर्णान्तरस्य ये निष्पादकास्तेषां व्यापारारम्भः, तत्रावश्यं मध्ये कियत्यपि कालकला भवति सूक्ष्मत्वात्तु नोपलभ्यते यद्यप्यनुप्रत-

नाभिरूपैकदेशावच्छेदेनानेकयत्नोत्पत्तिर्युगपदिरुद्धा। वस्तुतो यत्ना-यौगपद्यमेव मन्तव्या नानावयवावच्छिन्नक्रियाः क्षणभेदेनैव काल-सौक्ष्म्यात्तु तदग्रह इत्याशयः॥

## अवसानसंज्ञा प्राप्नोतीति। (कै)

एवं चैकसंज्ञाधिकारात्संहिता संज्ञा न स्यादिति भावः॥ विच्छिन्ने वर्णे तेनैव यत्नेन नष्टे इत्यर्थो बोध्यः॥ एतेन "येनैवे" त्यत्रैवकारो व्यर्थ इत्यपास्तम्॥

## उपसंहृत्य (भा)

पूर्वयत्नं त्यक्त्वेत्यर्थः॥

## अन्यमिति (भा)

यत्नान्तरमित्यर्थः॥ प्रकर्षबोधकशब्दाभावात्कथं तत्प्रती-तिरत आह

---

वर्णा उच्चार्यन्ते विच्छिन्ने वर्णे उपसंहृत्य तमन्यमुपादाय द्वितीयः प्रयुज्यते तथा तृतीयस्तथा चतुर्थः। एवं तच्छ्रवकाशा संहिता-

---

यदा प्रयोक्ता शब्दोच्चारणान्न विरमति तदा शब्दाविरामः। स च मध्यमविलम्बितयोरपि परसन्निकर्षाभावेऽप्यस्तीति क्रिया संहितासंज्ञा। शब्दाविरामे प्रतिवर्णमिति। भिन्नप्रयत्नजनितध्वनिव्यङ्ग्यत्वाद्वर्णानां प्रतिवर्णं प्रयत्नभेदादेकप्रयत्नाविच्छेदाभावात् प्रथमप्रयत्नोच्चारितवर्णानन्तरं प्रयत्नान्त-रेण वर्णान्तरोच्चारणादेकैकस्य वर्णस्य विरामसद्भावादवसानसंज्ञा प्राप्नोति। अवसानसंज्ञामिति। वर्णान्तरानुच्चारणे दध्य् इत्यादौ सावकाशामिति

---

यत्निभेदवत्त्वमयं परः सन्निकर्ष इत्यनाह। 'अर्धमात्राकालव्यवधान इति'। सत्यम्, एतावद्व्यवधानमवर्जनीयत्वात्तस्मिन्नपि अधिकेन तु कालेन व्यवधानं

**सर्वत्रेति ॥ (कै)**

शब्दस्य विरामः श्रवणकृतः । अर्थस्य बोधकृतः ॥

**अन्यत्र त्विति । (कै)**

वर्णानन्तरं वर्णान्तरोच्चारणे मध्यकाले इत्यर्थः ॥

**घोषः । (कै)**

ध्वनिविशेषः ॥

**घोषविच्छेदादिति । (कै)**

असत्त्वादेव विच्छेदः ॥ तदाह

**असंनिधानादिति ॥ (कै)**

**घोषवतामिति । (कै)**

तृतीयचतुर्थानामित्यर्थः ॥

---

संज्ञा ऽवसानसंज्ञां बाधिष्यते । अथ अवसानसंज्ञायां प्रकर्षगति-र्विज्ञास्यते साधीयो यो विराम इति । कश्चात्र साधीयः ।यः शब्दार्थयो-र्विरामः । अथवा कालाविरामः संहितेत्येतल्लक्षणं करिष्यते । काला-विरामे स्पर्शाघोषसंयोगे ऽसन्निधानादसंहितम् । वा । कालाविरामे स्पर्शा-

---

भावः । तेन सर्वथा वर्णानां यो विरामः सो ऽवसानसंज्ञो न तु नान्तरीयक इत्यर्थः । अथवेति । सर्वत्र विरामसद्भावात् पुनः श्रुत्या विशेष आश्रीयते । शब्दार्थयोरिति अन्यत्र तु सत्यपि शब्दाविरामे पदार्थस्य वाक्यार्थस्य वा ऽविरामान्न भवत्यवसानसंज्ञा । कालाविराम इति । प्रयत्नविशेषजनितेऽ धर्माविरामे ऽप्यनुरणनरूपो वर्णान्तरोच्चारणे-

---

पर्यन्तयोग व्यावर्तत इत्यर्थः । यद्येवं द्रुतायामेव वृत्तौ स्यान्न मध्यमायां विलम्बितायां वा नहि तथा तयोः सन्निकर्षो यथा द्रुतायां तुल्यः

दोषाप्रसङ्गादिति । (कै)

तथा व्याख्याने हि तथापि दोष इति भाष्यासंगतं स्यात्तत्र दोषाप्राप्तेरिति भावः ॥ "सर्गानां" मध्ये ऽघोषस्येत्यर्थः ॥ प्रथमसंयोगे फलं नास्तीति भाष्याशयमन्ये ॥ ननु कुक्कुटादौ न किंचित्संहिता कार्यमत आह

कन इति ॥ (कै)

घोषविच्छेदादिति । (कै)

अघत्वादेव विच्छेदः ॥ भाष्ये

पचतीत्यस्य । (भा)

तत्र कथमिति प्रश्नः ॥ कुक्कुट इत्यादौ कृतशङ्कः पचतीत्यत्र परिहरति ।

एकः पूर्वेति ॥ (भा)

तन्न्यायेन कुक्कुटादावपि समाधत्ते ।

---

णामघोषाणां च संयोगे ऽसंनिधानात्संहितासंज्ञा न प्राप्नोति । कुक्कुटः (पिप्पलः । क) पिप्पकः पित्तमिति । किमुच्यते संयोग इति । अथ यत्रैकः पचतीति एकः पूर्वपरयोर्व्यवधायकः प्रच्छाद्यते । तद्यथा ।

---

ऽप्यनुवर्तमानो घोषो व्यवधायक उच्यते । सवर्णाघोषसंयोग इति । वर्गाणां प्रथमद्वितीयानां प्रथमानां च संयोगे घोषविच्छेदादसन्निधानात्संहितासंज्ञाया अप्राप्तिरित्यर्थः । अघोषसंयोग इति । अघोषसंयोग इत्येव सिद्धत्वात् सवर्णग्रहणमनर्थकम् । असवर्णानामप्यघोषाणां प्रथमानां संयोगे

---

सन्निकर्षः सर्वासु व्यक्तिषु नैरन्तर्येणोच्चारणाव्यवधानाभावात् तु इति-

एकेनेत्यादिना ॥ (भा)

वर्णान्तरेति। (कै)

वर्णान्तरोच्चारणे नान्तरीयकार्धमात्राकालादन्येनाधिकेनेत्यर्थः ॥

ननु पूर्वः पूर्वकालः परश्च परकाल इति कथं पूर्वापरभावोऽत आह

युगपदिति। (कै)

अयं भावः। यदि कालिकं पौर्वापर्यं तदा "इको यणचि" (६।१।७७) त्यादिसंहिताकार्यासम्भवः। पूर्वपरयोर्युगपत्स्थित्यभावादत एव न दैशिकमपीति ॥

अनेकश इति। (कै)

भिन्नकाले इत्यर्थः ॥

१ एकैकश इति (कै)

---

द्वयोरङ्गुलयोर्वस्त्रयोर्मध्ये सूक्ष्मं वस्त्रं तद्रूपमुपलभ्यते। बदरपिठके रिक्तको लोहकंसस्तद्रूप उपलभ्यते। एकेन तुल्यः सन्निधिः। वा। यथैवैको वर्णो द्वादा मक्तुाहूते एवमनेकोऽपि। अथवा पौर्वापर्यमकालव्यवे

---

तुल्यन्यायत्वात् संज्ञाया अप्रसंगात्। न च स्पर्शानामघोषाणां वर्णानां चेतिसमुच्चयः। घोषवतां स्पर्शानां संयोगे दोषाप्रसङ्गात्। कुक्कुट इति। कुक्कुट इवायमिति कर्णो लुम्मनुष्ये (५। ३। ९८) इति लुपि कृते संज्ञायामुपमानम् (६। १। २०४) इत्याद्युदात्तत्वं शिष्टमनुदात्तं ततः संहितायां विधीयमानमुदात्तादनुदात्तस्य

---

विशेषः, द्रुतायां स्वल्प उपलब्धिकालो मध्यमायामधिकः विलम्बितायाम-

पाठान्तरम्। तथापूपौ द्वावितिवत् व्यतिलुनत इतिवच्च द्विर्वचनप्रयोगयौगपद्यं बोध्यम्॥ तद्धितमात्रेण तु न वीप्साप्रतीति-रप्यप्र इत्यर्थस्यापि प्रतीतेः॥ नन्वेकैकवर्णवर्तित्वेनीलादित्युचितम-गुणवचनत्वेन पुंवत्त्वाप्राप्तेरत आह

सामान्येनेति। (कै)

तेनोपक्रमे च नपुंसकत्वमेवेति भावः॥ अनेन युगपदुपलम्भं निरस्य युगपदास्तवीसत्तामपि निरसितुमाह भाष्ये

उच्चरितेति। (भा)

उच्चरितप्रध्वंसित्वम्। उच्चारणाधिकरणकालोत्तरकालवृत्तिध्वं-सप्रतियोगित्वरूपम्। उच्चारणाधिकरणकालोऽपि क्षणसमूहरूपः प्रत्यक्षयोग्यः क्षणिकस्य प्रत्यक्षायोगात्। यद्यवतिष्ठेरन्निति कालिक-पौर्वापर्यमपि युगपदवस्थितेष्वेव ग्रहीतुं शक्यं न तु नष्टविद्यमान-योस्तदाह

---

संहितेत्येतल्लक्षणं करिष्यते। पौर्वापर्यमकालव्यपेतं संहिता चेत्पूर्वापरा-भावादसंहितम्। वा। पौर्वापर्यमकालव्यपेतं संहिता चेत्पूर्वापरा-भावात्संहितासंज्ञा न प्राप्नोति। न हि वर्णानां पौर्वापर्यमस्ति।

---

स्वरितत्वं न स्यात्। पचतीति। अत्रापि चकारस्याघोषत्वादकारोच्चारणे घोषविच्छेदात् स्वरितत्वाप्रसङ्गः। क्रादेनेति। द्वयोरकारयोर्घोषवतोर्मध्ये चकारो घोषवानिव लक्ष्यत इत्यर्थः। आम्नायान्तरगतोऽपिगुण आश्रयान्तर उपलभ्यत इति दृष्टान्तेन दर्शयति। द्वयोरिति॥ एकेनेति। अनेकस्य

यः संनिकर्षः स एकेन तुल्यः। यथैको ऽतद्गुणोऽपि तद्गुणवस्त्वन्तर-संनिधौ तद्गुण उपलभ्यते तथा ऽनेकोऽपि स्फटिकादिरर्थ इत्यर्थः। अथ-

---

धिकतरः, द्विविधा हि ध्वनयः प्राकृता वैकृताश्च, प्राकृता वर्णानामुत्पादकाः,

## ज्येष्ठेत्यादि। (कै)

अयं ज्येष्ठोऽयं कनिष्ठ इति व्यवहारादयं पूर्वोऽयं पर इति व्यवहारस्य नष्टविद्यमानयोरसंभवः। नष्टविद्यमानयोः संबन्धस्य निरूपयितुमशक्यत्वादिति भावः॥ वर्णानां स्फोटरूपाणां नित्यत्वादिदमयुक्तमत आह

## व्यञ्जकेति। (कै)

स्फोटस्य तु सर्वसाधारणेनैकत्वात्तमादाय पौर्वापर्यस्योक्तिसंभवोऽपि नास्तीति भावः॥

## अन्यच। (कै)

"तपर" (१।१।७०) सूत्रे॥

## स्यादेवेति। (कै)

कालकृतमव्यवधानं स्यादेवेत्यर्थः। एवं च युगपदुच्चारणाभावान्न संनिकर्षो नापि पौर्वापर्यमिति भावः॥ तदाह भाष्ये

---

किं कारणम्। एकैकवर्णवर्तित्वाद्वाचः उच्चरितप्रध्वंसित्वाच्च वर्णानाम्। वा। एकैकवर्णवर्तिनी वाक्। न द्वौ युगपदुच्चारयति। गौरिति गकारे यावद्वाग्वर्तते। नौकारे न विसर्जनीये। यावदौकारे न गकारे न विसर्जनीये। यावद्विसर्जनीये न गकारे नौकारे। उच्चरितप्रध्वंसि-

---

त्वेति। वर्णान्तरोच्चारणकालादन्येन वर्णशून्येन कालेनाव्यवहितं पौर्वापर्यं संहितेति लक्षणं क्रियते। तेन मध्यमविलम्बितयोः परमसंनिकर्षाभावेऽपि संहितासंज्ञा सिध्यति। पूर्वापराभावादिति। युगपत्स्थितानां देशकृतं-पौर्वापर्यं दृष्टम्। वर्णास्त्वेकैकशः उपलभ्यमाना यौगपद्येनासंनिधानात्कथं

---

वेक्षते तु पुनःपुनरुपलम्भः, मध्यवर्ती तु कालः सर्वासु वृत्तिषु तावानेव। यदा यस्यां वृत्तौ यावता कालेन व्यवायोपलम्भावी ततोऽधिकेन व्यवायः

**अथापर इति ।** (भा)

तद्वर्णध्वंसानन्तरमपरो वर्णः प्रयुज्यते तावतापि च पौर्वापर्यादि-व्यवहारे न वर्णान्तरस्य सहाय इत्यर्थः ॥

**बुद्धौ कृत्वेति ।** (भा)

बुद्धावन्तःकरणे चेष्टाः कण्ठताल्वाद्यभिघातव्यापारजन्यात् शब्दान् कृत्वा प्रतिविम्बितान् कृत्वा शब्देन वाच्यानर्थान् बुद्धौ बुद्धिरूपे देशे दृष्ट्वा तत्रैव पौर्वापर्यव्यवहारं कुर्यादित्यर्थः ॥

**बुद्धिविषयम् ।** (भा)

इत्यस्य बुद्धिस्थशब्दविषयमित्यर्थः ॥ तत्र वक्तृबुद्धिस्थत्वमुपपादयति

**य इति ।** (भा)

तदर्थमेव शास्त्रप्रवृत्तेस्तत्रैव शास्त्रफलधर्मोक्तेः ॥

**अस्मिन्नर्थे इति ।** (भा)

---

त्वात् । उच्चरितप्रध्वंसिनः खल्वपि वर्णाः । उच्चरितः प्रध्वस्तः । अथापरः प्रयुज्यते न वर्णो वर्णस्य सहायः । एवं तर्हि ।

बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः ।

शब्देनार्थान् वाच्यान्दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम् ।

---

पौर्वापर्यमब्रुवीरन् । एकवर्णवर्तित्वादिति । सामान्येनोपक्रमात् स्त्रीप्रत्यया-भावः । उच्चरितेति । क्रमोत्पन्ना अपि वर्णा यद्यवतिष्ठेरंस्तदा स्यात् पूर्वा-परव्यपदेशो ज्येष्ठमध्यमकनिष्ठव्यपदेशवत् । अनवस्थानात्तु नास्ति तात्त्विकः पूर्वापरभाव इत्यर्थः । वाचकशब्दापेक्षया चैतदुक्तम् । ध्वनिस्फोटभेदस्तत्वज्ञ निर्णीतत्वान्नेहोपन्यस्यते । न द्वौ युगपदिति । युगपद् द्वयोरुच्चारणे स्यादेवा-

---

परग्रहणेन व्यावर्तते,पदस्य पदान्तरेण यदानन्तर्यं तत्रैव लोके संहिताशब्दः प्रसिद्धः, तथा च संहितामधीते न पदानि पदान्यधीते न संहितामिति

एतदर्थमेव बुद्धावर्थदर्शनप्रयुक्तं श्लोके पौर्वापर्यमित्युपलक्षणम् । अयमिति बुद्ध्युपारूढक्रमाभाश्रयस्थूलोच्चारणव्यङ्ग्यशब्दपरामर्शः । अन्यथेदमः प्रत्यक्षपरामर्शकत्वादेतदनुपपत्तिः ॥

**प्रयोक्तव्य ।** (भा)

परप्रत्यययोग्यस्थूलोच्चारणरूपेण प्रयोगेणाभिव्यक्तव्यः ॥

**अस्मिन् शब्दे** (भा)

इत्यस्य व्यञ्जनीये इति शेषः ॥ तदाह

**बुद्धिप्रकल्पित इति ।** (कै)

बुद्धिस्थप्रकल्पितशब्दविषय इत्यर्थः ॥

**प्रकल्प्यते-** (कै)

त्यस्य प्रतिबिम्बेन तत्तद्रूपतया प्रकल्पितेत्यर्थः ॥

---

बुद्धिविषयमेव शब्दानां पौर्वापर्यम् । इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थे ऽयं शब्दः प्रयोक्तव्यः अस्मिंस्तावच्छब्देऽयं तावद्वर्णः ततोऽयं ततोऽयमिति ॥

---

व्यवधानम् । कालेन पौर्वापर्यं तु मा भूदित्यर्थः । वागिति । वागिन्द्रियमित्यर्थः । एतेन युगपदनवस्थानात् सन्निकर्षोऽप्याच्छिन्न इति विज्ञेयम् । एवं तर्हीति । बुद्धिप्रकल्पितः सर्वः पौर्वापर्यसन्निकर्षादिव्यवहार इत्यर्थः । धीरः पण्डितः । ततमीतिरिति । ततनं ततं साऽस्ति यस्याः सा तततो सकलविषयव्यापिनी मीतिर्बुद्धिर्यस्य स ततमीतिरिति । अन्ये तु तन्वमीतिरिति पठन्ति । तन्वती विषयान् व्याप्नुवती बुद्धिरस्येति स एवार्थः ॥

---

व्यहारो भवन्ति, ततश्च कुमार्यावित्यादौ पदावयवे संहिताकार्यं न स्यादिति सूत्रारम्भः ॥

# विरामोऽवसानम् । १ । ४ । ११० ॥

[1]नानाप्रकारं गच्छति प्राप्नोति यत्तन्नानाप्रकारं गम्यते तथा प्राप्य किं युक्तमिति परीक्षत इत्यर्थः ॥ अत्र लक्षणे सन्देहाभावादाह केचिदिति

प्रागभावस्येति । (कै)

प्राग्वर्त्तिनः शब्दाभावस्येत्यर्थः ॥ भाष्ये

रसः । (भा)

रयः । (भा)

१ "इदं विचार्य्यते" इति भाष्याक्षरं मनसि कृत्वा उक्तं नागेशेन ।

विरामो ऽवसानम् ॥ १ । ४ । ११० ॥ इदं विचार्यते । अभावोऽवसानलक्षणं स्याद्विरामो वेति । कश्चात्र विशेषः । अभावे ऽवसानलक्षणे उपर्यभाववचनम् । वा । अभावे ऽवसानलक्षणे उपर्यभावग्रहणं

विरामो ऽवसानम् । १ । ४ । ११० । इदं विचार्यत इति । विचरति नाना गच्छति यदस्तु तद्विचार्यते परीक्ष्यत इत्यर्थः । अभावो वेति । केचिदभावोऽवसानमिति पठन्ति । अन्ये तु विरामो-

विरामोऽवसानम् । १ । ४ । ११० ॥ वर्णानामभावोऽवसानसंज्ञः स्यात् । संज्ञाप्रदेशा वावसान इत्यादयः । अभावस्यापि बुद्धिकृतं

"विरामोऽवसानम्" । १ । ४ । ११० ॥ 'विरतिर्विराम इति' । विरामः इति भावे घञ्, विरामो वर्णोच्चारणाभावः अर्थान्तरमाह । 'विरम्यतेऽनेनेति

इत्यत्र "खरवसानयोरि" (८।३।१५)ति विसर्जनीयः प्रसज्येतेति। पदावयवस्यावसाने रेफस्य विसर्ग इति सूत्रार्थ इति भावः॥ "खरीति" वाक्ये तु रेफान्तस्य पदस्येत्यर्थ इति बोध्यम्॥

अदर्शनमिति। (कै)

यद्यपि तद्दर्शनाभावा ऽभावस्य वर्णस्य तथाप्यभावपदेन तस्यापि लाभः। वर्णदर्शनाभाववर्णाभावयोः समनियतत्वादिति. भावः॥

अस्मिन् पक्षे इति। (कै)

वर्णान्तराभावोपलक्षितवर्णस्यावसानत्वपक्षे इत्यर्थः॥

---

कर्तव्यम्। उपरि यः अभाव इति वक्तव्यम्। पुरस्तादपि हि शब्दस्याभावस्तत्रमा भूदिति। किं च स्यात्। रसः। रथः। खरवसानयोर्विसर्जनीयः (८। ३। १५) इति विसर्जनीयः प्रसज्येत॥ अस्तु तर्हि विरामः। विरामे विरामवचनम्। वा। यस्य विरामः विरामग्रहणं तेन कर्तव्यम्। ननु च यस्याप्यभावस्तस्याप्यभावग्रहणं कर्तव्यम्। परार्थं मम भविष्यति। अभावो

---

ऽवसानमिति तत्र युक्तायुक्तविचारः क्रियते। उपरीति। वर्णोच्चारणादूर्ध्वं योऽभावः तदुपलक्षितो वर्णोऽवसानमिति वक्तव्यं प्रागभावस्योपलक्षणत्वनिवृत्त्यर्थम्। रस इति। परवत् पूर्वस्यापि रेफस्याभावविषयत्वाद्विसर्जनीयप्रसङ्गः। विरामे विरामवचनमिति। अधिकं कर्तव्य-

---

पौर्वापर्यमस्त्येव। यथोच्चरितप्रध्वंसिना नित्यविभूनां वा वर्णानाम्। यद्वा। विरम्यते ऽनेनेति करणे घञ् चरमवर्णस्य संज्ञा। अस्मिन्पक्षे खरवसानयो-

---

वा विराम इति'। 'कृत्यल्युटो बहुलमि'त्यसंज्ञायामपि 'हलश्चे' ति करणे घञ्, पूर्वस्याभावः संज्ञी उत्तरश्चान्त्यो वर्णः, तेन हि विरम्यते, तत्राद्ये पक्षे'खरवसानयोरि'ति परत्वमस्ति, कथं पुनरवसानेन, पौर्वापर्यमभावो

स च प्रवृत्तस्येति । (कै)

एवं च पुरस्तान्न विरामव्यवहार इति भावः ॥ भाष्ये

नेदमवसानलक्षणमिति । (भा)

अवसानव्यवहारविषयस्य वर्णस्योपलक्षणभूतं वस्तु न विचार्यते इत्यर्थः ॥

प्रसक्ताभाव इति । (कै)

प्रसक्तोच्चारणाभाव इत्यर्थः ॥ प्रवृत्तौ रसेः प्रयोगस्य कार्य-भावादाह

---

लोपः ( १ । १ । ६० )। ततो ऽवसानं चेति । ममापि तर्हि विरामग्रहणं परार्थं भविष्यति । विरामो लोपो ऽवसानं चेति । उपरि यो विराम इति वक्तव्यम् । पुरस्तादपि शब्दस्य विरामः । तत्र मा भूदिति । किं च स्यात् । रसः रथः । खरवसानयोर्विसर्जनीय इति विसर्जनीयः प्रसज्येत । ( नैष दोषः । क ) आरम्भपूर्वको मम विरामः । अथ वा नेदमवसानलक्षणं विचार्यते ।

---

मित्यर्थः । ततोऽवसानं चेति । अदर्शनमभाव इत्येक एवार्थः । तेन पुनर-भावग्रहणं न कर्तव्यमित्यर्थः । तत्र लोपसंज्ञायामभावः संज्ञित्वेनाश्रीयते अवसानसंज्ञायां तूपलक्षणत्वेन । तेन वर्णान्तराभावोपलक्षितो वर्णोऽव-सानसंज्ञ इत्यर्थः । उत्तरत्र त्वभावस्यैव लोपावसानसंज्ञे आख्यास्येते ।

---

रित्येकापि सप्तमी विषयभेदाद्भिद्यते । खरि परे रेफस्य विसर्गः, अवसाने च रेफे स्थानिनीति । अत्र वार्त्तिकम् । संहितावसानयोर्लोकवि-दितत्वात्सिद्धमिति । तथा च सूत्रद्वयं मास्त्वित्यर्थः ॥

---

हि सः, खरा वा कथं, नहि यदा खरस्तदा रेफो यदा रेफस्तदा खर् वर्णानां क्रमभावित्वाद् उच्चरितप्रध्वंसित्वाच्च । अथ तत्र बुद्धिपरि-कल्पितं पौर्वापर्यं तदभावेऽपि समानमेवं वावसाने इत्यत्रापि । द्वितीये तु

अविच्छेदेनेति । (कै)

अविच्छेदविरामौ पर्यायौ तत्प्रतियोगिनौ विच्छेदविरामौ च क्रियाविशेषरूपौ भावपदार्थौ । एतेनाभावस्य भावप्रतियोगिकत्वादिदं चिन्त्यमिति परास्तम् । अन्याभावपरो वर्ण इत्यादि तत्त्वे वक्ष्यत्येव ॥ इदानीम्

अपर आहेति । (कै)

आख्यानकाले । अन्ये तु वर्णानामभाव इत्युक्ते वर्णत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः स च गवर्णसत्त्वे इति भाष्यार्थ इत्याहुः ॥ ननु ग्रन्थस्य भावाविरामभाविलिङ्ग्यभावो ऽवसानमिति लक्षणे को दोषस्तत्र ग्रन्थस्यानिवेशादित्यत आह

---

विरामे विरामवचनम् । वा । यस्य विरामस्तेन विरामग्रहणं कर्तव्यम् । ननु च यस्याप्यभावस्तेनाप्यभावग्रहणं कर्तव्यम् । परार्थं मम भविष्यत्यभावो लोपस्ततोऽवसानं चेति । ममापि तर्हि विरामग्रहणं परार्थं भविष्यति विरामो लोपोऽवसानं चेति । उपरि यो विराम इति वक्तव्यम् । ननु चोक्तमारम्भपूर्वक इति । नावश्यमयं रमिः प्रवृत्तावेव वर्तते । किं तर्हि । अप्रवृत्तावपि । तद्यथा । उपरतान्यस्मिन्कुले व्रतानि । उपरतः स्वाध्याय इति । न च तत्र

---

आरम्भपूर्वक इति । निवृत्तिर्विरामः स च प्रवृत्तस्य भवतीति भावः । अवसानसञ्ज्ञमिति । अभावोपलक्षितो वर्णोऽवसानं विरामोपलक्षितो वेति पूर्वं विचारितम् । इदानीं तु तावेव संक्षिप्तेन विचार्येते अभावो लोप इत्येतस्य संज्ञाद्वयविधानसामर्थ्याद्विषयविभाग आश्रीयते । प्रसक्ताभावो लोपसंज्ञोऽभावमात्रमवसानसंज्ञमिति । नावश्यमिति । प्रवृत्तौ सत्यां या

---

प्रवृत्त्यानुकूलिकः' अत्र वाक्यान इति वर्तते । ननु च लोक एवावसानशब्दो विरामे प्रसिद्धः, यद्यप्यवपूर्वः स्यतिरन्तगतौ वर्तते केनैतदवसीयत इति,

अवधिरहितस्येति । (कै)

प्रतियोगिर हितस्येत्यर्थः ॥ शब्दशास्त्रत्वाच्छब्द एव प्रतियोगीति भावः ॥ विरामो ऽभावपदार्थोऽपि संबन्धादिवद्भावसमानाधिकरणत्वाच्च प्रतियोगि सापेक्ष इति भावः ॥

बुद्धिकल्पितेति । (कै)

बुद्धिदेशे ऽग्रे ऽभावं दृष्ट्वा तत्र कल्पितं पौर्वापर्यमित्यर्थः ॥ ननु लोके संहिताशब्दः पदैनैरन्तर्ये एव प्रसिद्धो न वर्णनैरन्तर्ये इत्यत आह ।

---

स्वाध्यायो भूतपूर्वो भवति नापि व्रतानि ॥ भावाविरामभावित्वाच्छब्दस्यावसानसंज्ञायां न । वा । भावाविरामभावित्वाच्छब्दस्यावसानसंज्ञा नोपपद्यते । किमिदं भावाविरामभावित्वादिति । भावस्याविरामः भावाविरामः । भावाविरामेण भवतीति भावाविरामभावी । भावाविरामभाविनो भावो भावाविरामभावित्वम् । अपर आह । भावभावित्वादविरामभावित्वाच्च शब्दस्यावसानसंज्ञा नोपपद्यते इति । तत्पर इति वा वर्णस्यावसानम् । वा । विराम-

---

निवृत्तिस्येत्यर्थः । उपरतान्यस्मिन्निति । न प्रवृत्तनिवृत्तानि किं तर्हि पूर्वमेवाप्रवृत्तानीत्यर्थः । नियतविषयत्वाच्छब्दप्रयोगस्य शास्त्रविषयमुपरतमिति प्रयोगाभावः । क्वचिद्व्रतानीति पाठः । भावाविरामभावित्वादिति । इह शब्दस्य स्वसंबन्धी वा ऽभावोऽवसानसंज्ञं स्यात् शब्दान्तरस्य सं वा । न तावत् स्वसम्बन्धी वि ोधात् । नहि यस्य सत्ता तस्य तदानीं सत्ता युज्यते । नापि शब्द तरसंबन्धी । नहि घटाभावः पटस्या भवति । भावस्य सत्ताया अविच्छेदेन भवत्यवश्यमिति भावाविराम ।

---

पराभवेऽपि अवस्थितो देवदत्त इति, अवसानशब्दस्य विराम एव प्रसिद्ध न च देशस्यावगतिपराभवयोः कारणत्वं सम्भवतीति नार्थः संज्ञाकरणेन

यथेति ॥ (कै)

ऐकपद्य इति । (कै)

एकपदे इत्यर्थः ॥

भावसाधन इति । (कै)

---

रो वर्णः अवसानसंज्ञो भवतीति वक्तव्यम् । वर्णोऽन्त्यो वावसानम् । वा ।
ाथवा यत्नमेव पठितव्यम् अन्त्यो वर्णो ऽवसानसंज्ञो भवतीति । तर्हि वक्त-
म् । न वक्तव्यम् । संहितावसानयोर्लोकविदितत्वात् सिद्धम् । वा । संहिता
ावसानमिति लोकविदितावेतावर्थौ । एवं हि कश्चित्कंचिदधीयानमाह
ाो देवीयं संहितयाधीष्वेति । स तत्र परमसन्निकर्षमधीते । अपर
ाह । केनावस्यतीति । स आह । अकारेणेकारेणोकारेण वेति । एवमेतौ
कविदितावर्थौ तयोर्लोकविदितत्वात्सिद्धम् इति ॥

---

ब्दः । नहि शब्दस्य भवनकाले सत्ता विच्छिद्यते इत्यर्थः । अपर आहेति ।
ावाविरामशब्दयोर्द्वन्द्व इत्यर्थः । इदानीं वक्ष्यद्वयस्याप्युपपत्तिः प्रति-
ाद्यते । भावेन सततस्य विरामेण अविच्छेदेन भवतीत्यर्थः । उपाधिरहित-
ाभावस्य प्रतीतिर्नास्ति । तत्पर इति वेति । इदानीं शब्दान्तराभावपरो
ोऽवसानसंज्ञो भवतीति प्रतिपाद्यते । अभावेनापि बुद्धिपरिकल्पितं
वीपर्यमाश्रीयते । अथवेति । यद्यपि विरामशब्दे करणसाधने आश्रीय-
ाणेऽयमर्थो लभ्यते तथापि भावसाधनस्यापि संभवात् करणसाधनत्वं
देश्यमिति यत्नमेव पठितव्यमित्युक्तम् । संहितयाधीष्वेति । यथा पद-
रन्तर्यं संहिताव्यवहारस्तथैकपद्येऽपि [illegible]रन्तर्यं । अवसानशब्दोऽपि
धिप्रदेशेषु भावसाधनः करणसाधनो वा आश्रयिष्यते इति नार्थ
ाद्वयविधानेन तेन विनाप्युक्तस्य सिद्धत्वात् ॥

---

ाह । 'संहितावसानयोर्लोकविदितत्वा[illegible] सिद्धमिति' संहिताशब्दोऽपि
ंनिकर्षमात्रे प्रसिद्धो न पदयोरेव सन्निकर्ष इति वार्तिककारो मन्यते ।

न पक्षे "खरवसानयोरि"त्यत्र कौत्स्कं पौर्वापर्यमाश्रणीयमिति ।

इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भ-
जनागोजीभट्टकृते महाभाष्यप्रदीपो-
द्द्योते प्रथमस्य चतुर्थे
चतुर्थमाह्निकम् ॥
पादोऽध्यायश्च
समाप्तः ॥

शिवम् ॥

व्याख्यानं श्रीमहाभाष्ये विद्वन्नागेशनिर्मितम् ।
भाष्यप्रदीपोद्द्योताख्यं यदा विवरणाश्रयम् ॥ १ ॥
बहुस्थले महाभाष्यं प्रदीपोऽपि क्वचित् क्वचित् ।
न सुबोधयितुं शक्यं पङ्क्तिरोद्धारमन्तरा ॥ २ ॥
तस्माद्यं समारब्धं टिप्पन्या विषमे स्थले ।
प्रथमाध्यायपर्यन्तं तस्य पूर्तिमनैष्यहम् ॥ ३ ॥
काशीस्थितं शिवकुमारपदाभिधान-
माद्यं प्रणम्य शिरसा वचसा हृदापि ।
तत्कृष्टि संस्मृति निरस्त समस्त मन्तुः
वन्देय वाग्विभुसुवल्लभ नामधेयः ॥ ४ ॥
सोयापराधमथवाऽपराधतायै-
सर्वं निवेदय इमं विबुधेष्वभीवः ।
यत् खलु किंचिदिह तद्गुरुभाषितं मे ।